# श्रीकरभाष्यम्

(द्वितीयसम्पुटम्)

SCANNED



प्राच्यविद्यासंशोधनालयः,
मैसूरु विश्वविद्यानिलयः, मैसूरु.
१९७८

ORIENTAL RESEARCH INSTITUTE SERIES NO. 125

# SRĪKARABHĀṢYAM

OF

SRĪPATI PAṆḌITĀCĀRYA

Vol. II

GENERAL EDITOR

Dr. G. MARULASIDDAIAH, M.A., Ph.D.,
Prof. & Head of the Department of P G. Studies in Sanskrit &
Director, Oriental Research Institute,
University of Mysore, Mysore.

EDITOR

Asthana Vidwan Sri M. G. NANJUNDARADHYA,
Prof. of Saktivisishtadvaita, (Retd.),
Maharaja's Sanskrit College, Mysore.

ORIENTAL RESEARCH INSTITUTE, MYSORE.
1978

प्राच्यविद्यासंशोधनालयग्रन्थमाला

श्रीपतिपण्डितभगवत्पादाचार्यविरचितं

# श्रीकरभाष्यम्

SCANNED

द्वितीयभागः

200

प्रधानसम्पादकः

विद्वान् डा॥ जि. मरुळसिद्धय्यः,

संस्कृतप्रधानाध्यापकः, संस्कृत-स्नातकोत्तर-विभागमुख्याधिकारी.

मैसूरु-विश्वविद्यालयः, मानसगंगोत्री तथा

निर्देशकः

प्राच्यविद्यसंशोधनालयः, महीशूरपुरी

सम्पादकः

आस्थानविद्वान् श्री॥ एम्. जि. नञ्जुण्डाराध्यः,

विश्रान्तशक्तिविशिष्टाद्वैतप्रधानाध्यापकः,

महाराज-संस्कृत-महापाठशाला, मैसूरु.

प्राच्यविद्यासंशोधनालयः, मैसूरुविश्वविद्यानिलयः, मैसूरु.

1978

श्रीः

# अवतरणिका

विदुषां विमर्शनविचक्षणानां करतलमध्यारूढोऽयं ग्रन्थः श्रीकरभाष्यस्य द्वितीयो भागः। प्रथमे च भागे पञ्चसु पादेषु ब्रह्मजिज्ञासामारभ्य जगन्मिथ्यात्वनिरासान्तो भागो वर्णितः।

अस्मिंश्च द्वितीये भागे द्वितीयाध्यायद्वितीयपादमारभ्य चतुर्थाध्यायान्तो भागस्समुपवेशितः। तत्र च तृतीयाध्यायतृतीयचतुर्थपादयोः वर्णाश्रमधर्माचारविचाराः उपवर्णिताः। इमे च वीरशैवानुरुद्धा इति साधयितुं महान् प्रयत्नः कृतः। तस्मिन् ग्रन्थकृदयं असफल एव— यतः वीरशैवसम्प्रदायविरुद्धार्थप्रतिपादकोऽयं वर्णाश्रमाचारविचारः; किञ्च— यत्र कुत्रापि वीरशैवसम्प्रदायानुरुद्धाः वीरशैवप्रमाणार्णववचनशास्त्रविधयः किञ्चिदपि न संयोजिताः। ईदृशस्यास्य ग्रन्थस्य वीरशैववचनधर्मतत्त्वशास्त्रप्रतिपादकत्वं कथं वा सङ्गच्छते; तच्च कथं वा प्रमाणीकुर्म इति न वयं जानीमः।

वीरशैवानां हि सर्वेषां वचनशास्त्रमेव प्रमाणम्; तत्प्रतिपादयितारः बसवादिप्रमथाः महाचार्यपुरुषाः जगदादर्शभूताः परमाप्ताः; अत एव प्रमाणीभूता वन्दनीयाश्च। ईदृशेऽस्मिन् वचनशास्त्रे प्रामाण्यं प्रतिपत्तिश्च अस्य श्रीकरभाष्यकर्तुरस्ति वा? नवेत्यत्र किमपि प्रमाणं नोपलभ्यते।

इदमत्रावधेयम्— बसवादिप्रमथानां सरणिमनुरुध्य यत् शास्त्रं प्रवर्तितं तदेव वीरशैवम्। यत्र च तेषां अनुरोधः अनुसरणं वा न दृश्यते तत्र वीरशैवमित्यत्र शैवभक्ति सन्देहगन्धः। अत एव ब्राह्मणधर्माचारप्रतिपादकाः तदाचारविचारशीलाः वीरशिवस्य जगद्गुरुशिवस्य पारम्यमात्रमभ्युपगच्छन्तः आभासशैवा इति निर्वचनं न कामपि

एते च स्वामिमतानां विषयाणां वीरशैवत्वस्थापने बद्धकङ्कणाः महान्तं प्रयासमनुभवन्तः भाष्येऽस्मिन् भाष्यान्तरवर्णितानेव विषयान् क्वचिदनुवादरूपेण क्वचिच्च तत्रत्यानामेव वाक्यानां आनुपूर्वीरूपेण ग्रथयित्वा तेन च कर्मणा स्वान् कृतकृत्यान् मन्यन्ते। अत्र च तैरनुसृता रीतिः द्राविडप्राणायाममनुकरोतीव। ईदृशास्ते 'अन्धेनैव नीयमाना यथान्धाः' इतिवत् अन्याननुकुर्वन्तः संसारसागरात् स्वयं तरीतुमक्षमाः कथं परान् तारयन्तीति न विद्मः।

अथापि संस्कृतभाषायां वीरशैवदर्शनाध्येतॄणामुपयोगाय अयञ्च भाष्यग्रन्थः पाठ्य-ग्रन्थत्वेन नियमित इति तन्मात्रमनुरुध्य प्रकटितस्यास्य ग्रन्थस्य सम्पुटे चास्मिन् द्वितीयके विद्वांसः सादराः अभिमानिनस्सन्तः ग्रन्थमेतमाद्रियन्तां; तथैव मात्सर्यमुत्सार्य स्वाभिमतमेतद्ग्रन्थविषये प्रकटयेयुरित्याशास्महे। तदा च तेषां सूक्तीः नम्राः स्वीक-रिष्यामः; सन्तुष्टाश्च भवामः।

अन्ते च ग्रन्थस्यास्य सम्पादनकर्म कृतवतां आस्थानविदुषां निवृत्तप्राध्यापकानां श्रीमतां एम्. जि. नन्जुण्डाराध्यमहोदयानां, तथा ग्रन्थस्यास्य प्रकाशनकर्मणि प्रभूतं धनं अर्पयित्वा प्रोत्साहितवतां मैसूरुविश्वविद्यालयाधिकारिणां तथा सुन्दराक्षरैः ग्रन्थमेतं मुद्राप्य सहकृतवतां श्रीविजयलक्ष्मीमुद्रणालयाधिपतीनां तथा अस्मिन् कर्मणि बहूपकृतवतां सर्वेषा-मितरेषाञ्च कार्तज्ञ्ययुक्तानि अभिनन्दनानि वन्दनानि च समर्पयामो वयमिति शम्॥

इति

महीशूरनगरी (मैसूरु)
ता. २-३-१९७८

सिद्धान्तः
(डा॥ जि. मरुळसिद्धय्यः)
प्राध्यापकः संस्कृतविभागमुख्याधिकारी च
मैसूरु विश्वविद्यालयीयस्नातकोत्तरविभागः तथा
निर्देशकः,
प्राच्यविद्यासंशोधनालयः,
मैसूरु विश्वविद्यालयः, मैसूरु.

# अथ श्रीकरभाष्ये द्वितीयसम्पुटस्थानां विषयाणामनुक्रमणी

(सम्पुटम्- २)

## द्वितीयाध्यायस्य द्वितीयः पादः

## द्वितीयाध्यायस्य तृतीयः पादः

द्वितीयाध्यायस्य चतुर्थः पादः

अथ श्रीकरभाष्ये तृतीयाध्यायस्य प्रथमः पादः

## तृतीयाध्यायस्य द्वितीयः पादः

## तृतीयाध्याये तृतीयः पादः

## तृतीयाध्यायस्य चतुर्थः पादः

## चतुर्थाध्यायस्य प्रथमः पादः

## चतुर्थाध्यायस्य द्वितीयः पादः

चतुर्थाध्यायस्य तृतीयः पादः



चतुर्थाध्यायस्य चतुर्थः पादः

---

## श्रीकरभाष्यद्वितीयसंम्पुटगत अनुबन्धादिषु प्रयुक्तानां सङ्केताक्षराणां सूची

अ—अथर्वसंहिता
अ. शिखा.—अथर्वशिखोपनिषत्
अ. शिर.—अथर्वशिर-उपनिषत्
आ. ध. सू.—आपस्तम्बधर्मसूत्रम्
ई. उ.—ईशावास्योपनिषत्
ई. गी.—ईश्वरगीता
ऋ. सं.—ऋक्संहिता
ऐत.—ऐतरेयोपनिषत्
कठ.—कठोपनिषत्
कामिका.—कामिकागमः
कालाग्नि.—कालाग्निरुद्रोपनिषत्
का. शा.—काण्वशाखा
कू. पु.—कूर्मपुराणम्
केन.—केनोपनिषत्
कै.—कैवल्योपनिषत्
कौ.—कौर्मे
कौषीत.—कौषीतकी-उपनिषत्
गा. स्मृ.—गारुडस्मृतिः
गौ. स्मृ.—गौतमस्मृतिः
छां.—छान्दोग्योपनिषत्
जाबालो.—जाबालोपनिषत्
त्रि. ब्रा.—त्रिशिखि ब्राह्मणोपनिषत्
त्रि. ता.—त्रिपुरतापिनी उपनिषत्

तै. आ.-तैत्तिरीयारण्यकम्

तै. ब्रा.-तैत्तिरीयब्राह्मणम्

तै. भृ.-तैत्तिरीयभृगुवल्ली

तै. शि.-तैत्तिरीय शिक्षावल्ली

तै. सं.-तैत्तिरीयसंहिता

दूर्वासोप.-दूर्वासोपनिषत्

ना. प.-नारदपरिव्राजकोपनिषत्

नारा -नारायणोपनिषत्

नृ. पु.-नृसिंहपुराणम्

नृ. पू.-नृसिंहपूर्वतापिन्युपनिषत्

पा आ.-पाञ्चरात्रागमः

पा. स्मृ.-पाराशरस्मृतिः

पा. पु.- पाराशरपुराणम्

पा. पु.-पाद्मपुराणम्

पा. स्मृ.-पाराशरस्मृतिः

पा. पौ. स.-पाञ्चरात्रपौष्करसंहिता

पुरु.-पुरुषसूक्तम्

पू. मी. सू.-पूर्वमीमांसासूत्रम्

प्रश्नो.-प्रश्नोपनिषत्

ब्रं. कै.-ब्रह्मकैवर्तः

ब्रह्म. गी.-ब्रह्मगीता

बा. स्मृ.-बादरायणस्मृतिः

बृ. उ.-बृहदारण्यकोपनिषत्

बृ. बा-बृहद्वाशिष्टम्

ब्र. विं. उ.-ब्रह्मबिन्दूपनिषत्

ब्रं. पु.-ब्रह्माण्डपुराणम्

ब्रं. वि.-ब्रह्मविद्योपनिषत्

ब्रं. सू.-ब्रह्मसूत्रम्

बो.—बोधायनत्

भ. गी.—भगवद्गीता

भार.—भारतम्

भाग.—भागवतम्

म. आ.—मकुटागमः

म. भा.—महाभारतम्

महाना.—महानारायणोपनिषत्

मनु.—मनुस्मृतिः

महो.—महोपनिषत्

माण्डू.—माण्डूक्योपनिषत्

मात्स्य. पु.—मात्स्यपुराणम्

मुद्गलो.—मुद्गलोपनिषत्

मुण्डको.—मुण्डकोपनिषत्

मै.—मैत्रोपनिषत्

मैत्रा.—मैत्रायण्युपनिषत्

य.—यजुर्वेदः

य. आ.—यजुर्वेदारण्यकः

या. स्मृ.—याज्ञवल्क्यस्मृतिः

यो. स्मृ.—योगस्मृतिः

व्या. गी.—व्यासगीता

व्या. जै. सं.—व्यासजैमिनिसंवादः

रा.—रामायणम्

रु. जा.—रुद्राक्षजाबालोपनिषत्

रुद्रा.—रुद्राध्ययः

रुद्रो.—रुद्रोपनिषत्

रु. सू.—रुद्रसूक्तम्

रु. या.—रुद्रयामलः

लिङ्गो.—लिङ्गोपनिषत्

लिं. पु.–लिङ्गपुराणम्

लैं.–लिङ्गपुराणम्

वा. आ.–वातुलागमः

वा. पु.–वायुपुराणम्

वा. सं.–वाजसनेयसंहिता ; वायवीय संहिता

वा. सं.–वामदेवसंहिता

वाराहो.–वाराहोपनिषत्

वि. पु.–विष्णुपुराणम्

विज्ञा.–विज्ञानेश्वरः

वी. आ.–वीरागमः

वि. स्मृ.–विष्णुस्मृतिः

वृ. शा.–वृद्धशातातपः

वे. पा. स्त.–वेदपादस्तवः

शं. स्मृ.–शंखस्मृतिः

शं. सं.–शङ्करसंहिता

शा.–शाकुन्तलम्

शा. स्मृ.–शाण्डिल्यस्मृतिः

शात. स्मृ.–शातातपस्मृतिः

श्रा. प्रा.–श्राद्धप्रकरणम्

शा. उ.–शाण्डिल्योपनिषत्

शि. आ.–शिवागमः

शि. गी.–शिवगीता

शि. पु.–शिवपुराणम्

शि. ध. शा.–शिवधर्मशास्त्रम्

शि. प्र.–शिवाद्वैतप्रकाशः

शि. र.–शिवरहस्यम्

शिवम. स्त.–शिवमहिम्नस्तवः

शै. आ.–शैवागमः

शै. पु.—शैवपुराणम्
श्वे. उ.—श्वेताश्वतरोपनिषत्
स. स्मृ.—संवर्तस्मृतिः
सा. प.—सामपरिशिष्टम्
सां. स्मृ.—सांख्यस्मृतिः
सा. शा.—सामशाखा
स्कां. पु.—स्कान्दपुराणम्
सि. आ.—सिद्धान्तागमः
सि. शि.—सिद्धान्त शिखामणिः
सुबालो.—सुबालोपनिषत्
सू. गी.—सूतगीता
सू. सं.—सूतसंहिता
सौ. पु.—सौरपुराणम्
हरिवं.—हरिवंशः
हंसो.--हंसोपनिषत्
हारी.--हारीत

---

# ग्रन्थऋणम्

## संस्कृतग्रन्थाः

**श्रीकरभाष्यम्**- कोटिलिङ्गशास्त्रि, मल्लिकार्जुनशास्त्रि, परिशोधितम् । सिकिन्द्राबाद् १८९३.

**ब्रह्मसूत्रभाष्यम्**- (श्री नीलकण्ठभगवत्पादप्रणीतम्) श्री मुद्दिगोण्डनागलिङ्गाराध्यकृत, शिवचिन्तामणिप्रभाव्याख्यासमेतम्, ओरियंट् पवर्प्रेस्, तेनाली १९५०.

**विशिष्टाद्वैतब्रह्ममीमांसाभाष्यम्**- (श्रीमन्नीलकण्ठशिवाचार्यप्रणीतम्) वृषभाचलपुटभेदनमठाध्यक्ष विरक्तचरवर मुरिगेन्द्रपण्डितेन परिशोधितम् । विचारदर्पणमुद्राक्षरशाला, कल्याणपुरी १८९०

**ब्रह्ममीमांसा**- श्रीकण्ठशिवाचार्यविरचितभाष्यसमेता
Govt. Oriental Library, Mysore. 1903.

**श्रीभाष्यम्**- श्रीभगवद्रामानुजविरचितम् । सुदर्शनसूरिविरचित श्रुतप्रकाशिकाव्याख्यासहितम् १९६७ सं. I & II उभयवेदान्तग्रन्थमाला, २५, नाथमुनिवीथी, मद्रास् १७.

**ब्रह्मसूत्रभाष्यम्** श्रीमदानन्दतीर्थभगवत्पादाचार्यं विरचितम्, जयतीर्थमुनिविरचित तत्त्वप्रकाशिकासहितम्

**श्री भगवद्गीताभाष्यम्**- नीलकण्ठा(चार्य)राध्य विरचितम् ; मुद्दिगोण्डनागलिङ्गशिवाराध्य विरचित लघुचन्द्रिकासमलङ्कृतम् १९५८.

## ಕನ್ನಡ

ರಾಮಾನುಜದರ್ಶನ– ಡಾ॥ ಎನ್. ಎಸ್. ಅನಂತರಂಗಾಚಾರ್ಯ, ಡಿ. ವಿ. ಕೆ. ಮೂರ್ತಿ, ಕೃ. ಪುರಂ, ಮೈಸೂರು.

ಕರ್ಣಾಟಕದ ಪರಂಪರೆ– ಮೈಸೂರು ರಾಜ್ಯ ಸರ್ಕಾರ, 1970 (ಸಂ. I & II)

" ವೀರಶೈವವಾಙ್ಮಯಾವತಾರವನ್ನು ಕುರಿತು " ವಿದ್ಯಾನಿಧಿ ಚಿದರೆಮಠದ ವೀರಭದ್ರಶಾಸ್ತ್ರಿಗಳು, ಶಿವಾನುಭವ ಸಂ. 15, ಸಂ. 3.1940 ಡಿಶೆಂಬರ್ (ಪು. 75-95)

" ವೀರಶೈವ ವಾಙ್ಮಯಾವತಾರ " (ರಾ. ಸಾ. ಪಿ. ಜಿ. ಹಳಕಟ್ಟಿ, ವಿಜಾಪುರ. ಶಿವಾನುಭವ ಸಂ. 14, ಸಂ. 7-8, ಏಪ್ರಿಲ್-ಮೇ 1940 (ಪು. 362-368),

" ವೀರಶೈವವಾಙ್ಮಯಾವತಾರ " ಡಾ॥ ಚಿಲುಕೂರು ನಾರಾಯಣರಾವ್ ಅವರ ಲೇಖನ ವಿಮರ್ಶೆ (ಸಂ. 14, ಸಂ. 9 ಜೂನ್ 1940. ಪು. 397-409)

" ಶ್ರೀಕರಭಾಷ್ಯ ವಿಮರ್ಶವು " ಸಿದ್ಧರಾಮಪ್ಪದುಂಡಪ್ಪಪಾವಟೆ, ಹುಬ್ಬಳ್ಳಿ, ಶಿವಾನುಭವ ಸಂ. 13 ಸಂ. 1
ಶಿವಾನುಭವ (ಸಂ. 3, 1938 ಪು. 93- 107)
ಅಕ್ಟೋಬರ್ 1938 (ಪು. 3-17)
,, ,, ,, ಸಂ. 12 ಸಂ. 4, 1938 ಪು. 221-232
,, ,, ಸಂ. 12 ಸಂ. 8, ಮೇ 1938 ಪು. 434-442
,, ,, ಸಂ. 12 ಸಂ. 9, ಜೂನ್ 1938 ಪು. 457-465
,, ,, ಸಂ. 12 ಸಂ. 10, ಜುಲೈ 1938 ಪು. 519-536

ವೀರಶೈವವಾಙ್ಮಯಾವತಾರವೂ ಶರಣ ಸಾಹಿತ್ಯ ಲಿಂ॥ ಬಿ. ಶಿವಮೂರ್ತಿಶಾಸ್ತ್ರಿ,
ಡಾ॥ ಚಿ. ನಾರಾಯಣರಾಯರು, ಸಂ. 3, ಸಂ. 8, 1862, ವಿಕ್ರಮ ಸಂ॥ ಶ್ರಾವಣ, ಪು. 500-507
,, ,, ಚಿ॥ ವೀರಭದ್ರಶಾಸ್ತ್ರಿಗಳು, ಸಿಕಿಂದ್ರಾಬಾದ್, ಸಂ. 3, ಸಂ. 10-11 ಪು 583-600

ಶ್ರೀಕರಭಾಷ್ಯವೂ, ವೀರಶೈವ ಧರ್ಮವೂ, " ಶಿವಸುತ " ಸಂ.6, ಸಂ. 9, ನವೆಂಬರ್ 1943 (ಪು. 316-323)

ಶ್ರೀ ಕರಭಾಷ್ಯವೂ ವೀರಶೈವಧರ್ಮವೂ, ಸಾಹಿತ್ಯಸಮಿತಿ ಪತ್ರಿಕೆ, ಧಾರವಾಡ–" ಶಿವಸುತ "
,, ಸಂ. 3, ಸಂ. 4, ಪು. 1-21 ; ,, ,, ,,
,, ಸಂ. 4, ಸಂ. 1, ಪು. 15-24 ; ,, ,, ,,
,, ಸಂ. 4, ಸಂ. 2, ಪು. 1-9 ; ,, ,, ,,
,, ಸಂ. 4, ಸಂ. 3, ಪು. 8-14 ; ,, ,, ,,
,, ಸಂ. 4, ಸಂ. 4, ಪು. 1-13 ; ,, ,, ,,

## ಆಂಧ್ರ ಗ್ರಂಥಮುಲು

ಯೋಗಿಶ್ರೀ ಮುದಿಗೊಂಡ ನಾಗಲಿಂಗಶಿವಾರಾಧ್ಯಕೃತ, ನಂದಿವೆಲುಗು, 1961
ವೇದಾಂತಾರ್ಥ ಪರಿಷ್ಕಾರತಾರಹಾರಮು

ಶ್ರೀ ವೀರಶೈವಾಷ್ಟಾವರಣ ಪ್ರಮಾಣಾಷ್ಟಕಾಭರಣಮು, ಇವಟೂರಿ ನಂದಿಕೇಶ್ವರಶಾಸ್ತ್ರಿ ವಿರಚಿತಮು, 1934.

ENGLISH

The Śrikarabhâṣya Vol. I Edited by C. Hayavadana Rao, Introduction, 1936.

A Discourse on Veerasaivism- T. H. M. Sadasivayya, Bharatiya Vidya Bhavan, 1976. (2)

---

ब्रह्ममीमांसासूत्राणां

श्रीपतिपण्डितभगवत्पादाचार्यप्रणीतं

# श्रीकरभाष्यम्

द्वितीयसम्पुटम्

(VOL II)

(तृतीयो भागः)

श्रीः

ॐ शिवाभ्यां नमः

# अथ श्रीकरभाष्ये द्वितीयाध्यायस्य

## द्वितीयः पादः ।

### द्वितीयपादावतारिका

अत्र **प्रथमपादे** विपक्षाः **सांख्य-योग-काणादाद्वैतादि** वादाः सर्ववेदान्तसिद्ध द्वैताद्वैतमतसिद्धान्तस्वपक्षसिध्यर्थं [1]निराकृताः । **ईक्षत्यधिकरणे** वेदाप्रतिपाद्यत्वेन प्रधान-जगत्कारणत्वं निरस्य ब्रह्मकारणत्वं साधितम् ; **इह तु** केवलयुक्त्याभासप्राधान्येन प्रधानस्य जगत्कारणत्वं युक्तमित्याक्षेपे युक्तियुक्तत्वेन पुनर्निरस्तत्वादपौनरुक्त्यदोषः । सांख्यादि दुर्वाद-निरासेन मुमुक्षूणां शुद्धवैदिकमार्गनिष्ठादृढीकरणादस्य पादस्य [2]**श्रुत्यविरोधाध्यायसङ्गतिः** । सर्ववेदान्तसमन्वयविरोधपरिहारपूर्वकस्वपक्षस्थापनस्य पूर्वपादेऽपि सिद्धत्वादुभयोः पूर्वापर-पादयोरुपजीव्योपजीवकभावसङ्गतिः । परपक्षप्रतिक्षेपाभावे स्वपक्षसिद्धान्तज्ञानायोगात् स्वपक्ष-स्थापनहेतुत्वेन पूर्वपादस्योपजीव्यत्वं व्याचक्ष्यते । परपक्षनिरासपरत्वादेवे[3] सर्वेषामधिकरणानां सारसङ्गतिरुपदिष्टा ।

---

[1] विपक्षाः प्रतिक्षिप्यन्ते (ग. A) [2] श्रुत्यध्यायसङ्गतिः (ग. A) [3] पादसङ्गतिः उपदिष्टं (ग. A)

## रचनानुपपत्त्यधिकरणम् ॥ १ ॥

**सर्वधर्मोपपत्तेश्च** इति पूर्वपादान्त्यसूत्रे निर्गुणसगुणत्वादिधर्माणां परमशिवशक्तिसङ्कोचविकासत्वेन उपपत्तिरिति सिद्धान्ते तेषां धर्माणां सङ्कोचविकासहेतुत्वं प्रधानस्यापि सम्भवतीत्याक्षेपे तन्निराकारणार्थमधिकरणारम्भकत्वादेषा **अवान्तरसङ्गतिः** । तत्र फलमुपक्रमोपसंहाराभ्यां वेदविरुद्धयुक्त्याभासनिरासपूर्वकसर्ववेदान्तसिद्ध**भेदाभेदमतसमन्वय**सिद्धिरित्युपदिष्टम् ।

## रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ १ ॥

**अनुमानं** अनुमानसाध्यं प्रधानं जगत्कारणं न भवति । कुतः ? **रचनानुपपत्तेः**— स्वपरज्ञानशून्यस्य जडस्य प्रधानस्य जगत्सृष्टिहेतुत्वानुपपत्तेश्च । किञ्च— जडस्य **प्रवृत्तेः**— प्रयत्नस्याप्यनुपपत्तेश्च । तस्मात्प्रधानं जगत्कारणं न भवति । स्वेच्छाभावात् । सांख्यस्य वेदान्तानुकूलत्वेन शिष्टैरादृतत्वात् तत्रोक्तप्रधानजगदुपादानत्वं प्रमामूलं, भ्रान्तिमूलं वेति **सन्दिह्यते** ।

प्रधानजगदुपादानत्वं प्रमाणमूलमेव ।

"**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त ।**
**षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥**"

इति **तत्त्वसंग्रहः** । मूलप्रकृतिर्नाम— सुखदुःखमोहात्मकानि लाघवप्रकाशचलनोपष्टम्भगौरवावरणकार्याण्यत्यन्ता**तीन्द्रियाणि,** कार्यैकनिरूपणविवेकान्यन्यूनानतिरेकाणि समतामुपेतानि सत्त्वरजस्तमांसि **द्रव्याणि** । स च सत्त्वरजस्तमसां साम्यरूपा **प्रकृतिरेका** स्वयमचेतना अनेकचेतनभोगापवर्गार्था नित्या सर्वगता सततविक्रिया, न कस्यचिद्विकृतिः ; अपि तु परम-

कारणमेव। महदाद्यास्तद्विकृतयोऽन्येषां च प्रकृतयस्सप्त; महानहङ्कारः, शब्द-स्पर्श-रूप-रस-गन्ध-तन्मात्राणि। तत्राहङ्कारः त्रिधा– वैकारिकस्तैजसो भूतादिश्च, क्रमात्सात्त्विको राजसस्तामसश्च। तत्र वैकारिकास्सात्त्विक-इन्द्रियादिः, भूतादिस्तामसो महाभूतहेतुभूत-तन्मात्रहेतुः। तैजसो राजसस्तूभयोरनुग्राहकः। आकाशादीनि **पञ्चमहाभूतानि**, श्रोत्रादीनि **पञ्चज्ञानेन्द्रियाणि**, वागादीनि **पञ्चकर्मेन्द्रियाणि** मन इति; केवलविकाराः षोडश। **पुरुषस्तु** निष्परिमाणत्वेन न कस्यचित्प्रकृतिः न कस्यचिद्विकृतिश्च:, अत एव निर्धर्मकश्चैतन्यमात्रवपुर्नित्यो निष्क्रियस्सर्वगतः प्रतिशरीरं भिन्नश्च। निर्विकारत्वान्निष्क्रियत्वाच्च तस्य कर्तृत्वं भोक्तृत्वं च न सम्भवति। एवंभूतेऽपि तत्वे मूढाः प्रकृति-परुषसन्निधिमात्रेण पुरुषस्य चैतन्यं प्रकृतावध्यस्य प्रकृतेश्च कर्तृत्वं स्फटिकमणाविव जाकुसुमस्थारुणिमानं पुरुषे अध्यस्य "**अहं कर्ता भोक्ता**" इति मन्यन्ते। एवमज्ञानाद्भोगः, तत्त्वज्ञानादपवर्गः, तदेतत्प्रत्यक्षानुमानागमैः साधयन्ति। तत्र प्रत्यक्षसिद्धेषु पदार्थेषु [1]न तव विवादपदमस्ति। आगमोऽपि कपिलादिसर्वज्ञज्ञानमूलमिति प्रतिपादनात्प्रामाण्यम्।

[2]किञ्च– आध्यात्मिकादितापत्रयदुःखमोहात्मकप्रकृतिसामान्यधर्माणामेव प्रपञ्चे दर्शनात् प्रधानस्यैव जगदुपादानत्वं समुचितं, दन्वितत्वात्। यद्यत्रान्वितं तत्तत्रोपादानं घटादिवत्। **कारणधर्माः कार्ये परिसंक्रामन्तीतिन्यायेन**, प्रधाननिष्ठजडदुःखमोहादिधर्माणां प्रपञ्चे द्योतनाच्च तदेव जगदुपादानमिति प्राप्ते–

समाधीयते– **स्मृत्यनवकाशाधिकरणे कापिलशास्त्रं** निरस्तम्। "**रचनानुपपत्तेश्च**" त्यत्र अनुमीयत इत्यनुमानमिति त्वदुदीरितप्रधानस्य जडत्वेन चेतनाचेतनात्मकविचित्रनानाविधप्रपञ्चहेतुत्वं न सम्भवति। कुतः? **रचनानुपपत्तेः**। अचेतनत्वात् परस्परभावाभिज्ञानशून्यत्वेन विचित्रनानाविधजगद्रचनानुपपत्तेः। तद्यथा लोके मण्डप-गोपुर-प्राकार-प्रासाद-रथादिकल्पने जडपाषाण-सैकत-काष्ठादीनां स्वातन्त्र्येण तत्तन्मण्टपादिकल्पनादर्शनात्, चेतनाधिष्ठितत्वेन तत्कार्यारम्भद्योतनाच्च न जडस्य प्रधानस्य स्वातन्त्र्येण जगदुपादानत्वमुपदिश्यते। चकारद्वयमनैकान्त्यं समुच्चिनोति, न ह्यन्वितं शौक्ल्यं गोत्वादि-

---

[1] नातीव विहितपदमस्ति (ग A). [2] उत (ग A)

कारणत्वव्याप्तमिति । माभूदन्वितानामपि शौक्ल्यादिधर्माणां कारणत्वम् । द्रव्यस्य तु हेमादेः कार्यान्वितस्य कारणत्वव्याप्तिरस्त्येव । सत्त्वादीन्यपि द्रव्याणि कार्ये अन्वितानि कारणत्वव्याप्तानीति न च वाच्यम् । यतस्तत्वादयो द्रव्यधर्माः न तु द्रव्यस्वरूपं, सत्त्वादयोऽपि पृथिव्यादिद्रव्यगतलघुत्वप्रकाशादिहेतुभूतास्तत्स्वभावविशेषा एव । न तु मृद्धिरण्यादिद्रव्यतया कार्यान्विता उपलभ्यन्ते । गुणा इत्येव च सत्त्वादीनां प्रसिद्धिः, यच्च कारणव्यवस्थासिद्धये जगत एकमूलत्वमुक्तम् । तदपि सत्वादीनामनेकत्वान्नोपपद्यते । अत एव कारणव्यवस्था च न सिध्यति । साम्यावस्थास्सत्त्वादय एव हि प्रधानमिति तन्मतम् । अतः कराणबहुत्वादनवस्था तदवस्थैव । न च तेषामपरिमितत्वेन व्यवस्था-सिद्धिः । अपरिमितत्वे हि त्रयाणामपि सर्वगतत्वेन न्यूनाधिकत्वाभावाद्वैषम्यासिद्धेः कार्या-रम्भासम्भवात्, कार्यारम्भायैव परिमितत्वमवश्याश्रयणीयम् ।

ननु रथादिषु स्पष्टं चेतनाधिष्ठितत्वं दृष्टं, तद्व्यतिरिक्तं सर्वं पक्षीकृतमित्या-शङ्क्याह—

## पयोम्बुवच्चेत्तत्रापि ॥ २ ॥

पयसः क्षीरस्य स्तनेषु विद्यमानस्य यथा स्वातन्त्र्येण चलनं तद्वदचेतनस्य प्रधानस्य स्वातन्त्र्येण महदहंकारादिजगद्धेतुत्वमिति चेत्तत्रापि क्षीरजलयोरपि **परमेश्वर प्रेरितत्वेन** स्वातन्त्र्याभावात् इति सूत्रसूचितार्थः ।

अत्र अन्योऽप्यर्थः— अचेतनप्रधानस्य विचित्रजगद्रचनानुपपत्तिरिति यदुक्तं तन्न ; यतः पयोम्बुवत्प्रवृत्तिर्दृश्यते । पयसस्तावद्दधिभावेन परिणममानस्यान्यानपेक्षस्याद्यपरिस्पन्दप्रभृति परिणामपरम्परा स्वत एवोपपद्यते । यथा च वारिदविमुक्तस्याम्बुन एकरसस्य नारिकेल-ताल-चूत-कपित्थ-निम्ब-तिन्त्रिण्यादिविचित्ररसरूपेण परिणामप्रवृत्तिः स्वत एव दृश्यते । तथा प्रधानस्यापि परिणामस्वभावस्यान्यानधिष्ठितस्यैव प्रतिसर्गावस्थायां सदृशपरिणामेऽवस्थितस्य सर्गावस्थायां गुणवैषम्यनिमित्तविचित्रपरिणाम उपपद्यते । यथोक्तं— **"परिणामतस्सलिल-वत्प्रतिप्रतिगुणाश्रयविशेषादिति"** । तदेवाव्यक्तमनन्यापेक्षं प्रवर्तत इति चेत्—

**वदामः तत्रापीति** । यत्तु क्षीरजलादिदृष्टान्ततया निदर्शितं तत्रापि प्राज्ञानधिष्ठाने प्रवृत्तिर्नोपपद्यते । तदपि पूर्वत्र पक्षीकृतमित्यभिप्रायः । **"यो रुद्रो अग्नौ यो**

अप्सु" इत्यादिषु सर्वान्तर्यामित्वेन सर्वप्रेरकत्वस्य परमेश्वर एव व्यवस्थापनात् पयोम्बुस्रावचलनपरिणामादिकमपि परमेश्वराधीनमिति निर्णीयते, जडस्य स्वातन्त्र्याभावात्।

हेत्वन्तरमाह–

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ३ ॥

कापिलमते **व्यतिरेकानवस्थितेः** प्रधानव्यतिरिक्त प्रेरकेश्वरस्यानवस्थितेरनङ्गीकारात **अनपेक्षत्वात्** स्वातन्त्र्यात् सर्वकालेष्वपि प्रकृतेः प्रपञ्चसृष्टिः स्यात्। तस्याश्च तदुपादानकारणत्वेन चेतनाचेतनप्रपञ्चप्रळयासम्भवप्रसङ्गात्। परशिवस्य सर्वज्ञत्वेन कालज्ञानदर्शनात्। कदाचिज्जगन्निर्मापकत्वलीला, तूष्णीं भूतावस्थायां कदाचित् केवलावस्था च युक्ता। प्रज्ञाहीनस्य प्रधानस्य अन्धसन्ध्यान्यायवत्कालज्ञानायोगान्न कदाचिदपि जगत्कारणत्वमुपपद्यते[1]। सत्यसंकल्पेश्वराधिष्ठानानपेक्षपरिणामित्वे सर्गव्यतिरेकेण प्रतिसर्गावस्थाया अनवस्थितिरिति प्रसङ्गाच्च न प्राज्ञाधिष्ठितं प्रधानं कारणम्। प्राज्ञाधिष्ठितत्वे तस्य सत्यसङ्कल्पत्वेन सर्गप्रतिसर्गविचित्रसृष्टि व्यवस्थासिद्धिः। प्राज्ञाधिष्ठितत्वेऽपि तस्यावाप्तसमस्तकामस्य परिपूर्णस्यानवधिकातिशयानन्दस्य निरवद्यस्य निरञ्जनस्य सर्गप्रतिसर्गव्यवस्थाहेत्वभावात् विषमसृष्टौ निर्दयत्वप्रसङ्गाच्च समानोऽयं दोष इति न च वाच्यम्। परिपूर्णस्यापि लीलार्थं प्रवृत्तिसम्भवात्, सर्वज्ञस्य तस्य परिणामविशेषापन्नप्रकृतिदर्शनरूपसर्गप्रतिसर्गविशेषहेतोसम्भवात् क्षेत्रज्ञकर्मणामेव विषमसृष्टिव्यवस्थापकत्वाच्च।

नन्वेवं क्षेत्रज्ञपुण्यपापरूपकर्मभिरेव सर्वावस्थास्सिध्यन्तीति कृतमीश्वरेणाधिष्ठात्रा। पुण्यापुण्यरूपानुष्ठितकर्मसंस्कृता प्रकृतिरेव पुरुषार्थानुरूपं तथा तथा व्यवस्थया परिणंस्यते तथा विषादिदूषितानामन्नपानादीनामौषधविशेषाप्यायितानां च सुखदुःखहेतुभूतः परिणामविशेषे देशकालाण्ययवस्थया दृश्यते। किञ्च सर्गप्रतिसर्गव्यवस्था देवादिविषमसृष्टिकैवल्य व्यवस्था च सर्वप्रकारपरिणामशक्तियुक्तस्य प्रधानस्यैवोपपद्यत इति चेत्, न भिज्ञो भवान्, पुण्यापुण्यकर्मस्वरूपयोः। पुण्या-पुण्यस्वरूपे हि शास्त्रैकसमधिगम्ये। शास्त्रं चानादि-

---

[1] अत्र 'जगत्कारणत्वमुपपद्यते' इत्यनन्तरमधस्तनो ह्यधिकः पाठो 'ग A' प्रतौ दृश्यते यथा– "इति सूत्रसूचितार्थः" इति।

निधनाविच्छिन्नपाठवेदाख्याक्षरराशिः। तच्च सम्प्रदायानाघ्रातप्रमादादिदोषगन्धान् न सहते। तच्च परमपुरुषाराधनतद्विपर्ययरूपे कर्मणी पुण्यापुण्ये तदनुग्रहनिग्रहायत्ते; तत्फले च सुखदुःखे इति वदति। तदाह भट्टाचार्यः। "**फलसंविभत्सया हि कर्मभिरात्मानं पिप्रीषन्ति, स प्रीतोऽलं फलायेति शास्त्रमर्यादा**" इति। तथा च श्रुतिः— "**इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः**" इति। तथा च भगवता स्वयमेवोक्तम्—

"**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततः।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः**"॥ इति।

"**तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु**॥" इति च।

स भगवान्महादेवोऽवाप्तसमस्तकामस्सर्वज्ञस्सर्वेश्वरस्सत्यसंकल्पः स्वमाहात्म्यानुगुणलीला-प्रवृत्तः एतानि कर्माणि समीचीनान्येतान्यसमीचीनानीति कर्मद्वैविध्यं संविधाय तदुपासनोचितदेहेन्द्रियादिकं तन्नियमनशक्तिं च सर्वेषां क्षेत्रज्ञानां सामान्यतः प्रदिश्य स्वशासनावबोधिशास्त्रं प्रदर्श्य तदुपसंहारार्थं चान्तरात्मतयानुप्रविश्यानुमन्तृतया च नियच्छंस्तिष्ठति। क्षेत्रज्ञास्तु तदाहितशक्तयः तत्प्रदिष्टकारणकळेवरादिकास्तदाधाराश्च स्वयमेव स्वेच्छानुगुण्येन पुण्यापुण्यरूपे कर्मणी उपाददाते। ततश्च पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैर्वर्धयते, शासनातिवर्तिनं च तद्विपर्ययैर्योजयति। अतस्स्वातन्त्र्यादिवैकल्य-चोद्यानि नावकाशं लभन्ते।

**दया हि** नाम स्वार्थनिरपेक्षा परदुःखासहिष्णुता, सा च स्वशासनातिवृत्तिव्यवसायिन्यपि प्रवर्तमाना न गुणायावकल्पते। प्रत्युत अपुंस्त्वमेवावहति; तन्निग्रह एव तत्र गुणः। अन्यथा शत्रुनिग्रहादीनामगुणत्वप्रसङ्गात्। स्वशासनानिवृत्तिव्यवसायनिवृत्तिमात्रेण अनाद्यनन्तकल्पोपचितदुर्विषयानन्तापराधानङ्गीकारेण सः निरतिशयसुखसंवृद्धये स्वयमेव प्रयतते। यथोक्तं—

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते**॥

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥**

इति । न तस्मात् प्रधानं जगत्कारणम् ।

गोभक्षिततृणादिपदार्थानां क्षीराद्याकारेण परिणामदर्शनादचेतनप्रधानस्य स्वातन्त्र्येण प्रपञ्चोपादानत्वमाशंक्याह–

## अन्यत्राभावाच्च न तृणादिवत् ॥ ४ ॥

**तृणादिपदार्थानां**– निमित्तान्तरानपेक्षतया क्षीराद्याकारेण परिणामित्वात्तद्वदचेतन-प्रधानस्यापि महदहंकारादिप्रपञ्चाकारेण परिणामित्वं सम्भवतीति चेन्न । तृणस्यापि स्वातन्त्र्येण परिणामित्वं युज्यते ; कुतः ? **अन्यत्राभावाच्च** । वृषभोदरविद्यमानतृणादीनां क्षीराकारेण परिणामायोगात् स्वातन्त्र्येण परिणामित्वाङ्गीकारे सर्वपशुभक्षिततृणादीनां क्षीरा कारेण परिणामः प्रसज्येत ? तस्मात् परमशिवप्रेरणेनैव तृणादीनां क्षीराकारेण परिणामित्वं व्यपदिश्यते । प्रधानस्य स्वतः परिणामित्वाभ्युपगमे पुरुषापेक्षाभावः प्रसज्येत ? अचेननस्य प्रधानस्य स्वतः पुरुषार्थसाधनत्वे घटादीनां स्वतो जलाकर्षण-सिद्धिरापद्येत । प्रज्ञाधिष्ठितत्वेऽपि प्रधानं चेतनपुरुषार्थं साधयतीति चेत् **तदीश्वरायत्तमेव** ।- अचेतनस्य चेतनानुकूलप्रयोजनेच्छापरिणामित्वायोगात् न प्रधानस्य तत्त्वतो जगदुपा दानत्वम् ।

पुनर्हेत्वन्तरं दर्शयति–

## पुरुषाश्मवदिति चेत्तथापि ॥ ५ ॥

**पुरुषाश्मवदिति**– चेद्यथा लोके क्षेत्रज्ञसन्निधानादिन्द्रियाणां विषयेषु व्यापारः यथाश्मनां अयस्कान्तमणीनां सन्निधानादयस्सूच्यादिचलनं तद्वत्परमशिवसान्निध्यात्प्रधानस्यापि महदादिजगदाकारेण परिणामस्सम्भवतीति **चेत् तथापि**– दोषाणामनिर्मोक्षप्रसङ्गः । तथाहि– प्रधानस्य पुरुषप्रेरितत्वे प्रधानं स्वतन्त्रमिति स्वाभ्युपगमविरोधः । कूटस्थस्य प्रवर्तकत्वें कूटस्थत्वहानिः, स्वव्यापारं विना प्रवर्तकत्वायोगात् । पङ्गोरपि वाग्व्यापारस्य सत्त्वात् ।

अयस्कान्तस्यायस्सन्निधिरेव व्यापारः। प्रधान-पुरुषसन्निधेर्नित्यत्वेन व्यापारत्वायोगः। नित्यस्यापि व्यापारत्वे प्रधानप्रवृत्त्यनुच्छेदादयो दोषाः द्रष्टव्याः। तस्मात्प्रधानस्य तत्सन्निधानात्स्वातन्त्र्यमपि न सम्भवति।

यद्यपि चैतन्यमात्रवपुः पुरुषो निष्क्रियः, प्रधानमपि दृक्छक्तिविकलं; तथापि पुरुषसन्निधानादचेतनं प्रधानं प्रवर्तते तथा दर्शनात्। गमनशक्तिविकलदृक्छक्तियुक्तपङ्गु-सन्निधानात् तच्चैतन्योपकृतो दृक्छक्तिविकलः प्रवृत्तिशक्तोऽन्धः प्रवर्तते। अयस्कान्तसन्निधानाच्चायः प्रवर्तते। एवं प्रकृतिपुरुषसंयोगकृतो जगत्सर्गः प्रवर्तते। यथोक्तम्—"पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य। पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" इति चेत्— अत्रोत्तरं "**तथापीति**"।

एवमपि प्रधानस्य प्रवृत्त्यसम्भवस्तदवस्थ एव। पङ्गोर्गमनशक्तिविकलस्यापि मार्ग-दर्शनतदुपदेशादयः कादाचित्काः विशेषास्सहस्रशः सन्ति। अन्धोऽपि चेतनस्संस्तदुपदेशा-वगमेन प्रवर्तते। तथायस्कान्तमणेरप्ययस्समीपागमनादयस्सन्ति। पुरुषस्य तु निष्क्रियस्य न तादृशा विकारास्सम्भवन्ति। सन्निधानमात्रस्य नित्यत्वेन नित्यसर्गप्रसङ्गः, नित्यमुक्त-त्वेन बन्धाभावोऽपवर्गाभावश्च। अतः प्रधानं कारणं न भवति।

पुनर्हेत्वन्तरमाह—

## अङ्गित्वानुपपत्तेः ॥ ६ ॥

प्रळये गुणत्रयसाम्यावस्थारूपेण विद्यमानानां गुणत्रयाणां ईश्वरप्रेरणं विना पर-स्परमङ्गाङ्गिभावानुपपत्तेश्च, सात्त्विकराजसतामसप्रपञ्चसृष्टिर्न सम्भवति। गुणत्रयाणामुत्कर्ष-निकर्षनिबन्धनादङ्गाङ्गिभावाद्धि जगत्प्रवृत्तिः प्रति प्रति गुणाश्रमविशेषादिति वदद्भिर्भवद्भि-रुपगम्यते। प्रतिसर्गावस्थायान्तु साम्यावस्थानां सत्त्व-रजस्तमसां अन्योन्याधिक्यन्यूनत्वा-भावादङ्गाङ्गिभावानुपपत्तेर्न जगत्सर्गं उपपद्यते। तथापि वैषम्याभ्युपगमे नित्यसर्गप्रसङ्गः। तस्मान्न प्रधानं जगदुपादानम्।

गुणत्रयाणामपि समप्राधान्येन प्रवृत्त्ययोगः। किन्तु सात्त्विकसृष्टौ सत्त्वगुणस्य प्राधान्यम्। तदितरयोरुपसर्जनत्वम्। एवं राजसतामसयोरपि कालभेदेन नानाविध-स्वभावविशिष्टप्रधानमेवानुमीयत इत्याशङ्क्य निरस्यति—

## अन्यथानुमितौ च ज्ञानशक्तिवियोगात् ॥ ७ ॥

**अन्यथा–** नानास्वभावविशिष्टत्वेन प्रधानस्यानुमितावङ्गीक्रियमाणायामप्यचेतनस्य ज्ञानशक्तिवियोगात् ज्ञानशक्त्यभावात्। कालविशेषज्ञानायोगात्सर्वदा तस्य जगदुपादान-कारणत्वं न सम्भवति।

पुनर्हेत्वन्तरमाह–

## अभ्युपगमेऽप्यर्थाभावात् ॥ ८ ॥

**अभ्युपगमेऽपि–** प्राज्ञानाधिष्ठितस्य स्वातन्त्र्येण परिणामाङ्गीकारेऽपि जडस्य प्रधानस्य प्रपंचनिर्माणेन अर्थाभावाद्भोगमोक्षादिप्रयोजनाभावात् प्रपञ्चजनकत्वमनुपपन्नम्। अनुमानेन प्रधानसिध्यभ्युपगमेऽपि प्रधानेन प्रयोजनाभावान्न तदनुमातव्यम्।

"**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य**" इति

प्रधानस्य प्रयोजनं पुरुषभोगापवर्गावभिमतौ। तौ च न सम्भवतः। पुरुषस्य चैतन्यमात्रवपुषो निष्क्रियस्य निर्विकारस्य निर्मलस्य तत एव नित्यमुक्तस्वरूपस्य प्रकृति-दर्शनरूपो भोगस्तद्वियोगरूपोऽपवर्गश्च न सम्भवति। एवं रूपस्यैव प्रकृतिसन्निधानात् परिणामविशेषसुखदर्शनरूपभोगसम्भावनायां प्रकृतिसन्निधानस्य नित्यत्वेन कदाचिदप्यपवर्गो न सिध्यति। प्रयोजनरहितस्यापि शिवस्य परब्रह्मणः लीलया जगज्जनकत्वमुपपन्नम्। अचेतनस्य प्रधानस्य लीलाऽसम्भवात् जगत्कारणत्वमयुक्तम्।

पुनर्हेत्वन्तरमाह–

## विप्रतिषेधाच्चासमञ्जसम् ॥ ९ ॥

**विप्रतिषेधाच्च–** सकलवेदान्तविरुद्धत्वाच्च सांख्यमतमसमञ्जसमनुपपन्नम्[1]। विप्रति-षिद्धं चेदं सांख्यानां दर्शनम्। तथाहि– प्रकृतेः पदार्थत्वेन दृश्यत्वेन भोग्यत्वेन च

[1] अत्रायमधस्तानो ह्यधिकः पाठो 'ग A' प्रतौ दृश्यते यथा— "सूत्रसूचित सूक्ष्मार्थः"

प्रकृतेर्भोक्तारमधिष्ठातारं द्रष्टारं साक्षिणं च पुरुषमभ्युपगम्य प्रकृत्यैव साधनभूतया तस्य कैवल्यमपि प्राप्यं वदन्त एव तस्य नित्यनिर्विकारचैतन्यमात्रस्वरूपतया अकर्तृत्वं कैवल्यं च स्वरूपमेवाहुः। तत एव बन्धमोक्षसाधनानुष्ठानं मोक्षं च प्रकृतेरेवेत्याहुः। एवम्भूत-निर्विकारोदासीनपुरुषसन्निधानात् प्रकृतेरितरेतराध्यासेन सर्गादिप्रवृत्तिं पुरुषभोगापवर्गार्थत्वं चाहुः।

[1]संघातपरार्थत्वात् त्रिगुणादिविपर्ययाद् अधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥

तस्माच्च विपर्ययात्सिद्धं साक्षित्वमस्य पुरुषस्य।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वं अकर्तृभावाच्च॥

पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य॥

इत्युक्त्वा एवमाहुः। "तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते नानाश्रया प्रकृतिरिति॥

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः॥

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पंग्वन्धवदुभयोरपि संयोगस्तत्कृतस्सर्गः॥" इति।

साक्षित्व-द्रष्टृत्व-भोक्तृत्वादयो नित्यनिर्विकारस्य अकर्तृत्वदासीनस्य कैवल्यैकस्वरूपस्य न सम्भवति। एवं रूपस्य तस्य अध्यासमूलभ्रमोऽपि न सम्भवति, अध्यासभ्रमयोरपि विकारित्वात् प्रकृतेश्च तौ न सम्भवतः, तयोश्चेतनधर्मत्वात्। अध्यासो नाम अन्य-स्मिन्नन्यधर्मानुसन्धानम्। स च चेतनधर्मो विकारश्च। न च पुरुषस्य प्रकृति-सन्निधिमात्रेणाध्यासादयस्सम्भवन्ति। निर्विकारत्वादेव सम्भवन्ति चेत् नित्यं प्रसज्येरन्।

---

[1] संघातपरार्थत्वात् (ग A).

सन्निधेरकिञ्चित्कारणत्वं च न विलक्षणत्वादित्यत्र प्रतिपादितम्। प्रकृतिरेव संसरति बध्यते मुच्यते चेत्कथं नित्यमुक्तस्य पुरुषस्योपकारिणी सेत्युच्यते? वदन्ति हि—

"नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति॥"

तथा—

"प्रकृतिर्येन पुरुषेण यथास्वभावा दृष्टा।
तस्मात्पुरुषात्तदानीमेव निवर्तते॥" इति चाहुः।

"रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्तात्।
पुरुषस्य तथात्मानं प्रकाश्य निवर्तते प्रकृतिः॥

प्रकृतेस्सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य॥"

इति यत्तदसङ्गतम्। पुरुषो हि नित्यमुक्तत्वात् निर्विकारत्वात् न तां कदाचिदपि पश्यति नाध्यस्यति च, स्वयं च स्वात्मानं न पश्यत्यचेतनत्वात्। पुरुषस्य स्वात्मदर्शनं स्वदर्शनमिति नाध्यस्यति च; स्वयमचेतनत्वात्; पुरुषस्य दर्शनरूपविकारासम्भवात्। अतस्सन्निधिमात्रमेव दर्शनमित्युच्यते। सन्निधेर्नित्यत्वेन नित्यदर्शनप्रसङ्ग इत्युक्तम्। स्वरूपातिरिक्तकादाचित्कसन्निधिरपि नित्यनिर्विकारस्य नोपपद्यते। किञ्च मोक्षहेतुस्तु स्वसन्निधानरूपमेव दर्शनं चेद्बन्धहेतुरपि तदेवेति नित्यवद्बन्धो मोक्षश्च स्याताम्। अयथार्थदर्शनं बन्धहेतुः यथावस्तुस्वरूपदर्शनं मोक्षहेतुरिति चेदुभयविधस्यापि दर्शनस्य सन्निधानरूपतानतिरेकात् सदोभयप्रसङ्ग एव। सन्निधेरनित्यत्वे तस्य हेतुरन्वेषणीयः, तस्यापीत्यनवस्था। अथैतद्दोषपरिजिहीर्षया स्वरूपसद्भाव एव सन्निधिरिति तदा स्वरूपस्य नित्यत्वेन नित्यवद्बन्धमोक्षौ। अतः एवमादेर्विप्रतिषेधात् साङ्ख्यानां दर्शनमसमञ्जसम्।

येऽपि कूटस्थनित्यनिर्विशेषस्वप्रकाशचिन्मात्रं ब्रह्म अविद्यासाक्षित्वेन अपारमार्थिकबन्धमोक्षभागिति वदन्ति तेषामप्युक्तरीत्या अविद्यासाक्षित्वाध्यासासम्भवात् असामञ्जस्यमेव।

**इयांस्तु विशेषः– सांख्याः** जनन-मरणप्रतिनियमादिव्यवस्थासिध्यर्थं पुरुषबहुत्व-मिच्छन्ति। ते तु तदपि नेच्छन्तीति सुतरामसामाञ्जस्यम्। यत्तु प्रकृतेः पारमार्थ्या-पारमार्थ्यविभागेन वैषम्यमुक्तं तदयुक्तम्। पारमार्थिकत्वेऽप्यपारमार्थिकत्वेऽपि नित्यनिर्वि-कारस्वप्रकाशैकरसचिन्मात्रस्य व्यतिरिक्तसाक्षित्वाद्यनुपपत्तेः, पारमार्थिकत्वे तु तस्याः दृश्यत्व-बाध्यत्वाद्युपगमात्सुतरामसङ्गतम्। औपाधिकभेदाभेदवादेऽप्युपाधिसंम्बन्धिनो ब्रह्मणोऽयमेव स्वभाव इत्युपाधि संबंधाद्यनुपपत्तेरसामञ्जस्यं प्रागेवोक्तम्।

---

## महद्दीर्घाधिकरणम् ॥ २ ॥

एवं स्मार्तमतं निराकृत्य वैशेषिकनैयायिकमतं निराकरोति–

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ १० ॥

"कारणगुणा हि कार्यगुणारम्भकाः" इति न्यायात् ज्ञानानन्दात्मकेश्वरोपादानत्वे जगतस्तद्धर्मात्मकत्वं स्यादिति चेन्, ह्रस्वपरिमण्डलाभ्यां ह्रस्वाभ्यां परिमण्डलाभ्यां परमाणुभ्यां महत्परमाण्वपेक्षया अधिक [1]परिणामविशिष्टं दीर्घं च द्व्यणुकं यथोत्पद्यते तथा ज्ञानानन्दात्मकेश्वरस्य जडदुःखात्मकचेतनाचेतनप्रपञ्चकारणत्वं समुचितम् । चेतनाचेतनात्मकत्वेन प्रपञ्चस्योपपन्नत्वात् जगतः परमाणुकारणत्वं ब्रह्मकारणत्वं वेति संशयः ।

"कारणगुणाः कार्ये स्वसमानजातीयगुणारम्भकाः" इति न्यायेन जडदुःखात्मकस्य प्रपञ्चस्य प्रज्ञानन्दात्मकस्य ब्रह्मणः [2]परिणामत्वं नोपपद्यते । परमाण्वादीनामचेतनत्वेन चेतनक्षेत्रज्ञकर्मानुगुण्येनेश्वरप्रेरणया द्व्यणुकत्र्यणुकादिक्रमेण परमाणूनामेव जगत्कारणत्वं समञ्जसमिति प्राप्ते ।

वदामः– प्रधानकारणवादवद्युक्त्याभासप्रधानपरमाणुकारणवैशेषिकवादोप्यसमञ्जसः । सूत्रे वा शब्दश्चार्थे । ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घवत्त्र्यणुकोत्पत्तिवादवदन्यच्च तदभ्युपगतं सर्वमसमञ्जसम् । परमाणुभ्यो द्व्यणुकादिक्रमेण जगदुत्पत्तिवादवदन्याप्यसामञ्जस्यमित्यर्थः ।

तथाहि– तन्तुप्रभृतयोह्यवयवास्स्वांशैः तैस्तैः पार्श्वैस्संयुज्यमाना अवयविनमुत्पादयन्ति । परमाणवोऽपि [3]स्वकीयैस्तैस्तैः पार्श्वैस्संयुज्यमानाः द्व्यणुकादीनामुत्पादका भवेयुः । अन्यथा

---

[1] परिमाण (ग. A). [2] परमाणुत्वं (ग A). [3] स्वकीयैः षड्भिः पार्श्वः (ग. A)

परमाणूनां प्रदेशभेदाभावे सति सहस्रपरमाणुसंयोगेप्येकस्मात्परमाणोरनतिरिक्तपरिमाणतया अणुत्व-ह्रस्वत्व-महत्त्व-दीर्घत्वाद्यसिद्धिस्स्यात् । प्रदेशभेदाभ्युपगमे परमाणवोऽपि सांशास्स्वकीयै-रंशैः, ते च स्वकीयैरंशैरित्यनवस्थेति न च वाच्यम् । अवयवाल्पत्व-महत्त्वाभ्यां हि सर्षप-महीधरयोर्वैषम्यम् । परमाणोरप्यनन्तावयवत्वे अवयवानन्त्यसाम्यात्सर्षप-महीधरयोर्वैषम्यासिद्धः अवयवापकर्षकाष्ठा अवश्याभ्युपगमनीया । परमाणूनां प्रदेशभेदाभावे सत्येकपरमाणुपरि-माणातिरेकप्रथिमा न जायते । सर्षप-महीधरयोरन्तरस्यैवासिद्धेः किं कुर्म इति चेद्वैदिकः पक्षः परिगृह्यताम् ।

यत्तु परैर्ब्रह्मकारणवाददूषणपरिहारपरमिदं व्याख्यातं, तदसङ्गतं केवलं न पौन-रुक्त्यं च । ब्रह्मकारणवादे परोक्तान् दोषान् पूर्वस्मिन् पादे परिहृत्य परपक्षप्रतिक्षेपो ह्यस्मिन् पादे क्रियते । चेतनाद्ब्रह्मणो जगदुत्पत्तिसम्भवश्च "**न विलक्षणत्वा**" दित्यत्र प्रपञ्चितः । अतो **ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुह्रस्वोत्पत्तिवदन्यच्च** तदभ्युगतं **सर्वं असमञ्जसं** इति सूत्रतात्पर्यार्थः ।

---

## परमाणुजगदकारणत्वाधिकरणम् ॥ ३ ॥

**किमत्रान्यदसमञ्जसमित्याह—**

## उभयथापि न कर्मातस्तदभावः ॥ ११ ॥

परब्रह्मणशिवस्य क्षेत्रज्ञानां वा परमाणुप्रेरकत्वम्। **उभयथापि**— पक्षद्वयेऽपि परमाणूनां **कर्म** चलनं न सम्भवतीति क्षेत्रज्ञपरमेश्वरयोरुभयोरपि निरवयवत्वेन निरवयक्षेत्रज्ञानां निरवयवपरमाणुभिस्सह संयोगसम्बन्धाभावादसम्बन्धयोः क्षेत्रज्ञपरमेश्वरयोः प्रेरकत्वाभावात् **अतस्तदभावः**— अतश्चलनाभावात् तदभावः परमाणूनामन्योन्यसंयोगाभावः। तथा च द्व्यणुकत्र्यणुकादिजगदुद्भवो न सम्भवति। **परमाणुकारणवादे** हि परमाणुगतकर्मजनिततत्संयोगपूर्वकद्व्यणुकादिक्रमेण जगदुत्पत्तिरिष्यते। तत्र निखिलजगदुत्पत्तिकारणभूतपरमाणुगतमाद्यं कर्मादृष्टकारितमित्यभ्युपगम्यते।

**"अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनं अणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि"** इति।

तदिदं परमाणुगतं कर्म स्वगतादृष्टकारितम्? आत्मगतादृष्टकारितं वा? उभयथापि न सम्भवति। क्षेत्रज्ञपुण्यपापानुष्ठानजनितस्यादृष्टस्य परमाणुतत्त्वासम्भवात्। संभवे च सदोत्पादकत्वप्रसङ्गः। आत्मगतस्यादृष्टस्य [1]परमाणुगतोत्पत्तिहेतुत्वं न सम्भवति। अथादृष्टवदात्मसंयोगादणुषु कर्मोत्पत्तिः तदा तस्यादृष्टप्रवाहस्य नित्यत्वेन नित्यसर्गप्रसङ्गः।

नन्वदृष्टं विपाकापेक्षं फलाय अलम्— कानिचिददृष्टानि तदानीमेव विपच्यन्ते; कानिचिज्जन्मान्तरे; कानिचित्कालान्तरे; अतो विपाकापेक्षत्वान्न सर्वदोत्पादकत्वप्रसङ्ग इति। नैतत् अनन्तैरात्मभिरसङ्केतपूर्वकमयुगपदनुष्ठितानेकविधकर्मजनितानामदृष्टानामेकस्मिन् काले एकरूपविपाकस्याप्रामाणिकत्वात्, अत एव युगपत्सर्वसंहारो द्विपरार्धकालं अविपाकेनावस्थानं न

---

[1] स्वपरमाणुगतकार्योत्पत्तिहेतुत्वं (ग A)

च संगच्छते। न चेश्वरेच्छाहितविशेषाद्दष्टसंयोगादणुषु कर्म; आनुमानिकेश्वरासिद्धेः; शास्त्रयोनित्वादित्यत्रोपपादितत्वात्। अतो जगदुत्पत्तेः परमाणुगतकर्मपूर्वकत्वाभावः।

पुनर्हेत्वन्तरमाह–

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १२ ॥

**किंच– नैयायिकमते** तन्तुपटयोस्समवायपरिग्रहात् **साम्यात्–** समवायसम्बन्धस्यापि संयोगसम्बन्धतुल्यत्वात् घटपटसंयोगस्य यथा सम्बन्धान्तरमङ्गीकृतमेवं तन्तुपटसमवायस्यापि सम्बन्धान्तरं वक्तव्यम्। एवं तस्यापि तृतीयसम्बन्धान्तरं विवक्षितव्यम्। तथा **चानवस्थितेः**– अनवस्थाप्रसङ्गात्।

**केचित्** नैयायिकमतमयुक्तं, **समवायाभ्युपगमाच्चा**समञ्जसम्। कुतः? [1]**साम्यादनवस्थितेः** समवायस्याप्यवयविजातिगुणवदुपपादकान्तरापेक्षासाम्यादुपपादकान्तरस्यापि तथेत्यनवस्थितेरसमञ्जसमेव।

एतदुक्तं भवति– अयुतसिद्धानामाधाराधेयभूतानामिह प्रत्ययहेतुः यः सम्बन्धः स समवाय इत्यभ्युपगम्यते। [2]अपृथक्स्थित्युपलब्धीनां जात्यादीनां तदभावस्य निर्वाहकत्वेन चेत्समवायोऽभ्युपगम्यते, समवायस्यापि तत्साम्यात्तथाभावहेतुरन्वेषणीयः। तस्यापि तथेत्यनवस्थितिः। समवायस्य तदपृथक्सिद्धत्वं स्वभाव इति परिकल्प्यते चेज्जातिगुणानामेवैष स्वभावः परिकल्पनीयः; न पुनरदृष्टचरं समवायमभ्युपगम्य तस्यैष स्वभाव इति कल्पयितुं युक्तमिति व्याचक्ष्यते। समवायस्य नित्यत्वे चानित्यत्वे च दोषस्समानोऽयम्।

नित्यत्वे दोषान्तरमाह–

## नित्यमेव च भावात् ॥ १३ ॥

समवायस्य सम्बन्धत्वात्सम्बन्धस्य नित्यत्वे सम्बन्धिनो जगतश्च **नित्यत्वमेव; नित्यमेव भावात्** असमञ्जसम्। अपि च परमाणूनां नित्यत्वम्। सर्वदास्य **भावात्** दृष्टत्वात्

---

[1] साम्याद्नवस्थितेः (ग A). [2] समवायस्यापि तत्साम्यात्तद्भावहेतुरन्वेषणीयः। तस्यापि तथेति अनवस्थितिः। समवायस्य तद्भावस्य (ग. A)

प्रळयेऽपि सृष्टिप्रसङ्गः। न चेश्वरप्रेरणवशात्कदाचिदेव सृष्टिर्न सर्वदेति वाच्यम्। निरवयवेश्वरस्य निरवयवपरमाणुभिस्सह संयोगसम्बन्धाभावेन प्रेरकत्वमेव न सम्भवतीति प्रागुक्तम्।

**पुनर्हेत्वन्तरमाह–**

## रूपादिमत्वाच्च विपर्ययो दर्शनात् ॥ १४ ॥

**किंच–** नैयायिकमते पृथिव्यप्तेजोवायुपरमाणूनां रूपरसगन्धस्पर्शविशिष्टत्वाङ्गीकारात् **विपर्ययः–** अनित्यत्वसावयवत्वादिदोषप्रसङ्गस्स्यात्। कुतः? **दर्शनात्–** रूपादिमतां घटादीनां अनित्यत्वसावयवत्वदर्शनात्। तथा च परमाणूनामनित्यत्वे द्व्यणुकादिजगत्कारणत्वं न सम्भवति। परमाणूनां पार्थिवाप्यतैजसवायवीयानां चतुर्विधानां रूप-रस-गन्ध-स्पर्शवत्वाभ्युपगमादभिमतनित्यत्व-सूक्ष्मत्व-निरवयवत्वादिविपर्ययेणानित्यत्व-स्थूलत्व-सावयवत्वादिकं प्रसज्यते। रूपादिमतां घटादीनामनित्यत्व-तथाविधकारणान्तरारब्धत्वादिदर्शनात्। न हि दर्शनानुगुण्येनादृष्टार्थः [1]कल्प्यमानः स्वाभिमतविशेषेऽप्यवस्थापयितुं शक्यः। दर्शनानुगुण्येन वा परमाणूनां रूपादिमत्वं कल्प्यते। अतोऽप्यसमञ्जसम्। अथैतद्दोषपरिजिहीर्षया परमाणूनां रूपादिमत्वं नाभ्युपगम्यते। अतस्तेषां जगत्कारणत्वं न युक्तम्।

अत्र हेत्वन्तरमाह–

## उभयथा च दोषात् ॥ १५ ॥

न केवलं परमाणूनां रूपादिमत्वाभ्युपगम एव दोषः; रूपादिविरहितेऽपि कारणगुणपूर्वकत्वात् कार्यगुणानां पृथिव्यादयो रूपादिशून्यास्स्युः। तत्परिजिहीर्षया रूपादिमत्वाभ्युपगमे पूर्वोक्तदोष इति **उभयथा दोषात्** असमञ्जसम्। अतो वैशेषिकमतमयुक्तम्।

---

[1] कल्पनीयः (ग. A).

पुनर्हेत्वन्तरमाह—

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १६ ॥

**कापिल-योगादिपक्षस्य** श्रुतिन्यायविरोधपरित्यक्तस्यापि सत्कार्यवादिनां क्वचिदंशे वैदिकैः **मन्वादिभिश्च** परिग्राह्यता अस्ति। **कणादपक्षस्य** पूर्वपक्षस्थितेरप्ययोग्यत्वेन **मन्वादिशिष्टैः अपरिग्रहत्वात्** अनुपपन्नत्वाच्च **अत्यन्तमनपेक्षैव** मोक्षार्थिभिरिति वेदितव्यम्।

---

समुदायाधिकरणम् ॥ ४ ॥

बौद्धमतं निराकरोति–

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १७ ॥

बौद्धास्तत्र **चतुर्विधाः– ज्ञानार्थोभयास्तित्ववादिनः, तदुभयनास्तित्ववादिनः, ज्ञानमात्रास्तित्ववादिनः, तन्नास्तित्ववादिन** इति। प्रथममुभयास्तित्ववादिनां मतं निरस्यते। तन्मतमेवं दर्शितम्–

गन्धपरमाणुसमष्टिरेव **क्षितिः**। रसपरमाणुकदम्बकं **सलिलम्**। रूपपरमाणुवृन्दः **अग्निः**। स्पर्शपरमाणुसमुदायो [1]**वायुरिति** व्यवह्रियते। तज्जातीयानि चेतनाचेतनगात्राणि। घटपटादयश्च परमाणुपुञ्जा एव। गगनारविन्दवत् **आकाशस्सर्वदात्यन्ताभावः**। सोपद्रवज्ञानसन्तानात्मको **जीवः**। निरुपद्रवज्ञानसन्तानरूपवान् **ईश्वर** इति।

किञ्च– **बाह्याभ्यन्तरभेदेन समुदायो द्विविधः**। **बाह्यः** पृथिव्यादिः। **आन्तरः** चित्तचैत्यात्मकः, समुदायद्वयमेव सर्वं जगदिति। तथा हि–

बाह्यसमुदायस्य परमाणवः कारणम्। ते च **चतुर्विधाः पार्थिवाप्यतैजस-वायवीयाः**। तेभ्यो युगपत्पुञ्जीभूतेभ्यो तेभ्यस्समुदायो बाह्यो जायते। आन्तरसमुदायस्य स्कन्धपञ्चकं कारणम्। **रूप-विज्ञान-वेदना-संज्ञा-संस्काररूपाः पञ्चस्कन्धाः**। चित्तेन निरूप्यमाणाश्शब्दस्पर्शादयः **रूपस्कन्धाः**। तदभिव्यक्तिर्**विज्ञानस्कन्धः**। तज्जन्यदुःखं **वेदनास्कन्धः**। देवदत्तादिनाम **संज्ञास्कन्धः**। तेषां वासना **संस्कारस्कन्धः**। तेभ्यः पुञ्जितेभ्यः समुदायो जायत इति वदन्ति। तन्मतसिद्धभूतचतुष्टयवादो निरस्यते।

---

[1] समीरणः इति (ग· A).

उभयहेतुके भूतभौतिकात्मके परमाणुपुञ्जे परिग्राह्यमाणेऽपि तदप्राप्तिः तस्य समुदायस्याप्राप्तिः अनुपपत्तिः। तन्मते क्षेत्रज्ञानामीश्वरस्य च क्षणिकज्ञानसन्तानात्मकत्वेनानित्यतया क्षणिकपरमाणुमेळनकर्तृत्वासम्भवात्।

अत्र **वैशेषिकः** परमाणुभेदेन शरीरादेराशुतरध्वंसत्र्यवस्थापनादात्मनः स्थायित्वाङ्गीकाराच्चार्धवैनाशिकः; **सर्वक्षणिकत्ववादी** तु पूर्णवैनाशिकः इति निर्णीयते। अतः अर्धवैनाशिक वैशेषिकमतनिराकरणात्परं पूर्णवैनाशिकमतं बुद्धिस्थमिदानीं निराक्रियते। तस्मादेषावान्तरसङ्गतिरूह्या।

**तत्र तावद्बुद्धमुनिसिद्धागमस्तु– वैभाषिक-सौत्रान्तिक-योगाचार-माध्यमिकाख्यचतुर्विध**शिष्यप्रवृत्तिवैचित्र्याच्चतु**र्विधो** भवति। तत्र **वैभाषिक-सौत्रान्तिकयोर्हि** ज्ञानं तदतिरिक्तपदार्थाश्च सर्वे क्षणिकास्सत्यभूतास्सन्ति। परमियान् भेदः– वैभाषिकस्य घटादिपदार्थाः प्रत्यक्षाः। सौत्रान्तिकस्य तु ज्ञानमेव घटपटाद्याकारेणोत्पाद्यम्। तेनाकारेण प्रत्यक्षेणाप्रत्यक्षघटादयो गम्यन्त इति वदन्ति।

तत्रादौ **वैभाषिक-सौत्रान्तिकयोः** बाह्यार्थास्तित्वाविशेषात्तयोर्मतमेकीकृत्य तन्मतं प्रमाणमूलं भ्रान्तिमूलं वेति सन्दिह्यते, तदुभयधर्माणामपि द्योतनात् वेदविरुद्धप्रत्यक्षसिद्धत्वाच्च।

**पूर्वपक्षः**– पार्थिवादिपरमाणुसंघातात्मकभूतभौतिकबाह्यान् चित्तचैत्यरूपाभ्यन्तरान् प्रत्यक्षानुमानसिद्धानभ्युपयन्ति ते। अन्ये तु बाह्यार्थान् सर्वान् पृथिव्यादीन्विज्ञानानुमेयान् वदन्ति। अपरेत्वर्थशून्यं विज्ञानमेव परमार्थं सत्, बाह्यार्थस्तु स्वप्नार्थकल्प इत्याहुः।

त्रयोप्येतत् स्वाभ्युपगतं वस्तु क्षणिकमाचक्षते। उक्तभूतभौतिकचित्तचैत्यव्यतिरिक्तमात्माकाशादिकं स्वरूपेणैव नानुमन्यते।

अन्ये तु सर्वशून्यत्वमेव सङ्गिरन्ते। तत्र ये **बाह्यार्थास्तित्ववादिनः** ते तावन्निरस्यन्ते। ते चैवं मन्यन्ते।

रूप-रस-गन्ध-स्पर्शस्वभावाः पार्थिवाः परमाणवः। रूप-रस-स्पर्शस्वभावाश्चाप्याः। रूप-स्पर्शस्वभावाश्च तैजसाः। स्पर्शस्वभावाश्च वायवीयाः। ते च पृथिव्यप्तेजोवायु-

रूपेण संहन्यन्ते। तेभ्यश्च पृथिव्यादिभ्यः शरीरेन्द्रियविषयसङ्घाता भवन्ति। तत्र च शरीरान्तर्वर्तिग्राहकाभिमानारूढो विज्ञानसन्तान एवात्मत्वेनावतिष्ठते। तत एव सर्वो लौकिको व्यवहारः प्रवर्तत इति प्राप्ते तत्राभिधीयते— समुदाय उभयहेतुकेऽपि तदप्राप्तिः इति।

सिद्धान्तः— समुदायवादिना योऽयमणुहेतुकः पृथिव्यादिभूतात्मकस्समुदायः यश्च पृथिव्यादिहेतुकः शरीरेन्द्रियविषयरूपस्समुदायः स्वीकृतः तस्मिन्नुभयहेतुकेऽपि समुदाये तत्प्राप्तिर्नोपपद्यते। जगदात्मकसमुदायोत्पत्तिर्नोपपद्यते इत्यर्थः। परमाणूनां पृथिव्यादि-भूतानां च क्षणिकत्वाभ्युपगमात्, क्षणध्वंसिनः परमाणवः भूतानि च, कदा संहता व्याप्रियन्ते? कदा वा संहन्यन्ते? कदा विज्ञानविषयभूताः? कदा च हानोपादानादि-व्यवहारास्पदतां भजन्ते? को वा विज्ञानात्मा? कं च विषयं स्पृशति? कं च विज्ञानात्मकमर्थं कदा वेदयते? कं वा विदितमर्थं कश्च कदोपादत्ते? स्रष्टा हि नष्टः, सृष्टश्च नष्टः। तथा वेदिता विदितश्च नष्टः। कथं चान्येन दृष्टमन्यो वेदयते? कथं चान्येन विदितमर्थं अन्य उपादत्ते? सन्तानानामनेकत्वेऽपि सन्तानिभ्यस्तेषां वस्तुतो वस्त्वन्तरत्वानभ्युपगमान्न तन्निबन्धनं व्यवहारादिकमुपपद्यते। अहमर्थ एवात्मा; स च ज्ञातैवेति चोपपादितं परस्तात्। तस्मात् तन्मतं भ्रान्तिमूलम्।

अत्र हेत्वन्तरमाह—

[1]इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात् ॥१८॥

अविद्यानामितरेतरहेतुत्वेनोपपन्नं संघातभावादिकमिति चेदेतदुक्तं भवति। यद्यपि क्षणिकास्सर्वे भावाः, तथाप्यविद्ययैतत्सर्वमुपपद्यते। अविद्या हि नाम विपरीतबुद्धिः, क्षणिकादिषु स्थिरत्वादिगोचरा। तया संस्काराख्याः रागद्वेषादयो जायन्ते। ततश्चित्ता-भिज्वलनविज्ञानम्; ततश्च नामाख्याश्चित्तचैत्याः, पृथिव्यादिकं च रूपिद्रव्यम्; ततः षडायतनाख्यमिन्द्रियषट्कम्, ततः स्पर्शाख्यः कायः, ततो वेदनादयः; ततश्च पुनरप्य-

---

[1] इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् (इति ज. कोशे अधिकः पाठो दृश्यते)

विद्यादयो यथोक्ताः इत्यनादिरियमविद्यादिकान्योन्यमूला चक्रपरिवृत्तिः। एवं च सर्वं पृथिव्यादिभूतभौतिकसंघातमन्तरेण नोपपद्यते। तस्मात् संघातभावादिकमुपपन्नमिति प्राप्ते—

**तत्रोत्तरं न संघातभावानिमित्तत्वादिति।** नैतदुपपद्यते, एषामविद्यादीनां पृथिव्यादिभूतभौतिकसंघातभावं प्रत्यनिमित्तत्वात्। न खल्वस्थिरादिषु स्थिरत्वादिबुध्यात्मिका अविद्या तन्निमित्तरागद्वेषादयो वार्थान्तरस्य क्षणिकस्य संहतिहेतुतां प्रतिपद्यन्ते। शुक्तिका-रजतादिबुद्धिर्हि न शुक्त्याद्यर्थसंहतिहेतुर्भवति।

किञ्च— यस्य क्षणिके स्थिरत्वबुद्धिः स तदैव नष्ट इति कस्य रागादय उत्पद्यन्ते? संस्काराश्रयं स्थिरमेकं द्रव्यमनभ्युपगच्छतां संस्कारानुवृत्तिरपि न शक्या कल्पयितुमिति सिद्धम्।

पुनर्हेत्वन्तरमाह—

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ १९ ॥

इतश्च क्षणिकत्वपक्षे जगदुत्पत्तिर्नोपपद्यते; उत्तरक्षणोत्पत्तिकाले पूर्वक्षणस्य विनष्टत्वात्। तस्योत्तरक्षणं प्रति हेतुत्वानुपपत्तेः। अभावस्य हेतुत्वे सर्वं सर्वत्र सर्वदोत्पद्येत। अथ पूर्वक्षणवृत्तित्वमेव हेतुत्वमित्युच्यते, एवं तर्हि कश्चिदेव घटक्षणस्तदुत्तरकालभाविनां सर्वेषा-मेव गो-महिष्यश्व-कुड्य-पाषाणादीनां त्रैलोक्यवर्तिनां हेतुस्स्यात्।

अथैकजातीयस्यैव पूर्वक्षणवर्तिनो हेतुत्वमिष्यते, तथापि सर्वदेशवर्तिनामुत्तरक्षणभाविनां घटानामेक एव पूर्वक्षणवर्ति घटो हेतुस्स्यात्। अथैकस्यैव हेतुरेक इति मनुषे, तथापि कस्यैकस्य को हेतुरिति न ज्ञायते। अथ यस्मिन् देशे यो घटक्षणस्स्थितः तद्देश-संबन्धिन एवोत्तरघटक्षणस्य स हेतुरिति चेत्किं देशस्य स्थिरत्वं मनुषे? किञ्च— चक्षुरादिसंप्रयुक्तस्यार्थस्य ज्ञानोत्पत्तिकालेऽनवस्थितत्वान्न कस्यचिदर्थस्य ज्ञानविषयत्वं सम्भव-तीति वेदितव्यम्।

पुनर्हेत्वन्तरेण निराकरोति—

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २० ॥

असत्यपि हेतौ कार्यमुत्पद्यते चेत्सर्वं सर्वत्र सर्वदोत्पद्येतेत्युक्तम्। न केवलमुत्पत्तिविरोध एव; प्रतिज्ञा च भवतामुपरुध्येत। **"अधिपतिसहकार्यवलम्बनसमनन्तरप्रत्ययाश्चत्वारो विज्ञानोत्पत्तौ हेतवः"** इति च प्रतिज्ञा। अधिपतिरिन्द्रियम्। अथ प्रतिज्ञानुपरोधाय घटक्षणे स्थित एव घटक्षणान्तरोत्पत्तिरिष्यते। तथा च सति द्वयोः कार्यकारणयोः घटक्षणयोर्यौगपद्येन उपलब्धिः प्रसज्येत। न च तथोपलभ्यते। क्षणिकत्वप्रतिज्ञा चैवं हीयेत। क्षणिकत्वं स्थितमेवेति चेत् इन्द्रियसम्प्रयोगज्ञानयोर्यौगपद्यं प्रसज्येत।

पुनर्हेत्वन्तरं दर्शयति—

## प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २१ ॥

**प्रतिसङ्ख्यानिरोधो** नाम पाषाणप्रक्षेपादिना बुद्धिपूर्वकघटपटादिभौतिकपदार्थनाशः। **अप्रतिसङ्ख्यानिरोधो नाम** कालवशात्स्वत एव पृथिव्यादिमहाभूतनाशः। [1]तयोः निरोधयोः अप्राप्तिरनुपपत्तिः। कुतः? **अविच्छेदात्। बौद्धमते** पूर्वपूर्वपरमाणूनामुत्तरोत्तरपरमाणून् प्रति स्वातन्त्र्येण कारणत्वाङ्गीकाराज्जडानां परमाणूनां कालविशेषपरिज्ञानाभावात् परमाणुसन्तानानां कदापि विच्छेदानुपपत्तेः। तथा च बौद्धमते सृष्टिप्रलयावुभावप्यनुपपन्नौ। एवं तावदसत उत्पत्तिर्निरस्ता। सतो निरन्वयविनाशोऽपि नोपपद्यत इत्युच्येत; क्षणिकत्ववादिभिर्मुद्गराद्यभिघाताद्यनन्तरभावितया उपलब्धियोग्यस्सदृशसन्तानावसानरूपः। स्थूलो यस्सदृशसन्तानविनाशः प्रतिक्षणभावी चोपलब्ध्यनर्हस्सूक्ष्मश्च यो निरन्वयो विनाशश्च, द्वावपि प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधशब्दाभ्यां अभिधीयते। तौ न सम्भवतः कुतः? **अविच्छेदात्।** सतो निरन्वयविच्छेदासम्भवात्, असम्भवश्च सत उत्पत्तिविनाशौ नामाव-

---

[1] तयोः प्रतिसङ्ख्यानिरोधयोः (ग. A):

स्थान्तरापत्तिरेव। अवस्थायोगि तु द्रव्यमेकमेव स्थिरमिति कारणादनन्यत्वं कार्यस्योपपादयद्भिरस्माभिः "**तदनन्यत्वमि**"त्यत्र प्रतिपादितम्। निर्वाणस्य दीपस्य निरन्वयविनाशदर्शनादन्यत्रापि विनाशो निरन्वयोऽनुमीयत इति चेन्न; घटशरावादौ मृदादिद्रव्यानुवृत्त्युपलब्ध्या सतो द्रव्यस्यावस्थान्तरापत्तिरेव विनाश इति निश्चिते सति प्रदीपादौ सूक्ष्मदशापत्त्याप्यनुपलम्भोपपत्तेस्तत्राप्यवस्थान्तरापत्तिकल्पनस्यैव युक्तत्वा**दिति** निश्चीयते।

**पुनर्हेत्वन्तरं दर्शयति—**

## उभयथा च दोषात् ॥ २२ ॥

**किंच—** घटपटादिपरमाणुसन्तानानां कंचित्कालं स्थिरत्वं क्षणिकत्वं वा? **उभयथा च** पक्षद्वयेऽपि **दोषात्**। स्थिरत्वपक्षे बौद्धमते क्षणिकत्वाङ्गीकारात्स्वमतभङ्गदोषः। क्षणिकत्वपक्षे घटादीनां जलाहरणादिकार्यकारित्वं न स्यात्। तस्मात् पक्षद्वयेऽपि दोषप्रदर्शनान् बौद्धमतमसमञ्जसम्। क्षणिकत्ववादिभिरभ्युपेता तुच्छादुत्पत्तिरुत्पन्नस्य तुच्छतापत्तिश्च न सम्भवतीत्युक्तम्। तदुभयप्रकाराभ्युपगतौ दोषश्च भवति। तुच्छादुत्पत्तौ तुच्छात्मकमेव कार्यं स्यात्। यद्धि यस्मादुत्पद्यते तत्तदात्मकं दृष्टम्; यथा मृत्सुवर्णादेरुत्पन्नं मणिकटकमकुटादिमृत्सुवर्णाद्यात्मकं दृष्टम्। न च जगत्तुच्छात्मकं भवद्भिरभ्युपगम्यते। न च प्रतीयते। सतो निरन्वयविनाशे सत्येकक्षणादूर्ध्वं कृत्स्नस्य जगतस्तुच्छतापत्तिरेव स्यात्। पश्चात्तुच्छाज्जगदुत्पत्तौ अनन्तरोक्तं तुच्छात्मकमेव स्यात्। तस्मादुभयथापि दोषान्न भवदुक्तप्रकारादुत्पत्तिनिरोधौ भवतः।

ननु बौद्धमते क्षणिकत्वं परमाणूनाम्। तत्सन्तानात्मकानां घटपटादीनां तु स्थिरत्वमेव। तथापि जलाहरणादिकार्यकारित्वं घटादीनामुपपद्यत इति चेत्तर्हि परमाण्वपेक्षया तत्सन्तानानां पृथक्त्वाङ्गीकारे घटपटादिपदार्थानां द्व्यणुकादिक्रमेण परमाणुजन्यत्वमेवाङ्गीकर्तव्यम्। तथाचेन्नैयायिकमतप्रवेशापत्तेः बौद्धानामपसिद्धान्तस्स्यात्।

बौद्धानामभिप्रेतभूतचतुष्टयस्य परमाणुपुञ्जत्वं निरस्याकाशस्य शून्यत्वं निराकरोति—

## आकाशे चाविशेषात् ॥ २३ ॥

**आकाशे च** सर्वेषां क्षेत्रज्ञानामस्तित्वप्रतीतेः **अविशेषात्** तुल्यत्वात् भूतचतुष्टयस्य प्रत्यक्षपरमाणुपुञ्जरूपत्ववत् जानुदघ्नजलन्यायेनाकाशस्याप्यतीन्द्रियपुञ्जरूपत्वमेवाङ्गीकर्तव्यम्। तथा च शून्यत्वङ्गीकारो ह्ययुक्तः। बाह्याभ्यन्तरवस्तुनः स्थिरत्वप्रतिपादनाय प्रतिसंख्याऽप्रतिसंख्यानिरोधयोस्तुच्छत्वरूपता निराकृता। तत्प्रसङ्गेन ताभ्यां सह तुच्छत्वेन **सौगतैः** परिगणितस्याकाशाशस्यापि तुच्छता प्रतिक्षिप्यते। आकाशे च [1]निरूपाख्यता न युक्ता। भावरूपत्वेनाभ्युपगतपृथिव्यादिवदाकाशस्याप्यबाधितप्रतीतिसिद्धत्वाविशेषात् "**प्रतीयते ह्याकाशेऽत्र श्येनः पतत्यत्र गृध्र**" इति श्येनादिपतनदेशत्वेन। न च पृथिव्याद्यभावमात्र आकाश इति वक्तुं शक्यम्; विकल्पासहत्वात्। पृथिव्यादेः प्रागभावः प्रध्वंसाभाव इतरेतराभाव अत्यन्ताभावो वा आकाशः? तथाप्याकाश प्रतीत्यनुपपत्तिः स्यात्। प्रागभावप्रध्वंसाभावयोराकाशत्वे पृथिव्यादिषु वर्तमानेषु आकाशप्रतीत्ययोगान्निराकाशं जगत्स्यात्। इतरेतराभावस्याकाशत्वेऽपि इतरेतराभावस्य तत्तद्वस्तुगतत्वेन तेषामन्तराळे आकाशप्रतीतिर्न स्यात्। अत्यन्ताभावस्तु पृथिव्यादीनां न सम्भवति। अभावस्य विद्यमानपदार्थावस्थाविशेषत्वोपपादनाच्चाकाशस्याभावरूपत्वेऽपि न निरूपाख्यत्वं अण्वन्तर्वर्तिन आकशस्य त्रिवृत्करणोपदेश[2]प्रदर्शितपञ्चीकरणेन रूपवत्वाच्चाक्षुषत्वेऽप्यविरोधः। तस्मादाकाश शून्यत्ववादो ह्यविचारितरमणीयः।

पराभिमतपञ्चभूतानि निराकृत्येदानीं क्षणिकज्ञानसन्तानरूपत्वमेव जीवानामित्येवं रूपं बुद्धमतसिद्धान्तमधुना निराकरोति—

## अनुस्मृतेश्च ॥ २४ ॥

पूर्ववासर**ानुभूत**पदार्थानामुत्तरदिनेष्व**नुस्मृतेः** स्मरणानुभवदर्शनाज्जीवानां नित्यत्वमबाध्यम्। ज्ञानसन्तानरूपत्वाङ्गीकारे पूर्ववासरानुभूतज्ञानसन्तानानां सुषुप्तिकालेषु नष्टत्वेन स्मर्तृत्वाभावात्। न चोत्तरदिनेषूत्पन्नानां ज्ञानसन्तानानां स्मर्तृत्वं भविष्यतीति वाच्यम्; अन्येनानुभूतपदार्थानामन्येन स्मरणासम्भवात्। तस्मात् क्षेत्रज्ञानां ज्ञानसन्तानात्मकत्वमयुक्तम्। पूर्वप्रस्तुतं वस्तुनः स्थिरत्वमेव उपपाद्यते। **अनुस्मरणं**— पूर्वानुभूतवस्तुविषयज्ञानं, विषयज्ञानं प्रत्यभिज्ञानं "**तदेवेदमिति**" सर्वं वस्तुजातं अतीतकालानुभूतं प्रत्यभिज्ञायते।

---

[1] तुच्छता (ग. A) [2] प्रवर्तित (ग A).

न च भवद्भिर्ज्वालादिष्विव **"सेयं दीपज्वाला"** इतिवत् नह्यनुभूतमेकत्वं सादृश्यनिबन्धनोऽयमेकत्वव्यामोह इति वक्तुं शक्यम्; व्यामुह्यतो ज्ञातुरेकस्यानभ्युपगमात्। न ह्यनुभूतमेकत्वं सादृश्यं वा अन्योऽनुसन्धत्ते। तस्मात् भिन्नकालवस्त्वाश्रयसादृश्यानुभवनिबन्धनमेकत्वव्यामोहं वदद्भिर्ज्ञातुरेकत्वमवश्याश्रयणीयम्। न च ज्ञेयेष्वपि घटादिषु ज्वालादिष्विव भेदसाधनप्रमाणमुपलभामहे; येन सादृश्यनिबन्धनां प्रत्यभिज्ञां कल्पयेम। यदपि चेदमुच्यते **"प्रत्यक्षानुमानाभ्यां"** घटादेः क्षणिकत्वं सिध्यति। प्रत्यक्षं तावद्वर्तमानार्थविषयमवर्तमानाद्वस्तुनो व्यावृत्तं स्वविषयमवगमयति नीलमिव पीतात्। एवं च भूतभविष्यद्भ्यां वर्तमानस्य वस्त्वंन्तरत्वमेव गतं भवति। अत्रानुमानमपि, अर्थक्रियाकारित्वात्सत्वाच्च घटादिः क्षणिकः, यदक्षणिकं शशविषणादि तदनर्थक्रियाकारि, असच्च। तथान्त्यघटक्षणसत्वात् पूर्वघटक्षणसत्वानि विनष्टानि घटक्षणसत्वादन्त्यघटक्षणसत्त्ववत् इति; तच्च कार्यकारणभावानुपपत्यादिभिः पूर्वमेव निरस्तम्।

**किञ्च**– प्रत्यक्षगम्यवर्तमानस्यावर्तमानाद्व्यावृत्तिर्न वर्तमानस्य वस्त्वंन्तरत्वमवगमयति, अपि तु वर्तमानकालयोगितामात्रम्। न च तावता वस्त्वन्तरत्वं सिध्यति, तस्यैव कालान्तरयोगसम्भवात्।

यत्तु सत्त्वादर्थक्रियाकारित्वाच्चेति क्षणिकत्वे हेतुद्वयमुक्तं तदभिमतविपरीतसाधनत्वाद्विरुद्धम्। सत्त्वादर्थक्रियाकारित्वाद्वा घटादिस्थास्नु, यदस्थास्नु तदसदनर्थक्रियाकारि च, यथा शशविषाणमित्यपि हि वक्तुं शक्यम्।

किञ्चार्थक्रियाकारित्वमक्षणिकत्वमेव साधयेत्। क्षणध्वंसिनो हि व्यापारासम्भवादर्थक्रियाकारित्वं न सम्भवतीत्युक्तम्। तथान्त्यघटक्षणस्य हेतुतो नाशदर्शनादितरेऽपि घटक्षणाः हेतूपनिपातात् स्थास्नुत्वमेव। न च वाच्यं, न मुद्गरादयो विनाशहेतवः अपि तु कापालादिविसदृशसन्तानोत्पत्तिहेतवः इति, कपालत्वावस्थापत्तिरेव घटादीनां विनाश इत्युपपादितत्वात्। कपालोत्पत्तिव्यतिरिक्तत्वाभ्युपगमेऽपि मुद्गरादेः विनाशहेतुत्वमेव। [1]मुद्गरादेः कपालहेतुत्वमिति यत्तदयुक्तम्। अतः प्रत्यभिज्ञया स्थिरत्वमवगम्यमानं न

---

[1] मुद्गरादेरानन्तर्याद्युक्तम् (ग ५).

केनापि प्रकारेणापह्नोतुं शक्यं। येन पूर्वापरकालसम्बन्ध्यर्थैक्यविषयायाः प्रत्यभिज्ञाया अन्यविषयत्वं ब्रुवन्नीलादिज्ञानानामपि नीलादेरर्थान्तरविषयत्वं ब्रूयात्।

किञ्च– प्रमातृप्रमेययोः क्षणिकत्वं वदद्भिर्व्याप्त्यवधारण-तत्स्मरणपूर्वकानुमानाभ्युपगमोऽपि दुश्शकः। तथेदं क्षणिकमित्यादिप्रतिज्ञापूर्वकहेतूपन्यासादिकमपि नोपपद्यते भवताम्, प्रतिज्ञोपक्रमक्षण एव वक्तुर्विनष्टत्वात्। न ह्यन्येनोपक्रान्तमजानद्भिरन्यैस्समापयितुं शक्यम्। तस्माद्वैदिकशास्त्रं युक्तम्।

**पुनर्हेत्वन्तरेण निराकरोति–**

## नासतोऽदृष्टत्वात् ॥ २५॥

**असतः** सुषुप्तिकाले नष्टात्पूर्वपूर्वज्ञानसन्तानादुत्तरोत्तरज्ञानसन्तानानामुत्पत्तिर्न सम्भवति, कुतः **अदृष्टत्वात्**। नष्टमृत्पिण्डादेर्घटादिजनकत्वाभावात्।

एवं तावद्वैभाषिक-सौत्रान्तिकयोर्बाह्यार्थास्तित्ववादिनोस्साधारणानि दूषणान्युक्तानि। तत्र यदुक्तं [1]सम्प्रयुक्तस्यार्थस्य ज्ञानोत्पत्तिकालेऽनवस्थितत्वान्न कस्यचिदर्थस्य ज्ञानविषयत्वं सम्भवतीति तत्र सौत्रान्तिकः प्रत्यवतिष्ठते। न ज्ञानकालेवस्थानमर्थस्य ज्ञानाविषयत्वहेतुः। ज्ञानोत्पत्तिहेतुत्वमेव हि ज्ञानविषयत्वम्। न चैतावता चक्षुरादेर्ज्ञानविषयत्वप्रसङ्गः स्वाकारसमर्पणेन ज्ञानहेतोरेव ज्ञानविषयत्वाभ्युपगमात्। ज्ञाने स्वाकारं समर्प्य विनष्टोऽप्यर्थः ज्ञानगतेन नीलाद्याकारेणानुमीयते। न च पूर्वपूर्वज्ञानेन उत्तरोत्तरज्ञानाकारसिद्धिः नील-ज्ञानसत्वे तदन्यज्ञानानुत्पत्तिप्रसङ्गात्। ततो अर्थकृतमेव ज्ञानवैचित्र्यमिति चेदत्रोच्यते–

"**नासतोदृष्टत्वात्**" इति। योऽयं ज्ञाने नीलादिराकार उपलभ्यते स विनष्ट-स्यासतोऽर्थस्याकारो भवितुं नार्हति, कुतः **अदृष्टत्वात्**। न खलु धर्मिणि विनष्टे तद्धर्मस्यार्थान्तरे संक्रमणं दृष्टम्। प्रतिबिम्बादिकमपि स्थिरस्यैव भवति। तत्रापि न धर्ममात्रस्य। अतोऽर्थवैचित्र्यकृतं ज्ञानवैचित्र्यं अर्थस्य ज्ञानकालेऽवस्थानादेव भवति। तस्मात् बौद्धसमयः असमञ्जस इति वेदितव्यम्।

---

[1] सन्निकर्ष (ग. A).

नष्टपदार्थस्यापि कार्यजनकत्वाङ्गीकारे बाधकमाशङ्कयाह—

## उदासीनानामपि चैवं सिद्धिः ॥ २६ ॥

एवमपि नष्टस्यापि कार्यजनकत्वे सति **उदासीनानां** निर्व्यापारिणामपि जीवानां सकलकार्यसिद्धिस्स्यात् । तस्मादेतदसमीचीनम् । एवं क्षणिकत्वादसदुत्पत्त्यहेतुकविनाशाद्यभ्युपगमे **उदासीनानां** अनुद्युक्तानामपि सर्वार्थसिद्धिस्स्यात् । इष्टप्राप्तिरनिष्टनिवृत्तिर्वा प्रयत्नादिभिस्साध्यते । क्षणध्वंसे हि सर्वेषां भावानां पूर्वपूर्वं वस्तु, तद्गतो वा विशेषः, संस्कारादिको विद्यादिर्वा उत्तरत्र न कश्चिदनुवर्तत इति प्रयत्नादिसाध्यं न किञ्चिदस्ति । एवं सत्यहेतुसाध्यत्वात्सर्वसिद्धीनामुदासीनानामप्यैहिकामुष्मिकफलं मोक्षश्च सिध्येत् । तस्मादसुरमोहकल्पकविष्णवतारकृतबुद्धमतं वैदिकैस्सर्वथानङ्गीकरणीयम् ।

---

## नाभावाधिकरणम् ॥ ५ ॥

एवं बुद्धमतं निरस्य **प्रच्छन्नबौद्धाभिधान**-जीवेश्वर-जगन्मिथ्यात्वप्रतिपादकश्रुत्याभासप्रधान**निर्विशेषाद्वैतमत**मधुना निराकरोति ।

# नाभाव उपलब्धेः ॥ २७ ॥

जीवेश्वरावच्छिन्नपञ्चमहाभूतात्मकचेतनार्थप्रपञ्चस्य **असत्वं नाम** शशशृङ्ग-गनारविन्द-वन्ध्यापुत्रवत् शून्यत्वं स्वप्नप्रपञ्चवन्मिथ्यात्वं वा ?

**नाद्यः**– नाभावः– जीवेश्वरात्मकचेतनाचेतनप्रपञ्चस्याभावः, तस्य शून्यत्वं न, सम्भवति ; कुतः ? **उपलब्धेः ;** प्रत्यक्षप्रमाणार्थसिद्धि-क्रियासिध्यात्मकतया प्रपञ्चस्य विद्यमानत्वात् । वन्ध्यापुत्रादिवच्छून्यत्वाङ्गीकारे प्रत्यक्षोपलब्धिर्न स्यात् ।

एवं **विज्ञानाभिधानबुध्यात्मवादिबुद्धमतं,** निराकृत्य तन्निराकारणपूर्वकप्रज्ञानाभिधानजीवब्रह्मवादिवासिष्ठमतं निरस्यति । तद्विज्ञानमतप्रज्ञानमतयोरुपजीव्योपजीवकभावसङ्गतिः । प्रज्ञानजीवब्रह्मवादिनो योऽयं निर्विशेषाद्वैतसिद्धान्तः **"ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नेतरः"** इति **तन्मतन्यायेन** स्वात्मातिरिक्तवस्त्वभाव इति सोऽयमधिकरणस्य **विषयः** । पूर्वपादे श्रुत्यादिसहकृतत्वेन स्वसिद्धान्तप्रतियोगितया निराकृतत्वेपि पुनर्युक्तिप्राधान्येन निराकरणान्न पौनरुक्त्यदोषः । श्रुत्यैकदेशप्रामाण्यतया तच्छास्त्रस्य विद्यमानत्वात् तन्मतं भ्रान्तिमूलं प्रमाणमूलं वेति **सन्दिह्यते** ।

**पूर्वः पक्षः**– **"सर्वमात्मैवाभूत्तत्केन कं पश्येत्त्केन कं वदेत"** **"नेह नानास्ति किञ्चन"** इत्यादिषु वन्ध्यापुत्रादिवत् प्रपञ्चाभावप्रदर्शनात् । गगननीलिम-मरुमरीचिका रज्जुसर्पादौ भ्रान्त्या नीलिमादिभानेऽपि विचार्यमाणे त्रैकालिकाभावावत्प्रपञ्चस्य स्वाविद्यामूढानां भासमानत्वेऽपि विवेकदृष्ट्या कालत्रयेऽपि शुक्तिरजतादिवदभाव एवेति प्राप्ते प्रचक्ष्महे–

**सिद्धान्तः**– **"जीवो ब्रह्मैव नेतरः"** इति यत्तदसत् **"नाभाव उपलब्धेः"**। स्वात्मातिरिक्तस्यार्थस्याभावो वक्तुं न शक्यते। कुतः ? उपलब्धेः ज्ञातुरात्मनोऽर्थविशेषव्यवहारयोग्यतापादनरूपेण ज्ञानस्योपलब्धेः। एवमेव हि सर्वे लौकिकाः प्रतियन्ति। **"घटमहं जानामीति"** एवं रूपेण सकर्मकेण सकर्तृकेण ज्ञाधात्वर्थेन सर्वलोकसाक्षिकमपरोक्षमवभासमानेनैव ज्ञानमात्रमेव परमार्थ इति साधयन्तस्सर्वलोकोपहासोपकरणं भवन्ति इति व्याचक्षते।

**"सर्वमात्मैवाभूत्"** इत्यादिश्रुतीनां शिवस्य केवलावस्थापरत्वमिति पूर्वमेवोक्तम्। नोचेदर्थक्रियासिध्यात्मकतया प्रपञ्चस्य विद्यमानत्वात्, **"द्वासुपर्णा"** इत्यादिबहुश्रुतिविरोधात्, **"मम माता वन्ध्या"** इतिवत्प्रात्यक्षिकविरोधप्रसङ्गाच्च ; लोके पुराकृतपुण्यपापकर्मवशाद्विधा धन-धान्य-पुत्र-पौत्र-अन्धत्व-पङ्गुत्व-काणत्व-राजयक्ष्मादिसुखदुःखानुभवो दुर्निवारः। पुण्यात्स्वर्गः पापान्नरकः, अत एव **"पुण्यकृतो लोकः क्षीयते, कर्मचितो लोकः क्षीयते"** इत्यादिषु जगत्सत्यत्वमुपदिष्टम्।

**किञ्च**– जगदभावे प्रागभावः, प्रध्वंसाभावोऽत्यन्ताभावोन्योन्याभावो वा ?

**नाद्यः**– **"असद्वा इदमग्र आसीत्, ततो वै सदजायत"** इत्यादिषु बाल्ययौवनादिवत्प्रलये प्रपञ्चसूक्ष्मत्वस्य, पुनः सृष्टिकाले स्थूलत्वस्य च व्यपदेशात्। **न द्वितीयः**– **"सदेव सौम्येदमग्र आसीत्"** इत्यादिषु **"नाशः कारणे लयः"** इति न्यायेन प्रलयेऽपि प्रपञ्चस्य सदात्मकत्वेन स्थित्युपदेशात्। **न तृतीयः**– अर्थसिद्धिक्रियासिध्यात्मकत्वेन प्रपञ्चस्य दृष्टत्वात्। **न चतुर्थः**– आकाशे भूतचतुष्टयवत् **"यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत्"** इत्यादिषु ब्रह्मप्रपञ्चयोराधाराधेयत्वनिर्देशात्। तस्मात् प्रपञ्चस्य वन्ध्यापुत्र-शुक्तिरजतादिवत् [1]अवभासवत्वं नोपपद्यते।

सर्वानुभवसिद्धत्वेन प्रपञ्चस्य सत्त्वेऽपि स्वप्नवन्मिथ्यात्वं तस्योपपद्यत इत्याशङ्कायामाह–

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २८ ॥

---

[1] अवभासत्वं (ग A).

स्वप्नेन्द्रजालादिदृष्टान्तेन जाग्रत्प्रपञ्चस्य मिथ्यात्वं वक्तुं न शक्येत। कुतः, वैधर्म्यात् स्वप्नेन्द्रजालप्रपञ्च-जाग्रत्प्रपञ्चवैलक्षण्यस्य विद्यमानत्वात्। स्वप्नेन्द्रजालप्रपञ्चस्य प्रबोधानन्तरं प्रत्यक्षेण बाध्यमानत्वान्मिथ्यात्वमुपपन्नम्। जाग्रत्प्रपञ्चस्य तु बाधादर्शनान्मिथ्यात्वं नोपपद्यते।

किञ्च— स्वप्नकृतज्योतिष्टोमब्रह्महत्यादिपुण्यापुण्यकर्मणां स्वर्गनरकादिप्राप्त्यभावात्, जाग्रत्प्रपञ्चकृतसुकृतदुष्कृतानामिह परलोकेषु तत्फलप्राप्तिदर्शनाच्च, तत्सादृश्यं सर्वथा अस्य प्रपञ्चस्य नोपपन्नम्। स्वप्नज्ञानवैधर्म्याज्जागरितज्ञानानामर्थशून्यत्वं न युज्यते वक्तुम्। स्वप्नज्ञानानि हि निद्रादिदोषदुष्टकरणजन्यानि, बाधितानि च। जागरितज्ञानानि तु तद्विपरीतानीति तेषां न तत्साम्यम्। सर्वेषां च ज्ञानानामर्थशून्यत्वे भवद्भिस्साध्योऽप्यर्थो न सिध्यति। निरालम्बनानुमानस्याप्यर्थशून्यत्वात्। तस्यार्थवत्त्वे ज्ञानवत्वस्यानैकान्त्यात्सुतरामर्थशून्यत्वासिद्धिः।

किञ्च— यस्य "सर्वमात्मैवाभूत्" इति श्रुत्या जाग्रत्प्रपञ्चस्यापि ब्रह्मज्ञानबाध्यत्वं प्रतिपाद्यत इति चेत्तदयुक्तम्। प्रपञ्चस्य सत्यत्वेऽपि सुप्तस्य पुरुषस्य प्रपञ्चज्ञानशून्यत्ववत् ब्रह्मविलीनस्य वृत्तिशून्यत्वेन प्रपञ्चस्य सत्त्वेऽपि स्वज्ञानप्रपञ्चज्ञानशून्यत्वं युज्यते। न तेन प्रपञ्चस्य बाधोऽभवीयते। जीवन्मुक्तस्य तु समाधिकाले सुप्तिमूर्छादिवत्परमात्मानन्दानुभवत्तया स्वपरज्ञानशून्यत्वम्। पुनरुत्थानकाले व्यवहारदर्शनात् ब्रह्मज्ञानबाध्यत्वं न सम्भवति। चकारेण रज्जुसर्पादिवदध्यारोपापवादः, आदिशब्देन गन्धर्वनगरेन्द्रजालादितच्छायदृष्टान्तमपि निरस्तम्। नो चेत्प्रपञ्चस्य स्वप्नादिवन्मिथ्यात्वाङ्गीकारे कृतनाशाकृताभ्यागमदोषप्रसङ्गेन बौद्धमतप्रवेशापत्तिर्दुर्वारेति विवेकिभिर्वेदितव्यम्।

पुनर्हेत्वन्तरेण निराकरोति—

## न भावोऽनुपलब्धेः ॥ २९ ॥

निर्विशेषाद्वैतशास्त्रे स्वप्नशुक्तिरजतादि दृष्टान्तेन प्रपञ्चस्य मिथ्यात्वाङ्गीकारे निर्विशेषब्रह्मणः **भावो** विद्यमानत्वं **नास्ति** ; कुतः ? **अनुपलब्धेः**। तन्मते अपारमार्थिकत्वेन वेदवेदान्तानां प्रमाणत्वाभावात् तन्मतं निश्श्रेयसार्थिभिर्नाङ्गीकरणीयम्। न

केवलं निर्विशेषस्य ब्रह्मणो भावस्सम्भवति। कुतः ? क्वचिदप्यनुपलब्धेः। न ह्यकर्तृकस्याकर्मकस्य ज्ञानात्मकस्य ब्रह्मणः अस्तित्वं सम्भवति। वेदवेदान्तेषु तथानुपलब्धेः "**मिथ्यात्ववादिवाक्यानि मिथ्येति परिगीयन्ते**" **इति न्यायेन** तन्मते वेदवेदान्तानां मिथ्याभूतत्वाङ्गीकारात् तन्मिथ्याभूतवेदवेदान्तप्रतिपाद्यब्रह्मणस्सत्यत्वं कथमुपपद्यते ? निर्विशेष वेदवेदान्तप्रतिपाद्यत्वायोगात्; ब्रह्मसत्त्वे तदतिरिक्तप्रमाणाभावाच्च। तस्मात्तच्छास्त्रोक्तजगज्जीवेश्वरादिप्रपञ्चवत्तन्निर्विशेषब्रह्मणः मिथ्यात्वं दुर्निवारम्। तस्माद्विज्ञानात्मक बुद्धमतवदद्वैतमतमप्यविचारितरमणीयम्। तदुभयोरपि जगज्जीवेश्वरप्रपञ्चमिथ्यात्वस्याद्वयवादस्य चाङ्गीकारात्तदुभयं तुल्यमिति निश्चितम्।

## स्वप्नप्रपञ्चस्य सत्यत्वप्रतिपादनम्

उत स्वप्नस्यापि सत्यत्वमनिवार्यम् स्वप्नप्रपञ्चस्य सत्यत्वात्, स्वप्नस्यापि परमेश्वर हेतुकत्वात् जाग्रदवस्थायामपि तद्वासनानां विद्यमानत्वात् "जाग्रद्वासनायुक्तः स्वप्नः" **इति न्यायेन** स्वप्नस्यापि जाग्रद्वासनाहेतुत्वोपदेशात्। जाग्रदवदृष्टपदार्थदर्शनेऽपि पूर्वभववासनासिद्धत्वाच्च।

किञ्च– "यस्स्वप्ने पुरुषं कृष्णं पश्यति स षाण्मासजीवी भवति"

"स्वप्ने तु कालपुरुषं रक्तवस्त्रधरं तथा।
गन्धर्वनगरं चैव यः पश्यति विशेषतः॥
स षाण्मासाद्यमलोकं प्राप्यते नात्र संशयः॥

इत्यादि बहुश्रुत्यागमदर्शनात्, स्वप्नाध्यायप्रकारेण सर्वेषामनुभवद्योतनाच्च तत्सत्यत्वं सिद्धम्।

---

## सर्वथानुपपत्त्यधिकरणम् ॥ ६ ॥

एवं निःश्रेयसविरोधेन शुष्कवेदान्तनिर्विशेषाद्वैतप्रतिपादक **वासिष्ठमतं** निराकृत्य स्वात्महननसिद्धान्त-शून्याद्वैताख्य-सांदीपनमतमद्य निराकरोति–

### अथ शून्याद्वैताख्यसान्दीपनमतनिराकरणम् ।

## सर्वथानुपपत्तेश्च ॥ ३० ॥

ज्ञानार्थोभयमिथ्यात्मकस्य [1]सर्वशून्यवादिमतस्य प्रत्यक्षानुमानश्रुतिस्मृत्यागमादिसकल-प्रमाणविरुद्धत्वात् "**सर्वथानुपपत्तेश्च**" तन्मतमत्यन्तमसङ्गतम् । विज्ञान-प्रज्ञानवादयोः श्रुत्युक्त्यनुभवविरोधात्तदुभयमनङ्गीकरणीयं ; मूलाभावात् । प्रज्ञानस्य प्रपञ्चस्य च शून्यत्वं किं न स्यादित्याशङ्कायां तन्मतनिराकरणार्थमस्यारम्भात् **मिथ्याद्वैत-शून्याद्वैतयो**स्स्वात्मसत्यत्व-स्वात्मनष्टत्ववैलक्षण्येऽपि तदुभयशास्त्रयोरङ्गाङ्गित्वेन पूर्वोत्तराधिकरणयोः **उपजीव्योपजीवकत्व-सङ्गतिः** । **"कं ब्रह्म खं ब्रह्म", "आकाश आत्मा"** इति श्रुतिदर्शनात्तन्मतं प्रमाणमूलं भ्रान्तिमूलंवेति **संशयः** ।

सर्वशून्यवाद एव हि **सुगतमततुल्यं सान्दीपनकाष्ठा** । **"शिष्यबुद्धियोग्यतानुगुण्येनाभ्युपगमादिना क्षणिकत्वादय उक्ताः । विज्ञानं बाह्यार्थश्च सर्वे न सन्ति । शून्यमेव तत्त्वम्, अभावापत्तिरेव च मोक्षः"** इत्येव बुद्धादिवत् सान्दीपाभिप्रायः तदेव हि युक्तम् । शून्यस्याहेतुसाध्यतया स्वतस्सिद्धेः, स्वत पव हि हेतुरन्वेषणीयः । तच्च सद्भावादभावाच्च नोत्पद्यते । भावात् तावन्न कस्यचिदुत्पत्तिर्दृष्टा । न हि घटादिरनुपमृदिते पिण्डादिके जायते । नाप्यभावादुत्पत्तिस्सम्भवति । नष्टे पिण्डादिके ह्यभावादुत्पद्यमानं घटादिकमभावात्मकमेव स्यात् । तथा स्वतः परतश्चोत्पत्तिर्न सम्भवति ।

---

[1] सर्वशून्यवादी माध्यमिक इति श्रीभाष्ये– (श्रीभाष्यं २-२-३० सं).

स्वतस्स्वस्योत्पत्तावात्माश्रयदोषप्रसङ्गात्प्रयोजनाभावाच्च। परतः परोत्पत्तौ परत्वाविशेषात् सर्वेषां सर्वेभ्य उत्पत्तिप्रसङ्गः। जन्माभावादेव विनाशस्याप्यभावः; अतः शून्यमेव तत्त्वम्। अतो जन्मविनाशसदसद्भ्यो भ्रान्तिमात्रम्। न च निरधिष्ठानभ्रमासम्भवाद्भ्रमाधिष्ठानं किञ्चित्पारमार्थिकं तत्त्वमाश्रयितव्यम्। दोष-दोषाश्रयत्व-ज्ञातृत्व। ह्यपारमार्थिकत्वेऽपि भ्रमोपपत्तिवत् अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः शून्यमेव तत्त्वमिति प्राप्ते–

प्रचक्ष्महे– "सर्वथानुपपत्तेश्चेति। सर्वशून्यत्वं भवदभिप्रेतं न सम्भवति। किं भवान् सर्वं सदिति प्रतिजानीते? असदिति वा? अन्यथा वा? सर्वथा तवाभिप्रेतं तुच्छत्वं न सम्भवति, लोके भावाभावशब्दयोस्तत्प्रतीत्योश्च विद्यमानस्यैव वस्तुनोऽवस्थाविशेषगोचरत्वस्य प्रतिपादितत्वात्। अतः सर्वं शून्यमिति यः प्रतिजानाति, तेन सर्वं सदित्येव प्रतिजानात्येव। सर्वस्य विद्यमानस्यावस्थाविशेषयोगितैव प्रतिज्ञाता भवतीति भवदभिमता तुच्छता न कुतश्चिदपि सिध्यति।

किञ्च– कुतश्चित् प्रमाणात् शून्यत्वमुपलभ्य तदेव सिषाधयिषता तस्य प्रमाणस्य सत्यत्वमभ्युपेयम्। तस्यासत्यत्वे सर्वं सत्यं स्यादिति सर्वथा सर्वशून्यत्वं चानुपपन्नम्।"[1]

तस्मात् स्वात्महननत्व जडतस्वात्मकत्ववादिसान्दीपमतं बौद्धा रपर्थीयं निःश्रेयसार्थिभिर्न मन्तव्यम्।

अस्मिन्नर्थे पुनः हेत्वन्तरमाह–

## क्षणिकत्वाच्च ॥ ३१ ॥

सान्दीपमते ज्ञानात्मनः पाषाणाग्निवत्सौदागिनीलतिकवद्भूताकाशमध्ये स्वातन्त्र्येण मूलं विनैव चिदुत्पत्तेः क्षणिकत्वाङ्गीकारात्तन्मतं नाङ्गीकर्तव्यम्। मूलं विना यथा स्वयमेव स्वत उत्पद्यते क्षणेन तथा स्वयमेव क्षणिकत्वाद्विनश्यति। तथाचेत् तदज्ञानस्य स्वतः सामर्थ्यं वा शरीरानुसारेण वा? "कारणाभावे कार्यं नास्तीति न्यायेन कार्यभूतस्य ज्ञानस्य स्वकीयोत्पत्तौ स्वसामर्थ्यं नास्ति, लोके यत्र कुत्रापि कारणाभावे

---

[1] चिजन्यात्मकत्ववादि (ज) (ग. A.)

कार्योत्पत्त्यदर्शनात् । त्वच्छास्त्रे शरीरेन्द्रियादिनिरपेक्षतया ज्ञानस्थित्यनङ्गीकाराच्च । शरीरानुसरणेन सामर्थ्यमिति चेत् स्वज्ञानव्यतिरिक्ततया जगत्कारणेश्वरस्यानङ्गीकारात् शरीरेन्द्रियादिकं कस्मादुत्पद्यते ? ज्ञानार्थोभयोत्पत्त्यनङ्गीकारे अहं प्रत्ययविरोधेन "मम माता वन्ध्या" इतिवत् प्रत्यक्षविरोधप्रसङ्गः । तन्मतानुसारणेन ज्ञानशरीरयोरेकत्वाङ्गीकारे सर्वेषां शरीरपतने सुप्तौ च ज्ञानशरीरयोः पृथक्त्वदर्शनात् श्रुतियुक्त्यनुभवविरोधो दुर्निवारः ।

"रज्जुसर्पवदात्मानं जीवं ज्ञात्वा भयं वहेत् ।
नाहं जीवः परात्मेति ज्ञातश्चेन्निर्भयो भवेत् ॥ इति ।

वासिष्ठमतानुकूलशुष्काद्वैतानुसरणेन "रज्जुसर्पवद्ब्रह्मैवाहं जीवः" इति व्याकोपदेशक्षणेन ध्यानधारणादिनिरपेक्षतया यथा मुक्तिरित्यद्वैतवादिनः प्रवदन्ति, तथा

अशरीरं सर्वदास्ति शरीररहितं सदा ।
इदमेव सदा मुक्तिरन्यथा भ्रमकारणम् ॥

इति वेदबाह्यतन्त्रप्रधानबृहद्वासिष्ठानुसरेण सान्दीपमतानुसारिणः । "सर्वदा शरीराभिधानभूताकाशोऽस्ति, मूलाभावात् शरीरात्मकज्ञानशून्यत्वनिश्चयमात्रमेव क्षणिकत्वान्मुक्तिः" इति प्रलपन्ति । कारणाभावे कार्याभाव इति न्यायेन मूलाभावतया ब्रह्मात्मकज्ञानस्य सदा शून्यत्वाङ्गीकारेण तद्वेद्य प्रपञ्चशून्यत्वमर्थात् सिद्धम् ।

"शुद्धे सुषुप्तिदृष्टान्तं तस्मान्नाहं कदाचन" इति तच्छास्त्रस्य निश्चयेन वक्तृत्व-कर्तृत्व-भोक्तृत्व-ज्ञातृत्व-सर्तृत्वादिना अहं प्रत्ययस्य विद्यमानत्वेऽपि गजसिंहस्वप्नप्रबोधादिदृष्टान्तेन गुरुसूचनया क्षणेन सदा सर्वं अहम्प्रत्ययादिकं शून्यमिति राद्धान्तितम् ।

किञ्चैतन्मते शरीरात्मनोरेकत्वं आत्मनः पूर्वोत्तरजन्मशून्यत्वम् । गोमयेन कीटोत्पत्तिवत् शुक्लशोणितसंयोगेन जीवजन्यत्वं चोक्तम् । तस्मादेतन्मतबौद्धमतयोर्वैषम्याभावात् [1]"श्रेयः कामैर्वैदिकैरेतच्छास्त्रमुपेक्षणीयम् । पाषाणवज्जडाकाशस्य निष्प्रयोजकत्वात्तदुपासनतया तदस्तित्वनिश्चये न किञ्चित्फलमुपपद्यते ।

---

[1] उपासनया (ग. ४.)

किञ्च– तन्मतज्ञानशून्यानां पुनरावृत्तिरस्ति वा न वा?

नाद्यः– विद्युदभ्रवत् ज्ञानस्य स्वतः उत्पन्नत्वाङ्गीकारात् स्वयमेव विनश्यति। अतस्तच्छास्त्रप्रवृत्तिर्नोपपद्यते। स्वजन्यत्ववस्त्वविनाशस्य च स्वस्यैव धर्मत्वात्स्वतन्त्रत्वाच्च। शरीरात्मनोरैक्यत्वाङ्गीकारात् शुक्लशोणितमेळनेन जीवोत्पत्त्यङ्गीकारात् स्वशरीरनाश एव स्वमोक्ष इत्यर्थसिद्धत्वात् स्ववचनव्याघातो दुर्निवारः।

नद्वितीयः– पुनरावृत्त्यभावे त्वच्छास्त्रे गुरुशिष्ययोः प्रवृत्त्यसम्भवात्। तथाचेत् पश्वादिवन्मूढत्वप्रसङ्गाच्च श्रुतियुक्त्यनुभवविरोधित्वेनैतन्मतमविचारितरमणीयम्। आकाशस्त-लिङ्गाधिकरणे "आसमन्तात्प्रकाशत" इत्याकाश इति व्युत्पत्त्या आकाशशब्दस्य जग-त्कारणत्वादिब्रह्मलिङ्गत्वेन वाय्वाकाशज्योतिस्सूर्यादिशब्दानां तत्परत्वसाधनात्, "कं ब्रह्म" इत्यादिवाक्यानां नान्यविषयत्वमिति वेदितव्यम्।

---

## एकस्मिन्नसम्भवाधिकरणम् ॥ ७ ॥

एवं सर्वशून्यतावादिसान्दीपमतं निरस्य तत्तुल्यजैनमतं निराकरोति—

### अथ जैनमतनिराकरणम् ।

# नैकस्मिन्नसम्भवात् ॥ ३२ ॥

**जैनाः** प्रपञ्चस्यैककाले सत्त्वमसत्त्वं सदसदात्मकत्वं सदसद्भिन्नत्वं च वदन्ति। तन्न सम्भवति। एकस्मिन् प्रपञ्चे एककाले सत्त्वासत्त्वादीनां वास्तवानां विरुद्धधर्माणामसम्भवात्। कालभेदेनाङ्गीकारे न विरोधः। वेदविरुद्धधर्माश्रयत्वात् पूर्वोत्तरमतनिराकरणानुकूलाधिकरणयोरुपजीव्योपजीवकत्वसङ्गतिः।

**दिगम्बरमत**मत्र प्रमाणमूलं भ्रान्तिमूलं वेति **सन्दिह्यते,** तस्यापि बहुदेशीयजनानामङ्गीकारात्।

"ते किल मन्यन्ते जीवाजीवात्मकं सर्वं **जगदेतन्निरीश्वरम्।** तच्च **षड्द्रव्यात्मकम्।** तानि च **द्रव्याणि जीव-धर्माधर्म-पुद्गल-कालाकाशाख्यानि।** तत्र **जीवाः बद्धाः योगसिद्धाः मुक्ताश्चेति त्रिविधाः। धर्मो** नाम गतिमतां गतिहेतुभूतो द्रव्यविशेषो जगद्व्यापी। **अधर्मश्च** स्थितिहेतुभूतो व्यापी। **पुद्गलो नाम** वर्ण-गंध-रस-स्पर्शवद् द्रव्यम्। तच्च **द्विविधम्-परमाणुरूपं, तत्सङ्घातरूपञ्च, पवन-ज्वलन-सलिल-धरणी-तनु-भुवनादिकम्। कालस्तु अभूदस्ति-भविष्यतीति** व्यवहारहेतुरणुरूपो द्रव्यविशेषः। **आकाशो**ऽप्येकोनन्तप्रदेशश्च। तेषु चाणुव्यतिरिक्तानि द्रव्याणि पञ्च अस्तिकाया इति च संगृह्यन्ते। "जीवास्तिकायो धर्मास्तिकायोऽधर्मास्तिकायः **पुद्गलास्तिकाय-आकाशास्तिकाय** इति। अनेकदेशवर्तिनि द्रव्ये **अस्तिकायाशब्दः** प्रयुज्यते।

जीवानां मोक्षोपयोगिनमपरमपि संग्रहं कुर्वन्ति– "**जीवाजीवास्रव-बन्ध-निर्जर-संवर-मोक्षः**" इति मोक्षसङ्ग्रहेण मोक्षोपायश्च गृहीतः। स च **सम्यग्ज्ञान-दर्शन-चारित्र-रूपः**। तत्र **जीवस्तु** ज्ञानदर्शनसुखवीर्यगुणः। **अजीवश्च** जीवभोग्यवस्तुजातम्। **आस्रवः** तद्भोगोपकरणभूतमिन्द्रियादिकम्। **बन्धश्चाष्टविधः** घातिकर्मचतुष्टयमघातिकर्म-चतुष्टयं चेति। **तत्राद्यं**– जीवगुणानां स्वाभाविकानां **ज्ञानदर्शनवीर्यसुखानां** प्रति-घातकरम्; **अपरं** शरीरसंस्थानतदभिमान-तत्स्थिति-तत्प्रयुक्तसुखदुःखोपेक्षाहेतुभूतम्। **निर्जरं** मोक्षसाधनम् अर्हदुपदेशावगतं **तपः**। **संवरो** नाम– इन्द्रियनिरोधः समाधिरूपः।

**मोक्षस्तु**– निवृत्तरागादिक्लेशस्य स्वाभाविकात्मस्वरूपाविर्भावः। पृथिव्यादिहेतु-भूताश्चाणवो वैशेषिकादीनामिव न **चतुर्विधाः**, अपि त्वेकस्वभावाः। पृथिव्यादि-भेदस्तु परिणामकृतः सर्वं च वस्तुजातं सत्त्वसत्त्व-नित्यत्त्वा-नित्यत्त्व-भिन्नत्वाभिन्नत्वादिभि-रनैकान्तिकमिच्छन्ति।

"**स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यम्, स्यादस्तिचावक्तव्यं च, स्यान्नास्तिचावक्तव्यं च, स्यादस्ति च नास्ति चावक्तव्यं च**" इति सर्वत्र **सप्तभङ्गीनयावतारात्**। सर्वं वस्तुजातं द्रव्यपर्यायात्मकमिति द्रव्यात्मना सत्त्वैकत्वनित्यत्वाद्युपपादयन्ति; पर्यायात्मना च तद्विपरीतम्। **पर्यायाश्च** द्रव्यस्यावस्थाविशेषाः। तेषां च भावाभावरूपत्वात् सत्त्वासत्त्वादिकं सर्वमुपपन्नमिति।"

"अत्राभिधीयते– **नैकस्मिन्नसम्भवादिति**। नैतदुपपद्यते; कुतः? एकस्मिन्नसम्भवात् एकस्मिन् वस्तुनि अस्तित्वनास्तित्वादेर्विरुद्धस्य छायातपवत् युगपदसम्भवात्।

**एतदुक्तं भवति**– द्रव्यस्य तत्तद्विशेषणभूतपर्यायशब्दाभिधेयावस्थाविशेषस्य च पृथक्पदार्थत्वात् नैकस्मिन् विरुद्धधर्मसमावेशः सम्भवति। तथा हि– एकेनास्तित्वादिना अवस्थाविशेषेण विशिष्टस्य तदानीमेव न तद्विपरीतनास्तित्वादिविशिष्टत्वं सम्भवति। उत्पत्तिविनाशाख्यपरिणामविशेषास्पदं च द्रव्यस्यानित्यत्वम्, तद्विपरीतं च नित्यत्वं तस्मिन् कथं समवैति; विरोधिधर्माश्रयत्वं च भिन्नत्वम्, तद्विपरीतं चाभिन्नत्वम् कथं वा तस्मिन् समवैति? यथाऽश्वत्व-महिषत्वयोर्युगपदेकस्मिन्नसम्भवः।

**अयमर्थः–** पूर्वमेवोक्तः ; कालभेदेन भेदाभेदाङ्गीकारे स्वमतभङ्गप्रसङ्गः। लोकेऽस्ति नास्तीति व्यवहारो व्यवहर्तॄणां जात्याद्यस्तित्व-नास्तित्वव्यवहारतुल्यः। जात्यादयो हि द्रव्यविशेषणतयैव प्रतीयन्ते इति पूर्वमेवोक्तम्। कथं पुनरेकमेव शिवात्मकं परब्रह्म सर्वात्मकमिति श्रोत्रियैरुच्यते" इति चेत् चेतनाचेतनप्रपञ्चहेतुभूतसर्वज्ञत्वाद्यनन्यसाधारण-धर्मावच्छिन्नसत्यसङ्कल्पत्वात् महेश्वरस्येत्युक्तम्। स्वभावतः क्षेत्रज्ञानां भिन्नत्वेऽपि भ्रमर-कीटवत् शिवध्यानधारणोपासनया स्वभावजीवत्वनिवृत्तिपूर्वकनित्यमङ्गळात्मकशिवत्वप्राप्तिरेव मुक्तिरिति सर्ववेदान्तसिद्धान्तः।

"**किञ्च–** जीवादीनां षण्णां द्रव्याणामेकद्रव्यपर्यायत्वाभावात् तेषु द्रव्यैकत्वेन पर्या-यात्मना चैकत्वानेकत्वादङ्गो दुरुपपादः। अथोच्येत-षडेतानि द्रव्याणि स्वकीयैः पर्यायैः स्वेन स्वेन चात्मना तथा भवन्तीति। एवमपि सर्वमनैकान्तिकमित्यभ्युपगमविरोधः अन्योन्यतादात्म्याभावात्। अतो न युक्तमिदं जैनमतम्।"

"ईश्वरानधिष्ठितपरमाणुकारणवादे पूर्वोक्तदोषास्तथैवावतिष्ठन्ते।"

क्षेत्रज्ञानां क्षपणकाः शरीरपरिमाणतुल्यपरिमाणत्वं साधयन्ति। तदपि निराकरोति–

## एवं चात्माकार्त्स्न्यम् ॥ ३३ ॥

"एवं भवदभ्युपगमे सति **आत्मनश्चाकार्त्स्न्यं** प्रसज्यते। जीवोऽसंङ्ख्यातप्रदेशो देहपरिमाण इति हि भवतां स्थितिः। तत्र हस्त्यादिशरीरेऽवस्थितस्यात्मनस्ततो न्यून-परिमाणे पिपीलिकाशरीरे प्रविशतो अल्पदेशव्यापित्वेनाकार्त्स्न्यं प्रसज्यते।"

**किञ्च–** जीवस्य शरीरतुल्यपरिमाणत्वाङ्गीकारे शरीरान्निर्गमनासम्भवात् शरीरेण सह परलोकप्राप्तिरापद्यते। तस्माज्जीवस्य सूक्ष्मत्वमङ्गीकर्तव्यम्।

## शरीराणां चानवस्थितपरिमाणत्वात् ॥ ३४ ॥

मशकादिशरीरवर्तिनां सूक्ष्मजीवानां कर्मवशाद्गजादिशरीरप्राप्तौ सत्यां गजादिशरीर-व्यापित्वं न स्यात्, जीवस्याल्पत्वात्। तथा गजादिशरीरवर्तिनां स्थूलजीवानां कर्म-वशान्मशकादिशरीरप्राप्तौ सत्यां मशकादिशरीरस्य स्वल्पत्वेनानवकाशात्।

तूलपिण्डवज्जीवानामपि सावयवत्वाङ्गीकारान्मशकादिशरीरेषु सङ्कुचितत्वं गजादिशरीरेषु विकासावस्था च भविष्यतीत्याशङ्क्य निराकरोति—

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥

**पर्यायात्**—शरीरक्रमेण सङ्कोचविकासाङ्गीकारात्, **अविरोधः**। गजतुरगपुत्रपुत्रिकामशकादिशरीरप्रवेशविरोधो नास्तीति चेन्न तथापि जीवानां साबयवत्वेन घटपटादिवद्विकारित्वविनाशित्वादिदोषप्रसङ्ग इत्युपदिश्यते।

तन्मतनिराकरणे पुनर्हेत्वन्तरमाह—

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

"जीवस्य यदन्त्यं परिमाणं मोक्षावस्थागतं तस्य पश्चाद्देहान्तरपरिग्रहाभावादवस्थितत्वादात्मनश्च मोक्षावस्थस्य तत्परिमाणस्य चोभयोर्नित्यत्वात्तदेवात्मनस्स्वाभाविकं परिमाणमिति पूर्वमपि तस्मादविशेषः स्यात्। अतो देहपरिमाणत्वमात्मनो न स्यादित्यसङ्गतमेवेति" वेदबाह्यमिदं मतं विवेकिभिर्वेदितव्यम्।

## पत्यधिकरणम् ॥ ८ ॥

आनुमानिकप्रधानकारणतावादिकपिल-परमाणुकारणतावादिकणादादिवेदबाह्यमतानि, वेदबाह्यबुद्धादिमतानि च निरस्य श्रुत्येकदेशप्रामाण्यमिश्र-रौद्र-तन्त्र-पाशुपत-गाणापत्य-सौर-शाक्त-कापालिक-वैष्णवादिमताभिमानिभिः पशुपतेश्शिवस्य परब्रह्मणः चिदचिद्रूतात्मकजगदुभयकारणत्वस्यानङ्गीकृतत्वात्तन्मतान्यद्य निराकरोति—

### शैवमताभासकमिश्र-रौद्र-पाशुपत-गाणापत्य-सौर-शाक्त-कापालिकादिमतनिराकरणम्

## पत्युरसामञ्जस्यात् ॥ ३७ ॥

पूर्वाधिकरणे **क्षपणक**मते सत्त्वासत्त्वाद्योर्युगपदेकत्र विरोधादसमञ्जसमित्युक्तौ तद्वदुपादानत्व-कर्तृत्वयोरेकत्र विरोधादयुक्तमिति दृष्टान्तसङ्गत्या **पूर्वपक्षे** सर्वशक्तिविशिष्टस्य स्वतन्त्रस्य शिवस्य **जगदुभयकारणत्वं सम्भवतीति** साधनार्थमधिकरणारम्भकत्वाद्विरोधपरिहारसङ्गत्या सिद्धान्तसङ्गतिरुपपद्यते ।

**पत्युः**— पशुपतेश्शिवस्य परब्रह्मणः जगदुपादानप्रधानादिप्रेरकत्वेन निमित्तकारणमात्रत्वं न सम्भवति ; **कुतः ? असामञ्जस्यात्** परमेश्वरस्य जगदुभयकारणत्वविधायकानां "**यथोर्णनाभिस्सृजते गृह्णते च**" इत्यादिवेदान्तानां समन्वयाभावात् ; **भूतपतेश्शिवस्य** जगदुभयकारणत्वविधायक शुद्धसात्त्विक**शैवमतस्य प्राधान्यं** उत शैवमताभासक**मिश्र-रौद्र-पाशुपत-गाणापत्य-सौर-शाक्त कापालिक-वैष्णवादिमतानां** वेति **संशयः** ।

"**सैषा विचित्रा सुदृढा बह्वङ्कुरा स्वयं गुणाभिन्ना पराशक्तिः**" इत्यादिगुशक्तेः मूर्तित्रयकारणत्वोपदेशात्, "**नारायणं परं ब्रह्म तत्त्वं नारायणः परः**"

इत्यादिना नारायणस्य, "असावादित्यो ब्रह्म" इत्यादिना सूर्यस्य च ब्रह्मत्वदर्शनात्। "**गणानां त्वा गणपतिं हवामहे कविं कवीनां**" इत्यत्र ब्रह्म-विष्णुरुद्रादीनां पतिः गणपतिरिति तच्छास्त्रे सर्वाधिक्यस्य **विघ्नेश्वरे** निर्देशात्, **किञ्च, पुराणेषु** त्रिपुर संहारादिकालेषु तस्य मूर्तित्रयार्चितत्वव्यपदेशाच्च जगत्कारणत्वं पूर्वोक्तानां शक्त्यादीनामेवोपपन्नमिति प्राप्ते

प्रचक्ष्महे— "**ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते**" "**ध्यायीतेशानं प्रध्यायितव्यम्**" "**ईशानस्सर्वविद्यानां**" "**सर्वभूतदमनाय नमः**" इत्यादिषु श्रुतिषु तज्जनकत्वेन तस्य **निमित्तत्वस्य** तस्मिन् तल्लयेन तस्योपादानत्वस्य च व्यवस्थापनात्, शक्त्यादीनां जगत्कारणत्वमवान्तरसृष्टिविषयम्।

किञ्च— निरधिष्ठानाशक्तेरभावात् शक्तिनिष्ठकारणत्वं शक्तस्यैवार्थात्सिद्धम्। **शैववायवीयसंहितायां**

"त्रयस्ते कारणात्मानो जातास्साक्षान्महेश्वरात्।
चराचरस्य विश्वस्य सर्गस्थित्यन्तहेतवे॥
पित्रा नियमितास्सर्वे त्रयोऽपि त्रिषु कर्मसु।"

ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणे पुनः।
तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः॥

तपसा तोषयित्वा तं पितरं परमेश्वरम्।
ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत्॥

कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः।
विष्णुश्च भगवांस्तद्वत् ब्रह्माणमसृजत्पुनः॥
नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः॥

इति दर्शनात् नारायणादीनां जगत्कारणत्वं न अनादिसिद्धमिति ज्ञायते।

"अन्नं ब्रह्म" इत्यादिवत्तेषां ब्रह्मत्वं औपचारिकमिति जन्माधिकरणे बहुधा प्रपञ्चितम्। तथापि मूर्तित्रये रुद्रस्यैवाधिक्यमनिवार्यम् "विश्वाधिको रुद्रो महर्षिः" "परात्परतरो ब्रह्म तत्परात्परतो हरिः यत्परात्परतोऽधीशः" इत्यादि श्रुतिषु

"अस्ति रुद्रस्य विप्रेन्द्राः अन्तस्सत्वं बहिस्तमः।
रजसा तमसाक्रान्तौ ब्रह्म-नारायणौ खलु॥"

इत्यादिना सूतसंहितायां च मूर्तित्रयतारतम्योपदेशात्।

शातातपे–

वेदेषु च पुराणेषु यत्र शक्तिं जनार्दनम्।
माहात्म्यं कल्प्यते मोहात्तत्तामससमुदीरितम्॥ इति।

गौतमस्मृतौ च–

शैवधर्मपुराणानि वेदाश्च स्मृतयस्तथा।
अन्तस्सात्त्विकरूपाणि प्रामाण्यं वेदवत्सदा॥

वैष्णवानि पुराणानि श्रुतयस्स्मृतयस्तथा।
अन्तस्तामसरूपाणि मोहनार्थानि सर्वदा॥
तस्माद्विष्णुपुराणानि न सेव्यानि मुमुक्षुभिः।

इति निर्दिष्टत्वात्। रुद्रस्य ब्राह्मणदेवत्वात् ब्राह्मणत्वाच्च सर्वदेवतात्वमनिवार्यम्।

किञ्च– "रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्याशिवान्या" इति "या ते रुद्र.... अभिचाकशीहि" तैत्तिरीये शिवस्य शान्ताशान्तात्मकमूर्तिद्वयस्य अघोरशरीरेण भक्तरक्षणस्य च व्यपदेशात्, तप्तलिङ्गमुद्राङ्कितरौद्रमतात् तप्तशूलडमरुग-मुद्राङ्किततन्त्रपाशुपतमताच्च श्रौतशिवलिङ्गधारणावच्छिन्नशैवमतस्य सर्वाधिकत्वमनिवार्यम्।
कैवल्ये–

"उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥"

इति शिवस्य प्रशान्तत्व-तमःपरत्व-मूर्तित्रयविलक्षणत्व-निर्देशात् शिवमतस्य शुद्धसत्त्व-प्राधान्यमुपदिष्टम् ।

"प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" इति माण्डूक्ये तथा निदर्शनात् । सिद्धान्तागमे– सिद्धान्तशिखामणौ च–

अगस्त्य मुनिशार्दूल समस्तागमपारग ।
शिवज्ञानकरं वक्ष्ये सिद्धान्तं शृणु सादरम् ॥

अगस्त्य बहुधा ख्याता सिद्धान्ता रुचिभेदतः ।
भिन्नाचारसमायुक्ता भिन्नार्थप्रतिपादकाः ॥

सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
एतानि मानभूतानि न हन्तव्यानि युक्तिभिः ॥

वेदः प्रधानं सर्वेषां सांख्यादीनां महामुने ।
वेदानुसरणादेषां प्रमाणमिति निश्चितम् ॥
पाञ्चरात्रस्य सांख्यस्य योगस्य च तथा मुने ।
वेदैकदेशवर्तिभ्यस्सांख्यादिभ्यो महामते ।
सर्ववेदानुसारित्वाच्छैवतन्त्रं विशिष्यते ॥

शैवतन्त्रमिति प्रोक्तं सिद्धान्ताख्यं शिवोदितम् ।
सर्ववेदार्थरूपत्वात् प्रमाणं वेदवत्सदा ॥

आगमा बहुधा प्रोक्ताः शिवेन परमात्मना ।
शैवं पाशुपतं सोमं लाकुळं चेति भेदतः ॥

तेषु शैवं चतुर्भेदं तन्त्रं सर्वविनिश्चितम् ।
वामं च दक्षिणं चैव मिश्रं सिद्धान्तसंज्ञिकम् ॥

शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकम् ।
सप्तमातृपरं मिश्रं सिद्धान्तं वेदसम्मतम् ॥

इत्यादिना सर्ववेदधर्मानुकूलकामिकाद्यष्टाविंशत्यागमसिद्धसिद्धान्ताभिधानवीरशैवमेव मुमुक्षुभिरुपादेयमिति निर्दिष्टम् ।

कामिके—

शिव एव हि देवोन्तःस्थितमिच्छावशाद्बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशयेत् ॥ इति ।

सिद्धान्तागमे च—

पत्रपुष्पादिरूपेण यथा तिष्ठति पादपः ।
तथा भूम्यादिरूपेण शिव एको विराजते ॥

यथा तन्तुभिरुत्पन्नः पटस्तन्तुमयः स्मृतः ।
तथा शिवात्समुत्पन्नं शिव एव चराचरम् ॥

आत्मशक्तिविकासेन शिवो विश्वात्मना स्थितः ।
कुटीभावाद्यथा भाति पटस्वस्य प्रसारणात् ॥

इत्यादिना शिवस्य जगदुभयकारणत्वस्य

"भृङ्गध्यानाद्यथा कीटो भृङ्गरूपो भवेत्सदा ।
शिवध्यानात्तथा जीवः शिवो भवति नान्यथा ॥

इति **द्वैताद्वैतसिद्धान्तस्य** च व्यवस्थापनात्, वेदवत् कामिकाद्यष्टाविंशतिशिवागमानां प्रामाण्यम् ।

"**अष्टादशपुराणानां कर्ता सत्यवतीसुतः ।**
**कामिकादिप्रभेदानां यथा देवो महेश्वरः ॥**"

इति सूतसंहितायां भगवता व्यासेन कामिकाद्यागमदृष्टान्तेन पुराणानां प्रामाण्यव्यवस्थापनात् **स्मृत्यनवकाशाधिकरणे** वेदानुकूलमन्वादिस्मृतिविरुद्धसांख्यादिस्मृतिनिराकरणवद्वेदानुकूल-कामिकाद्यागमविरुद्धपाशुपत-पाञ्चरात्राद्यागमनिराकरणमुपादेयम् ।

एवं **रेवणसिद्ध-मरुलसिद्धैकोरामसिद्धोद्भटाराध्यवेमनाराध्यादिभिः** श्रौतशैवाचार्यैर्व्यपदेशात्; "**नमोहिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय-उमापतये पशुपतये नमो नमः**" "**सभाभ्यस्सभापतिभ्यश्च वो नमः**" "**जगतां पतये पशुपतये नमः**" इत्यादिषु शिवस्यैव सर्वपतित्वोपदेशात् "**पत्यादि-शब्देभ्यः**" इत्यस्मिन् सूत्रे पशुपतित्वादिधर्माणां शिवस्यैव मुख्यप्रतिपादनात्, "**पत्युर-सामञ्जस्यात्**" इत्यत्र पत्युः पशुपतेः शिवस्यातिरिक्तस्य जगदुभयकारणत्वमसमञ्जसं वेदविरोधादप्रमाणमिति केचिद्वदन्ति तदप्यविरुद्धम् ।

अस्मिन्नर्थे हेत्वन्तरमाह—

## सम्बन्धानुपपत्तेश्च ॥ ३८ ॥

शिवेतर-नारायणादीनां जगत्कारणत्व-पशुपतित्वाङ्गीकारे "**नमो हिरण्यबाहवे**.... **पशुपतये नमो नमः**" "**ईशानस्सर्वविद्यानां**....**ब्रह्माधिपतिर्ब्रह्मा शिवो मे अस्तु**" "**सर्वो वै रुद्रः**" इत्यादि श्रुतिसिद्ध हिरण्मयत्वोमापतित्व-सर्वविद्यानियामकत्व सर्व भूत-नियामकत्वादिधर्मसम्बन्धानामनुपपत्तेश्च असम्भवाच्च पशुपतित्वं जगज्जन्मादिकारणत्वञ्च शिवेत-राणां नोपपद्यते । तस्माच्छ्रुत्येकदेशमिश्रादिमतानि वैदिकैरनादरणीयानि ।

आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरम् ।
पूजयेदेकभावेन मध्ये स्वेष्टं विनिक्षिपेत् ॥

इति वचनदर्शनात् तन्मतमेवावश्यकमिति चेत्तदसत्, तद्विधायक प्रात्यक्षिकश्रुतिस्मृत्यदर्शनात् भक्त्यर्थेभिचरितत्वात्, तन्मते जगज्जन्मादिकारणेश्वरस्य मिथ्यात्वाङ्गीकाराच्, अधिष्ठानब्रह्मणो निर्विशेषत्वव्यपदेशात्, वेदविरुद्धाध्यासस्वीकारादिबहुदोषप्रसङ्गाच्च तन्मतमनुपादेयम् ।

"सृष्ट्यादौ शाम्भवीशक्त्या अण्डत्रयमजायत ।
शुद्धस्फटिकसंकाशे सात्त्विकाण्डे महाद्भुते ॥

वाणी-रुद्रौ समुद्भूतौ तस्मात्सत्वगुणान्वितौ ।
राजसाण्डे रक्तमये श्री-ब्रह्माणौ समुद्भूतौ ॥

अतस्तौ रक्तवर्णाङ्गौ रजोगुणसमन्वितौ ।
कालाम्बुदसमाकारे तमोऽण्डे तमसावृतौ ॥

उमा-विष्णू समुद्भूतौ तस्मादेतौ तमोगुणौ ।
गुणातीता पराशक्तिस्सच्चिदानन्दरूपिणी ॥
शिवात्मिका शिवाधीना चिदचिद्विश्वकारिणी ।"

इति शक्तिपुराणे नारायणाम्बिकयोस्तमोण्डसम्भवत्वव्यपदेशात्, राक्षसादिवत् शाक्तागम-पाञ्चरात्रागमयोः मद्यपान-मांसनिषेवण-कुलविहीनभोजन-गुरुदत्तपत्नीपुत्रग्रहण-रक्तशुक्लाद्यष्टमूर्तिस्वीकार-मद्यभाण्डपूजादिवेदबाह्याचारभूयिष्ठत्वात्तन्मते मुमुक्षुभिर्न विधेये ।

शिवकेशवसम्भूतं कलये कालभैरवम् ।
शङ्करश्शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभः ॥

इत्यादिना "कारणगुणाः कार्ये सङ्क्रामन्ति" इति न्यायेन भैरवस्य शिववीर्योत्पन्नस्यापि विष्णूपादानत्वेन नीलवर्णत्व-सुरापान-मांसप्रियत्वादि-पाञ्चरात्रागमधर्माणां कापाला-

**गमेऽपि** प्रवृत्तिरुपपद्यते। तस्मात्तदपि न विधेयम्। वेदविरुद्धरक्तचन्दनोच्छिष्टभक्षणादिधर्माङ्गीकारेण **सौर-गाणापत्यादि**मतानि न विधेयानि। तेषां मतेषु श्रुतिबाहुल्यादर्शनात्। सावयवमात्रस्वीकारात् निमित्तकारणत्वव्यपदेशाच्च।

तेषां निराकरणे पुनर्हेत्वन्तरमाह—

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

अधिष्ठानब्रह्मातिरिक्तमायाप्रतिबिम्बितेश्वरस्य जगज्जन्मादिकारणत्वाङ्गीकारे अधिष्ठानानुपपत्तेस्तन्मते अधिष्ठानब्रह्मणो निर्विशेषत्वाङ्गीकारेण तस्मिन् वेदवेदान्तानामनुपपत्तेश्च प्रवृत्त्यसम्भवात् ब्रह्मणः शशशृङ्गवन्मिथ्यात्वमर्थात् सिद्धम्। तन्मते जीवब्रह्मेश्वराङ्गीकारे स्वधिष्ठानानुपपत्तेः। "**सोऽन्तरादन्तरं प्राविशत्**" उत "**यो रुद्रो अग्नौ**" इत्यादिश्रुतिसिद्धचेतनाचेतनप्रपञ्चाधिष्ठानत्वस्य परमेश्वरे अनुपपत्तेरसम्भवात्।

**किञ्च—** तन्मते जगज्जीवेश्वरादिप्रपञ्चस्याधिष्ठानब्रह्मण्यारोपितत्वादनुष्ठानानुपपत्तेः। तन्मते चैतन्यद्वयाङ्गीकारात् ब्रह्मणः अज्ञत्वसम्भवात्तत्सर्वज्ञत्वविधायकवेदान्तानामनुपपत्तेः प्रवृत्त्यसम्भवात्।

**अपि च-** पाञ्चरात्रमते, "**यस्य पृथिवी शरीरं। यस्यात्मा शरीरम्**" इत्यादि श्रुत्या जगज्जीवेश्वरयोरङ्गाङ्गित्वाङ्गीकारे अङ्गिनस्सूक्ष्मत्वमङ्गस्य स्थूलत्वमिति व्यवहारदर्शनात्; "**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत्**" इत्यादिश्रुतिसिद्धसर्वाधिष्ठानत्वानुपपत्तिरुपपद्यते।

किञ्चाङ्गिन्यङ्गस्य निमित्तोपादानकारणत्वायोगात् अङ्गाङ्गित्वस्वीकारे जीवस्वरूपाङ्गनिष्ठरागद्वेषसुखदुःखादिकमङ्गिनः परमेश्वरस्यानिवार्यम्। तदङ्गीकारे सर्वश्रुतिविरोधः। अत एव वेदबाह्यपाञ्चरात्रमतं सुतरामनुपपन्नम्। एतेन द्वैतनिरास अर्थात्सिद्धः; उभयोर्वैष्णवत्वात्।

जगत्कारणस्य शरीराङ्गीकाराच्च **द्वैतभागवतपाञ्चरात्रादिवैष्णवमते** जगत्कारणस्य **नारायणस्य** सावयवत्वं जीवानां मुक्तदशायामपि भक्तिप्रतिपत्तिसाधनत्वेन तत्समानकिञ्चिद्भेदशरीरप्राप्तत्वं **इति** व्यपदेशात् **वैदिकानां** तदसङ्गतमिति निराकरोति–

## करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

जीववज्जगत्प्रयोजनत्वे **नारायणस्य** शरीरेन्द्रियवत्त्वमिति **चेन्न, कुतः? भोगादिभ्यः।** "**अपाणिपादो जवनो गृहीता**" इत्यादिषु शरीरेन्द्रियनिरपेक्षतया जगत्कारणेश्वरस्य स्वतन्त्रस्य सर्वकर्तृत्वोपदेशात् जीववत्परमेश्वरस्य स्वगतकल्पनादिप्रयोजने शरीरेन्द्रियादिसापेक्षत्वमनङ्गीकर्तव्यम्। अत्र परमेश्वरस्य शरीरेन्द्रियनिरासेन **द्वैतविशिष्टादिभेदमतनिराकरणं** "**भोगादिभ्यः**" इति भोगोपदेशात् परमेश्वरस्य **निर्विशेषत्वव्यवस्थापकमिथ्याद्वैत-शून्याद्वैतनिराकरणं** चोपदिष्टम्। अतः वेदवेदान्तानुसरणविवेकिभिः **मुमुक्षुभिः द्वैताद्वैतप्रतिपादितवीरशैवमतमेव** अङ्गीकर्तव्यमिति सूत्रकारमुख्याभिप्रायः।

**सिद्धान्तागमे**–

> **द्वैताऽद्वैतमतं वीरशैवं मोक्षैककल्पकत्।**
> **सर्ववेदान्तसिद्धान्तसारं सर्वार्थसिद्धिदम्॥**

इति निर्दिष्टत्वात्तदेव परमिति घण्टाघोषः।

**किञ्च–** जगत्कारणेश्वरस्य शरीरत्वव्यवस्थापने घटादिवत्परिच्छिन्नत्वमूर्तत्वप्रसक्त्या मूर्तप्रधानजीववाय्वाकाशान्तर्यामित्वं नोपपद्यते। "**तत्त्वमेव त्वमेव तत्**" "**न तत्र प्राणा उत्क्रामन्ते, तत्रैव समवलीयन्ते**" इत्यादिश्रुतिविरोधात् मूर्तामूर्तत्वयोरेकत्रायोगात् तस्येश्वरत्वं न घटते।

ननु शिवस्य परब्रह्मणः "**ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्**" इत्यादौ शरीरित्वव्यपदेशात् तद्वदसमञ्जसत्वप्रसङ्ग इति चेत्तदयुक्तम्। शिवस्य लीलामङ्गलविग्रहत्वात्। शरीराद्यभावेऽपि "**अपाणिपादो जवनो गृहीता**" इत्यादिश्रुत्या

सर्वकारणत्वनिर्देशात् नारायणवज्जननधर्मासम्भवात् कार्यार्थशरीरायोगाच्च लीलामङ्गलविग्रहस्य शिवस्य न दोषशङ्काकलङ्कः ।

ननु– 'आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरं' इति पञ्चपूजाविधाने सर्वस्य शैवत्वद्योतनात् कुतस्तस्य निरासः ?

"सूर्यो मुख्यशरीरं स्याच्छिवस्य परमात्मनः ।
आदित्यहृदये रुद्रो भाति तस्य नियामकः ॥
सौरमण्डलमध्यस्थं साम्बं संसारभेषजम् ।" इति ।

स्कान्दलैङ्ग कूर्मादिषु दर्शनात् ।

किञ्च– "वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियम्" इत्यत्र तस्य तल्लोचनत्वनिर्देशात् सूर्यस्य शैवत्वम् । अम्बिकायाः तत्पत्नीत्वेन विघ्नेश्वरस्य तत्पुत्रत्वेन विष्णोस्तु तद्भक्तत्वेन शैवत्वमनिवार्यम् । विष्णोश्शिवभक्तत्वं स्कान्दे–

"बाणत्वं वृषभत्वं च भार्यात्वं घोणरूपताम् ।
अर्चकत्वं सखित्वं च शिवस्य परमात्मनः ॥
प्राप नारायणस्तस्माद्भक्तवर्य इतीर्यते ॥" इति ।

शैवे–

"गोपालकश्शिरसि लिङ्गमुवाह भक्त्या
लिङ्गस्य धारणमहो किमु संशयस्ते ।
भो पाण्डुरङ्गममृतस्य मनोः प्रभावान्
पश्यन्तु ये विमतनिर्मितभावबोधाः ॥" इति ।

शङ्करसंहितायामपि–

"उरस्स्थले हरिर्लिङ्गं धृत्वा मूर्ध्नि पितामहः ।
लिङ्गस्थं मां समाराध्य स्वं स्वं पदमवापतुः ॥" इति

दर्शनात् विष्णोश्शिवभक्तत्वं सिद्धम्। वीरागमे दशविधशैवनिरूपणे—

"सामान्यशैवं देवेशि वैष्णवं परिकीर्तितम्।
शिखापञ्चकसंस्काराद्गायत्री भर्गचोदनात्॥

मेधावी भस्मसन्धानाद्रुद्रपिण्डसमुद्भवात्।
पूर्वशैवं महादेवि सौरं तु परिकीर्तितम्॥

सौरमण्डलमध्यस्थसाम्बमूर्तिव्यवस्थितेः।
तस्याष्टमूर्तेरङ्गत्वात्पूर्वकर्मनिषेवणात्॥
पञ्चपूजाविधानन्तु मिश्रशैवमितीर्यते॥"

इत्यादिना सौरादिमतानां शैवमतान्तर्भूतत्वेन व्यवस्थापनात् शैवानां तन्निरासः कथमुपपद्यत इति चेन्न।

"शिव एको ध्येयः शिवङ्करः सर्वमन्यत्परित्यज्य" "एक एव रुद्रो न द्वितीयाय तस्थे" इत्यादिना शैवानां श्रुतौ शिवोपासनविधेरेव दर्शनत् सौरादीनां शिवाधिक्यनिष्ठाभावात् पशुपतेः जगदुभयकारणत्वाऽस्वीकारात्, समष्टिपूजाविधायकश्रुत्यभावाच्च तन्निराकरणमनिवार्यम्। त्रिलोचन शिवाचार्याभिमततप्तलिङ्गाङ्कस्य पाञ्चरात्रादिवदवैदिकत्वात् शैवत्वानाचारत्वाद्यभावेऽपि हिरण्यगर्भादिमतवच्छिवस्य निमित्तकारणत्वमात्रस्वीकारादवैदिकपाञ्चरात्रादिवदङ्गाङ्गित्वपरिग्रहाच्च प्राणलिङ्गधारणविशिष्टवीरशैवतुल्यत्वं न सम्भवति। तदुक्तं स्कान्दे—

"लिङ्गाङ्कश्च भगाङ्कश्च शैववैष्णवयोरपि।
ग्राह्यं तथापि रौद्रन्तु सर्वाधिकमितीर्यते॥"

इति दर्शनात्। भगात्मकचक्राङ्कात् लिङ्गाङ्कनमुत्कृष्टम्। श्रीचक्रस्य भगाकारत्वात् भगस्य स्वाधिष्ठानचक्रत्वेन सर्ववेदान्तदर्शनाच्च चक्रस्य भगाभिधेयत्वमनिवार्यम्। तस्मात्पूर्वोक्तमेव युक्तम्।

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. ......3755.........

पशुपतेरीशवादतिरिक्तस्य जगत्कारणत्वायोगे पशुपतिमतव्यतिरिक्तमतनिराकरणे च हेत्वन्तरमाह—

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

"एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः" इत्यादिषु विष्णोर्भूतत्वं, "ईश्वरस्सर्वभूतानां" इत्यादिषु शिवस्य भूतनियामकत्वेन तत्पतित्वव्यवस्थापनात्। वा शब्दश्चार्थे। पशुपतिव्यतिरिक्तनारायणादीनां जीववदन्तवत्वाऽसर्वज्ञत्वयोश्च दर्शनात्तेषां जगज्जन्मादिकारणत्वं नोपपद्यते। "अजात इत्येव कश्चिद्भीरुः प्रपद्यते" "यस्सर्वज्ञः" इत्यादि श्रुतिषु शिवस्यैवाजातत्व-सत्यत्व-सर्वज्ञत्वादिधर्माणां व्यवस्थापनात् तस्य सर्वाधिकत्वं निष्प्रत्यूहम्।

"पत्यादि शब्देभ्यः" इति प्रथमाध्याये परशिवे पत्यादिशब्दा उपदिष्टाः। तन्मतव्यतिरिक्तश्रुत्येकदेशप्रामाण्यकवैष्णवादिमतानां निरासार्थं 'पत्युरसामञ्जस्यात्' इति पुनरधिकरणान्तरमारब्धम्। कैश्चिन्मिश्रशैव-वैष्णवयोः वेदाविरोधिना इव केचिद्धर्माः प्रतिपाद्यन्ते। तथापि मिश्रशैवानामद्वैतमताश्रितत्वेन क्वचित्काले शिवकेशवसाम्यस्य जगत्कारणेश्वरमिथ्यात्वस्य च प्रतिपादनात्तदयुक्तम्।

"केचिदद्वैतमाश्रित्य बिडालप्रतिमा नराः।
रुद्रेण साम्यमन्येषां प्रवदन्ति विमोहिताः॥"

इति सूतसंहितायां सूतगीतायामपि तन्निन्दा दृष्टा।

"रुद्रपिण्डसमुद्भूताः रुद्रभूमौ लयं गताः।
पितरं नाभिजानन्ति तातं वेश्यासुता इव॥

वेदास्तु द्रविडी गाथा ऋषयस्तोण्डलादयः।
शिवनिन्दा हरेर्भक्तिराचारः पाकचातुरी॥

दधीचिभृगुशापेन विष्णुभक्ता महीतले ।
शिवनिन्दापरा भूत्वा दुराचारसमन्विताः ॥

पापण्डत्वं समाविश्य नरकान् प्रविशन्ति हि ।
शिवं विश्वाधिकं ब्राह्मचं कुलदैवं परात्परम् ॥

निदन्ति मूढमनसा वैष्णवाः पापकर्मिणः ।
वेदसिद्धं महादेवं साम्बं चन्द्रार्धशेखरम् ॥

लिङ्गे दिने दिने देवं शिवं रुद्रादिसंज्ञिकम् ।
नार्चयिष्यन्ति मोहेन पाषाण्डोपहता जनाः ॥

शंखचक्रगदापद्माद्यङ्कनं विग्रहे स्वके ।
मोहेनैव करिष्यन्ति पापण्डोपहता जनाः ॥

इत्यादिना शैवलैङ्गस्कान्दादिषु दधीचि-भृगुशापवशात् वैष्णवानां पापण्डत्वोपदेशात् तन्मतमुपेक्ष्यम् ।

किञ्चैतत्सूत्रे श्रुत्येकदेशप्रामाण्यात् द्वैतनिरासः अद्वैतनिरासश्च व्यवह्रियते । भागवत-पाञ्चरात्रादि[1]वैष्णवमतेषु जगत्कारणेश्वरस्य शरीरपरिग्रहात् घटपटादिवदन्तवत्त्वं विनाशित्वम् । अद्वैतवादिनां ब्रह्मणो निर्विशेषताङ्गीकारात् रज्जुसर्पवदध्यासपूर्वकानाद्यविद्या-स्वीकारात् असर्वज्ञत्वस्य च निर्देशात् श्रुतिवाक्यपूर्वापरपरामर्शशून्ययुक्त्याभासप्रामाण्यक-पूर्वोक्तमतद्वयमुपेक्ष्यम ।

ननु "एक एव नारायण आसीत् न ब्रह्मा नेशानः", "नारायणपरं ब्रह्म", "वेदाहमेतं पुरुषं महान्तं । आदित्यवर्णं तमसस्तु पारे", "तमेवं विद्वान-मृत इह भवति", "नान्यः पन्था विद्यतेऽयनाय" इत्यादिना महानारायण-

[1] मध्वादि (ज) मध्यवैष्णवानां (ग A).

पुरुषसूक्तादिषु "वासुदेवः सर्वं" इति भगवद्गीतायां च दर्शनात् ब्रह्मभूतनारायणवेदनस्यैव मोक्षसाधनत्वेन जगज्जन्मादिकारणत्वं तस्यैवोपपन्नमिति चेन्न ।

"ध्यायीतेशानं प्रध्यायितव्यम्" "सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते", "सर्वाणि चेन्द्रियाणि न कारणं कारणानां ध्याता कारणन्तु ध्येयः" "सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुराकाशमध्ये शिव एको ध्येयश्शिवंकरः" इत्यादिश्रुतिशतेषु मूर्तित्रयविलक्षणत्वकारणकारणत्वादेः शिव एव निर्देशान्नेतरस्य जगज्जन्मादिकाणत्वमुचितम् 'नारायणपरं ब्रह्म' इत्यादि श्रुतीनां "अन्नं ब्रह्म" इत्यादिवदौपचारिकत्वम् । प्रथमाध्यायद्वितीयपादे सर्वत्रप्रसिध्यधिकरणे महानारायणतात्पर्यं, तत्प्रथमपादे ज्योतिश्चरणाधिकरणे पुरुषसूक्ततात्पर्यम् ।

"शास्त्रदृष्टया तूपदेशो वामदेववत्" इति सूत्रे षड्विधतात्पर्यलिङ्गैः भगवद्गीतातात्पर्यं च परशिवब्रह्मपरत्वेन स्पष्टमुक्तम् । "तदैक्षत बहुस्यां", "तदात्मानं स्वयमकुरुत", "सर्वो वै रुद्रः", ईशावास्यमिदं सर्वं यत्किञ्चजगत्यां जगत्" इत्यादिषु शिवस्यैव जगदुभयकारणत्वव्यपदेशान्न चैकपक्षो युक्तः । नारायणजगत्कारणत्वविधायकपाञ्चरात्रादीनां विरोधप्रसङ्ग इति चेत्तदसत् ।

स्कान्दे–

यदा सानन्दमुनिर्नारकानुदतारयत् ।
तदा भानुसुतः क्रोधात्कैलासगिरिमाययौ ॥

तत्र सर्वेश्वरं साम्बं दृष्ट्वा नत्वा पुनः पुनः ।
सानन्दकृतवृत्तान्तमब्रवीद्दुःखसंयुतः ॥

तच्छ्रुत्वा भगवान् रुद्रो नारायणमपृच्छत ।
आवां यमस्य लोकस्य पुनः पूरणहेतवे ॥

मन्निन्दकानि शास्त्राणि कुरुतां मोहसिद्धये ।
तच्छ्रुत्वा स हरिस्तद्वत् कृतवान् बुद्धशास्त्रकम् ॥

पाञ्चरात्रं च चार्वाकमघोरं क्षपणं तथा ।
तद्वद्रुद्रो महादेवः यमलोकस्य पूरणे ॥

शाक्तं कापालिकं मिश्रं तन्त्रं पाशुपतं तथा ।
चकार मोहशास्त्राणि वेदबाह्यानि सादरात् ॥ इति ।

किञ्च कूर्मे–

"पुरा दानवमोहार्थं केशवेन शिवेन च ।
पाञ्चरात्रं च कापालं याम्यं लोकायतं तथा ॥

बुद्धं जैनं च चार्वाकं कृतं शास्त्रमनन्तकम् ।
तस्मात्तत्पाञ्चरात्रादिवेदबाह्यात्मकानि वै ॥
शास्त्राणि न स्पृशेत् क्वापि प्राणैः कण्ठगतैरपि ।"

इति श्रवणात् । शमनलोकपूरणार्थं दनुजमोहकृतपाञ्चरात्राद्यागमानां न च प्रामाण्यम् ।
उत स्कान्दे-शिवरहस्यखण्डे–

"दश शैवपुराणानि सात्त्विकानि विदुर्बुधाः ।
श्रद्धेयानि द्विजवरैः तेषां धर्मास्तु तत्र यत् ॥

सत्त्वं शुद्धं समादिष्टं सुखज्ञानास्पदं तु यत् ।
विद्योपदिष्टा योगिभ्यश्शुद्धस्फटिकसंन्निभः ॥

न निद्राति शिवः क्वापि ब्राह्मणाधिपतिश्शिवः ।
ब्रुवन्त्येवं पुराणानि ब्राह्मणानां कथाश्शुभाः ॥

दश शैवपुराणानि हिंसादोषपराणि च ।
वैष्णवानि च चत्वारि तामसानि मुनीश्वराः ॥

क्षत्रियाणां श्रुता धर्मास्तेषु तद्देवता हरिः ।
तमः कृष्णमुदासीनं कूटकृत्यविशारदम् ॥

निद्रालस्यप्रमादादिपञ्चधाख्यास्तु तामसाः ।
निद्रालस्यप्रमादाद्यास्तद्गुणाः परिकीर्तिताः ॥

कृष्णो विष्णुस्स्मृतश्शेषशायी भक्तविमोहकः ।
एतेषां क्षत्रियाणाञ्च धर्मा विप्रा उदाहृताः ॥

इति दर्शनात् ब्राह्मणानां शिवोक्तनिगमागमशास्त्रानुसरण[1]लिङ्गभस्म[2]शिखामन्त्रध्यान-स्फटिकाक्षमालिकाधारणपूर्वकशिवोपासनमेव कल्याण-कैवल्यविभूत्यात्मकनिःश्रेयसफल-हेतुभूतमिति निश्चीयते । तथा लैङ्गे—

शिवलिङ्गं शिखा[3]मन्त्रं ध्यानं रुद्राक्षमेव च ।
विभूतिधारणं चैव मुद्राषट्कं प्रचक्षते ॥

इति व्यवस्थापनात्तदेव युक्तम् ।

उत— "अन्तवत्त्वमसर्वज्ञता वा" इत्यत्र हरिँ हरं तमनुयन्ति देवाः विश्वस्येशानं वृषभं मतीनाम्" इति श्रुतौ—

मत्स्यकूर्मवराहाद्यैः नृसिंहमनुजादिभिः ।
जातेन निधनं प्राप्तं विष्णुनापि महात्मना ॥

इति स्मृतौ च शिवेतरनारायणादीनां अन्तवत्त्वं च "रजसा तमसा क्रान्तौ ब्रह्म-नारायणौ खलु" इति सूतसंहिता सूतगीतासु तमसावृतत्वव्यपदेशान्नारायणस्य सर्वज्ञता भावः अर्थात्सिद्ध इति केचिद्वदन्ति । तदपि तमसावृतजननमरणविशिष्टानां पशु-पतिव्यतिरिक्तनारायणादीनां जगदुभयकारणत्वनिषेधादविरुद्धम् इति सिद्धम् ।

---

[1] लिङ्गधारण (ग A) [2] शिखायज्ञोपवीत (ग A) [3] शिखासूत्र (ग A)

## उत्पत्त्यसम्भवाधिकरणम् ॥ ९ ॥

पाञ्चरात्रादीनां वेदैकदेशप्रामाण्यमवलम्बत्वेन निरसने "**तद्विष्णोरेकमुत्तमम्**" "**नारायणपरं ब्रह्म**" इत्यादिश्रुतिसिद्धसर्वाधिकभगवन्नारायणेन कृतः **पाञ्चरात्रागमः** कथं वेदविरुद्ध इत्याशङ्क्य निराकरोति—

## उत्पत्तेरसम्भवात् ॥ ४२ ॥

**उत्पत्तेः** परमपुरुषनारायणात् क्षेत्रज्ञोत्पत्तेः जननस्य **सम्भवात्** श्रुत्युक्त्यनुभवविरोधात् जीवोत्पत्तिविधायकपाञ्चरात्रागमशास्त्रं सर्वथा वैदिकैर्नाङ्गीकरणीयम्। पञ्चमहाभूतवत् क्षेत्रज्ञानां परमात्मसकाशादुत्पत्त्यङ्गीकारे तद्वज्जीवानां नाशप्रसङ्गात् तच्छास्त्रोक्तकिञ्चिद्भेदनारायणसारूप्यात्मकमुक्तिर्न स्यात्। जीवजन्यत्वव्यपदेशकपाञ्चरात्रशास्त्रं प्रमाणमूलं भ्रान्तिमूलं वेति **संशयः**।

**पूर्वः पक्षः—** परब्रह्मभूतवासुदेवप्रणीतत्त्वात् तत्परत्वात् निःश्रेयससाधनावबोधकत्वान्मन्वादेरधिकृत्वात् तदुक्तपाञ्चरात्रागमस्य वेदवत्प्रामाण्यम्। तत्प्रक्रिया च— "**परमकारणभूतवासुदेवात् सङ्कर्षणो नाम जीवो जायते। सङ्कर्षणात् प्रद्युम्नसंज्ञं मन उत्पद्यते। तस्मादनिरुद्धसंज्ञकाहंकारः प्रभवति। एते चत्वारो व्यूहास्सर्वेश्वरस्य**"। इति। तस्मात्तच्छास्त्रमनिवार्यम्।

**किञ्च—** सर्वेषां ब्राह्मणानां याग-श्राद्ध-दानादिकर्मसु कृष्णार्पणविनियोगदर्शनात्—

> **प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै।**
> **यानि तेषामशेषाणां कृष्णानुस्मरणं परम्॥**

कायेन वाचा मनसेन्द्रियैर्वा
  बुध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै
  नारायणायेति समर्पयामि ॥

इत्यादिवचनेषु सर्वकर्मसु विष्णुस्मरणपूर्वकत्वस्य तेषां विष्ण्वाराधनरूपत्वस्य च उपदेशात् सर्वक्रियासंकल्पे "श्रीगोविन्दगोविन्देति" व्यवहारदर्शनात्, श्राद्धे च विष्णोर्मुख्य-देवत्वाभिधानात् "गयायां श्रीविष्णुपादे दत्तमस्तु" इति । "अनेन श्रीजनार्दनः प्रीयतामिति" च विष्णुसमर्पणस्यैव[1] द्योतनात्, "अच्युतानन्तगोविन्द" इत्यादिना शरीरशुद्धिसम्पादनार्थं केशवादिद्वादशनामोच्चारणविधानस्य स्मृतिषु बहुधा प्रपञ्चितत्वात्, सन्ध्यावन्दनोपस्थाने–

"ध्येयस्सदासवितृमण्डलमध्यवर्ती
  नारायणस्सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
  हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥

इति सौरमण्डले नारायणप्रार्थनादर्शनात्,

नमो ब्राह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥

इति गोविन्दस्मृतिं कृत्वा

"आकाशात्पतितं तोयं यथा गच्छति सागरम् ।
सर्वं देवनमस्कारः केशवं प्रति गच्छति ॥

---

[1] स्मरणस्यैव (ज)

इति वाक्येन तदितरसकलदेवताकर्मकनमस्कारादीनां केशवस्यैव मुख्योद्देश्यत्वव्यवस्थापनात् वैष्णवलाञ्छनमृदूर्ध्वपुण्ड्रस्यैव सर्वेषां प्रातर्विधेयत्वदर्शनात्सालग्रामं विना लिङ्गतीर्थप्रसादास्वीकारात् ॥

किञ्च– [1]स्मार्तवैष्णवादिमतेष्वपि रामायणस्यैवोपदेशग्रहणात् विष्णुसहस्रनामोच्चारणस्यैव सर्वेषां मुख्यानुसन्धेयत्वाच्च सर्वेषां ब्राह्मणानां विष्णुपरत्वमेवाभिहितम् ।

"रुद्रो वै क्रूर" इति यजुश्श्रुतौ रुद्रस्य तामसत्वव्यपदेशात् तत्प्रणीतशिवागमानां तत्प्रतिपादकश्रुतिस्मृतिपुराणानां च तामसत्वादप्रामाण्यमर्थात् सिद्धम् । तथा शाण्डिल्यस्मृतौ–

"यानि सर्वपरं विष्णुं वदन्ति परमेश्वरम् ।
तानि सर्वाणि शास्त्राणि सात्त्विकानि मतानि वै ॥

प्रजापतिं कृशानुं च तथा देवीं सरस्वतीम् ।
परत्वेन वदेच्छास्त्रं राजसं च प्रचक्षते ॥

यच्छास्त्रं लिङ्गपारम्यं वामदेवमुमापतिम् ।
परत्वेन वदेच्छास्त्रं तत्तामसमुदाहृतम् ॥

इति स्पष्टमुक्तम् ।

किञ्च– सर्वयज्ञक्रियादिषु रुद्राहुत्यनन्तरं– "अप उपस्पृश्य" इति श्रवणाच्चदेव शिवस्य तामसत्वामङ्गलत्वप्रदर्शने मुख्यदृष्टान्तः । नारायणाद्रुद्रो जायते" इत्यादौ नारायणस्य जगज्जन्मादिकारणत्वोपदेशाच्च तत्प्रणीतपाञ्चरात्रागमस्य समुत्कृष्टत्वात् सर्वेषां ब्राह्मणानां तदेव ग्राह्यमिति प्राप्ते प्रचक्ष्महे–

**सिद्धान्तः–** वैदिकानां पाञ्चरात्रागमप्रतिपादितवैष्णवमतं न विधेयम् । कुतः ? तन्त्रप्रधानत्वात् ।

---

[1] मध्वादिमतेषु (ग A).

"ज्ञाज्ञौ द्वावजावीशानीशौ", "न जायते म्रियते वा विपश्चित्" इत्यादिस्मृतिषु जीवानामनादित्वनिर्देशात् जीवोत्पत्यादिश्रुतिबाह्यधर्मप्रकाशकपाञ्चरात्रागममतमवैदिकमसरणीयम्। जीवानां जन्यत्वे कृतनाशाकृताभ्यागमदोषो बुद्धमतवदापद्येत। पाञ्चरात्रागमानां प्राधान्यं नारायणप्रणीतत्वेन ? उत वैष्णवगूढाचारधर्मप्रकाशकत्वेन ? नाद्यः, बुद्धागमादिष्वतिव्याप्तेः। न द्वितीयः, कूचिमारादि ग्रन्थप्रामाण्यप्रसंगात्। तथा चेत्

"स्मृतितन्त्रपुराणेषु योऽर्थः श्रुत्या विरुध्यते।
तन्त्रार्थस्स तु विज्ञेयो गर्हितो ब्राह्मणादिभिः॥"

इति पाराशर व्यवस्थादर्शनात्। तदङ्गीकारे वर्णचतुष्टयातीतत्वप्रसङ्गो दुर्निवारः।

कचित् स्मृतिपुराणेषु सर्वकर्मारम्भे विष्णुनामस्मरणात् विष्णोरुत्कृष्टत्वं, परब्रह्मत्वं वैदिकदेवताप्रधानत्वं वा ?

नाद्यः, "विश्वाधिको रुद्रो महर्षिः", "रुद्रो वै शाश्वतं वै पुराणम्", "एक एव रुद्रो न द्वितीयाय तस्थे", "रुद्र एकत्वमाहुः" इत्यादि श्रुतिशतेषु शिवस्यैव सर्वाधिक्यव्यवस्थापनान्नेतरस्य सर्वाधिक्यम्।

किञ्च—"त्वं देवेषु ब्राह्मणोऽसि, अहं मनुष्येषु ब्राह्मणः", "ब्राह्मणो वै ब्राह्मणमुपधावति", "त्वं देवानां ब्राह्मणानामधिपतिर्विष्णुः क्षत्रियाणामधिपतिः", ब्राह्मणानां ब्राह्मणैराप्ततया महादेव एक एवोपास्यः" इत्यादिना यजुस्सामश्रुतिषु शिवस्य ब्राह्मणत्वं, ब्राह्मणोऽपास्यत्वं चोपदिष्टम्। "एष नित्यो महिमा ब्राह्मणस्य तस्मात्सोमराजानो ब्राह्मणाः"। "सोमोऽस्माकं ब्राह्मणानां राजा सोम एव नो राजेत्याहुर्ब्राह्मणाः प्रजाः इत्यादिषु शिवस्य ब्राह्मणत्वं ब्राह्मणाधिपतित्वं चोपदिष्टम्।

कूर्मे

अनुलोमविलोमानां वर्णानां ब्राह्मणो गुरुः।
विशेषाद् ब्राह्मणं रुद्रमीशानं शरणं व्रजेत्॥

पाराशरपुराणे—

सर्वेषामेव वर्णानां वरिष्ठः परमेश्वरः ।
वरिष्ठयोर्हि सम्बन्धो युज्यते न परस्य तु ॥

ततो विप्रस्य सम्बन्धश्शिवेनैव हि युज्यते ।
सङ्कारास्सर्वदेवाश्च वृषलस्तु पुरन्दरः ॥

पितामहश्च वैश्यश्च क्षत्रियः प्रभो हरिः ।
ब्राह्मणो भगवान् रुद्रः सर्वेषामुत्तमोत्तमः ॥

ब्रह्मभूतस्य रुद्रस्य ब्राह्मण्यं नैव हेतुजम् ।
ब्राह्मणो वै सदा लोके ब्राह्मणन्तूपधावति ॥

नेतरः क्षत्रियो वैश्यः न शूद्रो न च सङ्करः ।
तस्माद्वेदैकमार्गेण द्विजातो ब्राह्मणस्सदा ॥

महाब्राह्मणमीशानमवगच्छेन्नचेतरम् ।
सर्वात्मभूतमात्मानं विरूपाक्षं द्विजोत्तमम् ।
यस्तु नोपैति साङ्कर्यं तस्यास्त्यंहो न संशयः ॥

इति । तथा यजुर्वेदे—"यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते । न परां प्राप्नोति पापीयान् भवति ॥" इति । "यस्तु स्वां देवतामतिक्रम्य देवतान्तरं यजते सः परां देवतां न प्राप्नोति, पापीयान् भवतीति" श्रुत्यर्थः । "अन्तर्नेच्छन्ति तं जने रुद्रं परो मनीषया गृभ्णन्ति जिह्वयाससं" इत्येतत् श्रुत्युपष्टम्भकतया कूर्मे—

अन्तर्नेच्छन्ति ये रुद्रं भवानीसहितं शिवम् ।
पुरीषमेव गृभ्णन्ति जिह्वया ते न संशयः ॥

श्रौतस्मार्तसदाचारैर्ब्राह्मणः परमेश्वरम् ।
महाब्राह्मणमीशानमुपगच्छेत्सदैव तु ॥

तच्छेषत्वेन विष्णादीन् सर्वेषां शास्तिकोत्तमः ।
अपगच्छेत्सदा विप्रो न प्रधानतया सदा ॥

जन्मना लब्धजातीनामाश्रमाणां तथैव च ।
प्राधान्येन महादेवः पूज्यो नान्योऽस्ति सिद्धये ॥

तस्मात्क्षत्रियर्थं महाविष्णुस्सर्वैः पूज्यः सनातनः । "

इत्यादिना स्कान्दे शिवस्यैव ब्राह्मणत्वमवगम्यते ।

" नादेवांशो ददात्यन्नं नाविष्णुः पृथ्वीपतिः ।
नानृषिः कुरुते काव्यं नारुद्रः क्रमपाठकः ॥ "

इति स्कान्दे रुद्रांशस्यैव ब्राह्मणस्य वेदक्रमपाठकत्वेन ब्राह्मण्यमुक्तम् । " नाविष्णुः पृथिवीपतिः " इति विष्णोः पृथिवीपतित्वेन क्षत्रियत्वमुक्तम् ।

" अलंकारप्रियो विष्णुरभिषेकप्रियश्शिवः । "

इति रामकृष्णाद्यवताराणां क्षत्रियकुले जन्मश्रवणात् लोके विष्णुविग्रहेषु गोविन्द-राज-वरदराज-रङ्गराजादि शब्दप्रयोगदर्शनात्; किञ्च पाञ्चरात्रागमोक्तकल्याणोत्सवादिषु वर्मशब्द प्रयोगाच्च विष्णोः क्षत्रियत्वमनिवार्यम् ।

ब्राह्मणानां शिवो देवः क्षत्रियाणां तु माधवः ।
वैश्यानां तु तथा ब्रह्मा शूद्राणां सुरनायकः ॥

इति मनुस्मृतौ च विष्णोः क्षत्रियदेवत्वं स्पष्टमुक्तम् ।

ननु वेङ्कटेश्वर-विटलेश्वरस्थाने विष्णोरीश्वरशब्दश्रवणात् परशुरामावतारे तस्य ब्राह्मण-कुलसम्भवश्रवणात् कथं क्षत्रियत्वमुपदिश्यत इति चेन्न—वेङ्कटेश्वरस्याभासविष्णुत्वं; तदङ्गे

SCANNED



नागभूषणादिधर्माणां, द्योतनात्, मूलविग्रहे शङ्ख-चक्रादिलाञ्छनानामदर्शनात् **वीरेश्वरस्य** रामानुजकल्पितवेङ्कटेश्वरत्वं रज्जुसर्पवदाभासमात्रमेव।

**किञ्च—** तत्पाण्यधोदेशे शिवलिङ्गस्य दर्शनात् ईश्वरशब्दो व्यवह्रियते। **विठलेश्वरस्य** विष्णोश्शिरसि शिवलिङ्गधारणदर्शनात् तत्र षष्ठीतत्पुरुषसमासेनेश्वरशब्दो निर्णीतः। रुद्रांशसम्भूतस्य **विश्वामित्रस्य** क्षत्रियोत्पन्नस्यापि तपसा ब्राह्मणत्वं, नारायणांशसंभूतस्य **परशुरामस्य** ब्राह्मणोत्पन्नस्यापि व्यापारेण क्षत्रियकार्यकारणत्वं दृष्टम्। तच्च रुद्रदैवत्य-चरुव्यत्यासहेतुकमिति हरिवंशे प्रतिपादितम्—

**"भृगोश्चरुविपर्यासे शैववैष्णवयोः पुरा।**
**जगत्यां वैष्णवांशश्च जामदग्न्यो ह्यजायत॥**

**विश्वमित्रस्तु शैवांशैर्गाधिः कुशिकनन्दनः।**
**जनयामास पुत्रन्तु तपोविद्याशमात्मकम्॥**
**................प्राप्य ब्रह्मर्षिसमतां गतः।"** इति।

तस्माच्छिवस्य ब्राह्मणत्वं ब्राह्मणाधिपतित्वं; अत एव सर्वोत्कृष्टत्वं चेति—

**"रुद्रपिण्डोद्भवो विप्रो रुद्रं सर्वेश्वरं विभुम्।**
**मोहेनैव न जानाति तातं वेश्यासुतो यथा॥**
**यः पुत्रः पितरं द्वेष्टि तं विद्यादन्यरेतसम्।**
**यो विप्रान् सततं द्वेष्टि तं विद्यादन्यरेतसम्॥"**

इत्यादिना **स्कान्दे** दृश्यते। अतः रुद्रस्य ब्राह्मणत्वात् ब्राह्मणोत्पत्तिहेतुत्वाच्च रुद्रद्वेषिणां ब्राह्मणेभ्यो बहिष्कार इति घण्टाघोषः।

**"आदत्त पितरो गर्भं कुमारं पुष्करस्रजम्।" "यदेह पुरुषस्सदिति तं पत्नी प्राश्नाति पुमाँसं समाजानुका भवति"** इति **आपस्तम्बगृह्यसूत्रे** ब्राह्मणस्य रुद्रपिण्डहेतुत्वं श्रूयते।

**ननु** वस्वादिपाठेन एकादशरुद्राणामेव अत्र निर्देश इति चेन्न ; तेषामीश्वरांशत्वेनैव रुद्रत्वव्यपदेशो युक्तः अंशांशिनोरभेदात् । **प्रकृतिविकृतिन्यायेन** श्राद्धादौ तद्वदुत्पत्तिः । **तस्माद्विष्ण्वाद्यपेक्षया रुद्रस्यैव सर्वोत्कृष्टत्वम्** सिद्धम् ।

**न द्वितीयः**–"**एक एव नारायण आसीत्, न ब्रह्मा, नेशानः**", "**नारायणात् ब्रह्मा जायते, नारायणाद्रुद्रो जायते**" इत्यादौ शिववन्नारायणस्य कारणकारणत्वादर्शनात्, "**एक एव नारायण आसीत्**" इत्यत्र शक्तेरासीत्पराशरः इतिवत् आदिविष्णोः परमशिवजन्यत्वमुपदिश्यते । तथा **ऋग्वेदे**– "**विष्णुरित्था परमस्य विद्वान् जातो बृहन्नभिपाति तृतीयम्**" इति ।

**अस्यार्थः**– परमस्य महेश्वरस्य इत्थं भवेन विद्वान् वेत्ता विष्णुः विष्णोः परमशिववेत्तृत्वं मन्त्रान्तरे प्रसिद्धम्– "**विष्णो देवस्त्वं परमस्य वित्से**" इति । एवम्भूतो बृहद्विष्णुः "बृहदिति विशेषणं विष्णोः गूढावतारात्" इति रूपान्तरातीतादिविष्णुपरम् ।

मन्त्रान्तरेऽपि- "**नमो विष्णवे बृहते करोमि । बृहत्ते विष्णो सुमतिं भजामहे**" इत्यादिषु, "स विष्णुजातस्सन् ब्रह्मविष्णुलोकादूर्ध्वं तृतीयं कैलासं साक्षादादिविष्णुरेव संरक्षति" तस्मादजातमहेश्वरादादिविष्णोर्जन्यत्वं सिद्धम् । "**अजात इत्येवं कश्चिद्भीरुः प्रपद्यते । रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्**" इति श्वेताश्वतरमन्त्रेण शम्भोरेवाजातत्वव्यवस्थापनात् तस्यैव कारणकारणत्वं सिद्धम् । "**नारायणाद्रुद्रो जायते**" इत्यादिवाक्यानामवान्तरकालरुद्रविषयत्वम् ।

"**त्रयस्ते कारणात्मानो जातास्साक्षान्महेश्वरात्**" इत्यारभ्य–
"**विष्णोश्च भगवांस्तद्वत् ब्रह्माणमसृजत्पुनः**"
"**नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः**"

इत्यादिना कल्पान्तरेषु परमशिवानुग्रहादवान्तरभेदाः बहुधा प्रपञ्चिताः इति **वायुसंहितायां दृष्टम्** । "**एक एव नारायण आसीत्**" इति क्रियया तस्य परमेश्वरजन्यत्वमुपदिष्टम् । तत्र तस्य मूर्तित्रयकारणत्वादर्शनात् । **श्रुत्यन्तरेषु** जगत्कारणत्वं मूर्तित्रय-

कारणत्वं च शिवस्यैव निर्दिष्टम्। श्वेताश्वतरे— "ब्रह्मवादिनो वदन्ति। किं कारणं ब्रह्म। कुतः स्म जाताः" इत्युपक्रम्य प्रश्नोत्तरपुरस्कारेण शिवस्यैव परं-ब्रह्मत्वं प्रसाध्य—

"यदा तमस्तन्न दिवा न रात्रि-
र्न सन्न चासच्छिव एव केवलः।
तदक्षरं तत्सवितुर्वरेण्यं
प्रज्ञा च तस्मात् प्रसृता पुराणी॥"

इत्यादिना सकलजगत्पूर्वभावित्वेन गायत्रीमन्त्रवाच्यत्वेन शिवस्यैव प्रतिपादितत्वात्, "यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः" इत्यादिना तस्यैव विश्वाधिकत्व-मुपदिष्टम्। अथर्वशिरसि—

"ध्यायीतेशानं प्रध्यायितव्यम्। सर्वमिदं ब्रह्म-विष्णु-रुद्रेन्द्रास्ते सम्प्रसूयन्ते। सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां ध्याता कारणन्तु ध्येयः", "सर्वैश्वर्य-सम्पन्नस्सर्वेश्वरश्शङ्कर आकाशमध्ये शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य" इत्यादिश्रुतिषु तस्यैव कारणकारणत्वनिर्देशात् नारायणस्य कारणकारणत्वे विश्वाधिकत्वे च श्रुत्यदर्शनात् न सर्वथा नारायणस्य परब्रह्मत्वमुपपद्यते। "ईशानः सर्वविद्यानां" इत्यादिना शिवस्य पालकत्वं, "निधनपतये नमः, सर्वभूतदमनाय नमः, महा-ग्रासाय नमः" इत्यादिश्रुतिषु तस्यैव सर्वलयकारणत्वं दृष्टम्। तस्मात्तस्यैव परब्रह्मत्वं निष्प्रत्यूहम्। "जन्माद्यस्य यतः" "यतो वा इमानि भूतानि जायन्ते" इत्यादौ च जगज्जन्मादिकारणत्वं ब्रह्मलक्षणमित्युक्तम्।

न तृतीयः, सामवेदप्रथममन्त्रे "तपश्च ते" "जपश्च ते" इत्युपक्रम्य "कर्माधिपतये नमः" इत्यन्तेन सकलकर्माधिदैवत्वेन "विरूपाक्षोऽसीति" तत्र निर्देशात्, वैदिकानां सर्वकर्मारम्भे शिवस्मरणमेव युक्तम्। तथा शैवपुराणे—

"वैदिकस्सर्वकर्माणि शिवमुद्दिश्यकारयेत्" इति,

"अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेद्वै विरूपाक्षं स बाह्याभ्यन्तरः शुचिः ॥" इति च श्रूयते ।

स्कान्दे–

"शुचिर्वाप्यशुचिर्वापि सर्वावस्थासु सर्वदा ।
यः स्मरेद्वै विरूपाक्षं स वैश्वानरवच्छुचिः ॥"

इति श्रूयते । मन्वादिश्रुतीनामिव श्रुतिमूलकत्वेन सर्वकर्मारम्भे शिवस्मरणविधायकवचनानां विधेयत्वम् (ग्राह्यत्वम्) । वेदमूलकत्वाभावात्कर्मारम्भे विष्णूद्देशप्रतिपादकस्मृतीनां साङ्ख्यादिस्मृतिवत् दुर्बलत्वम् ।

"दिनं वारं च नक्षत्रं योगं करणमेव च ।
सर्वं शिवमयं स्मृत्वा वैदिकः कर्म कारयेत् ॥"

इति स्मृतौ दिनवारनक्षत्रादिकं शिवमयमिति श्रूयते । तथा च श्रुतिः–

"विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् ।
सर्वो ह्येष रुद्रः तस्मै रुद्राय नमो अस्तु ॥"

इत्यादि श्रुतिशतेषु सर्वं शिवात्मकमिति श्रूयते ।

किञ्च– श्राद्धप्रारम्भे–

"ईशानः पितृरूपेण महादेवो महेश्वरः ।
प्रीयतां भगवानीशः परमात्मा सदाशिवः ॥"

इति शिवप्रीतिकरत्वेन शिवाराधनत्वेन श्राद्धकर्मकर्तव्यत्वमुपदिष्टम् । तथोपसंहारे– "वामदेवाय नमः" इत्यादिना शिवस्मरणपूर्वकब्राह्मणविसर्जनश्रवणादुपक्रमोपसंहारयोः शिवपरत्वदर्शनात्तन्मध्यभागस्यापि तत्परत्वमेव । तथा शङ्करसंहितायां–

"नैमित्तिकानि श्राद्धानि शिवतुष्ट्यर्थमादरात् ।
कुर्यात्सर्वैः स्वगृह्योक्तं शिवाराधनबुद्धितः ॥" इति ।

लैङ्गे– "गयारुद्रपदे पिण्डं यो ददाति सुभक्तितः ।
स सप्तकुलमुद्धृत्य शिवलोके महीयते ॥"

"ईशानविष्णुकमलासनकार्तिकेय-वह्नित्रयार्करजनीश" इत्यादिना तत्र प्रथमं-मीशानपादस्यैवोपदेशात् । "गयायां श्रीरुद्रपादादिसमस्तपादेषु दत्तमस्तु" इति बोधायनसूत्रवचनात् श्राद्धं सर्वं शिवप्रीतिकरमेव ।

ननु 'श्राद्धसंरक्षकश्रीमहाविष्णोरिति वचने तस्यैव श्राद्धसंरक्षकत्वेनोपदेशात् श्राद्ध-फलदाता स एवेति चेन्न । विश्वेदेवादिगणाधिकारित्वेन विष्णुनिर्देशः कृतः । राज-भाण्डागारे भृत्यनिर्देशवत् विष्णोस्तत्संरक्षकत्वं निर्दिष्टम् । स्कान्दे– व्यासभुजस्तम्भ-नानन्तरं व्यासं प्रति विष्णुवचनम्–

"यज्ञकर्ता च देवेन्द्रो वेदकर्ता च वाक्पतिः ।
अहमेव जगत्कर्ता मम कर्ता महेश्वरः ॥" इति ।

अनेन वचनेन शिवस्यैव सर्वाधिकत्वमुपदिश्यते । "यो रुद्रोऽग्नौ योऽप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश" इति श्रुतौ जलाधिष्ठानतया रुद्रस्यैव स्थित्युपदेशात् । स्नानकालेऽपि– "वासदेवमन्त्रेण जलाधिष्ठानरुद्रं स्मृत्वा स्नानं कुर्यात् ।" तथा शातातपे–

"वामदेवेति मन्त्रेण जलाध्यक्षं सदाशिवम् ।
स्मृत्वा स्नानं सदा कुर्यात्सर्वपापनिवृत्तये ॥"

इत्यादिना स्नानकाले शिवप्रार्थनादर्शनात्तदेव युक्तम् ।

सौरमण्डलमध्यस्थं साम्बं संसारभेषजम् ।
नीलग्रीवं विरूपाक्षं नमामि शिवमव्ययम् ॥ इति गौतमस्मृतौ–

"सूर्यो मुख्यशरीरं स्याच्छिवस्य परमात्मनः" इति, शङ्करसंहितायां– सूर्यमण्डलान्तर्वर्तित्वं सूर्यस्य मुख्यशरीरत्वं चोपदिष्टम् । तस्माच्छिवस्यैव परब्रह्मत्वं सिद्धम् ।

ननु "एषोऽन्तरादित्ये हिरण्मयः पुरुषः" इत्यारभ्य "कप्यासं पुण्डरीकमिवाक्षिणी" इत्यादिना छान्दोग्ये– सूर्यमण्डलाभिव्यक्तपुरुषस्याक्षिद्वयोपदेशात्, "ध्येयस्सदा सवितृमण्डलमध्यवर्ती" इत्यादिना नारायणस्य सूर्यमण्डलान्तर्वर्तित्वनिर्देशात्, भर्गशब्दवाच्यत्वं तस्यैवेति चेन्न– "अन्तस्तद्धर्मोपदेशात् इत्यधिकरणे तन्निराकृतम् । नीलकण्ठभाष्ये सूतसंहिताध्यानयोगखण्डे च शिवस्य सूर्यमण्डलान्तर्वर्तित्वेन तन्मन्त्रार्थस्योपदेशात्, "कप्यासं पुण्डरीकमिवाक्षिणी" इति वाक्ये कं उदकं किरणैः पिबतीति कपिः सूर्यः तेनासितं विकसितं पुण्डरीकमिवेत्यनेन तृतीयलोचनस्य मुकुळीकृतत्वमर्थात्सिद्धमिति बहुधा निरूपितम् । शतरुद्रीये– "असौ योऽवसर्पति नीलग्रीवो विलोहितः" इत्यादिना सूर्यमण्डलान्तर्वर्तित्वं शिवस्यैव प्रसाधितम् । "स्तोमं वो अद्य रुद्राय सिक्वसे । क्षयद्वीराय नमसा दिधेम" इति श्रुतौ सर्वदेवतानमस्कारस्तोत्रादीनां शिवसमर्पणविधिश्रवणात्, "सर्वदेवनमस्कारः केशवं प्रतिगच्छति" इति वाक्यानां वेदविरुद्धत्वात् सांख्यस्मृतिवचनवन्न विधेयत्वम् ।

किञ्च– "पञ्चशीर्षोपनयेन" इति वाक्ये शिरःपञ्चकविशिष्टत्रिलोचनमहेश्वरे सन्ध्यावन्दनविनियोगव्यवस्थापनात् विनियोगानुसारेण सर्ववाक्यान्वयो युक्तः । तत्प्रकरणे तु "भर्गो देवस्य रुद्रात्मन" इति पदेन भर्गपदस्य रुद्रपरत्वस्य स्पष्टमुक्तत्वात्, श्रुति-स्मृति-विरोधे तु श्रुतिरेव बलीयसी" इति न्यायेन श्रुत्यर्थानुगुण्येन वाक्यार्थो योजनीयः ।

अत्र केचित्– अमात्यसमर्पितद्रव्याणां यथा राजाधीनत्वं तथा विष्णुसमर्पितनमस्कारादीनां शिवाधीनत्वमिति वदन्ति ।

"यथा चोरसमानीतं किरीटादिविभूषणम् ।
चोरैर्यथा न धार्यं स्यात्तथा देवनमस्कृतिः ॥

यथा नद्यादयः सर्वे समुद्रे प्रविशन्ति हि ।
सर्वदेवनमस्कारः महादेवे तथा ध्रुवम् ॥

न शक्यते द्वयं धर्तुं ब्रह्मविष्ण्वादिभिस्सदा ।"

इति **स्कान्दे** श्रूयते । अतो न कश्चिद्विरोधः ।

**ननु विष्णुधर्मोत्तरे** स्मार्ताचमनलक्षणानन्तरं— अथ केशवादिभिरित्यादिना पुराणाचमनं वैदिकानां विधेयत्वेन प्रतिपादितमिति चेन्न ।

"श्रौतमाचमनं प्रोक्तं यज्वादीनां निरन्तरम् ।
स्मार्तमाचमनं ज्ञेयं स्मार्तकर्मावलम्बिनाम् ॥"

इति **गौतमस्मृतौ** स्मरणात्, केशवादिनामभिराचमनं तान्त्रिकमेवेति वेद्यम् । वैदिकानां स्मार्तानामपि मूत्रोत्सर्जनादिकालेषु केशवादिभिराचमनं कथमकर्तव्यमिति चेन्न— ब्राह्मणानां शिवदेवत्वात् शिवनामभिराचमनमेव कर्तव्यम् ।

"ब्रह्मयज्ञादिकालेषु श्रुत्याचमनमिष्यते ।
सोमयागादिकालेषु श्रौताचमनमीर्यते ॥
सन्ध्यादिस्मार्तकृत्येषु स्मृत्याचनमीरितम् ॥

मूत्राद्युत्सर्जने काले पुराणाचमनं स्मृतम् ।
शिवनामादिभिः पश्च विंशत्या कुरुताद्बुधः ॥"

इति **वृद्धशातातपस्मृतिदर्शनात्** तदेव युक्तम् । ऊर्ध्वपुण्ड्रादिकं न वैदिकपरिग्राह्यं तान्त्रिकत्वात् । तदुक्तं **पाराशरपुराणे**—

श्रौतलिङ्गन्तु विज्ञेयं त्रिपुण्ड्रोद्धूलनादिकम् ।
अश्रौतन्तूर्ध्वपुण्ड्रादि नैव तिर्यक्-त्रिपुण्ड्रकम् ॥

शातातपे–

"ऊर्ध्वपुण्ड्रं मृदा कुर्याल्लीलयापि कदाचन ।
तदाकारेण शस्त्रेण पीड्यते यमकिङ्करैः ॥"

गारुडस्मृतौ च–

"त्रिपुण्ड्रं सुरविप्राणां वर्तुलं नृपवैश्ययोः ।
अर्धचन्द्रन्तु शूद्राणां अन्येषामूर्ध्वपुण्ड्रकम् ॥"

सूतसंहिता-ब्रह्मगीतासु च–

"ऊर्ध्वपुण्ड्रं ललाटे तु वर्तुलं वार्धचन्द्रकम् ।
मोहेनैव प्रकुर्वन्ति पाषण्डोपहता जनाः ॥"

"शङ्खचक्रगदापद्माद्यङ्कनं विग्रहे स्वके ।
मोहेनैव करिष्यन्ति पाषण्डोपहता जनाः ॥"

विष्णुस्मृतौ–

"यथा श्मशानगं काष्ठमनर्हं सर्वकर्मसु ।
तथा चक्राङ्कितो विप्रः सर्वकर्मबहिष्कृतः ॥"

"विभूतिर्यस्य नो फाले कण्ठे रुद्राक्षमालिका ।
मुखे पञ्चाक्षरो मन्त्रस्तं त्यजेदन्त्यजं यथा ॥"

गौतमस्मृतौ–

"मुखे मन्त्रं हृदि ध्यानं मस्तके लिङ्गधारणम् ।
[1]शिखा रुद्राक्षभस्मानि इति ब्राह्मणलक्षणम् ॥"

---

[1] "शिखा यज्ञोपवीतं च ह्येतद्ब्राह्मणलक्षणम्" इति 'ज' प्रतिटिप्पण्याम् (ग A).

ब्राह्मणः कुलजो विद्वानूर्ध्वपुण्ड्रधरो यदि ।
तं गार्दभं समारोप्य राजा राष्ट्रात्प्रवासयेत् ॥

कुलीनो ब्राह्मणो विद्वानूर्ध्वपुण्ड्रधरो यदि ।
वर्जयेत्तादृशं विप्रं मद्योच्छिष्टघटं यथा ॥"

किञ्च- गौतमे तत्प्रायश्चित्तविधिरपि श्रूयते—

ऊर्ध्वपुण्ड्रं मृदाश्रित्य पत्रवर्तुलचिह्नधृत् ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

अङ्किते शङ्खचक्राद्यैः शरीरे देवतायुधैः ।
त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः ॥

अग्निना दह्यते गात्रं यः पुमान् व्याधिवर्जितः ।
रुद्राक्षधारणादेव भस्मना पूयते द्विजः ॥ इति ।

सामशाखायां--

"मद्यं पीत्वा गुरुदारांश्च गत्वा
स्वर्णस्तेयं ब्रह्महत्यां च कृत्वा ॥
भस्मच्छन्नो भस्मशय्यां शयानो
रुद्राध्यायी मुच्यते सर्वपापैः ॥"

इत्यादिना बहुश्रुतिस्मृतिभिर्भस्मरुद्राक्षलिङ्गधारणादिमाहात्म्यं सर्वाधिकरणे बहुधा प्रपञ्चितम् ।

ननु वेदोपबृंहकस्मृतिपुराणानामवैदिकतन्त्रमार्गप्रतिपादकत्वाभावात् ऊर्ध्वपुण्ड्रादिकं तिर्यग्भस्मत्रिपुण्ड्रवद्वैदिकमिति चेन्न— तदुक्तं पाराशरे—

"पुराणे धर्मशास्त्रे वा योऽर्थः श्रुत्या विरुध्यते ।
तन्त्रार्थस्स तु विज्ञेयो मानसेन मनीषिभिः ॥"

इति श्रवणात्, वेदविरुद्धोऽर्ध्वपुण्ड्रादिकस्य स्मृतिपुराणपठितत्वेऽपि वेदमूलकत्वाभावान्न वैदिकपरिग्राह्यत्वम्।

"गौडे विद्या तपश्चोळे दया काश्मीरमण्डले।
आर्यदेशे सदाचारो मन्त्रसिद्धिस्तु केरळे॥"

इति पाराशरपुराणवचने ह्यार्यावर्तदेशाचारस्य सर्वोत्कृष्टत्वप्रतिपादनात्, तद्देशे केशवनामोर्ध्वपुण्ड्रसालग्रामपूजादिकस्य बहुशोऽदृष्टत्वात्तदाचार एव विद्वद्भिर्मर्णीय इति चेत्तदयुक्तम्। तत्रैव—

"मध्यदेशादिसंसिद्धसदाचारं समाचरेत्।
स्मृतिमन्त्रविरुद्धन्तु तत्रापि न समाचरेत्॥

सर्वदेशेषु यत्स्मृत्या श्रुत्या वा विहितं यथा।
आचारोऽप्रतिषिद्धश्च स प्रमाणं न संशयः॥"

**ननु** केशवादिनाम्नां [1]वेदोक्तत्वाभावेऽपि यज्ञोपवीतवदाचरणीयमिति चेत्तदसत्। यज्ञोऽपवीतविधानस्य **गृह्यपरिशेषे—"यज्ञोपवीतं परमं पवित्रं"** इति मन्त्रप्रतिपादनात् श्रुतिविरोधाभावात् ब्रह्मोपनिषद्दर्शनाच्च। तद्वत्केशवादिनाम्नां श्रुतिप्रतिपाद्यत्वाभावात्तान्त्रिकत्वमनिवार्यम्। शिवलिङ्गस्य श्रुतिसिद्धत्वात् वैदिकपूजार्हत्वमुपपद्यते। **यजुश्शाखायां—"निधनपतये नमः"** इत्यारभ्य **"एतत्सोमस्य सूर्यस्य सर्वलिङ्गँ् स्थापयति पाणिमन्त्रं पवित्रं"** इत्यन्तेन शिवलिङ्गस्य परब्रह्मत्वेन, सर्वोपास्यत्वप्रकटनाय प्रतिपदं नमस्कारपूर्वकं सर्वात्मकत्वं श्रूयते।

"लीयतेऽस्मिन्नन्त्यकाले जगत्सर्वं चराचरम्।
सृष्टिकाले बहिर्याति तस्माल्लिङ्गं परात्परम्॥"

[1] वेदोक्तत्वाचारेऽप (ग A)

इति लैङ्गे व्युत्पत्त्या लिङ्गस्य महामहिमातिशयित्व निश्चितम्। तस्माच्छ्रुतिपुराणसिद्धत्वात् लिङ्गं वैदिकमेव। वेदमूलकत्वाभावाद्विष्णुविग्रहसालग्रामदेवतापूजनस्य तान्त्रिकत्वमेव।

किञ्च—विष्णोश्शिवलिङ्गाराधकत्वं ऋग्वेदे श्रूयते—

"तव श्रिये मरुतो मर्चयन्त रुद्र यत्ते जनिम चारु चित्रम्"। पदं यद्विष्णोरुपमं निधाय तेन पासि गुह्यं नाम गोनाम्" इति। ब्रह्मकैवर्ते—

"रौद्रं समभ्यर्च्य हि लिङ्गमादौ
शिलामयं चारु हरिस्तु भक्त्या।
सुदुर्लभं वैष्णवमाद्यमग्र्य-
मवाप्तवानेष परात्परं तत्॥" इति,

तथा पराशरपुराणे—

"रौद्रं लिङ्गं महाविष्णुर्भक्त्या शुद्धशिलामयम्।
चारु चित्तं समभ्यर्च्य लब्धवान् परमं पदम्॥"
"सा च लक्ष्मीस्समाख्याता महाविष्णोऽस्तु दुर्लभा।"
"यश्च लिङ्गं समभ्यर्च्य सम्पूज्यं सर्वचेतनैः।"

इत्यादिना च "सर्वत्रप्रसिद्धोपदेशाधिकरणे" बहुधा प्रपञ्चितम्।

ननु रुद्रस्य तत्प्रणीततत्प्रतिपादकागमपुराणानां तामसत्वमिति यदुक्तं तदसमञ्जसम्। "रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्या" इति श्रुतौ— रुद्रस्य परब्रह्मणः घोरशरीरत्वेन जगत्संहारकत्वं अघोरशरीरत्वेन जगत्कारणत्वं जगत्पोषकत्वं च प्रतिपाद्यते। संहारस्य क्रूरधर्मत्वाद्रुद्रस्य संहारकर्तृत्वात्तामसत्वं विष्णोश्च प्रपञ्चपोषकत्वेन सात्त्विकत्वमिति चेन्न। संहारकर्तृत्वाभावे निरीश्वरत्वप्रसङ्गात् "यतो वा इमानि भूतानि जायन्ते", "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनं" इत्यादिश्रुतिषु

[1]संहारस्य ब्रह्मधर्मत्वेन विवक्षितत्वात् न शङ्कनीयम्।" अस्ति रुद्रस्य विप्रेन्द्रा" इति सूतसंहितायां सूतगीतासु कालरुद्रस्यापि ब्रह्मविष्ण्वादिभ्योऽधिकत्वमुपदिष्टम्। "विष्णोरन्तस्तमस्सत्वं बहिरस्ती"ति, "दश शैवपुराणानि" इत्यारभ्य–

"वैष्णवानि च चत्वारि तामसानि मुनीश्वराः।
क्षत्रियाणां श्रुताधर्मास्तेषु तद्देवता हरिः॥

तमः कृष्णमुदासीनं कूटकृत्यविशारदम्।
निद्रालस्यप्रमादादिपञ्चधा स्यात्तु तामसम्॥

निद्रालस्यप्रमादाद्यास्तद्गुणाः परिकीर्तिताः।
कृष्णो विष्णुस्स्मृतः शेषशायी भक्तविमोहकः॥"

इत्यन्तं शिवरहस्यखण्डसम्भवकाण्डप्रथमाध्याये दर्शितम्। श्रुतिरपि– "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" इति कैवल्ये। "प्रपञ्चोपशमं शान्तं शिवमद्वैतं" इति माण्डूक्येऽपि शिवस्यापि परमसात्विकत्वव्यपदेशात् सर्वाधिकत्वं श्रूयते। अतो न तामसत्वकलंकप्रसङ्गः। एतच्छास्त्रयोनित्वाधिकरणे बहुधा प्रपञ्चितत्वादत्र संक्षिप्तम्।

यागक्रियासु रुद्रहोमानन्तरमप उपस्पृशेदित्यनेन तामसदेवतात्वे ह्यमाङ्गल्यदेवतात्वे चेयमेव मुख्यदृष्टान्तः इति यदुक्तं तदसमञ्जसम्। श्रौतशुण्ठप्रसङ्गात्। "अपः परिषिञ्चति। रुद्रस्यान्तर्हित्यै" इति यजुश्श्रुतौ आपः परिषेचनस्य रुद्रान्तर्धानार्थकत्वेन कण्ठोक्त्या निर्दिष्टत्वात्। स्कान्दे व्यास-जैमिनिसंवादे व्यासवचनम्—

"देवतानाञ्च सर्वेषां प्रभुः साम्बस्त्रिलोचनः।"
तस्मान्महादेव इति प्रोच्यते वेदवेदिभिः॥
अत एवाद्वितीयत्वमेक एवेति वै श्रुतेः॥

---

[1] अत्र चराचरग्रहणात् (ग A)

तद्भृत्यैर्ब्रह्मविष्ण्वाद्यैर्नाहुतिः परिगृह्यते ।
तद्वैलक्षण्यसिध्यर्थं रुद्रस्य परमात्मनः ॥
सर्वयागेषु होमेषु रुद्रान्तर्धानसिद्धये ।
जलोपस्पर्शनं प्रोक्तं नीलकण्ठस्य शूलिनः ॥ इति ;

तथा कूर्मे—

यथाक्रमं समभ्यर्च्य भोजयित्वा प्रभुं भुवि ।
प्रेषयित्वाथ भृत्यानां यथा पूजाविधीयते ॥
तथा रुद्रं महादेवं सर्वयज्ञफलप्रदम् ।
दत्वाहुतिं ततो भक्त्या तदन्तर्धानसिद्धये ॥
जलोपस्पर्शनं प्रोक्तं ततो देवसमर्चनम् ॥ इति ।

किञ्च—शिवस्येतरदेवतासामानाधिकरण्यराहित्यं मन्त्रोपनिषदि श्रूयते—

"न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यारभ्य "एक एव रुद्रो न द्वितीयाय तस्थ" इत्यादिना अद्वितीयत्वादिकं तस्यैवोपदिष्टम् ।

ननु नैरृतराक्षसादिप्रकरणपाठात् शिवस्याप्यपकृष्टत्वमिति चेत्तदयुक्तम् । तदापस्तम्बसूत्रे च "अग्नेर्गवां ब्राह्मणस्य" इत्यादिना अग्निगोब्राह्मणादिस्पर्शस्य पतितामेध्यरजस्वलास्पर्शस्येव स्नानविधिश्रवणात् एकवाक्यपाठाच्च न प्रकरणैक्यदोषः । तथा च स्मृतिरपि—

गामग्निं श्रोत्रियं चैव पतितं च रजस्वलाम् ।
ब्रह्मबन्धुं तथा स्पृष्ट्वा सवासा जलमाविशेत् ॥

इति दर्शनात्सर्वेषां अशुचित्वमहेतुकम् । तस्मात् शिवस्यैव सर्वाधिकत्वं निष्प्रत्यहम् ।

किञ्च—सूतसंहितायाम्- "भेदाभेदस्तथाभेदो भेद एतन्मतत्रयम्" इति, "ध्रुवं कश्चित् ब्रूते सकलमपरस्त्वध्रुवमिति परो ध्रौव्याध्रौव्ये" इति, महिम्नस्तवे

"**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः**" इत्यारभ्य भगवता **व्यासेन** मतत्रयस्यैव भेदाभेदक्रमेण व्यपदेशात् **जैमिन्यादिवैदिकैरपि** पूर्वपक्षस्याप्ययोग्यत्वेन विशिष्टमतस्योपेक्षणीयत्वात्; तथा **भट्टभास्करादिवैदिकैरपि** भेदाभेदमतस्यैव पारमार्थिकत्वेन व्यवस्थापनात् भेदादिवेदसिद्ध-मतत्रयानन्तर्भावात् विशिष्टमतस्य तान्त्रिकत्वं दुर्वारमेव ।

उत–"**एतावन्तो वै पशवो द्विधा द्विपादश्चतुष्पादश्च तस्माद्रुद्रः पशूना-मधिपतिः**", "**एषामीशे पशुपतिः पशूनां चतुष्पादमुत द्विपदामिति ब्रह्मादयः पशवः**" इत्यादौ ब्रह्मादीनां पशुत्वं, "**ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैः सर्वमृत्युप्रहाणिः**", "**ज्ञाननिर्मथनाभ्यासात् पाशं दहति पण्डितः**" इत्यादिना मायायाः पाशत्वं, "**पशूनां पतये नमो नमः**" इत्यादौ परमेश्वरस्य पशुपतित्वस्य स्पष्टमुपदिष्टत्वात् पशुपतिपाशपदार्थत्रयप्रतिपादकशैवशास्त्रस्य वेदमूलकत्वाद्वैदिकत्वम् । चिद-चिदीश्वरपरिभाषाप्रधानरामानुजशास्त्रं वेदमूलकत्वाभावादवैदिकमिति घण्टाघोषः ।

"रुद्रेणान्नममृतं देवा वै भोक्तुकामा वेदाश्च कामयन्ते", "रुद्रभक्तं भुञ्जीथाः" इत्यादिश्रुतिसिद्धत्वात् शिवप्रसादस्य वैदिकपरिग्राह्यत्वं, तन्त्रप्रधानत्वाद्विष्णु-प्रसादस्य तान्त्रिकपरिग्राह्यत्वं निष्प्रत्यूहम् ।

दग्धदेहानां पुनर्दहनमयुक्तं, "**दग्धस्य दहनं नास्ति पक्वस्य पचनं न हि**" इत्यादौ दग्धस्य पुनर्दहननिषेधदर्शनात्, तदङ्गीकारे दीक्षायाः वैफल्यमेव ।

**किञ्च**–दहनाङ्गीकारे स्मार्ताग्निर्वा ? शङ्खधारणदीक्षानुगतवैष्णवाग्निर्वा ?

**नाद्यः**– स्मार्ताग्निना दहनाङ्गीकारे वैष्णवदीक्षितस्य बद्धजीववत्प्रेतत्वं, तदनन्तरमपि पित्रादीनां वसुरुद्रादित्यलोकानुप्रविष्टत्वं, चतुर्थपुरुषस्यापि स्वर्गलोकप्राप्तिसम्भवात् वैष्णव-दीक्षितानां विष्णुसारूप्यविधायकशास्त्राणां वैयर्थ्यापत्तिः । दीक्षायाः निष्फलत्वं, चक्र-धारणसमागतवैष्णवाग्नेर्विनियोगाभावाच्च ।

**न द्वितीयः**– वैष्णवाग्नेः पाञ्चरात्रागमप्रकरणपठितत्वात्तद्दहनस्यापि तान्त्रिकत्वं दुर्वारमेव ।

कूर्मे—

"कापालं पाञ्चरात्रं च यामळं वा ममार्हतम् ।
एवं विधानि चान्यानि मोहनार्थानि तानि तु ॥" इति,

तथा ब्रह्माण्डे—

"कापालं लाकुळं वामं पाञ्चरात्रं तथैव च ।
मुमुक्षुभिर्न सेव्यानि वेदमार्गविरोधतः ॥"

पाराशरपुराणे—

"धर्माधर्मादिविज्ञाने ह्यागमाः पुरुषोदिताः ।
पाञ्चरात्रादयः सर्वे न प्रमाणमिति स्थितिः ॥"

स्कान्दपुराणे—

"पाञ्चरात्रादिमार्गाणां वेदमूलत्वमस्ति चेत् ।
प्रमाणं तन्त्रविज्ञेयं न स्वतन्त्राः कदाचन ॥" इति,

श्रुतिपथगळितानां तन्त्रमार्गप्रवेशः" इति च सूतसंहितायां बहुशो दर्शनात् तन्मतमुपेक्ष्यम् ।

ननु पद्मपुराणोत्तरभागे "इदं महोपनिषदि प्रोक्तं चक्रादिधारणं" इति वाक्ये शङ्खचक्रादिधारणस्य बहुश्रुतिप्रतिपादितत्वश्रवणात् पाञ्चरात्रागमाद्यनुसारिपुराणवाक्यानां मानभावात् । तथा पाराशरपुराणे—

"यत्तु तन्त्रानुरोधेन कथितं तत्परित्यजेत् ।
पुराणे धर्मशास्त्रे वा यत्नतो वैदिको द्विजः ॥"

इत्युक्त्वा तन्त्रानुरोधित्वं कथं ज्ञातव्यमित्याशङ्क्याह—

"पुराणे धर्मशास्त्रे वा योऽर्थश्श्रुत्या विरुध्यते ।
तन्त्रार्थस्स तु विज्ञेयः सर्वदा वैदिकोत्तमैः ॥"

"स्मृतयश्च पुराणानि भारतप्रमुखानि च।
वेदानुसरणत्वेन प्रामाण्यमिति निश्चितम् ॥

इति दर्शनाच्च चक्रादिलाञ्छनस्य प्रत्यक्षविधायकश्रुत्यभावात् "**चरणं पवित्रं**" इति श्रुतौ अन्यथा विनियोगदर्शनात्, **गन्धद्वारादि**मन्त्राणामन्यथा विनियोगदर्शनेऽपि प्रकरणानुकूलाङ्गीकारात् चरणपदस्य चक्रपरत्वे मानाभावाच्च। "**पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम्**" इत्यादि नैघण्टुकवाक्यानाममूलत्वान्मानाभावः "**तापः पुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चमः**" इत्यादि तान्त्रिकपञ्चसंस्कारविधायकपाञ्चरात्रागमवाक्यानां वेदमूलकत्वाभावाद्वैष्णवमतं तान्त्रिकमिति निष्प्रत्यूहम्। तदुक्तं **शैवपुराणे**—

रुद्रः स्विष्टकृदग्निरित्यनुदिनं मुचन्ति होमक्रियां
नेच्छन्ते पशुबन्धनस्य च विधिं रुद्रः पशूनां पतिः।
श्रीरुद्रप्रतिपादिकां भगवतीं तां भर्गशब्दान्वितां
गायत्रीमपि सन्त्यजन्ति विबुधाः विप्राः कथं वैष्णवाः ॥

इति व्यपदेशात्। अतो जीवोत्पत्तिविधायक**पाञ्चरात्रागमविशिष्टाद्वैतवैष्णव**मतं वैदिकैरनङ्गीकरणीयम्।

तन्मतस्य वेदबाह्यत्वे हेत्वन्तरमाह—

## तच्च कर्तुः करणम् ॥ ४३ ॥

"**सङ्कर्षणात्प्रद्युम्नसंज्ञि मनोऽजायत**" इति कर्तुर्जीवात् करणस्य मनसो जन्यत्वं न सम्भवति, कुतः? अज्ञस्य जीवस्यान्तःकरणनिर्माणसामर्थ्याभावात् "**एतस्माज्जायते प्राणो मनः**" इति परब्रह्मण एव मानसोत्पत्तिः श्रूयते। तस्मात् श्रुतिविरुद्धार्थप्रतिपादनादस्यापि तन्त्रस्य प्रामाण्यं प्रतिषिध्यत इति व्याचक्षते उत क्षेत्रज्ञस्य अन्तःकरणवैशिष्ट्येन वा मानसजनकत्वमवैशिष्ट्येन?

**नाद्यः**–तन्मते तदन्तःकरणस्यापि जीवजन्यत्वाङ्गीकारात्, अन्तःकरणस्य जीवस्य च शरीरेन्द्रियाद्यभावेन स्वसामर्थ्याभावाच्च जीवान्तःकरणप्रवृत्तौ शरीराद्यङ्गीकारे बहुत्वादनवस्थादोषप्रसङ्गः।

**न द्वितीयः**–स्वसामर्थ्येन मानसजन्यत्वाङ्गीकारे शरीरेन्द्रियादिजगज्जन्मादिकारणत्वं किं न स्यात्? तस्य जगज्जन्मादिहेतुत्वे जगदीश्वरस्य न किञ्चित्प्रयोजनम्। जीवस्य "**अहमज्ञः**" इत्याद्यविद्यानुभवदर्शनात्, "**ज्ञाऽज्ञौ द्वावजौ**" इति श्रुतिविरोधप्रसङ्गात्, तस्मिन् सत्यसङ्कल्पादिधर्माणां अदृष्टत्वाच्च। तस्मान्मानसस्य जीवजन्यत्वव्यवस्थापकपाञ्चरात्रमतमयुक्तम्।

**ननु** सङ्कर्षणादयस्त्रयो न जीवरूपाः किन्तु वासुदेववद्विज्ञानस्वरूपा ईश्वरा एवेत्याशङ्कायामाह–

## विज्ञानादिभावे वा तदप्रतिषेधः॥ ४४॥

"वाशब्दात्पूर्वपक्षो विपरिवर्तते। विज्ञानं च आदिश्चेति परं ब्रह्म विज्ञानादि, सङ्कर्षणप्रद्युम्नानिरुद्धानामपि परब्रह्मभावे सति" तदप्रतिषेधः, तयोः मतविरोधश्रुतिविरोधयोरप्रतिषेधः, विरोधो न प्रतिषिध्यत इत्यर्थः। यत्र कुत्रापि श्रुतिषु ब्रह्मणो घटपटादिवज्जीवोत्पत्तेस्तज्जीवे मनः कारणत्वस्य चादर्शनाद्वेदबाह्यपाञ्चरात्रागमनिषेधोऽप्यबाधित इति वेदितव्यम्। पाञ्चरात्रागमेऽपि विष्णुसारूप्यापन्नानां मुक्तात्मनां मनःकारणत्वमभिधीयते। तस्मान्नारायणभावापन्नत्वेऽपि **सङ्कर्षणादि**त्रयाणां परमात्मवन्मनःकारणत्वं न व्यपदिश्यते। तदङ्गीकारे ह्यनन्तेश्वरप्रसङ्गादनवस्था च। वासुदेवाभिक्यबोधकवाक्यानामप्रामाण्यं प्रसज्येत। **सांख्य-योग-पाशुपत-सौर-गाणपत्यादि**मतेष्वपि तत्सारूप्यसिद्धानां तद्वत्कारणत्वाभावात् संकर्षणादित्रयाणामीश्वरत्वाङ्गीकारे वासुदेवस्य न किञ्चित्प्रयोजनं एकेनैव कार्यसिद्धेः।

"**भगवानेक एव वासुदेवः परमार्थतत्त्वम्**" इति प्रतिपादकपाञ्चरात्रागमसिद्धान्तहानिः, अनीश्वराणां **सङ्कर्षणादीनां वासुदेव**तुल्यत्वव्यपदेशो वासुदेवादुत्पत्तिरभ्युपगम्यते। तस्मात्सङ्कर्षणादिजन्यत्वविधायकपाञ्चरात्रागमविरोधो दुर्निवारः। आकाशप्राणादिवत्सङ्कर्षणादीनां ब्रह्मत्वविधायकश्रुत्यदर्शनात् तत्प्रक्रियायाः वेदबाह्यत्वमुचितम्। **मद्भक्तो**

**हि ममाधिकः"** इति तान्त्रिकन्यायानुसरणेन सङ्कर्षणादीनां तदधिकत्वव्यवस्थापने तज्जन्यत्वत-दुपासकत्वविरोधः। तदपकृष्टे मनःकारणत्वं नोपपद्यते। तस्मात्सर्वथा श्रुति-युक्त्यनुभवविरोधात्पाञ्चरात्रमतं विवेकिभिर्नादरणीयम्।

**ननु–**

**"सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।**
**ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै॥**
**एतानि मानभूतानि नोपहन्यानि युक्तिभिः।"**

इति **भारत-सिद्धान्तागम-पाराशरस्मृतिषु** सांख्यादिमतानां विधेयत्वम्। पाशुपतस्य तत्तुल्यत्वोपदेशात्कथं शैवं तस्मादधिकमिति चेन्न–वैष्णवशब्दस्य दशविधवैष्णवपरत्वेऽपि यथा प्रकरणानुकूलार्थो विवक्षितः तथा पाशुपतशब्दस्यापि दशविधवैदिकतान्त्रिकशैवपरत्वेऽपि प्रकरणानुकूलार्थो निर्दिश्यते।

किञ्च–**सिद्धान्तशिखामणौ भारते** च शैवपाशुपतमतयोर्वैलक्षण्यं शैवमतस्य पाञ्च-रात्रपाशुपतादिभ्यस्समुत्कृष्टत्वं च सम्यगुपदिष्टम्।

**"आगमा बहुधा प्रोक्ताश्शिवेन परमात्मना।**
**शैवं पाशुपतं सोमं लाकुलं चेति भेदतः॥ इति।**

घटपटयोरिव शैव-पाशुपतयोः परस्परवैलक्षण्यं विधीयते। किञ्च–

**वेदैकदेशवर्तिभ्यस्सांख्यादिभ्यो महामुने।**
**सर्ववेदानुसारित्वात् शैवतन्त्रं विशिष्यते॥**

इति तत्रैव **सांख्ययोगपाञ्चरात्रपाशुपतादीनां** वेदैकदेशवर्तित्वेनापकृष्टत्वं, **शैवमतस्य** सर्व वेदमयत्वेन समुत्कृष्टत्वं च व्याचक्षते। **महिम्नस्तवेऽपि**

**"त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति।**
**प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च॥**

रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां ।
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥

इति परिच्छिन्नसांख्य-योग-पाञ्चरात्र-पाशुपतादिमतानां ऋजुकुटिलमार्गेण सर्वेषां समुद्र-नदी-न्यायवच्छिवेऽप्येकत्वोपदेशात् शैवमतस्य सर्वमताधिक्यमिति घण्टाघोषः ।

किञ्च—वेदतुल्यभारते आनुशासनिकपर्वणि

"किमाहुर्भरतश्रेष्ठ पात्रं विप्रास्सनातनम् ।
लिङ्गिनं ब्राह्मणं चापि ब्राह्मणं चाप्यलिङ्गिनम् ॥

इति युधिष्ठिरप्रश्ने—

स्ववृत्तिमपि विज्ञाय लिङ्गिन चेतराय च ।
देयमाहुर्महाराज उभावेतौ तपस्विनौ ॥

इति भीष्मप्रतिवचनेन लिङ्गधारिब्राह्मणानां मुख्यदानपात्रतायाः वा पक्षे तद्भिन्न ब्राह्मणानां दानपात्रत्वस्य च निर्देशात् लिङ्गधारणावच्छिन्नशैवमतस्य सर्वाधिकत्व-मर्थात्सिद्धम् । अत एव सर्ववेदमयशैवमतविरुद्धत्वेन सांख्यादयोऽत्र भगवता पाराशर्येण निरस्ताः । तथापि सांख्ययोगपाञ्चरात्राणां कपिल-हिरण्यगर्भ-नारायणकर्तृकत्वेन पौरुषेयत्वं, परब्रह्माभिधानपशुपतिप्रणीतत्वेन पाशुपतागमानामपौरुषेयत्वं वेदवत्प्रामाण्यं च । तत्रैकदेशागमानां निमित्तमात्रद्योतकत्वेन वेदविरोध इति चेत् वेदैकदेशे—"सोऽकामयत", "स ईक्षां चक्रे" इत्यादौ निमित्तकारणमात्रदर्शनात् तेषामप्रामाण्यं प्रसज्येत ।

उत—"किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने" । इत्यादिना किं सांख्य-योग-पाशुपत-वेद-पाञ्चरात्राण्येकतत्त्वपराणि ? पृथक् तत्त्वप्रतिपादनपराणि वा ? यद्येकतत्त्व-प्रतिपादकानि ? किं तदेकतत्त्वम् ? यदा तु पृथक् तत्त्वप्रतिपादकानि तदेषां परस्पर-विरुद्धार्थप्रतिपादनपरत्वात् वस्तुनि विकल्पासंभवाच्चैकमेव प्रमाणमङ्गीकरणीयम् । पौरुषेयाणां हि परस्परविरुद्धवस्तुवादित्वेन आपौरुषेयत्वेन निरस्तप्रमादादिनिखिलदोष-गन्ध-वेद-प्रमाण-विरुद्धाभिधायित्वाच्च यथावस्थितवस्तुनि प्रामाण्यं दुर्लभम् । वेदवेद्यश्च परब्रह्मभूतश्शिव

एव। "सर्वं खल्विदं ब्रह्म", "सर्वो वै रुद्रः" इत्यादिना वेदान्तवेद्यःसर्वात्मकः परब्रह्माभिधानशिव एक एव वस्त्विति निश्चीयते।

**किञ्च**—शिवोक्तनिगमागमेषु महादेवाभिधानस्य परब्रह्मणः मूर्ताऽमूर्तस्य षड्गुणैश्वर्यपूर्णस्य हिरण्मयसूक्ष्मव्यूहविभवभेदभिन्नत्वमुपदिष्टम्। **वीरागमे**—

'ब्राह्मणानां हि तद्ब्रह्म महादेवाख्ययाजिनाम्।
शिवज्ञानकरं शास्त्रं सर्वोपनिषदं महत्॥

यथाधिकारं भक्तैस्तु ज्ञानपूर्वेण कर्मणा।
अभ्यर्चितं महादेवं संसारामयभेषजम्॥

प्राप्यते हि परं सूक्ष्मं विभवव्यूहकारणम्।
अर्धनारीश्वरत्वादि लीलाविभवसञ्ज्ञिकाः॥

सद्योजातादयः पञ्च व्यूहाः प्रोक्तास्सनातनाः।
तेषामेव विभक्तादि स्थलपञ्चकमीरितम्॥

सकलं निष्कलं सूक्ष्मं हिरण्मयमनामयम्।
व्योमवत्सर्वसम्पूर्णं सर्वैश्वर्यसमन्वितम्॥

स्वतन्त्रं जगदाधारं शिवरुद्रादिसंज्ञिकम्।
नित्यसंवेतचिच्छक्तियुक्तं साम्बं महेश्वरम्॥

इत्यादिना "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं" इत्यादि श्रुतिसिद्धार्धनारीश्वरत्वादिलीलामङ्गलविग्रहा विभवाभिधानाः सद्योजातादिपञ्चब्रह्ममन्त्रेषु सद्योजातादिव्यूहपञ्चकतयोपदिष्टाः। "नमो हिरण्यबाहवे हिरण्यवर्णाय" इति मन्त्रेण षड्गुणैश्वर्यसम्पन्नस्वभावज्योतिर्मयविग्रहं महादेवाख्यं परब्रह्म व्याचक्ष्यते।

"सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः।
सर्वव्यापी च भगवांस्तस्मात्सर्वगतः शिवः॥

इत्यत्र परमशिवस्यैव सर्वमयत्वं सर्वान्तर्यामित्वं सर्वव्यापकत्वं चाभ्युपगम्यते। तस्माद्वेदागमयोर्न किञ्चिद्भेदः, अतो वेदविरुद्धजीवोत्पत्यादिविधायक-पाञ्चरात्रमतं निःश्रेयसकांक्षिभिर्न श्रोतव्यम्।

पुनर्हेत्वन्तरमाह—

## विप्रतिषेधाच्च ॥ ४५ ॥

विशेषेण विरोधाच्च। साङ्ख्यादिमतानां प्रधानजगत्कारणत्वादिना किञ्चिद्दृष्टान्तविरोधात् पाञ्चरात्रमतस्य तु "ज्ञाऽज्ञौ द्वावजावीशानीशौ"—

अचेतना परार्था च नित्या सततविक्रिया।
त्रिगुणा कर्मिणां क्षेत्रं प्रकृतेः रूपमुच्यते॥

व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च।
सह्यनादिरनन्तश्च परमार्थेन निश्चितः॥

इति वेदागमेषु च सर्वत्र जीवस्य नित्यत्वप्रतिपादनात् जीवोत्पत्यादिविधायकपाञ्चरात्रमतं सर्ववेदान्तविरुद्धत्वात् भ्रान्तिमूलमतमिति वेदितव्यम्।

"वासुदेवः परं तत्त्वं सर्वकारणमव्ययम्।
सङ्कर्षणाख्य जीवस्तु तत्सकाशात्प्रजायते॥

संकर्षणाच्च प्रद्युम्न संज्ञं संकल्परूपकम्।
मानसं जायते तस्मात् अनिरुद्धाभिधानकम्॥
हंकारं जायतेचेति व्यूहत्रयमुदाहृतम्।

इति पाञ्चरात्रागमे तत्प्रक्रिया श्रूयते। तस्माच्छास्त्रमविचारितरमणीयम्। अजातस्य जीवस्य घटादिवज्जन्यत्वं किञ्चिज्ज्ञस्य जीवस्य मनःकारणत्वं, जडीभूतमनसोऽहंकर्तुत्वमिति पाञ्चरात्रप्रक्रियायाः "न जायते म्रियते वा" इत्यादि श्रुतिषु विरोधप्रसङ्गो दुर्निवारः।

ननु पाञ्चरात्रे पुष्करसंहितायाम्–

"कर्तव्यत्वेन वै यत्र चातुरात्म्यमुपासते ।
क्रमागतैस्स्वसंज्ञाभिः ब्राह्मणैरागमश्च तत् ॥

यस्मात् साम्यं परं ब्रह्म वासुदेवाख्यमद्वयम् ।
अस्मादवाप्यते शास्त्रात् ज्ञानपूर्वेण कर्मणा ॥"

इत्यादिना सङ्कर्षणादीनामपि परब्रह्मस्वेच्छाविग्रहरूपत्वव्यपदेशात् । शैवागमवदत्रापि विभवार्चनाद्व्यूहं प्राप्य–"व्यूहात्परं वासुदेवाख्यं प्राप्यत" इति व्याचक्षते । विभवो रामकृष्णादिप्रादुर्भावगणः; वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धसंज्ञिको व्यूहः । सूक्ष्मं षड्गुणैश्वर्य-विग्रहं वासुदेवाख्यं परब्रह्मेति निरूपितम् । तस्मात् जीवमनोऽहंकारतत्त्वानामधिष्ठातारः तेषां जीवादिशब्दैरभिधानमविरुद्धम् । यथाकाशप्राणादिशब्दैर्ब्रह्मण अभिधानं तद्वदिति चेन्न–शैवमतवद्वासुदेवादिव्यूहानां प्रत्यक्षश्रुतिमूलकत्वाभावात् । संकर्षणादीनामीश्वरत्वे तज्जन्यत्वविधायकस्वशास्त्राविरोधप्रसङ्गः । स्वशास्त्रानुगुण्येन तेषामीश्वरत्वाङ्गीकारपूर्वककारण-त्वाङ्गीकारे वेदबाह्यप्रसंगेनानवस्था च दृश्यते । "अजायमानो बहुधा विजायते" इति श्रुतौ परमेश्वरस्य स्वसंकल्पत्वेन स्वेच्छाकृतविग्रहत्वश्रवणात् वासुदेवात्संकर्षणादिजन्यत्वे न विरोधः इति चेत्तदसत् । "सोऽकामयत बहु स्यां" इत्यादिवच्छ्रुतेरपि ब्रह्मणो जगदुभयकारणत्वपरत्वात्, तत्र संकर्षणादिशब्दादर्शनाच्च, तदंगीकारे पूर्वापरवाक्यसमन्वया-भावाच्च आकाशप्राणादिवच्छ्रुतौ संकर्षणादिशब्दानां ब्रह्मपरत्वं न व्यपदिश्यते । एवं तच्छास्त्रप्रामाण्यं गगनभित्तिचित्रायमानवदवभासते ।

त्रिपुरासुरमोहार्थं केशवेन शिवेन च ।
बुद्धं जैनं च चार्वाकं पाञ्चरात्रं च मुद्गलम् ॥
कृतं तस्मादसच्छास्त्रं न श्राव्यं मोक्षकांक्षिभिः ।

इति स्कान्दे–

पाञ्चरात्रे च बौद्धे च तथा कौलमुखेषु च ।
श्रद्धया दीक्षिता ये च ते लोके ब्राह्मणाधमाः ॥

शैवे वायुसंहितायाम्–

बुद्धे जिने पाञ्चरात्रे तथा लोकायतेऽपि च ।
यो दीक्षितस्स सद्योभूत्पतितो नात्र संशयः ॥

इत्यादिना बुद्धपाञ्चरात्रशास्त्राणां राक्षसमोहनार्थं कल्पनोपदेशात् ।

गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः ।
य इच्छेत् सिद्धिमास्थातुं देवताञ्चायतेजसे ॥

इत्यादि पाञ्चरात्रप्रबन्धं मुमुक्षुभिर्नोपादेयम् ।

अतस्सर्ववेदान्तागमादिपूर्वापरमध्यपरामर्शदृष्ट्या **द्वैताद्वैतमतमेव** मुख्यवेदान्तसिद्धान्त इत्यवगम्यते । **जन्मादिसूत्रे** जगदुभयकारणत्वंव्यवस्थापनात् निमित्तकारणत्वेन जगदीश्वरयोर्द्वैतत्वं, उपादानत्वव्यपदेशेनाद्वैतत्वं च दर्शितम् ।

किञ्च–"**मुक्तोपसृप्यव्यपदेशात्**" इत्यत्र मुख्यजीवपरब्रह्मणोः प्राप्यप्रापकत्वनिर्देशात् जीवब्रह्मणोर्भेदाभेदवत्वमर्थात् सिद्धम् । "**ब्रह्मविदाप्नोति परम्**", "**तत्त्वमसि**", "**अहं ब्रह्मास्मि**", "**तत् त्वमेव त्वमेव तत्**", "**ब्रह्म वेद ब्रह्मैव भवति**", "**यथा नद्यः स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्**" इत्यादि श्रुतिषु जीवब्रह्मणोर्भेदाभेदवत्वनिर्देशात् तदेवांगीकरणीयम् ।

इति श्रीमद्यतिव्रजपरिबृढ श्रीपतिपण्डितभगवत्पादाचार्यस्वामिकृत भेदाऽभेदात्मक विशेषाद्वैतसिद्धान्तव्यवस्थापकवैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

**श्रीकरभाष्ये**

**विरोधपरिहाराभिधानस्य द्वितीयाध्यायस्य अष्टाधिकरणावच्छिन्नरचनानुपपत्तेश्च नानुमानमित्यादि पञ्चचत्वारिंशत्सूत्रात्मक-**

## द्वितीयःपादस्समाप्तः

## अथ श्रीकरभाष्ये द्वितीयाध्यायस्य तृतीयः पादः

### वियदधिकरणम् ॥ १ ॥

पूर्वपादे श्रुतिविरुद्धानि सांख्य-योग-तार्किकाद्वैतादिमतानि अधिष्ठानब्रह्मणो जगदुभयहेतुत्वानङ्गीकारान्निरस्तानि । श्रुतीनामन्योन्यविरुद्धत्वद्योतनात् जगतो ब्रह्मकारणकत्वमसङ्गतमित्याशङ्काकायां तन्निराकारणार्थं तृतीयपाद आरभ्यते ।

## ॥ ८१ ॥ न वियदश्रुतेः ॥ १ ॥

पूर्वोक्तपादद्वये श्रुत्याभासमतानां युक्तिमात्रप्रधानवादिमतानाञ्च तिरस्कृतत्वेन ब्रह्मणि सर्वेषां वेदान्तानामविरुद्धत्वं प्रदर्शितम् । एतत्पादद्वये श्रुतिपरस्परविरोधपरिहारात् [1]अध्यायसङ्गतिः । इदानीं परस्परविक्षेपादिदोषगन्धाभावख्यापनाय ब्रह्मकार्यत्वेनभिमतचेतनाचेतनप्रपञ्चस्य कार्यत्वप्रकारो विशोध्यते । "**सदेव सौम्येदमग्र आसीत्**", "**एकमेवाद्वितीयं ब्रह्म**", "**तदैक्षत बहुस्यां प्रजायेय**", "**तत्तेजोऽसृजत**" इति सृष्टिप्रकरणे तेजःप्रभृतीनामेवोत्पत्तिराम्नायते । "**तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः**" "**एतस्माज्जायते प्राणो**" इत्यादिष्वाकाशवाय्वोः जन्यत्वश्रवणादत्र वियदुत्पद्यते वा नवेति संशीय्यते ।

"**खं ब्रह्म**", "**आकाश आत्मा**" इत्यादिश्रुतिष्वाकाशस्यैव ब्रह्मत्वव्यवस्थापनात् "**आकाशोह वै नामरूपयोर्निर्वहिता, ते यदन्तरा स आत्मा**" इत्यादिषु तस्यैव सर्वान्तर्यामित्वस्यात्मत्वोपदेशस्य च निर्देशात् **छान्दोग्ये—** तेजःप्रभृतीनामेव

[1] अध्यासङ्गति (ग A).

सृष्ट्युपदेशात्, निरवयवत्व-पूर्णत्वाच्छेद्यत्वादाह्यत्वाक्लेद्यत्वाशोष्यत्वादीनां दर्शनाच्च वियदुत्पत्तिर्न सम्भवति। तदुत्पत्तिविधायकतैत्तिरीयादिवाक्यानां भ्रममात्रत्वमेवेति प्राप्ते प्रचक्ष्महे।

**न वियदश्रुतेः– वियत्–** आकाशं निरवयवत्वात् ब्रह्मवदजन्यमिति चेन्न। कुतः? **अश्रुतेः।** यत्र कुत्रापि श्रुतिषु तस्याजन्यत्वाश्रवणात् आकाशस्य अजन्यत्वं परब्रह्मत्वं च सर्वथा न विधीयते। **"खं ब्रह्म", "आकाश आत्मा"**, इत्यादि श्रुतीनां **"अन्नं ब्रह्म", "प्राणो ब्रह्म, मनो ब्रह्म, विज्ञानं ब्रह्म, आनन्दं ब्रह्म, ओं-मित्येकाक्षरं ब्रह्म, असावादित्यो ब्रह्म"** इत्यादिवदौपचारिकत्वमेव। **"खं वायु-र्ज्योतिरापः पृथिवी विश्वस्य धारिणी", "यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत्"** इत्यादिश्रुतिषु आकाशव्यतिरिक्तत्वस्य ब्रह्मणश्शिवस्योपदिष्टत्वात् नान्यार्थो युक्तः।

**किञ्च– "आकाशो ह वै नामरूपयोर्निर्वहिता"** इत्यादावाकाशशब्दस्य आसमन्तात्काशते प्रकाशत इति व्युत्पत्या ब्रह्मपरत्वम्। स्थानप्रकरण-लिङ्गात्समन्वय इति न्यायेन ब्रह्मधर्माणां द्योतनात् तत्परत्वमेवेति निश्चीयते। **"श्रुतिस्सत्यार्थवादिनी"** इति स्मृतिदर्शनात् **"अन्नं ब्रह्म"** इत्यादीनां कथमौपचारिकत्वमिति चेत् **"यो रुद्रोऽग्नौ यो अप्सु य ओषधीषु"** इत्यादौ शिवस्य ब्रह्मणः अष्टमूर्त्यात्मकत्वेन सर्वान्तर्यामित्वेन च सर्वशब्दवाच्यत्वं व्याचक्षते। **"स एव विष्णुस्स प्राणस्स कालोऽग्निस्स चन्द्रमाः" "स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्", "सर्वो वै रुद्रः"** इत्यादिषु सर्वस्य ब्रह्मकार्यत्वेन **"ब्रह्मात्मकत्वं", "तदनन्यत्वमारम्भणशब्दादिभ्यः"** इत्यत्र स्पष्टमुपदिष्टम्।

**किञ्च–** पूर्वाध्याये **"आकाशस्तल्लिङ्गात्"** इत्यत्र ब्रह्मलिङ्गवत्वादाकाशादिशब्दानां ब्रह्मपरत्वमिति पूर्वमेवोक्तम्। **"यतो वा इमानि भूतानि जायन्ते", "यथा सुदीप्तात्पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते तत्र चैवापि यन्ति"** इत्यादौ जीवानां ब्रह्मजन्यत्वश्रवणेऽपि तेषां निरवयवत्वेन यथोत्पत्तेरौपचारिकत्वं निर्दिष्टं तद्वत् **"आत्मन आकाशः सम्भूतः"** इत्यत्राकाशोत्पत्तिरौपचारिक एवेत्याशङ्कायामाह–

## ॥ ४७ ॥ अस्ति तु ॥ २ ॥

तु शब्दो निश्चयार्थः। अस्तित्वाकाशोत्पत्तिः। "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इत्यादिश्रुतौ घटादिवदाकाशोत्पत्तिः श्रूयते। जीववत्तदतीन्द्रियत्वेऽपि जडत्वात्तदयुक्तम् 'न जायते म्रियते वा विपश्चित्", "ज्ञाज्ञौ द्वावजावीशानीशौ" इत्यादौ जीवत् श्रुत्यन्तरप्रमाणाभावात् आकाशाजन्यत्वप्रतिपादकत्वादर्शनात् निरवयवत्वेऽपि मनःप्राणादिवत् तज्जन्यत्वमनिवारितम्।

"वायोरन्तरिक्षं चेत्तदमृतं" इति श्रुतौ पवनाकाशयोरमृतत्वनिर्देशात् आकाशोत्पत्तिविधायकश्रुतीनां गौणत्वमेवेत्याशंक्य निराकरोति–

## ॥ ४८ ॥ गौण्यसम्भवाच्छब्दाच्च ॥ ३ ॥

छान्दोग्ये "तत्तेजोऽसृजत" इत्यत्र तेजःप्रभृतीनामेव सृष्ट्युपदेशात्, "आत्मन आकाशस्सम्भूतः" इत्यत्राकाशोत्पत्तिप्रदर्शकानां श्रुतीनां मुख्यत्वासम्भवात् गौणत्वं कल्पयितुं युक्तमेवेति चेन्न। कुतः? असंभवाच्छब्दाच्च। "आत्मन आकाशः सम्भूतः" इति श्रुतेर्गौणत्वासम्भवात्, शब्दाच्च। "यदा तमस्तन्न दिवा न रात्रिः–"शिव एव केवलः", "एक एव रुद्रो न द्वितीयाय तस्थे", "एकमेवाद्वितीयम्", "सदेव सौम्येदमग्र आसीत्" इत्यादिश्रुतिशतदर्शनात् घटादिवदाकाशोत्पत्तिर्मुख्यैवेति सिद्धम्। "क्षरं प्रधानं अमृताक्षरं हरः क्षरात्मानावीशते देव एकः" इत्यादावमृतशब्दस्य ब्रह्मलिङ्गत्वव्यवस्थापनात्, "वायोरन्तरिक्षं चेत्तदमृतम्" इति श्रुतिनिष्ठामृतशब्दस्यापि ब्रह्मलिङ्गत्वेन ब्रह्मपरत्वं "आकाशस्तल्लिङ्गात्, अत एव प्राणः" इत्यत्र पूर्वाध्याये ब्रह्मलिङ्गविधायकवाक्यानां ब्रह्मपरत्वमिति बहुधा प्रपञ्चितत्वान्न सन्देहकलङ्कः। नो चेत् "सदेव सौम्येदमग्र आसीत्" इत्यादिश्रुतिविरोधो दुर्निवारः।

"खं ब्रह्म" इत्यादावाकाशस्य ब्रह्मत्वव्यपदेशात्, "आत्मन आकाशस्संभूतः" इति श्रुतिनिष्ठाकाशोत्पत्तेः कथं मुख्यत्वमित्याशंक्य तत्राह–

## ॥ ४९ ॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥

"खं ब्रह्म" इत्यादावाकाशस्य ब्रह्मत्वप्रतिपादनेऽपि "आत्मन आकाशस्सम्भूतः" इत्यत्र आकाशोत्पत्तिर्मुख्यैव। कुतः? ब्रह्मशब्दवत्। "असावादित्यो ब्रह्म", "अन्नं ब्रह्म" इत्यादौ कार्यभूतप्रभाकरादौ यथा ब्रह्मशब्दस्य गौणत्वं, कारणभूते ब्रह्मणि यथा मुख्यत्वं तद्वत् कार्यभूतस्य चैकस्याकाशस्यापि "खं ब्रह्म" इत्यादिब्रह्मशब्दवाच्यत्वं गौणमेव निरवयवत्वेनाजन्यत्वाङ्गीकारे परमाण्वादीनामपि नित्यत्वं स्यात्। तस्मादाकाशोत्पत्तिर्न निवार्यते।

वियज्जन्यत्वे हेत्वन्तरमाह—

## ॥ ५० ॥ प्रतिज्ञाहानिर्व्यतिरेकाच्छब्देभ्यः ॥ ५ ॥

छान्दोग्ये "तत्तेजोऽसृजत" इत्यत्र तेजःप्रभृतीनामेव सृष्ट्युपदेशात् तदितरश्रुत्यापि वियदुत्पत्यङ्गीकारे तद्विरोध इति चेत्— आकाशस्य ब्रह्मकार्यत्वाभावात् व्यतिरेकात् ब्रह्मविलक्षणत्वात् प्रतिज्ञाहानिः। येनाश्रुतं श्रुतं भवति" इत्यादिना ब्रह्मज्ञानेन सर्वविज्ञानप्रतिज्ञा विरोधस्सम्भवति। तस्मात् ब्रह्मजन्यत्वमङ्गीकर्तव्यम्।

किञ्च—"ऐतदात्म्यमिदं सर्वं", "सर्वो वै रुद्रः", "सर्वं खल्विदं ब्रह्म", "ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः" इत्यादिश्रुतिशतेभ्यः ब्रह्मणः सर्वात्मकत्वोपदेशात् वियतः तद्भिन्नत्वं वक्तुं शक्यम्।

नन्वेवं उत्पत्तिमत्वे सिद्धे पूर्वोक्तविरोधपरिहारः कथं सिध्यतीति चेदुच्यते—छान्दोग्ये हि तेजसः उत्पत्तिमात्रं श्रूयते नाद्यत्वमपि। तैत्तिरीयके तु "आकाशाद्वायुः, वायोरग्निः" इति तेजसस्तृतीयत्वं श्रूयते। तथा च तयोर्वाक्ययोः एकवाक्यत्वाभावात् तैत्तिरीयश्रुत्यनुसारेणाकाशं वायुं च सृष्ट्वा "तद्ब्रह्म तेजोऽसृजत" इति छान्दोग्यश्रुतिः परिणम्यत इति व्यवह्रियते। अतो नानयोर्वाक्ययोः विरोधः।

यदुक्तं **तैत्तिरीयक**वियदुत्पत्तिश्रुतिर्गौणी सामग्र्यभावेन वा विभुत्वेन नित्यत्वानुमानाच्चेति– तन्न, श्रौतस्य ब्रह्मण एव वियत्सामग्रीत्वादित्यभिप्रेत्य [1]प्रत्यनुमानेनैव दूषयति–

## ॥ ५१ ॥ यावद्विकारन्तु विभागो लोकवत् ॥ ६ ॥

**तु**शब्दश्चाकाशोत्पत्त्यसम्भवशङ्काव्यावृत्त्यर्थः। यतो यावद्विकारजातं विभागे दृश्यते, तद्वद्विकारे ब्रह्मणि विभागादर्शनात्। "**लोकवत्** यथा लोके "**एते सर्वे देवदत्तपुत्राः**" इत्यभिधाय तेषु केषांचिदुत्पत्तिवचनेन सर्वेषामुत्पत्तिरुक्ता स्यात् तद्वत्। एवं च सति "**वायुश्चान्तरिक्षं चैतदमृतं**" इति सुराणामिव चिरकालस्थायित्वाभिप्रायमेव" निर्दिष्टम्।

किञ्चाकाशदिक्कालमनःपरमाणवः पराधीनसत्ताकाः स्वसमानसत्ताकविभागवत्त्वात् घटशरावादिवत् इत्याकाशोत्पत्तिवादिनं प्रति विभुत्वहेतोः परोक्तस्यासिद्धिरपि बोध्या।

ननु **छान्दोग्ये** वायोरुत्पत्तिर्न श्रूयते; **तैत्तिरीयके** तु श्रूयते– तथा च पूर्ववदनयोर्वाक्ययोर्विरोधपरिहारार्थं वायूत्पत्तिर्गौणीति वाच्यम्।

---

[1] पर्यायानुमानेनैव (ग A)

मातरिश्वधिकरणम् ॥ २ ॥

किञ्च "सैषाऽनस्तमिता देवता यद्वायुः" इति वायोर्लीयमानत्वप्रतिषेधाच्च नित्यत्वमित्याशङ्कामतिदेशेन निराकरोति–

## ॥ ५२ ॥ एतेन मातरिश्वा व्याख्यातः ॥ ७ ॥

**एतेन** वियदुत्पत्तिव्याख्यानेन वायुरपि वियदवच्छिन्नब्रह्मजन्यत्वेन **व्याख्यात** इत्यर्थः। वायोर्नित्यत्वेऽपि एकविज्ञानेन प्रतिज्ञाहान्यादेस्समानत्वादित्यर्थः। वायोर्लय-प्रतिषेधश्चापेक्षिकः; अतिदेशत्वान्न पृथक्सङ्गत्यपेक्षेति मन्तव्यम्। "वियन्मातरिश्वनोः पृथग्योगकरणम्", "तेजोऽतस्तथा ह्याह" इति मातरिश्वपरामर्शार्थं छान्दोग्ये वायोऽरुत्पत्तिदर्शनेऽपि "सन्देहे वाक्यशेषात्" इति न्यायेन "गुणोपसंहारन्यायेन च "आकाशाद्वायुः" इति तैत्तिरीयश्रुत्युपसंहारे सति, बृहदारण्यके "सैषानस्तमिता देवता यद्वायुः" इति स्तुतिपरा तदुपासना, प्रकरणात्। अतो वायोर्जन्यत्वमनिवारितमेव।

आकाशवायुवद्ब्रह्मणोऽपि केनचित्कारणेनोत्पत्तिरस्ति इत्याशङ्क्य तत्राह–

## ॥ ५३ ॥ असम्भवस्तु सतोऽनुपपत्तेः ॥ ८ ॥

तुशब्दो ह्यवधारणार्थः। **सतः** ब्रह्मणः **असम्भवः**– उत्पत्तेरसम्भवः। कुतः? **अनुपपत्तेः**। ब्रह्मणः कारणान्तराभावेनोऽत्पत्त्यसम्भव इत्युपदिश्यते। "सदेव सौम्य" "यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः" इत्यादिषु प्राक् सृष्टेरेक एवेत्यवधारणश्रवणात् तद्व्यतिरिक्तस्य कस्यचिदप्यनुवृत्तिर्न सम्भवति।

किञ्च– "ध्यायीतेशानं प्रध्यायितव्यम्। सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते। सर्वाणि चेन्द्रियाणि सह भूतैस्सकारणं कारणानां ध्याता कारणन्तु ध्येयः।" "सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुराकाशमध्ये शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य" इत्यादावकारणत्वस्य कारणकारणत्वस्य च परब्रह्मणि शिवे व्यपदेशात् व्योमवायुसाम्यवत्त्वं नोपपद्यते। यद्वा अव्यक्तमहदहङ्कारतन्मात्रेन्द्रियवियत्पवनादीनां ब्रह्महेतुत्वं श्रूयते, तथा तस्यापि किं कारणान्तरमवगम्यते? "असद्वा इदमग्र आसीत्, ततो वै सदजायत" इति श्रुतौ असतस्सदुत्पत्तिरिति चेत्तदसत्। कथं सदुत्पद्यते असतः? सत एवोत्पत्तौ आत्माश्रयापत्तेः। परमकारणस्य शिवस्यैव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासम्भवात् तद्विलक्षणस्य कृत्स्नस्य प्रपञ्चस्य तददर्शनाच्च ब्रह्मोत्पत्तिर्नोपपद्यत इति सिद्धम्।

---

SCANNED

## तेजोऽधिकरणम् ॥ ३ ॥

एवमाकाशवाय्वोर्ब्रह्मजन्यत्वं प्रसाध्य वह्न्यादीनामपि ब्रह्मकारणकत्वं दर्शयति—

### ॥ ५४ ॥ तेजोऽतस्तथा ह्याह ॥ १ ॥

छान्दोग्ये "तत्तेजोऽसृजत" इत्यत्र वह्नेर्ब्रह्मकारणत्वस्योपदिष्टत्वात्, "वायोरग्निः" इति तैत्तिरीयके वह्नेर्वायुजन्यत्वोपदेशात् छान्दोग्य-तैत्तिरीयवाक्ययोस्तमःप्रकाशवत् परस्परविरोधस्वभावदर्शनाच्च वह्न्यादीनां स्वस्वपूर्वकारणकत्वं ब्रह्महेतुकत्वं वेति सन्दिह्यते।

"आकाशाद्वायुः वायोरग्निः, अग्नेरापः अद्भ्यःपृथिवी" इत्यत्र पारम्पर्येण हेतुत्वोपदेशात् न ब्रह्मजन्यत्वं वह्न्यादेरुपपद्यत इति चेदुच्यते—

"एतस्माज्जायते प्राणो" इत्यत्र प्राणादिसर्वकारणत्वस्य सर्वाधारत्वस्य सर्वविलक्षणत्वस्य च ब्रह्मण्येव दर्शनात् जडभूतस्य वायोः ब्रह्मकारणत्वमनुपपन्नम्। "वायोरग्निः" इत्यत्र पवनावच्छिन्नब्रह्मकारणत्वमेवावगम्यते। "यो रुद्रोऽग्नौ" इत्यादिषु सर्वान्तर्यामित्वस्य तस्मिन्नेव निर्देशात् सर्वकारणत्वं तस्यैवेति सिद्धम्। न तस्मात् छान्दोग्य-तैत्तिरीययोर्विरोधः। न चेयं पञ्चमी क्रमार्था। वाय्वनन्तरं तेजः इति अनन्तरपदकल्पनाप्रसङ्गात्।

किञ्च— "आत्मन आकाशस्सम्भूतः" इत्यादौ "पृथिव्या ओषधयः" इत्यन्ते च हेतुपञ्चम्याः दर्शनात् मध्ये कस्मात्क्रमार्थे पञ्चमीत्यसङ्गतमेव। न चैवं क्वचित् ब्रह्मजन्यत्वं क्वचिद्वायुजन्यत्वमिति विरोधः। वायोर्ब्रह्मजन्यत्वेन वायुभावापन्नब्रह्मजन्यत्वस्य छान्दोग्यवाक्यार्थत्वेन "वायोरग्निः" इति वाक्यस्याप्येतदर्थत्वे अविरोधादिति।

अबधिकरणम् ॥ ४ ॥

एवमग्नेरपि ब्रह्मजन्यत्वं प्रदर्श्य जलस्यापि ब्रह्मजन्यत्वं अधिकरणान्तरेणाह—

## ॥ ५५ ॥ आपः ॥ १० ॥

"आपः" अतस्तथाह्याहेत्यनुवर्तते। तेजोऽनन्तरभावित्वादप्-पृथिव्योः तेजसो वायुजन्यत्वकथनानन्तरं तयोरप्-पृथिव्योः बुद्धिस्थत्वात् बुद्धिसन्निधिलक्षणसङ्गतिक्रमेणाधिकरण-द्वयमारभ्यते। "तदपोऽसृजत" इत्यादिवाक्यस्य ब्रह्मजन्यत्वप्रतिपादकस्य "अग्नेरापः" इति वाक्येन विरोधोऽस्ति न वेति सन्देहे पूर्ववद्विरोधोऽस्तीति पूर्वपक्षे अपामग्निनिवारकत्वात्तज्जन्यत्वं तत्र नास्त्येवेत्यविरोध इत्येकदेशसिद्धान्तं दूषयति—"आप" इति। आपस्तेजसो जायन्ते। हि यस्मात् तथा तेजोजन्यत्वं 'अग्नेराप' इति श्रुतिराहेत्यर्थः। त्रिवृत्कृतयोरप्तेजसोर्दाह्यदाहकभावेऽप्यत्रिवृत्कृतयोर्न विरोधः। पूर्ववद्विरोधपरिहारौ बोध्यौ।

---

## पृथिव्यधिकाराधिकरणम् ॥ ५ ॥

एवं जलस्य ब्रह्मकारणत्वमभिधाय पृथिव्यास्तज्जन्यत्वं दर्शयति—

## ॥ ५६ ॥ पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ ११ ॥

"ता आप ऐक्षन्त बहुस्यां प्रजायेमहि", "ता अन्नमसृजन्त" इति श्रूयते। तत्र संशयः— किमन्नशब्देन ओदनादिकमुच्यते किं वा पृथिवीति? तत्रान्नशब्दस्योदनादौ प्रसिद्धत्वादोदनादिकमेवान्नशब्देनोच्यते। तथा च व्रीहियवादेस्तज्जन्यौदनस्य योगेन च रूढ्या च अन्नशब्दवाच्यस्य क्वचिदन्नजन्यत्वं, क्वचित्, "पृथिव्य ओषधयः, ओषधीभ्योऽन्नं" इत्यत्र पृथिव्यादिजन्यत्वमित्यनयोः श्रुत्योर्विरोधः इति प्राप्ते ब्रूमः—

पृथिव्येवात्रान्नशब्देनोच्यते न व्रीह्यादिः; कुतः? अधिकाररूपशब्दान्तरेभ्यः, "तत्तेजोऽसृजत" इत्यादिमहाभूतोत्पत्त्यधिकारात् "यत्कृष्णं तदन्नस्य" इति कृष्णरूपस्य पृथिव्यनुगुणस्य पृथिवीत्वज्ञापकस्य श्रवणाच्च। समानप्रकरणे "अद्भ्यः पृथिवी" इति च "तद्यदपां शर आसीत्। तत्समहन्यत सा पृथिव्यभवत्" इति च पृथिव्या एव जन्यत्वप्रतिपादकशब्दान्तरसत्वाच्चेत्यर्थः, तत् तत्र सृष्टिकाले यदपां शरो घनीभाव आसीत् समहन्यत स घनीभावस्सम्भूतात्मना परिणत आसीत्। सैवापां काठिनाकारपरिणामरूपपृथिव्यभवदिति श्रुत्यर्थः। तथा च व्रीह्याद्यन्नस्य नाम्बूपादानकत्वं किन्तु पृथिव्याद्युपादानकत्वमेवेत्यविरोध इति सिद्धम्।

एवं तावत्सृष्टिक्रमेण महाभूतश्रुतीनामविरोधः प्रतिपादितः। "यः पृथिव्यां तिष्ठन् यस्य पृथिवी शरीरम्" इत्यादिना काण्वमाध्यन्दिनादिशाखासु शिवस्य परब्रह्मणः पृथिव्यादिसर्वभूतशरीरत्वोपदेशात्, स्वस्य स्वशरीरकारणत्वायोगात्, स्वशरीरस्या-

नित्यत्वे जीवतुल्यत्वप्रसङ्गात्, तदन्यस्य सर्वकारणत्वासम्भवाच्च पृथिव्यादीनां पूर्वपूर्वस्योत्तरोत्तरकारणत्वं ब्रह्महेतुकत्वं च न सम्भवतीति चेन्न। **"यो रुद्रो अग्नौ"** इत्यादिषु शिवस्य सर्वान्तर्यामित्वप्रदर्शनात्, **"यः पृथिव्यां तिष्ठन्"** इत्यादिवाक्यानां **"अन्नं ब्रह्म"** इत्यादिवत् तस्य सर्वान्तर्यामित्वप्रदर्शनार्थमेव शरीरत्वोपदेशः; न तु साक्षाच्छरीरत्वकल्पनम्। कुतः? पृथिव्यादीनामपि **पटसंकोचविकासन्यायेन** प्रळयेऽपि ब्रह्मात्मकत्वेन स्थितत्वान्न चाष्टमूर्तित्वहानिः। तदुक्तं **शैवे**—

**"महेश्वरान्महाशक्त्याश्चेशानाख्यखगात्मकः।**
**सम्भूतः पुरुषस्तस्मात्पवनाख्यो महाबलः॥**

**तस्मादघोरस्सम्भूतः ज्वलनस्सर्वभक्षकः।**
**जलात्मको वामदेवस्तस्माज्जातः कृपानिधिः॥**

**तस्माद्भूम्यात्मकस्सद्योजातमूर्तिश्शुभप्रदः।**
**तस्मादोषधयस्सर्वे ततोऽन्नं जायते क्रमात्॥**

**तस्मात्प्रजा बहिर्भूताश्चेतनाचेतनात्मकाः।**
**सर्वान्तर्यामिरूपेण सर्वकर्ता सदाशिवः॥**

**प्रथमं सूक्ष्मरूपेण सद्योजातादिपञ्चकम्।"**
**जनयामास देवेशस्तथा स्थूलप्रपञ्चकम्॥"**

इति दर्शनाज्जगज्जन्मादिकारणत्वं नेतरस्येति निर्दिष्टम्।

---

## तदभिध्यानाधिकरणम् ॥ ६ ॥

"**आकाशाद्वायुः**" इत्यादौ जडानां भूतानां परम्पराकारणत्वं मास्तु, तदधिष्ठान-देवतानामस्तु इत्याशङ्कायामधिकरणान्तरं दर्शयति—

## ॥ ५७ ॥ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १२ ॥

इदानीं तानि भूतान्याश्रित्याश्रयाश्रयिभावसङ्गत्या अन्यद्विचार्यते— किं महाभूताभि-मानिन्यो देवताः स्वातन्त्रा एव भौतिकोत्पादने प्रवर्तन्ते उतेश्वराधिष्ठिता इति विशयः।

"**आकाशाद्वायुः**" इत्यादिना स्वस्वकार्योत्पत्तौ स्वातन्त्र्यश्रवणात् स्वतन्त्रा एवेति ब्रह्मणस्सर्वसृष्टिकर्तृत्वप्रतिपादकश्रुत्या भूतसृष्टिश्रुतीनां विरोध इति प्राप्ते ब्रूमः—

स परमात्मा तत्तत्कार्यगोचरेक्षणात्मकाभिध्यानादेवेक्षिता तत्तत्कारणाधिष्ठानतया सर्वं कार्यं सृजति ; कस्मात्? **तल्लिङ्गात्**, तस्य परमात्मनः सर्वनियन्तृत्वरूपलिङ्गस्य "**यः पृथिव्यां तिष्ठन्**" इत्यादिना श्रुतत्वादित्यर्थः। **पृथिव्याम्**— तदभिमानिदेवतायाम्। अयं भावः— आकाशादिपदानां भूतमात्ररूढत्वात् देवतापरत्वे लक्षणापत्तेः भूताभिमानि-देवतानां स्वातन्त्र्यम् "**आकाशाद्वायु**"रित्यादौ श्रुतम्। न च "**ता आप ऐक्षन्त**" इति तदवादिपदानां देवतापरत्वे लिङ्गम्; तस्येक्षणस्य तदवच्छिन्नब्रह्मनिष्ठत्वादिति न देवतानां स्वातन्त्र्ये किञ्चिन्मानमिति।

---

## विपर्ययाधिकरणम् ॥ ७ ॥

एवं पञ्चमहाभूतानां ब्रह्मकारणत्वमभिधाय तेषां ब्रह्मण्येव विलीनत्वं प्रदर्शयति–

# ॥ ५८ ॥ विपर्ययेण तु क्रमोत उपपद्यते च ॥ १३ ॥

एवं भूतानामुत्पत्तिक्रमविचारणे लयक्रमो बुद्धिस्थः प्रसङ्गसङ्गत्या विचार्यते। एतद्विचारस्य प्रयोजनं जगद्ब्रह्मणोर्भेदाभेदविज्ञानम्। प्रासङ्गिकत्वादेव अस्मिन् पादे जगद्विलयक्रमो निर्दिष्टः। तत्र किं भूतानां श्रुतोत्पत्तिक्रमेणैव लयक्रमः; तद्व्यतिरेकेण वेति संशयः।

**मुण्डकोपनिषदि–"एतस्माज्जायते प्राणः मनस्सर्वेन्द्रियाणि च"** इति प्राणादीनां वियदादिभ्यः पूर्वमुत्पत्तिः श्रूयते। **अथर्वणशिखायान्तु "ब्रह्म-विष्णु-रुद्रेन्द्रास्ते सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः"** इति सहोत्पत्तेर्ब्रह्मादीनां भूतेन्द्रियाणां चाम्नानादाकाशादेः पूर्वोक्तसृष्टिक्रमो नोपपद्यते इति प्राप्ते प्रचक्ष्महे।

पूर्वोक्तसृष्टिक्रमः उपपन्नः। **"अन्नमयं हि सौम्य मनः, आपोमयः प्राणः, [1]तेजोमयी वाक्"** इति प्राणादीनां भौतिकत्वश्रवणात् भूतेष्वन्तर्भावात् न पृथक् क्रमापेक्षा। ब्रह्मादीनां सहोत्पत्तिर्भूतैस्तद्रूपत्वात्, तेजोमयैर्भूतैस्तद्रूपत्वात् तेष्वन्तर्भावात्। ततः पूर्वक्रमे न विरोधः।

---

[1] तेजोमयैर्भूतैस्त द्रू .त्वात् (ग A)

**किञ्च**—"**तदैक्षत बहुस्यां प्रजायेय**" इति दर्शनात् सर्वभूतोत्पादकस्साक्षाच्छिव एव। चेतनजीवोत्पादनप्रदर्शनेन अचेतनकारणत्वमर्थात् सिद्धम्। **अथर्वशिखायां** "**ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि**" इत्यादिना ब्रह्मादिचेतनाचेतनकारणत्वदर्शनात्। **स्कान्दे**—

"सदाशिवश्शब्दमूर्तिः स्पर्शमूर्तिर्महेश्वरः।
रुद्रस्तेजोमयस्साक्षाद्रसमूर्तिर्जनार्दनः॥
गन्धमूर्तिश्चतुर्वक्त्र इत्येते पञ्चमूर्तयः।
सदाशिवादयो ह्येते पञ्चब्रह्मपदे स्थिताः॥
तेषां सृष्ट्यादयो नोक्तास्तदन्तर्यामिरूपतः।
जगज्जन्मादिकं सर्वं शिवस्यैव हि निश्चितम्॥
तस्मात्तदिच्छया तेषां पुनः परमकारणे।
पटसंकोचवल्लीनं पटविस्तृतिवत्तथा॥
पुनस्तदिच्छया सम्यक् प्रादुर्भावं प्रचक्षते॥"

इति श्रवणात् शिव एव प्रळये प्रपञ्चं स्वान्तर्लीनं करोतीति राद्धान्तः।

---

## अन्तराविज्ञानाधिकरणम् ॥ ८ ॥

"**एतस्माज्जायते प्राणः**" इति श्रुतौ ब्रह्मणः परमशिवात् प्राणेन्द्रियादि सृष्टेरेवात्र प्रथमोपदेशात्, "**आत्मन आकाशस्सम्भूतः**" इति श्रुतिनिष्ठभूतपञ्चकोत्पत्ति-प्राथमिकोपदेशकतैत्तिरीयकवाक्यविरोधोऽस्तीत्याशङ्कायामाह—

## ॥ ५९ ॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १४ ॥

**अन्तरा**—ब्रह्माकाशयोर्मध्ये, **विज्ञानमनसी**-इन्द्रियान्तःकरणे उत्पद्येते; **क्रमेण तल्लिङ्गात्** "**एतस्मात् जायते प्राणः**" इति श्रुतौ प्राणादिसृष्ट्यनन्तरं भूतपञ्चकसृष्टिप्रतिपादनादिति चेन्न; **अविशेषात्**; तस्याः श्रुतेरुत्पत्तिमात्रप्रतिपादकत्वेन क्रमप्रतिपादकत्वाभावात्। तथा च प्राणेन्द्रियान्तःकरणानां भौतिकत्वात्पञ्चमहाभूतोत्पत्त्यनन्तरमेवेति सूत्रसूचितसूक्ष्मार्थः।

विज्ञानसाधनत्वादिन्द्रियाणि विज्ञानमित्युच्यन्ते। "यदुक्तं—"**एतस्माज्जायते प्राणः**" इत्यादिना सर्वस्य ब्रह्मणोऽनन्तरकार्यत्वं श्राव्यते। अतश्चानेन वाक्येन सर्वस्य साक्षाद्ब्रह्मण उत्पत्तिरभिध्यानलिङ्गवगाता उत्तम्यत इति तन्नोपपद्यते। क्रमविशेषपरत्वादस्य वाक्य-स्यात्रापि सर्वेषां क्रमप्रतीतेः खादिषु तावच्छ्रुत्यन्तरसिद्धः क्रमोऽत्रापि प्रतीयते। तैस्सह पाठलिङ्गाद्भूतप्राणयोरन्तराले विज्ञानमनसी अपि क्रमेणोत्पद्येते इति प्रतीयते। अतस्सर्वस्य साक्षाद्ब्रह्मण एव सम्भवस्योत्तम्भनमिदं न भवतीति चेत्तन्न— **अविशेषात्**। "**एतस्माज्जायते प्राणः**" इत्यनेनाविशेषात्; विज्ञानमनसोः खादीनां च "**एतस्मा-ज्जायते**" इत्यनेन साक्षात्सम्भवरूपसम्बन्धस्याभिधेयस्य सर्वेषां प्राणादिपृथिव्यन्तानामविशिष्ट-त्वात्स एव विधेयः, न क्रमः। श्रुत्यन्तरसिद्धक्रमविरोधाच्च नेदं क्रमपरम्। "**पृथिव्यप्सु प्रलीयते**" इत्यारभ्य "**तम .... एकी भवति**" इत्यन्तेन क्रमान्तरप्रतीतेः। पूर्वोक्तभूतोत्पत्तिलयक्रम इन्द्रियोत्पत्तिक्रमेण न विरुध्यते। तस्मान्न केनापि वाक्येन भूतसृष्टि-वाक्यानां विरोध इति सिद्धम्।

S... ...DHYA
JNANA SIMHAS... ...MANDIR
LIBRARY
Jangamwadi Math, VARANASI.
Acc. No. ....2428 002

R6634,5x1,1 15L7·2

## चराचरव्यपाश्रयाधिकरणम् ॥ ९ ॥

"आकाशाद्वायुः" इत्यादौ आकाशादीनामेव पारंपर्यकारणत्वमवगम्यते । तदाश्रयत्वेन तस्य तच्छब्दाभावादित्याशङ्कायामाह--

## ॥५९॥ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १५ ॥

"तु शब्दः शङ्कानिरासार्थः । निखिलजङ्गमस्थावरव्यपाश्रयस्तत्तच्छब्दव्यपदेशः भाक्तः वाच्यैकदेशे भज्यत इत्यर्थः । समस्तवस्तुप्रकारिणो ब्रह्मणः प्रकारभूतवस्तुग्राहिप्रत्यक्षादिप्रमाणाविषयत्वाद्वेदान्तश्रवणात् प्राक् प्रकार्यप्रतीतेः, प्रकारिप्रतीतिभावभावित्वाच्च तत्पयवसानस्य लोके तत्तद्वस्तुमात्रे वाच्यैकदेशे ते ते शब्दाः भाङ्क्ताभाङ्क्ताः व्यपदिश्यन्ते । अथवा तेजःप्रभृतिभिः शब्दैस्तत्तद्वस्तुमात्रवाचितया व्युत्पन्नैर्ब्रह्मणो व्यपदेशो भाक्तः स्यात्— अमुख्यः— स्यादित्याशङ्क्य चराचरव्यपाश्रयस्तु इत्युच्यते । चराचरव्यपाश्रयः तद्व्यपदेशस्तद्वाचिशब्दः चराचरवाचिशब्दः ब्रह्मण्यभाक्तो मुख्य एव ; कुतः ? ब्रह्मभावभावित्वात् सर्वशब्दानां वाचकभावस्य नामरूपव्याकरणश्रुत्या हि" तद्भावभवित्वात् । तद्यथा—

"सेऽयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः । अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरणवाणि ॥" इति सर्ववस्तुनो नामरूपविभागाय तदात्मकतया ब्रह्मणोऽनुप्रवेशभावभावित्वात्, "आदित्यो वा यूपः यजमानः प्रस्तरः" इत्यादिषु यूपादीनां आदित्यादिशब्दवाच्यत्वमनुपपत्या न मुख्यम् । "मञ्चाः क्रोशन्ति" इत्यत्र मञ्चादिषु पुरुषाणामवस्थानमात्रत्वात्तेषामपि तच्छब्दवाच्यत्वममुख्यम् । इहात्मतया प्रपञ्चानुप्रवेशात् ब्रह्मणस्तच्छब्दवाच्यत्वं मुख्यमेव ;

JNANA SIMHASAN JNANAMANDIR
LIBRARY
JANGAMWADI MATH, VARANASI
Acc. No. 2428 ...002

यथात्मनो ब्राह्मणादिशरीराविष्टस्य ब्राह्मणादिशब्दवाच्यत्वं मुख्यम्। अन्यथा उपनयनादि-संस्कारादेश्शरीरमात्रपर्यवसानादात्मनस्संस्कारत्वाभावप्रसङ्गात्। "**यस्यैते चत्वारिंशत्संस्काराः, स ब्रह्मणस्सायुज्यं गच्छति**" इत्यादिना आत्मसंस्कारवतः फलश्रुतिः परार्था भवेत्; "**ब्राह्मणो यजेत**" इत्यादिविधिवैय्यर्थ्यमापद्येत। तस्मात् स्थावरजङ्गमात्मकप्रपञ्चाव-च्छिन्नपरमशिवस्य ब्रह्मणस्तच्छब्दवाच्यत्वं मुख्यमिति घण्टाघोषः॥

---

## आत्माधिकरणम् ॥ १० ॥

"यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिषु जीवोत्पत्तिनिर्देशादाकाशादिवत्तस्मिन् तदुत्पत्तिरस्त्वित्याशङ्कां निराकरोति–

## ॥ ६१ ॥ नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १६ ॥

आत्मा शारीरो नोत्पद्यते। कुतः? अश्रुतेः; सृष्टिश्रुतिषु जीवानामुत्पत्तेरश्रवणात्। "ज्ञाऽज्ञौ" इत्यादिभ्यस्ताभ्यः श्रुतिभ्यः नित्यत्वव्यपदेशात् इति सूक्ष्मार्थः।

"वियदादेः कृत्स्नस्य परस्मात् ब्रह्मण उत्पत्तिरुक्ता। इदानीं जीवस्याप्युत्पत्तिरस्ति नवेति संशीय्यते।

किं युक्तं, अस्तीति; कुतः? एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तेः; प्राक् सृष्टेरेकत्वावधारणाच्च। वियदादेरिव जीवस्याप्युत्पत्तिवादिन्यः श्रुतयश्च सन्ति। "यतः प्रसूता जगतः प्रसूती तोयेन जीवान् विससर्ज भूम्याम्", "प्रजापतिः प्रजा असृजत", "सन्मूला सौम्येमाः सर्वाः प्रजाः सदायतनास्सत्प्रतिष्ठाः" इति। एवं सचेतनस्य जगतः उत्पत्तिवचनाज्जीवस्याप्युत्पत्तिः प्रतीयते। न च वाच्यं-ब्रह्मणो नित्यत्वात् तत्त्वमस्यादिभिश्च जीवस्य ब्रह्मत्वावगमाज्जीवस्य नित्यत्वमिति। "ऐतदात्म्यमिदं सर्वं", "सर्वं खल्विदं ब्रह्म" इत्येवमादिभिर्वियदादेरपि ब्रह्मत्वावगमात् तस्यापि नित्यत्वप्रसक्तेः। अतो जीवोऽपि वियदादिवदुत्पद्यत इत्येवं प्राप्तेऽभिधीयते।

नात्मा श्रुतेरिति। नात्मोत्पद्यते; कुतः? अश्रुतेः। "न जायते म्रियते वा विपश्चित्", "ज्ञाऽज्ञौ" इत्यादिभिर्जीवस्योत्पत्तिप्रतिषेधो हि श्रूयते। आत्मनो नित्यत्वं

च ताभ्यः श्रुतिभ्य एवावगम्यते। **"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्", "अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे"** इत्यादिभ्यः। अतश्च नात्मोत्पद्यते। कथं तर्हि एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञोपपद्यते? इत्थमुपपद्यते– जीवस्यापि कार्यत्वात्, कार्यकारणयोरनन्यत्वाच्च। एवं तर्हि वियदादिवदुत्पत्तिमत्त्वमङ्गीकृतं स्यात्। नेत्युच्यते। कार्यत्वं हि नामैकस्य द्रव्यस्यावस्थान्तरापत्तिः। तज्जीवस्याप्यस्त्येव। इयांस्तु विशेषः। वियदादेरचेतनस्य यादृशोऽन्यथाभावो न तादृशो जीवस्य। ज्ञानसङ्कोचविकासलक्षणो जीवस्यान्यथाभावः। वियदादेस्तु स्वरूपान्यथाभावलक्षणः। सेऽयं स्वरूपान्यथाभावलक्षणा उत्पत्तिर्जीवे प्रतिषिध्यते।

एतदुक्तं भवति– भोग्यभोक्तृनियन्तॄन् विविक्तस्वभावान् प्रतिपाद्य भोग्यगतमुत्पत्त्यादिकं भोक्तरि प्रतिषिध्य तस्य नित्यतां च प्रतिपाद्य भोग्यगतमुत्पत्त्यादिकं भोक्तृगतं चा-पुरुषार्थाश्रयत्वं नियन्तरि प्रतिषिध्य, तस्य नित्यत्वं निरवद्यत्वं सर्वदा सर्वज्ञत्वं सत्य-सङ्कल्पत्वं करणाधिपाधिपतित्वं विश्वपतित्वं च प्रतिपाद्य, सर्वावस्थयोश्चिदचितोस्तं प्रति "[1]नियम्यत्वं तस्य नियामकत्वं" च प्रतिपादितम्। अतः सर्वदा चिदचिद्वस्तु[2]प्रकाशकतया सर्वपरिपूर्णं ब्रह्म। तत्कदाचिदपि तद्धर्मं प्राप्तुं नार्हति। सूक्ष्मदशायामपि "स्वान्तर्लीन-चिदचिद्वस्तुप्रकाशकत्वेन तिष्ठति।"

तस्मात् द्वैतस्य नित्यत्वम्। मोक्षदशायां **भ्रमरकीटन्यायेन** स्वाभाविकजीवत्व-निवृत्तिपूर्वकशिवत्वप्राप्तिः **"ब्रह्म वेद ब्रह्मैव भवति"** इत्यादिषु स्पष्टमुपदिष्टा। अतो बद्धदशायां जीवब्रह्मणोर्भेदस्य मुक्तदशायां अभेदस्य चाङ्गीकारात् सर्वश्रुतिसमन्वयो भवति। तद्यथा– शिवस्स्वाभाविकस्वशक्तिविकासतया **"यथोर्णनाभिः सृजते गृह्यते च"** इत्यादिवज्जगदुभयकारणत्वेन व्यपदेशात् **द्वैताद्वैतमेव** सम्भवति। कार्यत्वेन भेदः उपादानत्वेन अभेदश्च सिध्यति। कार्यावस्था कारणावस्थयोरपि जगदीश्वरयोर्भेदाभेदं च प्रचक्षते। कार्यावस्थायान्तु स्वशक्तिपरिणामित्वे अभिन्नत्वं स्वनियामकत्वेन स्वभिन्नत्वम्। कारणावस्थायामपि स्वान्तर्लीनत्वेनाभिन्नत्वं स्वकर्मानुस्यूतत्वेन ग्रीष्मकाले भूतृणादिवत् सूक्ष्मरूपेण स्थितत्वात् स्वभिन्नत्वं सर्ववेदान्तसिद्धम्। **"सदेव सौम्य"** इत्यत्र चिद-

---

[1] शरीरत्वं तस्य चात्मत्वं (श्रीभाष्ये) [2] शरीरतया (श्रीभाष्ये)

चिदात्मकप्रपञ्चस्य प्रळये ब्रह्मात्मकत्वेन स्थितत्वं, तदनन्तरसृष्टिविधायकत्वेन तद्भिन्नत्वं च निर्दिश्यते। "**असद्वा इदमग्र आसीत्ततो वै सदजायत**" इत्यत्रासत्पदेन प्रळये चिदचिदात्मकप्रपञ्चस्य सूक्ष्मरूपेण स्थितत्वम्। "**ततो वै सदजायत**" इत्यनेन सूक्ष्मरूपप्रपञ्चानुस्यूततया ब्रह्मणः स्थूलप्रपञ्चकारणत्वं च व्यपदिश्यते।

"तत्र कारणावस्थस्य कार्यावस्थापत्तौ अचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोगाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति। चिदंशस्य च कर्मफलविशेषभोक्तृत्वाय तदनुरूपज्ञानविकासरूपो विकारो भवति। उभयप्रकारविशिष्टे नियन्तरि तदवस्थतदुभय-विशिष्टतारूपविकारो भवति। कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः। अत एवैकस्यावस्थान्तरापत्तिरूपविकारापेक्षया "**येनाश्रुतं श्रुतं**" इति एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृदादिदृष्टान्तः "**यथा सौम्य**" इत्यादिना निर्दिष्टः। ईदृशज्ञानसङ्कोचविकासकरतत्तद्देहसम्बन्धवियोगाभिप्रायाः जीवस्योत्पत्तिमरणवादिन्य- "**प्रजापतिः प्रजा असृजत**" इत्याद्याः श्रुतयः। अचिदंशवत्स्वरूपान्यथात्वाभावाभिप्राया-उत्पत्तिप्रतिषेधवादिन्यो नित्यत्ववादिन्यश्च "**न जायते म्रियते**" इत्याद्याः। "**नित्यो नित्यानां चेतनश्चेतनानां**" इत्याद्याश्च श्रुतयः स्वरूपान्यथात्वज्ञानसंकोचविकासरूपोभय-विधानिष्टविकाराभिप्रायाः। "**स वा एष महानज आत्माऽजरोऽमरोऽमृतो ब्रह्म**" इत्याद्याः परविषयाः श्रुतयः।" एवं सर्वदा चिदचिद्वस्तुपूर्णस्य परशिवब्रह्मणः प्राक्सृष्टेः रेकत्वावधारणं च नामरूपविभागाभावादुपपद्यते।

"तदित्थं **तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत**" इति हि नामरूप विभागभावाभावाभ्यां नानात्वैकत्वे वदन्तीति।"

"ये तु अविद्योपाधिकं जीवत्वं वदन्ति, ये च पारमार्थिकोपाधिकृतं, ये च सन्मात्रस्वरूपं ब्रह्म स्वयमेव भोक्तृभोग्यनियन्तृरूपेण त्रिधावस्थितं वदन्ति। सर्वेऽप्येतेऽविद्या-शक्तेरुपाधिशक्तेर्भोक्तृभोग्यनियन्तृशक्तीनां च प्रळयकालेऽवस्थानेऽपि तदानीमेकत्वावधारणं-नामरूपविभागाभावादेवोपपादयन्ति। "**वैषम्यनैघृण्ये न सापेक्षत्वात्**", "**न कर्मा-विभागात्**" इति सूत्राभ्यां जीवभेदस्य तत्तत्कर्मप्रवाहस्य चानादित्वाभ्युपगमाच्च। इयान् विशेषः— एकस्यानाद्यविद्यया ब्रह्म स्वयमेव मुह्यति; अन्यस्य पारमार्थिकानाद्युपाधिना ब्रह्म स्वयमेव बध्यते। उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावादपरस्य ब्रह्मैव विचित्राकारेण

परिणमते। कर्मफलानि चानिष्टानि भुंक्ते; नियन्त्रंशस्य भोक्तृत्वाभावेऽपि सर्वज्ञत्वात् स्वात्माभिन्न भोक्तारमनुसन्दधातीति स्वयमेव भुङ्क्ते। अस्माकन्तु स्वशक्तिसङ्कोचविकासात्मकतया ब्रह्म कार्यकारणोभयावस्थास्थितमपि सर्वदा निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पाद्यपरिमितोदारगुणसागरमवतिष्ठते : प्रकारभूतचिदचिद्वस्तुगता अपुरुषार्थाः स्वरूपान्यथाभावाश्चेति सर्वसमञ्जस "मिति राद्धान्तः।

---

## ज्ञाधिकरणम् ॥ ११ ॥

आकाशादीनां जन्यत्वे जीवानामजन्यत्वे च को हेतुरित्याशङ्कायामाह–

## ॥ ६२ ॥ ज्ञोऽत एव ॥ १७ ॥

**ज्ञ एव** जीवः, ज्ञातृस्वरूपः, नाचेतनस्वरूपः। तस्मात् जन्यत्वं न सम्भवति। जडानामेव जन्यत्वं कुम्भादीनां च सम्मतं इति स्मृतिदर्शनाज्जडत्वात् आकाशादीनामेवोत्पत्तिः अजडत्वाज्जीवोत्पत्तिरनङ्गीकरणीयेति सूक्ष्मार्थः।

"वियदादिवज्जीवो नोत्पद्यत इत्युक्तम्। तत्प्रसङ्गेन जीवस्वरूपं निरूप्यते। किं **सुगत-कपिला**भिमतचिन्मात्रमेवात्मनः स्वरूपं, उत **कणभुग**भिमतं पाषाणकल्पस्वरूपमचित्स्वभावमेवागन्तुकचैतन्यगुणकम्। अथ ज्ञातृत्वमेवास्य स्वरूपमिति। किं युक्तम्?

चिन्मात्रमिति; कुतः; तथा श्रुतेः; **अन्तर्यामिब्राह्मणे** हि **"य आत्मनि तिष्ठन्"** इति **माध्यन्दिनीय**पर्यायस्य स्थाने **"यो विज्ञाने तिष्ठन्"** इति **काण्वा** अधीयते। तथा **"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च"** इति कर्तुरात्मनो ज्ञानस्वरूपत्वं प्रतीयते। अपरस्तु– जीवात्मनो ज्ञानत्वे ज्ञातृत्वे च स्वाभाविकेऽभ्युपगम्यमाने तस्य सर्वगतस्य सर्वदा सर्वत्रोपलब्धिप्रसङ्गात्, कर्मणां च वैयर्थ्यात्, सुषुप्तिमूर्छादिषु सतोऽप्यात्मनश्चैतन्यानुपलब्धेः जाग्रतस्सामग्र्यां सत्यां ज्ञानोऽत्पत्तिदर्शनादस्य न ज्ञानं स्वरूपम्, नापि ज्ञातृत्वम्, आगन्तुकमेव चैतन्यं सर्वगत्वं चात्मनोऽवश्याभ्युपेयम्[1]; सर्वत्र कार्योपलब्धेः सर्वत्रात्मनस्सन्निधानाभ्युगमात्, शरीरगमनेनैव कार्यसम्भवे सति गतिकल्पनायां प्रमाणाभावाच्च। श्रुतिरपि सुषुप्तिवेलायां ज्ञानाभावं दर्शयति– **"नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मि; नो एवेमानि भूतानि"** इति। तथा मोक्ष-

---

[1] अभ्युपेतव्यम् (ग A)

दशायां ज्ञानाभावं दर्शयति- "न प्रेत्य संज्ञाऽस्ति" इति। ज्ञानस्वरूपमित्यादि-प्रयोगस्तु ज्ञानस्य तदसाधारणगुणत्वेन लाक्षणिकमित्येवं प्राग्धे प्रचक्ष्महे-

ज्ञोऽत एव; अयमात्मा ज्ञातृत्वस्वरूप एव; न ज्ञानमात्रम्, नापि जडस्वरूपः; कुतः? अत एव श्रुतेरेवेत्यर्थः। "**नात्मा श्रुतेः**" इति प्रकृता श्रुतिः अतः शब्देन परामृश्यते। तथा छान्दोग्ये प्रजापतिवाक्ये मुक्तामुक्तात्मस्वरूपकथने "**अथ यो वेदेदं जिघ्राणीति स आत्मा**" "**मनसैवैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोके**" "**सत्यकामस्सत्यसङ्कल्पः**" "**नोपजनं स्मरन्निदं शरीरम्**" अन्यत्रापि- "**न पश्यो मृत्युं पश्यति**" इति। तथा वाजसनेयके "**कतम आत्मा**" इति पृष्ट्वा "**योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः**" इति। तथा **विज्ञातारमरे केन विजानीयात्** "**जानात्येवायं पुरुषः**" तथा "**एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः**", "**एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः**" इति।"

## उत्क्रान्तिगत्यधिकरणम् ॥ १२ ॥

यत्तूक्तं ज्ञातृत्वे स्वाभाविके सति सर्वगतस्य तस्य सर्वदा सर्वत्रोपलब्धिः प्रसज्यत इति तत्रोच्यते—

# ॥ ६३ ॥ उत्क्रान्तिगत्या गतीनाम् ॥ १८ ॥

"**कर्मचितो लोकः क्षीयते। पुण्यचितो लोकः क्षीयते**", "**ज्योतिष्टोमेन स्वर्गकामो यजेत**", "**क्षीणे पुण्ये मर्त्यलोकं विशन्ति**" इत्यादिश्रुतिषु जीवानां **उत्क्रान्तिः** देहान्निर्गमनं, **गतिः** स्वर्गनरकलोकगमनं, **आगतिः** पुण्यपापफलभोगानन्तरं भूलोकं प्रत्यागमनम्। एतासां श्रवणात् जीवोऽणुरेव। विभुत्वे गमनासम्भवात् इति सूत्रसूचितसूक्ष्मार्थः। [1] द्वैतक्षपणकतार्किकादिभिः जीवानां विभुत्वाङ्गीकाराच्चन्निरासार्थमेतदधिकरणप्रारम्भः। "**एषोऽणुरात्मा चेतसा वेदितव्यः**" इति, "**स वा एष महानज आत्मा**" इति च पूर्वोक्तज्ञातृत्वेन व्यपदिश्यमानस्य जीवस्य अणुत्वविभुत्वव्यवस्थापनात् सन्देहः।

"**एषः महानज आत्मा**" इत्यादिषु क्षेत्रज्ञस्य विभुत्वनिर्देशात्, अन्यत्र "**विश्वं भुवनमभ्यभवान्**" इति क्षेत्रज्ञस्य सकललोकव्यापकत्वव्यपदेशाच्च तस्य नाणुत्वं सम्भवतीति प्राप्ते प्रचक्ष्महे—

नायं सर्वगतः, अपित्वणुरेवायमात्मा, कुतः? **उत्क्रान्तिगत्या गतीनां** श्रुतेः। उत्क्रान्तिस्तावत् श्रूयते। "**तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः**" इति।

---

[1] मध्वद्वैतक्षणिकतार्किकादिभिः (ग ∧).

"गतिरपि **येवैके चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति**" इति, आगतिरपि– "**तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे**" इति" जीवस्य परलोकगमनप्रदर्शनात्, विभुत्वे शरीरवियोगासम्भवाच्च, "**यषोऽणुरात्मा**" इति श्रुति-निर्दिष्टाणुत्वमेव जीवस्याङ्गीकरणीयम्। "**स वा एष महानजः**" इत्यादिविभुत्ववाचक-श्रुतीनां परमात्मपरत्वमिति वेदितव्यम्। "**अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः**", "**यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत्**" इत्यादि-श्रुतिशतदर्शनात्।

उत–

"**नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा।**
**नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा।**
**तस्याश्शिखाया मध्ये (तु) परमात्मा व्यवस्थितः॥**"

इत्यत्र पशु-पति-पाशात्मकतत्त्वत्रयस्वरूपं स्पष्टमुपदिष्टम्। नीलतोयदपदव्यपदेशेन गुण-त्रयात्मकपाशरूपा प्रकृतिरुपदिश्यते। "**विद्युल्लेखेव भास्वरा अणूपमा**" इत्यन्तं पशुशब्दवाच्यस्य जीवस्य नीवारशूकोपमानाणुत्वं तत्स्वरूपमुपदिष्टम्। "**तस्याः शिखाया-व्यवस्थितः**" इत्यनेन जीवविलक्षणपत्यात्मकं शिवतत्त्वमुपदिष्टम्। "**स ब्रह्मा स शिवस्स हरिस्सेन्द्रस्सोऽक्षरः परमः स्वराट्**" इत्यनेन जीवविलक्षणस्य शिवस्य सर्वशब्दवाच्यत्वं मूर्तित्रयातीतत्वं च निरूपितम्। तथा माण्डूक्येऽपि "**प्रपञ्चो-पशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः**" इति। "**ध्यायी-तेशानं प्रध्यायितव्यं, सर्वमिदं ब्रह्म**", "**स एव विष्णुस्स प्राणस्स कालोऽग्निस्स चन्द्रमाः, स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्**", **ध्यात्वा तं मृत्यु-मत्येति नान्यः पन्था विमुक्तये**" "**सर्वो वै रुद्रः**" इत्यादिषु शिवस्य परब्रह्मणः मूर्तित्रयविलक्षणत्व-सर्वशब्दवाच्यत्वयोः तन्निष्ठस्य मोक्षोपदेशस्य च निर्देशात् नेतरस्य विभुत्वादिकं सम्भवति।

जीवविभुत्वनिराकरणे हेत्वन्तरमाह–

**॥ ६४ ॥ स्वात्मना चोत्तरयोः ॥ १९ ॥**

"च शब्दोऽवधारणे। यद्यपि शरीरवियोगरूपत्वेन उत्क्रान्तिः स्थिरस्याप्यात्मनः कथञ्चिदुपपद्यते। गत्यागती तु न कथञ्चिदुपपद्यते" तस्मात्तस्याणुत्वमेवोपपन्नम्।

अत्र पुनर्हेतुमाह—

## ६५ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारा २०

"'**योऽयं विज्ञानमयः प्राणेषु**' इति जीवं प्रस्तुत्य '**स वा एष महानज आत्मा**' इति महत्त्वश्रुतेर्नाणुर्जीव इति चेन्न; इतराधिकाराज्जीवादितरस्य प्राज्ञस्य तत्राधिकारात्। यद्यप्युपक्रमे जीवः प्रस्तुतः; तथापि '**यस्यानुवित्तः प्रतिबुद्धस्स-आत्मा**' इति मध्ये परः प्रतिपाद्यत इति सत्सम्बन्धीदं महत्वं न जीवस्य"।

पुनर्हेत्वन्तरमाह—

## ६६ स्वशब्दोन्मानाभ्यां च २१

"साक्षादणुशब्द एव श्रूयते। '**एषोऽणुरात्मा .... यस्मिन् प्राणः पञ्चधा संविवेश**' इति। उद्धृत्य मानमुन्मानम्। अणुसदृशं वस्तूद्धृत्य तन्मानत्वं जीवस्य श्रूयते।

'**वालाग्रशतभागस्य शतधा कल्पितस्य च।**
**....................भागो जीवस्स विज्ञेयः**'

इति वालाग्रमात्रव्यवहारोऽपि दृष्ट इति च। अतो अणुरेवायमात्मा।"

अथ स्यादात्मनोऽणुत्वे सकलशरीरव्यापिनी वेदना नोपपद्यत इत्याशङ्कायामाह—

## ६७ अविरोधश्चन्दनवत् २२

यथा चन्दनस्यैकदेशस्थितस्य सकलशरीरशैत्यजनकत्वं एवं क्षेत्रज्ञस्यैकस्मिन् प्रदेशे स्थितस्यापि सर्वाङ्गसुखदुःखभोक्तृत्वमुपपन्नं, चन्दनस्यैकस्मिन् प्रदेशेऽवस्थानं च प्रत्यक्षदृष्टं, तद्वज्जीवस्य कस्मिन्नंशेऽवस्थानमित्याशंकायां स्थानविशेषमाह—

## ॥६८॥ अवस्थितिवैशेष्यादिति चेन्नाऽभ्युपगमाद्धृदि हि ॥२३॥

"हरिचन्दनबिन्द्वादेर्देहदेशविशेषावस्थितिविशेषात्तथाभावः, आत्मनस्तु तन्न इति चेन्न। आत्मनोऽपि हि देहदेशविशेषे स्थित्यभ्युपगमात् '**हृदयदेशे ह्यात्मनः स्थितिः**' श्रूयते। '**हृदि ह्ययमात्मा तत्रैकशतं नाडीनां**' इति। तथा '**कतम आत्मा**' इति प्रकृत्या '**योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः**' इति। आत्मनो देशविशेष-स्थितिख्यापनाय च चन्दनदृष्टान्तः प्रदर्शितः; न तु चन्दनस्य देशविशेषापेक्षा।"

एकदेशवर्तिनस्सकलदेहव्यापिकार्यकरत्वप्रकारं पुनर्हेत्वन्तरेणाह—

## ॥ ६९ ॥ गुणाद्वा लोकवत् ॥ २४ ॥

"**वा** शब्दो मतान्तरव्यावृत्त्यर्थः। आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्याव-स्थितः। अतः आलोकवत्, यथा मणिद्युमणिप्रभृतीनां एकदेशवर्तिनामालोकोऽनेकदेश-व्यापी दृश्यते, तद्वत् हृदयस्यात्मनो ज्ञानं सकलदेहं व्याप्य प्रवर्तते। ज्ञातुः प्रभास्थानीयस्य ज्ञानस्य स्वाश्रयादन्यत्र वृत्तिर्मणिप्रभावदुपपद्यत" इति निश्चीयते।

ननूक्तं ज्ञानमात्रमेवात्मेति तत्कथं ज्ञानस्य स्वरूपव्यतिरिक्तगुणत्वमुच्यत इत्याशङ्क्य तत्राह—

## ॥ ७० ॥ व्यतिरेको गन्धवत् तथा च दर्शयति ॥ २५ ॥

**"यथा पृथिव्याः गन्धस्य गुणत्वेनोपलभ्यमानस्य ततो व्यतिरेकः तथा जानामीति ज्ञातृगुणत्वेन प्रतीयमानस्य ज्ञानस्यात्मनो व्यतिरेकसिद्धिं दर्शयति च श्रुतिः।" 'आलोमभ्य आनखाग्रेभ्यः जानात्येवायं पुरुषः' इति जीवस्य हृद्यायतनत्वं अणुपरिमाणत्वं च व्यपदिश्य देहव्यापित्वमपि व्यवह्रियते।**

'**तत्त्वमसि**' इत्यादौ जीवब्रह्मणोरेकत्वोपदेशात् ब्रह्मवज्जीवस्यापि विभुत्वं किं न स्यादित्याशङ्क्याह—

## ॥ ७१ ॥ पृथगुपदेशात् ॥ २६ ॥

'ईश्वरस्सर्वभूतानां', 'विश्वाधिको रुद्रो महर्षिः', 'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः', 'द्वासुपर्णा' इत्यादिषु जीवब्रह्मणोर्नियम्य-नियामकत्वं, जगज्जीवविलक्षणत्वं, जीवबन्धमोक्षहेतुत्वं, संसारभोक्तृत्वाभोक्तृत्वमित्यादिना पृथगुपदेशात् जीवव्यतिरिक्तस्यैव विभुत्वं सिद्धम् ।

ननु 'यो विज्ञाने तिष्ठन्' इत्यादौ ज्ञानमेवात्मेति व्यपदिश्यत इत्याशङ्क्याह—

## ॥ ७२ ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २७ ॥

"तु शब्दश्शोद्यं व्यावर्तयति । तद्गुणसारत्वात् विज्ञानगुणसारत्वात्- आत्मनो विज्ञानमिति व्यपदेशः । विज्ञानमेवास्य सारभूतो गुणः । यथा 'प्राज्ञस्यानन्दः सारभूतो गुणः' इति प्राज्ञ आनन्दशब्देन व्यवह्रियते । 'यदेष आकाश आनन्दो न स्यात्', 'आनन्दो ब्रह्मेति व्यजानात्' इति । प्राज्ञस्य ह्यानन्दसारभूतो गुणः । 'स एको ब्रह्मण आनन्दः', 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इति । यथा वा 'सत्यं ज्ञानमनन्तं ब्रह्म' इति विपश्चितः प्राज्ञस्य ज्ञानशब्देन व्यपदेशः । 'सह ब्रह्मणा विपश्चिता', 'यस्सर्वज्ञः' इत्यादिषु प्राज्ञस्य ज्ञान संस्कारभूतो गुणः इति विज्ञायते ।"

पुनरुपपत्तिमाह—

## ॥ ७३ ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ २८ ॥

'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषस्समानस्सन्नुभौ लोकावनुसञ्चरति' इति श्रुतिदर्शनात् विज्ञानमयस्य जीवस्य यावदात्मभावित्वात्तेन तद्व्यपदेशो न दोषः । तद्दर्शनात् 'यथा नद्यः स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथा........दिव्यम्' ।

'गताः कलाः पञ्चदश प्रतिष्ठा
देवाश्च सर्वे प्रतिदेवतासु ।
कर्माणि विज्ञानमयश्च आत्मा
परेऽव्यये सर्व एकी भवन्ति ॥'

**'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'** इत्यादिश्रुतिशतेषु स्वाभाविकजीवत्वनिवृत्तिपूर्वकशिवत्वप्राप्तिरूपविदेहमुक्तिपर्यन्तं शिवयोग-शिवध्यान-शिवज्ञाननिष्ठस्य जीवन्मुक्तस्य शिवध्यानसमाधिकालेष्वपि प्रचण्डातपमध्यनिक्षिप्त-कर्पूरदीपवत् शुद्धजीवत्वस्य विद्यमानत्वादणुत्वव्यपदेशो न विरुद्धः। प्रारब्धावसानपर्यन्तं सुप्तपुरुषवत् ज्ञाननिष्ठानां समाध्यनन्तरं पुनरुत्थानदर्शनादिति भावः। जीवस्य विभुत्वा-ङ्गीकारे अणुत्वविभुत्वयोरेकत्वासम्भवान्नदीसमुद्रवज्जीवब्रह्मणोः प्राप्यप्रापकत्वविधायकश्रुतीनां विरोधो दुर्निवारः। किञ्चेश्वरस्यान्तर्यामित्वादिकमपि न सम्भवेत्। जीवस्याणुत्वमन्तः करणोपाधिमात्रमिति चेत्तदसङ्गतम्। **'ज्ञाऽज्ञौ द्वावजावीशानीशौ'** इत्यादिषु भूतसृष्टेः प्रागप्यजातत्वेन जीवस्थित्युपदेशात्। तस्माज्जीवस्याणुत्वं स्वाभाविकमिति निर्धार्यते।

यच्चोक्तं सुषुप्त्यादिषु ज्ञानाभावात् ज्ञानस्य न स्वरूपानुबन्धिधर्मत्वमिति तत्राह—

## ॥ ७४ ॥ पुंस्त्वादिवत्वस्य सतोऽभिव्यक्तियोगात् ॥ २९ ॥

"**तु**शब्दश्चात्र शङ्कानिरासार्थः। स्वज्ञानस्य सुषुप्त्यादिष्वपि विद्यमानस्य जागर्यादि-ष्वभिव्यक्तेस्सम्भवात् स्वरूपानुबन्धिधर्मत्वोपपत्तिः; पुंस्त्वादिवत्; यथा पुंस्त्वाद्यसाधारणस्य धातोर्बाल्यावस्थायां सतोप्यनभिव्यक्तस्य युवत्वेऽभिव्यक्तौ पुंसस्तद्वत्त्वं न कादाचित्कं भवति। सप्तधातुमयत्वं हि शरीरस्य स्वरूपानुबन्धि। **'तत् सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरम्'** इति शरीरस्वरूपव्यपदेशात्। सुषुप्त्यादिष्वप्यहमर्थः प्रकाशत इति प्रागेवोक्तम्। तस्य विद्यमानस्य ज्ञानस्य विषयगोचरत्वं जागर्यादावुपलभ्यते। एते चात्मनो ज्ञातृत्वादयो धर्माः प्रागेवोपपादिताः। अतः प्राज्ञात्पूर्वमेव जीवात्मनः स्वरूपम्। स चायमात्माणुपरिमाणः। **'न प्रेत्यसंज्ञास्ति'** इत्यपि न; मुक्तस्य ज्ञानाभाव उच्यते। अपि तु 'एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति' इति संसारदशायां यद्भूतानुविधायित्वप्रयुक्तं जन्मनाशादिदर्शनं तन्मुक्तस्य न विद्यत" इति **'यथा नद्यः स्यन्दमानाः'** इत्यादि **'जले जलवन्मुक्तदशायां शुद्धजीवस्य तत्प्राप्तित्वदर्शनात्।' "न पश्यो मृत्युं पश्यति न रोगं नो तद्दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः। नोपजनं स्मरन्निदं शरीरम्", 'मनसैतान् कामान् पश्यन् रमते'** इत्यादि श्रुत्यैकार्थ्याच्च" तस्माज्जीवस्याणुत्वं ज्ञातृस्वरूपत्वं चाविरोधम्।

सम्प्रति ज्ञानात्मवादे तस्य सर्वगतत्वे दूषणमाह–

## ॥ ७५ ॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३० ॥

"अन्यथा सर्वगतत्वपक्षे तस्य ज्ञानमात्रत्वपक्षे च नित्यमुपलब्ध्यनुपलब्धी सहैव प्रसज्येयाताम्; अन्यतरनियमो वा। उपलब्धिरेव नित्यं स्यात्; अनुपलब्धिरेव वा १.

एतदुक्तं भवति– लोके तावद्वर्तमानयोरात्मोपलब्ध्यनुपलब्ध्योरयं ज्ञानात्मा सर्वगतो हेतुः स्यात्। उपलब्धेरेव वा अनुपलब्धेरेव वा उभयहेतुत्वे सर्वदा सर्वत्रोभयं प्रसज्येत। यद्युपलब्धेरेव, सर्वस्य सर्वदा सर्वत्रानुपलम्भो न स्यात्। अथानुपलब्धेरेव, सर्वदा सर्वत्रोपलब्धिर्न स्यात्। अस्माकं शरीरस्यान्तरेवावस्थितत्वादात्मनस्तत्रैवोपलब्धिः, नान्यत्रेति व्यवस्थासिद्धिः"।

कारणायत्तोपलब्धेरपि सर्वेषामात्मनां सर्वगतत्वेन सर्वैः करणैस्सर्वदा संयुक्तत्वाद-दृष्टादेरपि अनियमादुक्तदोषस्समानः। तस्मात् पूर्वोक्तमेव युक्तम्।

---

## कर्त्रधिकरणम् ॥ १३ ॥

'अयमात्मा ब्रह्म' इत्यादिश्रुतिषु क्षेत्रज्ञस्यैव ब्रह्मत्वोपदेशात्तस्य कर्तृत्वादिकमनुपपन्नं, तदुपाधिभूतान्तःकरणस्यैव कर्तृत्वादिकमुपपन्नं इत्याशङ्कायां तज्जीवब्रह्मवादकाद्वैतमतनिराकरणार्थमाह—

## ॥ ७६ ॥ कर्ता शास्त्रार्थवत्वात् ॥ ३१ ॥

"अयमात्मा ज्ञाता स चाणुपरिमाण इत्युक्तम्। इदानीं किं स एव कर्ता, उत स्वयमकर्तैव सन् अचेतनानां गुणानां कर्तृत्वमात्मन्यध्यवस्यतीति चिन्त्यते। किमत्र युक्तम्? अकर्तैवात्मेति। कुतः? आत्मनोह्यकर्तृत्वं गुणानामेव च कर्तृत्वं अध्यात्मशास्त्रेषु श्रूयते। तथा हि— कठवल्लीषु जीवस्य 'न जायते म्रियते वा' इत्यादिना जन्म-जरा मरणादिकं सर्वं प्रकृतिधर्मं प्रतिषिध्य हननादिषु क्रियासु कर्तृत्वमपि प्रतिषिध्यते।

'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥' इति।

हन्तारमात्मानं जानन् न जानात्यात्मानमित्यर्थः। तथा च भगवता स्वयमेव जीवस्याकर्तृत्वं स्वरूपम्; कर्तृत्वाभिमानस्तु व्यामोहः, इत्युच्यते।

'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यते।
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ॥
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥' इति।

अतः पुरुषस्य भोक्तृत्वमेव : प्रकृतेरेव तु कर्तृत्वम् । एवं प्राप्ते प्रचक्ष्महे—

कर्ता शास्त्रार्थवत्वात्— इति । आत्मैव कर्ता ; न गुणाः ; कस्मात् ? शास्त्रार्थवत्वात् । शास्त्राणि हि '**यजेत स्वर्गकामः**', '**मुमुक्षुर्ब्रह्मोपासीत**' इत्येवमादीनि स्वर्गमोक्षादिफलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते । न ह्यचेतनस्य कर्तृत्वेऽन्यो नियुज्यते । शासनाच्च शास्त्रम् । शासनं च प्रवर्तनम् । शास्त्रस्य च प्रवर्तकत्वं बोधजननद्वारेण । अचेतनं च प्रधानं न बोधयितुं शक्यम् । अतः शास्त्राणामर्थवत्वं भोक्तृश्चेतनस्यैव कर्तृत्वे सम्भवेत् । तदुक्तं शास्त्रफलं प्रयोक्तरीति । यदुक्तं— '**हन्ता चेन्मन्यते**' इत्यादिना हननक्रियायामकर्तृत्वमात्मनः श्रूयत इति तदात्मनो नित्यत्वेन हन्तव्यत्वाभावादुच्यते । यच्च '**प्रकृतेः क्रियमाणानि**' इत्यादिना गुणानामेव कर्तृत्वं स्मर्यत इति ; तत् सांसारिकप्रवृत्तिष्वस्य कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता, न स्वरूपप्रयुक्तेति प्राप्ताप्राप्तविवेकेन गुणानामेव कर्तृता इत्युच्यते । तथा च तत्रैवोच्यते—

'**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु**' इति ।

तथा तत्रैवात्मनश्च कर्तृत्वमभ्युपेत्योच्यते—

'**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वात् न स पश्यति दुर्मतिः ॥**' इति ।

'**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥**'

इत्यधिष्ठानादिदैवपर्यन्तं सापेक्षे सत्यात्मनः कर्तृत्वे य आत्मानमेव केवलं कर्तारं मन्यते न स पश्यति ।" मूढ इत्यर्थः ।

अस्मिन्नर्थे हेत्वन्तरमाह—

## ॥ ७७ ॥ उपदानाद्विहारोपदेशाच्च ॥ ३२ ॥

"'**स यथा महाराजः**' इति प्रकृत्य '**यमेवैष एतान् प्राणान् गृहीत्वा स्वशरीरे यथा कामं परिवर्तेत**' इति प्राणानां उपादाने विहारे च कर्तृत्वमुपदिश्यते ।"

यदुक्तं बुद्धिप्रकृत्योरेव कतृत्वमितिं तत्र बुद्धेः कर्तृत्वं निराकरोति–

## ७८ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३३ ॥

"'**विज्ञानं यज्ञं तनुते, कर्माणि तनुतेऽपि च**' इति लौकिकवैदिकक्रियासु कर्तृत्वव्यपदेशाच्च कर्ता विज्ञानशब्देन व्यपदिश्यते। अत्र नात्मनो व्यपदेशः, अपि त्वन्तः-करणस्य बुद्धेरिति चेत्, एवं सति निर्देशविपर्ययस्स्यात्। बुद्धेः– करणत्वाद्विज्ञानेनेति करणविभक्तिनिर्देशः स्यात्"। '**तदेषां प्रमाणानां विज्ञानेन विज्ञानमादत्ते**' इत्यत्र बुद्धेः करणत्वं कर्तृत्वं च न प्रतिपद्यते।

क्षेत्रज्ञस्य कर्तृत्वव्यपदेशे सुषुप्तिमूर्छादावपि तत्संभवेत्; तस्माद्ब्रह्मरूपस्य जीवस्य तदसम्भवात्तदन्तःकरणस्यैव कर्तृत्वमुपपन्नं इत्याशङ्कायामाह–

## ७९ उपलब्धिवदनियमः ॥ ३४ ॥

यथाद्वैतमते जीवस्य ज्ञानात्मकब्रह्मरूपत्वेनान्तःकरणस्यैव कर्तृत्वमुपपन्नम्। तत्कर्तृत्वे तु सुषुप्त्यादौ तस्य तददर्शनात् निष्कर्तृत्वमिति यत्तदसङ्गतम्। उपलब्धिवत् यथा सर्वशास्त्रप्रवचनशीलस्य पण्डितस्य शिष्यसान्निध्याभावे तद्विद्याप्रवचनीयकर्तृत्वशक्तिसंकोचः। तथा जीवस्य जडान्तःकरणादिसमायोगेन सर्वकर्तृत्वं तदभावे तच्छक्तिसंकोचश्च अविरुद्धः। तावन्मात्रेण निष्क्रियत्वमयुक्तम्। तस्मात्सर्वकालकर्तृत्वनियमो न सम्भवति। तथापि कर्तृत्वमनिवार्यम्। किञ्च– रथ-प्रासाद-मण्टप-गोपुर-वापी-कूप-तटाकादिनिर्माणकुशलानां तत्साधनाङ्गवत्स्वभावे तत्कर्तृशक्तिसंकोचवत्त्वेपि तेषां तत्कर्तृत्व-शक्तिसत्त्ववत् शरीरेन्द्रियमनःप्राणाद्ययोगे जीवानां स्वनिष्ठकर्तृत्वशक्तिप्रकाशकत्वाभावेऽपि तत्कर्तृत्वशक्तिर्निवार्यते जीवस्यैव तदनङ्गीकारे '**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति**' इत्यादि जीव-कर्तृत्वविधायकबहुश्रुतिविरोधो दुर्निवारः। अतो जडस्यान्तःकरणस्य कर्तृत्वमयुक्तमिति वेदितव्यम्।

जीवस्य सुषुप्त्यादिष्वपि कर्तृत्वशक्तिसत्वे स्वतन्त्रत्वप्रसङ्गात् सुप्तावपि स्वज्ञान-परज्ञानवत्वं च किं न स्यादित्याशङ्कायामाह–

## ॥ ८० ॥ शक्तिविपर्ययात् ॥ ३५ ॥

सुषुप्तौ बुद्ध्यभावाज्जीवस्य स्वपरज्ञानशक्तिसङ्कोचदर्शनादितश्च बुद्धेरेव कर्तृत्वमिति चेन्न । कुतः ? शक्तिविपर्ययात् । '**सुषुप्तिकाले सकले विलीने तमोभिभूतस्सुखरूपमेति**' इत्यादिश्रुतिषु सुप्तौ परमेश्वरमायारूपजडतमश्शक्त्या जीव**शक्तिविपर्ययात्**–तिरोधानात् बुद्धेः कर्तृत्वमनुपपन्नम् । यथा लोके वैश्वानरस्वभावशक्तेर्मणिमन्त्रादिभिः किञ्चित्कालं तिरोहितत्वं, शैत्यस्वभावस्य जलस्य भानुवैश्वानरादिस्पर्शेन स्वनिष्ठशैत्यस्य तिरोहितत्वं, पर्जन्याच्छादनेन प्रभाकरस्य प्रभायाः तिरोहितत्वं, तद्वज्जीवस्य परशिवपाशशक्त्या स्वशक्तिसंकोचेन स्वपरज्ञानयोः तिरोहितत्वम् उपपद्यते । तावन्मात्रेण स्वनिष्ठधर्माणामनन्यसाधारणत्वं वक्तुं युक्तम् ।

किञ्च बुद्धेः कर्तृत्वे कर्तुरन्यस्य भोक्तृत्वानुपपत्तेर्भोक्तृत्वशक्तिरपि तस्यैव स्यादित्यात्मनो भोक्तृत्वशक्तिर्हीयेत । भोक्तृत्वं च बुद्धेरेव सम्पद्यत इति चेदात्मसद्भावे प्रमाणाभावश्च स्यात् '**पुरुषोऽस्ति भोक्तृभावात्**' इति हि तेषामभ्युपगमः । उत बुद्धेः कर्तृत्वे करणशक्तिविपर्ययात् करणशक्तिः वार्येत ; न चेष्टापत्तिः । करणसहितस्यैव कर्तुर्लोके कार्यकारित्वदर्शनात् बुद्धेरपि करणान्तरं कल्पनीयं स्यात् । तथा च नाममात्रे विवादो न वस्तुनि ; करणव्यतिरिक्तस्यैव त्वयापि कर्तृत्वाभ्युपगमात् इति ।

बुद्धेः कर्तृत्वनिराकरणे पुनर्हेत्वन्तरमाह–

## ॥ ८१ ॥ समाध्यभावाच्च ॥ ३६ ॥

बुद्धेः कर्तृत्वे मोक्षसाधनभूतसमाधावपि सैव कर्त्री स्यात् । स च समाधिः '**प्रकृतेरन्योऽस्मि**' इत्येवं प्रकृतिं समाधातुमलम् । अतोप्यात्मैव कर्ता । समाधिर्नाम शिवप्रसादात् शिवयोगेनाविद्यापाशविच्छेदकपरमशिवस्वप्रकाशसाक्षात्कारानुभवकाले शरीरेन्द्रियमनःप्राणादिचेष्टानिर्मुक्तजाग्रत्स्वप्नसुषुप्तिव्यवस्थामतिक्रम्य निष्प्रपञ्चनिरामयपरमतेजःप्रकाशकपरमाकाशशिवतत्त्वमनुसृत्य निर्भरानन्दसमुद्रे निमज्य ज्ञानाज्ञानातीततुर्यातीतावस्थायामपि तदविस्मरणेन प्रचण्डातपमध्यनिक्षिप्तकर्पूरदीपवत्सङ्कल्पविकल्पविहीनशिवाकारितबुद्धिसत्त्वावस्थासमाधिरित्युपदिश्यते । '**स एको ब्रह्मण आनन्दः**' तदानन्दस्यैव निरतिशयत्वं सर्वश्रुतिसिद्धम् । जीवस्य पुण्यपापकर्तृत्वाद्यभावे समाध्यभावात्, तदभावे

'श्रद्धाभक्तिध्यानयोगादवेहि', 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः'–

'आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिं ।
ध्याननिर्मथनाभ्यासात् पाशं दहति पण्डितः ॥'
'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ॥'

इत्यादिबहुश्रुतिसिद्धरेवणसिद्ध-मरुळसिद्धेकोरामसिद्ध-वेमाराध्योद्भटाराध्या[2]दिब्रह्मनिष्ठाचरित - भक्तिवैराग्यश्रद्धाश्रवणमननाद्युपासनाफलभूतमोक्षवैफल्यप्रसङ्गः। न च बुद्धेरेव मोक्ष इति वाच्यम्। '**तत्त्वमसि**' इत्यादिश्रुतिसिद्धजीवब्रह्मैक्यरूपमोक्षनिर्देशो न स्यात्। बुद्धेर्मोक्षकाले जडत्वेन नष्टत्वादात्महननप्रसङ्गः।

ननु चात्मनः कर्तृत्वेऽभ्युपगम्यमाने सदा कर्तृत्वं नोपरमेदित्यत्राह–

## ॥ ८२ ॥ यथा च तक्षोभयथा ॥ ३७ ॥

'वागादिकरणसम्पन्नोऽप्यात्मा यदेच्छति, तदा करोति'; '**यद्धि मनसा ध्यायते तद्वाचा वदति, तत्कर्मणा करोति**' इति श्रुतिरपि तथा व्यपदिशति। '**यदा तु नेच्छति तदा न करोति**' यथा **तक्षा** वश्यादिकरणसन्निधानेऽपि स्वेच्छानुगुण्येन करोति, न करोति च तथा। बुद्धेस्स्वचेतनायाः कर्तृत्वे तस्याः भोगवाञ्छादिनियमकारणाभावात् सर्वदा कर्तृत्वमेव स्यात्। तस्मात्कर्तृत्वं न बुद्धेर्न प्रधानस्येति व्याचक्षते। इच्छायाः चेतनधर्मत्वात् चेतनस्यैव जीवस्य सर्वकर्तृत्वं तक्षादिवदुपपन्नम्। **यथा तक्षा** व्यापारकर्ता, **उभयथा** उभयरूपेण तिष्ठति, एवं जीवोऽपि स्वेच्छया जाग्रत्स्वप्नकालयोः स्थूलसूक्ष्मशरीरविशिष्टस्सन् लौकिकवैदिकव्यापारान् कुर्वन् वैषयिकसुखदुःखमनुभवति। सुषुप्तिकाले शरीरेन्द्रियव्यापारशून्यतया परमशिवतमोरूपपाशशक्तिनिष्ठपरमानन्दमनुभवति। अतश्चेतनस्य जीवस्यैव कर्तृत्वमुपपन्नमिति सिद्धम्।

[1] नीलकण्ठाचार्यादि (ग A)

## परायत्ताधिकरणम् ॥ १४ ॥

जीवस्यैव कर्तृत्वाङ्गीकारे परमेश्वरवत्स्वतन्त्रत्वमर्थात् सिद्धम् । तस्मात्तयोर्वैलक्षण्यं कथमित्याशङ्कायां तत्तारतम्यमाह–

### ॥ ८३ ॥ परात्तु तच्छ्रुतेः ॥ ३८ ॥

तत्राज्ञस्य पुण्यापुण्यकर्तृत्वं **परात्तु** परशिवप्रेरणात्सम्भवति । कस्मात् ? **तत् श्रुतेः** । **'एषह्येव साधु कर्म कारयति'** इति श्रुतेः । तस्मात् जीवस्य न स्वातन्त्र्यम् । अत्र क्षेत्रज्ञस्य कर्तृत्वं स्वातन्त्र्येण ? उत परमात्मायत्तम् ? स परमात्मा शिवो वा नारायणो वेति सन्दिह्यते । परमात्मायत्तत्वे हि विधिनिषेधशास्त्रानर्थक्यं प्रसज्येत । यो हि स्वबुध्या प्रवृत्तिनिवृत्यारम्भशक्तः स एव नियोज्यो भवति । अतस्स्वातन्त्र्येणास्य कर्तृत्वम् । किञ्च–

**'नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।**
**नारायणपरं ज्योतिरात्मा नारायणः परः ॥'**

इत्यारभ्य **'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्थितः ।'** इत्यन्तं नारायणस्य सर्वात्मकत्वसर्वान्तर्यामित्व-सर्वव्यापकत्वादिपरमात्मधर्माणां व्यवस्थापनात्, **'सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनञ्च"** इति **गीतायामपि** तथा व्यपदेशात् । नारायणशब्दस्य शिवे रूढ्यभावात् गौणव्यपदेशे णत्वबाधो दुर्निवारः । तस्माज्जीवस्य नारायणस्य वा कर्तृत्वमुपपन्नमिति प्राप्तेऽभिधीयते–

**परात्तु** इत्यत्र तुशब्दः पक्षं व्यवर्तयति । तत्कर्तृत्वमस्य परात्तु जीवभिन्नेश्वरादेवहेतोर्भवति ; कुतः ? श्रुतेः । **'क्षरं प्रधान ......क्षरात्मनावीशते देव एकः'** **'ईश्वरः सर्वभूतानां', 'अन्तः प्रविष्टः शास्ता जनानां', 'एष ह्येव साधु,**

कर्म कारयति तं यमधो लोकेभ्य उन्निनीषते', 'एष ह्येव साधुकर्म कारयति तं यमभ्यो निनीषते' इति। 'य आत्मनि तिष्ठन्नात्मनोन्तरः यमात्मा न वेद, यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः' इत्यादि-श्रुतिषु शिवस्य सर्वनियामकत्वश्रवणात् न जीवनारायणयोः कर्तृत्वमुपपद्यते। 'सहस्र-शीर्षं देवं' इत्युपक्रम्य "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यन्तेन नारायणस्यैव सर्वान्तर्यामित्वादिकमुपदिश्यत इति यदुक्तं तदयुक्तम्।

### अथ नारायणपदस्य शिवत्वप्रतिपादनम्

**सर्वाधिकरणे** षड्विधतात्पर्यलिङ्गैः पूर्वं तद्बहुधा प्रपञ्चितम्। शिवे नारायणशब्द-रूढ्यभावे—

'सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके।
शरण्ये त्र्यम्बके देवि नारायणि नमोऽस्तु ते॥'

'नारायणी नादरूपा' इत्यादिषु पार्वत्याः नारायणीति रूढिः कथमुपपद्यते? 'नारायणस्य सोदरी नारायणी' इति व्युत्पत्त्या सम्भवतीति चेत्तदसत्; यत्र कुत्रापि तद्वत्प्रयोगादर्शनात्; रुद्रस्य पत्नी रुद्राणी, इन्द्रस्य पत्नी इन्द्राणी इत्यादिषु पत्नीपरत्वस्यैव द्योतनाच्च। नराणां समूहः नारं, नारं अयनं स्थानं यस्य सः **नारायणः**, इत्यादि व्युत्पत्त्या नस्य णत्वबाध इति चेत्तन्न; विष्णोरिव शिवस्यापि रूढत्वात्। 'बादरायणः, उत्तरायणं, रामायणं इत्यादिषु योगरूढ्यापि सम्भवाद्रूढेः किं वक्तव्यम्। '**स एव विष्णुः** स प्राणस्सकालोऽग्निस्स चन्द्रमाः; स एव सर्वं यद्भूतं यच्च भव्यं सनातनं' इति **कैवल्यश्रुतेः**—

'यानि नामानि गोविन्द तव लोके महन्ति वै।
तान्येव मम नामानि नात्र कार्या विचारणा॥'

इति **हरिवंशे** विष्णुं प्रति शिववचनात्, '**ममैषा परमा मूर्तिर्नारायणसमाह्वया**' इति **कूर्मे, ईश्वरगीतायां** च दर्शनात्, **कारणगुणाः कार्ये संक्रामन्तीति** न्यायेन '**आत्मा वै पुत्र नामासि**' इति श्रुतिनिर्देशात् शिवे नारायणपदरूढत्वेऽपि तदंशत्वेन विष्णोऽरपि समुचितम्। किंच **स्कान्दे**—

'आरास्तु निर्धनो ज्ञेयः नाराः किल धनाधिपः ।
तद्यं सद्रूपं ख्यातस वै नारायणः शिवः ॥'

इति णत्वं व्यतिरिक्ततया शिवे प्रयोगदर्शनात्; सर्वथा णत्वबाधवादो ह्यविचारितरमणीयः। गीतायामपि 'ईश्वरस्सर्वभूतानां…… मायया'। तमेव शरणं गच्छ………… भारत' इत्यादिना सर्वभूतनियामकत्वं शिवस्यैव निर्दिष्टम्; निरुपपदेश्वरपदस्य नान्यत्र सिद्धत्वात्। 'सर्वस्य चाहं हृदि सन्निविष्टः' इत्यादिना स्वस्यैव स्वतन्त्रतया कृष्णेन सर्वान्तर्यामित्वादिपरमशिवधर्मोपदेशात् तस्यैवोपपन्नमिति चेत् 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति सूत्रे शास्त्रदृष्ट्या वामदेववत्कृष्णस्य ब्रह्मधर्मोपदेशः अविरुद्ध इति पूर्वमेव निर्दिष्टम्।

नन्वेवं विधिनिषेधशास्त्रानर्थक्यं प्रसज्येतेत्युक्तम्। तत्राह—

## ॥ ८४ ॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ३९ ॥

ईश्वरः क्षेत्रज्ञकृतकर्मापेक्षस्सन्नेव तेषां सुखं दुःखं च ददाति, विहितानां प्रतिषिद्धानां च कर्मणांअवैयर्थ्यादिभ्यः अविरोधादिभ्य इत्यर्थः। अन्यथा विधिनिषेध-शास्त्रस्याप्रामाण्यं स्यात्। सर्वासु क्रियासु पुरुषेण कृतं प्रयत्नमुद्योगमपेक्ष्यान्तर्यामी परमात्मा तदनुमतिदानेन प्रवर्तयति। परमात्मानुमतिमन्तरेणास्य प्रवृत्तिर्नोपपद्यते। कुत एतत्? विहितप्रतिषिद्धावैयर्थ्यादिभ्यः। अत्रादिशब्देनानुग्रहनिग्रहादयो गृह्यन्ते। यथा द्वयोः साधारणे धने परस्वत्वापादनमन्यतरानुमतिमन्तरेण नोपपद्यते; अथापीतरानुमतिः स्वेनैव कृतेति तत्फलं तस्यैव भवति। पापकर्मसु निवर्तनशक्तस्याप्यनुमन्तृत्वं निर्दयत्व-मावहतीति पूर्वमेव प्रतिपादितम्।

"'नन्वेव एष' ह्येव साधुकर्म कारयति। तं यमेभ्यो लोकेभ्य उन्नि-नीषति। एष एवासाधुकर्म कारयति तं यमधो निनीषति' इत्युन्निनीषयाऽधोनि-नीषया च स्वयमेव साध्वसाधुनी कर्मणी कारयतीत्येतन्नोपपद्यत इति चेदुच्यते— एतन्न सर्वसाधारणम्। यस्त्वतिमात्रपरमपुरुषानुकूल्ये व्यवस्थितः प्रवर्तते, तमनुगृह्णन् भगवान् शिवस्स्वयमेव स्वप्राप्त्युपायेषु अतिकल्याणेषु कर्मस्वेव रुचिं जनयति। यश्चातिमात्र-

प्रातिकूल्ये व्यवस्थितः प्रवर्तते, तं निगृण्हन् स्वप्राप्तिविरोधिष्वधोगतिसाधनेषु कर्मसु रुचिं जनयति। तदुक्तं **कृष्णगीतायामपि–**

**'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥'** इत्यारभ्य–

**'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥**

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥'** इति।

तथा– **'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्।'**
इत्यादि **'मामात्मपरदेहेषु विद्विषन्तोऽभ्यसूयकाः॥** इत्यन्तमुक्त्वा–

**'तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।**
**क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु॥'** इति च।"

तथोक्तं भगवता स्वयमेव **शिवगीतासु–**

**'अथ किं बहुनोक्तेन मयैवोत्पादितं जगत्।**
**मयैव पाल्यते नित्यं मया संह्रियतेऽपि च॥'** इत्युपक्रम्य

**'वालाग्रमात्रं हृदयस्य मध्ये**
**विश्वे देवं जातवेदसं वरेण्यम्।**
**तमात्मानं येऽनुपश्यन्ति धीराः**
**तेषां शान्तिश्शाश्वती नेतरेषाम्॥**

**अहं योनिं योनिमधितिष्ठा-**
**म्येकोः मयेदं पूर्वं पञ्चविधं च सर्वम्।**
**मामीशानं पुरुषं देवमीड्यं**
**निचाय्य मां शान्तिमत्यन्तमेति॥**

येनाकारेण ये मर्त्या ममैवैकमुपासते ।
तेनाकारेण तेभ्योऽहं प्रसन्नो वाञ्छितं ददे ॥

विधिनाऽविधिना वापि भक्त्या ये मामुपासते ।
तेभ्यः फलं प्रयच्छामि प्रसन्नोऽहं न संशयः ॥'

'अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥'

'सूर्यो यथा सर्वलोकस्य चक्षुः
न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा
न लिप्यते लोकदुःखेन बाह्यः ॥

'दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥

अभक्ता ये महाबाहो मयि श्रद्धाविवर्जिताः ।
फलं कामयमानास्ते ह्यैहिकामुष्मिकादिकम् ॥
क्षयिष्ण्वल्पं सातिशयं यतः कर्मफलं मतम् ॥

तदविज्ञाय कर्माणि ये कुर्वन्ति नराधमाः ।
मातुः पतन्ति गर्भेषु मृत्युवक्त्रे पुनः पुनः ॥
नानायोनिषु जातस्य देहिनो यस्य कस्यचित् ॥

कोटिजन्मार्जितैः पुण्यैर्मयि भक्तिः प्रजायते ।
स एव लभते ज्ञानं मद्भक्तः श्रद्धयान्वितः ॥

नानाकर्माणि कुर्वाणो जन्मकोटिशतैरपि ।
ततस्सर्वं परित्यज्य मद्भक्तिं समुपाहर ॥

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि राम त्वं तत्कुरुष्व मदर्पणम् ॥
ततः परतरा नास्ति भक्तिर्मयि रघूत्तम ॥' इति ।

---

## अंशाधिकरणम् ॥ १५ ॥

### अथ जीवस्य शिवांशत्वप्रतिपादनम्

एवं जीवस्य ब्रह्मप्रेरितत्वहेतुना च साक्षात्तस्यैव ब्रह्मत्वसाधकाद्वैतमतं निरस्य तदन्तर्भूतजीवालीकत्व-जीवैकत्व-प्रतिबिम्बत्वादिवादं निराकरोति—

## ॥ ८५ ॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्व-मधीयत एके ॥ ४० ॥

पूर्वत्र जीवस्याणुत्व-ज्ञातृत्व-परमशिवायत्तकर्तृत्वादिकं प्रसाध्येदानीं जीवैकत्व जीव-ब्रह्मत्व-जीवालीकत्व-जीवप्रतिबिम्बत्वादिकं अनुपपन्नमवैदिकत्वादिति प्रचक्षते ।

'यथा सुदीप्तात्पावकात् विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः ।
तथाक्षराद्विविधास्सौम्यभावाः प्रजायन्ते तत्र चैवापि यन्ति ॥'

**'मायान्तु प्रकृतिं विन्द्यात्'** इत्यादि श्रुतिशतैर्जीवानां ब्रह्मांशत्वश्रवणात् न जीवैकत्वादिवादो युक्तः; **'नानाव्यपदेशात्'**। **'द्वासुपर्णेत्यादौ'** जीवब्रह्मणोर्भेदव्यपदेशात्, **'अन्यथा चापि'** तत्त्वमस्यादिश्रुतावभेदव्यपदेशाच्च जीवब्रह्मणोर्भेदाभेद एवाङ्गीकर्तव्यः । जीवाः ब्रह्मण अंशा एव; नत्वितरे, श्रुतेर्दृष्टत्वात् । तथापि **'दाशकितवादित्वमधीयत एके,'** एके शाखिनः आथर्वणिकाः ब्रह्मणः दाशकितवत्वं दास्यदासकत्वेन सदा जीव-ब्रह्मणोः भेदमधीयते— वदन्ति । **'ब्रह्मदाशा ब्रह्मदासा ब्रह्मैवेमे कितवाः'** इत्यादि-श्रुत्या मोक्षदशायामपि मुक्तजीवानां ब्रह्मसारूप्यसिद्धानामपि दासत्वे कैङ्कर्यपारतन्त्र्यादिक-मविरोधेन साधयन्ति; सूत्रकारेण एके शाखिन इति तन्मतस्य वेदैकदेशवर्तित्वेन निर्देशात् । संसारदशायां बद्धशुद्धजीवानां परमेश्वरशेष-शेषित्वादिकमुपपन्नमपि मोक्षदशाया पारतन्त्र्यादिकं भयहेतुत्वेन मुक्तजीवानां नाङ्गीकरणीयम् । **'यथा नद्यः'** इत्यादि-श्रुतिषु जीवब्रह्मणोस्स्वरूपैक्योपदेशात् ।

न च भेदाभेदयोर्विरोध इति वाच्यम्। वयं श्रुतिप्रमाणवादिनः, न युक्तिं वदामहे इति पूर्वमेवोक्तत्वात्, श्रुतियुक्त्यनुभववत्वेन जिज्ञासाद्याधिकरणेषु पूर्वमेव बहुधा प्रसाधितत्वाच्च। अद्वैत-विशिष्टाद्वैतमतयोरपि श्रुतिसमन्वयाभावेन भेदाभेदमतच्छायावलम्बनात् गौणत्वेन सर्वश्रुतिसमन्वयो निर्दिष्टः। [1]तार्किकादिकेवलभेदवादिनां बौद्धादिवत्सर्वश्रुतिसमन्वयाभावात् तन्मतं सुतरामसङ्गतम्।

"इदानीं किमयं जीवः परस्मादत्यन्तभिन्नः? उत परमेव ब्रह्म भ्रान्तम्, उत ब्रह्मैवोपाध्यवच्छिन्नम्? अथ ब्रह्मांशः? इति संशय्यते। श्रुतिविप्रतिपत्तेः संशयः।

ननु 'तदनन्यत्वं', 'अधिकन्तु भेदनिर्देशात्' इत्यत्रैवायमर्थो निर्णीतः। सत्यम्! स एव नानात्वैकत्वश्रुतिविप्रतिपत्त्या आक्षिप्य जीवस्य ब्रह्मांशत्वोपपादनेन विशेषतो निर्णीयते। यावद्धि जीवस्य ब्रह्मांशत्वं न निर्णीतं, तावज्जीवस्य ब्रह्मणोऽनन्यत्वं ब्रह्मणस्तस्मादधिकत्वं च न प्रतितिष्ठति। किं तावत्प्राप्तम्?

अत्यन्तभिन्न इति। कुतः? 'ज्ञाऽज्ञौ द्वावजावीशनीशौ' इत्यादिना भेदनिर्देशात्। ज्ञाऽज्ञयोरभेदश्रुतयस्तु, अग्निना सिञ्चेदितिवत् विरुद्धार्थप्रतिपादनादौपचारिक्यः। ब्रह्मणोंऽशो जीव इत्यपि न साधीयः। एकवस्त्वेकदेशवाची ह्यंशशब्दः। जीवस्य ब्रह्मैकदेशत्वे तद्गता दोषा ब्रह्मणि भवेयुः। न च ब्रह्मखण्डो जीव इत्यंशत्वोपपत्तिः। खण्डनानर्हत्वाद्ब्रह्मणः, प्रागुक्तदोषप्रसङ्गाच्च। तस्मादत्यन्तभिन्नस्य च तदंशत्वं दुरुपपादम्।

यद्वा, भ्रान्तं ब्रह्मैव जीवः। कुतः, 'तत्त्वमसि', 'अयमात्मा ब्रह्म' इत्यादौ ब्रह्मात्मभावोपदेशात्। नानात्ववादिन्यस्तु प्रत्यक्षादिसिद्धार्थानुवादित्वादनन्यथासिद्धाद्वैतोपदेशपराभिः श्रुतिभिः प्रत्यक्षादय इव अविद्यान्तर्गताः ख्याप्यन्ते।

अथवा ब्रह्मैवानाद्युपाध्यवच्छिन्नं जीवः। कुतः? तत एव ब्रह्मात्मभावोपदेशात्। न चायमुपाधिर्भ्रान्तिनिरिकल्पित इति वक्तुं शक्यम्; बन्धमोक्षादिव्यवस्थानुपपत्तेरिति प्राप्तेऽभिधीयते ब्रह्मांश इति—

---

[1] मध्वादि (ग A) (ज)

कुतः ? नानाव्यपदेशात् ; अन्यथा च एकत्वेन व्यपदेशात् । उभयथा हि व्यपदेशो दृश्यते । नानात्वव्यपदेशस्तावत् स्रष्टृत्व-सृज्यत्व-नियन्तृत्व-नियाम्यत्व, सर्वज्ञत्वा-ज्ञत्व, स्वाधीनत्व-पराधीनत्व,- शुद्धत्वाशुद्धत्व, कल्याणगुणाकरत्व-तद्विपरीतत्व, पतित्व-शेषत्वादिभि-र्दृश्यते । अन्यथा च– अभेदेन व्यपदेशोऽपि, 'तत्त्वमसि', 'अयमात्मा ब्रह्म' इत्यादिभिर्दृश्यते । अपि दाशकितवादित्वमधीयत एके । 'ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवाः' इत्याथर्वणिका ब्रह्मणो दाशकितवादित्वमप्यधीयते । ततश्च सर्वजीवव्यापित्वेनाभेदो व्यपदिश्यत इत्यर्थः । एवमुभयव्यपदेशमुख्यत्वसिद्धये 'जीवोऽयं ब्रह्मणोंश' इत्यभ्युप-गन्तव्यः । न च भेदव्यपदेशानां प्रत्यक्षादिप्रसिद्धार्थत्वेनान्यथासिद्धत्वम् । ब्रह्मसृज्यत्व-तन्नियाम्यत्व-तत्प्रकाशकत्व-तच्छेषत्व-तदाधारत्व-तत्पाल्यत्व-तत्संहार्यत्व- तदुपासकत्व-तत्प्रसादलभ्य-धर्मार्थ-काम-मोक्षरूपपुरुषार्थभोक्तृत्वादयः तत्कृतश्च जीवब्रह्मणोर्भेदः प्रत्यक्षाद्यगोचरत्वेनानन्यथा-सिद्धः । अतो न जगत्सृष्ट्यादिवादिनीनां प्रमाणान्तरसिद्धभेदानुवादेनमिथ्यार्थोपदेशपरत्वम् । न चाखण्डैकरसचिन्मात्रस्वरूपेण ब्रह्मणा आत्मनोऽतद्भावानुसन्धाने बहुभवनसङ्कल्पपूर्वक-वियदादिसृष्टिं, जीवभावेन तत्प्रवेशं, विचित्रनामरूपव्याकरणं तत्कृतानन्तविषयानुभवनिमित्त-सुखदुःखभागित्वं अभोक्तृत्वेन तत्र स्थित्वा तन्नियमनेनान्तर्यामित्वं, जीवभूतस्य स्वस्य कारण-ब्रह्मात्मभावानुसन्धानं, संसारमोक्षं, तदुपदेशशास्त्रं च कुर्वाणेन भ्रमितव्यमित्युपदिश्यते ; तथा सत्युन्मत्तप्रलापितत्वापातात् ।

उपाध्यवच्छिन्नं ब्रह्म जीव इत्यपि न साधीयः ; पूर्वनिर्दिष्टनियाम्यत्वादिव्यपदेश-बाधादेव । न हि देवदत्तादेरेकस्यैव गृहाद्युपाधिभेदात् नियन्तृनियाम्यभावादिसिद्धिः । अतः उभयव्यपदेशोपपत्तये जीवोऽयं ब्रह्मणोंश' इत्यभ्युपेयम्[1] ।"

तस्माद्वेदमार्गावलम्बिना मुख्यत्वेन सर्वश्रुतिसमन्वयाख्यं द्वैताद्वैतमतमेवाङ्गीकर्तव्यमिति निश्चीयते । स्मृतावपि–

'शिवस्सत्यं जगत्सत्यं जीवस्सत्यं स्वभावतः ।
तेषामभेदः सत्यो वा क्रिमिभ्रमरयोरिव ॥'

इति स्मरणात्तदेव रमणीयम् ।

---

[1] अभ्युपेतव्यम् (ग. A)

'अयमात्मा ब्रह्म' इत्यादिश्रुतिषु जीवस्यैव ब्रह्मत्वोपदेशात् 'ब्रह्मदाशा ब्रह्मदासा' इत्यादि [1]भेदश्रुतीनां रज्जुसर्पवत्कल्पितत्वमेवोपदिश्यत इत्याशङ्कयामाह—

### अथ जीवबहुत्वसमर्थनम्

### ॥ ८६ ॥ मन्त्रवर्णात् ॥ ४१ ॥

'मायां तु प्रकृतिं विन्द्यात् मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥'

'पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि' इत्यादि मन्त्रवर्णाच्च शिवांशो जीवः, मायायाः प्रकृतित्वं तदवच्छिन्न महेश्वरस्य तदवयवभूतोत्थत्वं सर्वस्य जगतो दर्शयति । तस्मान्मायिनः परमशिवस्यावयवलेशः पुरुषो जीवः ।

किञ्च— अंशवाची हि पादशब्दः । विश्वाभूतानीति जीविनां बहुत्वाद्बहुवचनम् । मन्त्रे सूत्रे च अंश इत्येकवचनं जात्यभिप्रायम् । आत्मश्रुतेरित्यत्राप्येकवचनं जात्यभिप्रायम् । 'नित्योऽनित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान्' इत्यादि श्रुतिभ्यः ईश्वराद्भेदस्य आत्मनां बहुत्व-नित्यत्वयोश्चाभिधीयमानत्वादेवं नित्यानामात्मनां बहुत्वे प्रामाणिके सति ज्ञानस्वरूपत्वेन सर्वेषामेकत्वेऽपि [2]भेदकाकारः आत्मायाथात्म्यवेदनक्षमैरवगम्यते । असन्ततैश्चाव्यतिकरः इत्यनन्तरमेव चात्मबहुत्वं वक्ष्यति । तस्मादात्मैकत्वाद्वैतवाद अयुक्तः ।

एतदर्थे पुनर्हेत्वन्तरमाह—

### ॥ ८७ ॥ अपि च स्मर्यते ॥ ४२ ॥

'सत्यज्ञानात्मकोऽनन्तो विभुरात्मा महेश्वरः ।
तस्यैवांशो जीवलोको हृदये प्राणिनां स्थितः ॥
विस्फुलिङ्गा यथा वह्नौ जायन्ते काष्ठयोगतः ।
अनादिवासनायुक्ताः क्षेत्रज्ञा इति ते स्मृताः ॥'

इति शिवगीतायां,

---

[1] भेदश्रुतीनां रज्जुसर्पवत्कल्पितत्वमेवोपदिश्यत इति 'गA' प्रतौ न दृश्यते ।

[2] भेदाकारः 'गA'

'ममैवांशो जीवलोके जीवभूतस्सनातनः
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन सर्वभूतानि यन्त्रारूढानि मायया॥'

इति कृष्णगीतायां च जीवानां ईश्वरांशत्वं तद्बहुत्वं चोपदिष्टम्। 'यतो वा इमानि भूतानि जायन्ते" इत्यादिना तैत्तिरीयशाखायामपि जीवबहुत्वं दृश्यते। अतः जीवाळीकत्व-जीवैकत्व-जीवब्रह्मत्ववादो ह्ययुक्तः।

## अथ शिवस्य विष्णुवल्लभत्वप्रतिपादनम्

ननु 'पादोऽस्य विश्वा भूतानि' इति विष्णुपरत्वविधायकपुरुषसूक्ते दर्शनात्; 'ममैवांशो जीवलोके' इति कृष्णगीतायां कृष्णस्य स्वांशत्वेन जीवनिर्देशात् "हरिः ओम्" इति वेदवेदान्तोच्चारणे प्राथमिकत्वेन विष्णुस्मरणविधानात् 'वेदवाक्यानि सर्वाणि हरिनामानि वै स्मृताः' इति कपिलस्मृतिश्रवणाच्च जीवानां विष्ण्वंशत्वमेवेति चेन्न-पूर्वोक्तबहुश्रुतिस्मृतिविरोधात्, प्रथमाध्यायप्रथमपादे पुरुषसूक्त-कृष्णगीताभिप्रायस्य बहुधा प्रपञ्चितत्वात्, मूर्तित्रयान्तर्भूतस्य नारायणस्य जीवपदवाच्यस्य सर्वजीवांशत्व प्रतिपादने सर्वश्रुतिविरोधात्। 'एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः' इति श्रुतौ,

'विष्ण्वाद्युत्तमदेहेऽषु प्रविष्टा देवता भवेत्।
मनुष्याधमदेहेषु प्रविष्टो मानवो भवेत्॥'

इति श्रुतावपि विष्णोः जीवत्वावगमात्। शिववन्मूर्तित्रयातीतत्वस्य प्रात्यक्षिकश्रुतिषु विष्णोरदर्शनात्, शिवस्य सर्वात्मकत्वेन सर्वशब्दवाच्यत्वाद्विष्णुशब्दस्यापि पर्यायत्वेन शिववाचकत्वाङ्गीकारे शङ्खचक्रोर्ध्वपुण्ड्रावच्छिन्नजगन्मोहकविग्रहपरत्वायोगाच्च जीवानां शिवांशत्वमेवाभिधीयते।

'हरि ओं' इत्यत्र प्राथमिकविष्णुशब्दद्योतनाद्वेदस्य विष्ण्वात्मकत्वमिति यत्तदविचारितरमणीयम्। 'सर्वो वै रुद्रः' 'शिवोमावेव पितरः, 'ईशानः सर्वविद्यानां' इत्यादि

श्रुतिष्वतेषु,

'वेदशिवो शिवो वेदः वेदाध्यायी सदाशिवः ।' 'नारुद्रः क्रमपाठकः' इत्यादिस्मृतिषु च सर्वात्मकत्व-सर्वश्रुतिजनकत्व-सर्ववेदनियामकत्वादेः शिवस्यैव दर्शनान्नान्येषां तद्वत्वं युक्तम् । तस्मात् 'हरिः ओ' इति वाक्ये हरिशब्दाभिधान-विष्णुविशिष्टस्य ओङ्कार-वाच्यस्य शिवस्यैवोच्चारणमुपदिष्टम् । 'यो वेदादौ स्वरः' इति स्मृतौ निरुपपदोंकार-मात्रस्यैव वेदाद्यन्तयोरुच्चारणे श्रौतविधिः श्रूयते । 'ओमित्येतदक्षरमिदं सर्वं' इत्युपक्रम्य 'प्रपञ्चोपशमशिवोऽद्वैत एवमोंकारस्संविशत्यात्मनात्मानं य एवं वेद' इत्यन्तेन सर्ववेदान्तप्राधान्यमाण्डूक्योपनिषदि शिवस्य प्रणवात्मकत्वं प्रणवार्थवाच्यत्वं प्रणवा-तीतत्वं च निर्दिष्टम् । तथा 'ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्' इति तैत्तिरीये; 'अकारो ब्रह्मा उकारो विष्णुर्मकारः कालकालो ह्यर्धमात्रः परमशिवस्तस्मात् ओंकारं लिङ्गमाहुः' इति सामश्रुतावपि प्रणवात्मकत्वं तस्य स्पष्टमुपदिष्टम् ।

'परात्परतरो ब्रह्मा तत्परात्परतो हरिः ।
यत्परात्परतोऽधीशः तन्मे मनः शिवसङ्कल्पमस्तु ॥'

इति श्रुतिदर्शनात् विष्णोरुपरि प्रणवात्मकशिवोच्चारणं युक्तमेव; 'अर्धो वा पत्नी एषात्मनो गृहेषु' इति श्रुतिदर्शनात् । 'नमो भगवते रुद्राय विष्णवे मृत्युर्मे पाहि' इति श्रुतिनिर्देशात्, 'शिवाय विष्णुरूपाय शिवरूपाय विष्णवे' इति स्मृतिदर्शनात्, "ममैषा परमा मूर्तिर्नारायणसमाह्वया' इति कूर्मे ईश्वरगीतायां च श्रवणात् विष्णोश्शिवशरीरत्वमविरोधम् ।

'शिवस्य शक्तिर्विनियोगकाले
चतुर्विधाऽभूच्छिवसत्प्रसादात् ।
भोगे भवानी समरे च दुर्गा
क्रोधे च काली पुरुषेषु विष्णुः ॥'

इति सामशाखायां विष्णोः पार्वत्यंशत्वोपदेशात्, 'शङ्करः शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभः' इति शिवाष्टोत्तरशतनामावल्यां, 'वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियं' इति स्कान्दे विष्णुवल्लभत्वं तत्प्रियत्वं च निर्दिष्टम् । तस्मात् चन्द्र-चन्द्रिकावद्विष्णुशब्दानुस्यूतत्वं प्रणवात्मकशिवस्य समुचितम् । 'शिवकेशवसम्भूतं कलये

कालभैरवं' इति **वैयासिकस्कान्दादि** पुराणवचनश्रवणाद्विष्णुवल्लभत्वं तस्य निष्प्रत्यूहम्। शिवस्य गौरीपतित्वस्यैव मुख्यत्वेन स्वीकारात् तदुच्चारणमेव वेदाद्यन्तयोरभिहितमिति चेत्। **'योषा जारमिव प्रिया'** इति लोके **वेदेषु** स्त्री-पुरुषाणां परस्त्रीपुरुषयोरेव परस्परपरमप्रेमास्पदत्वस्वभावद्योतनात्, यागादिष्विन्द्राह्वाने **अहल्याजारेतीन्द्रस्य शचीपति**त्वेऽपि तदानन्दकत्वेन तद्व्यपदेशात् तद्वद्विष्णुशब्दानुस्यूतत्वस्य शिवप्रेमास्पदत्वात् विष्णोर्गौरीशत्वादंशांशिनोरभेदाच्च **'हरिः ओम्'** वेदाद्यन्तयोरुच्चारणं समञ्जसम्।

जीवस्यांशत्वे ब्रह्मैकदेशत्वेन जीवगलदोषाः ब्रह्मण एवोपपद्यन्ते इत्याशङ्कायामाह—

## ॥ ८८ ॥ प्रकाशादिवत्तु नैवं परः ॥ ४३ ॥

"**तु** शब्दश्चोद्यं व्यावर्तयति। **प्रकाशादिवत्** जीवः परमात्मनोंशः; यथा- अग्न्यादित्यादेर्भास्वतो भारूपः प्रकाशः अंशो भवति; यथा गवाश्वशुक्लकृष्णादीनां गोत्वादि- विशिष्टानां वस्तूनां गोत्वादीनि विशेषणान्यंशाः; यथा वा देहिनो देवमनुष्यादेर्देहोंशः; तद्वत्। एकवस्त्वेकदेशत्वं ह्यंशत्वम्। विशिष्टस्यैकस्य वस्तुनो विशेषणमंश एव। तथा च विवेचका विशिष्टे वस्तुनि विशेषणांशोऽयं विशेष्यांशोयमिति व्यपदिशन्ति। विशेषण-विशेष्ययोरंशांशित्वेऽपि स्वभाववैलक्षण्यं दृश्यते। एवं जीव-परमयोर्विशेषण-विशेष्ययो- रंशांशित्वं स्वभावभेदश्चोपपद्यते। तदिदमुच्यते, नैवं पर इति। **यथा** भूतो जीवः, न तथा भूतः परः। यथैव हि प्रभायाः प्रभावान् अन्यथाभूत; तथा प्रभास्थानीयात् स्वांशात् जीवादंशी शिवः परोप्यर्थान्तरभूत इत्यर्थः। एवं जीवपरयोर्विशेषण-विशेष्यत्व- कृतं स्वभाववैलक्षण्यमाश्रित्य भेदनिर्देशाः प्रवर्तन्ते। अभेदनिर्देशास्तु पृथक् सिध्यनर्ह- विशेषणानां विशेष्यपर्यन्तत्वमाश्रित्य मुख्यत्वेन उपपद्यन्ते। **'तत्त्वमसि'**, **'अयमात्मा ब्रह्म'** इत्यादिषु तच्छब्द ब्रह्मशब्दवत् **'अयमात्मेति'** शब्दा अपि; जीवान्तर्यामि- ब्रह्मवाचकत्वेन एकार्थाभिधायित्वादित्ययमर्थः प्रागेव प्रपञ्चितः।"

जीवदुःखेनेश्वरदुःखाभावे स्मृतिमप्याह—

## ॥ ८९ ॥ स्मरन्ति च ॥ ४४ ॥

'तत्र यः परमात्मासौ स सत्यो निर्गुणः स्मृतः ।
न लिप्यते फलैश्चापि पद्मपत्रमिवांभसा ॥'
'कर्मात्मात्वपरो योऽसौ मोक्षबन्धैस्स युज्यते ।'
'विग्रहं देवदेवस्य जगदेतच्चराचरं ।
एवमर्थं न जानन्ति पशवः पापगौरवात् ॥'

इति "प्रभा-प्रभावद्रूपेण शक्ति-शक्तिमद्रूपेण चांशांशिभावं जीव-ब्रह्मणोः **पराशरादयः** स्मरन्ति ।

'एकदेशस्थितस्याग्नेर्ज्योत्स्नाविस्तरिणी यथा ।
परस्य ब्रह्मणश्शक्तिस्तथेदमखिलं जगत् ॥' "

इति जीवदुःखेनादुःखित्वमीश्वरस्य स्मरन्तीत्यर्थः । च शब्देन **'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति'** इत्यदिका श्रुतिस्सूचिता ।

"एवं ब्रह्मांशत्वे ब्रह्मप्रवर्त्यत्वे ज्ञत्वे च सर्वेषां समाने केषांचिद्वेदाध्ययनतदर्थानुसन्धानाद्यनुज्ञा, केषांचित्परिहारः, केषांचिद्दर्शनस्पर्शनाद्यनुज्ञा, केषांचित्परिहाराश्च शास्त्रेषु कथमुपपद्यत इत्याशङ्क्याह–"

## ॥ ९० ॥ अनुज्ञापरिहारौ देहसम्बन्धज्योतिरादिवत् ॥ ४५ ॥

"सर्वेषां ब्रह्मांशत्वादिनैकरूपत्वे सत्यपि ब्राह्मण-क्षत्रिय-वैश्य-शूद्र-रूपशुच्यशुचिदेहसम्बन्धनिबन्धनौ अनुज्ञापरिहारावुपपद्येते ; **ज्योतिरादिवत्**– यथाग्नेरग्नित्वेनैकरूपत्वेऽपि श्रोत्रियागारादग्निराह्रियते, श्मशानादेस्तु परिह्रियते, यथा चान्नादिश्श्रोत्रियादेरनुज्ञायते, अभिशस्तादेस्तु परिह्रियते ।"

ननु तथापि सर्वशरीरेषु कर्मकर्तुश्चेतनस्यैकत्वाद्देवदत्तशरीरावच्छेदेन कर्मकारणधर्मादिकं यज्ञदत्तशरीरावच्छेदेन न ज्ञायते इत्याशङ्क्याह–

## ॥ ९१ ॥ असन्ततेश्चाव्यतिकरः ॥ ४६ ॥

ब्रह्मांशत्वादिनैकरूपत्वे सत्यपि जीवानामन्योन्यभेदात् अणुत्वेन प्रतिशरीरं भिन्नत्वाच्च भोगव्यतिकरोऽपि न भवति। भ्रान्तब्रह्मजीववादे चोपहितब्रह्मजीववादे च जीवानां भोगव्यतिकराभाव उक्तः।"

उत परिच्छिन्नस्य देवदत्तस्यात्मनः कर्तुः यज्ञदत्तशरीरासन्तन्तेः सम्बन्धधर्मादिरसङ्करः ब्रह्मज्ञानापन्नानां जीवन्मुक्तानां विदेहमुक्तिपर्यन्तं देहाद्युपाधिभेदेन जीवानामणुरूपत्वेन परिच्छिन्नत्वादव्यतिकरः। बद्धजीववत्सुखदुःखात्मकप्रारब्धभोगसत्वेऽपि असाङ्कर्यं शिवज्ञानाधिक्येन च सांसारिकबद्धशुद्धवैलक्षण्यं सम्भवति। तदुक्तं **शिवागमे** –

**बद्धशुद्धादिभेदेन जीवत्रयमिदं स्मृतम्।**
**गुरुदीक्षाविहीनश्च शिवभक्तिविवर्जितः॥**

**स्वकर्तृत्वाभिमानी तु बद्धस्स पशुरुच्यते।**
**गुरुदीक्षां परं लब्ध्वा कैङ्कर्यत्रयसंयुतः॥**

**शान्त्यादिसद्गुणोपेतो मुमुक्षू रागवर्जितः।**
**शिवाधीनसुधीर्भक्तः शुद्धजीव इति स्मृतः॥**

**शिवयोग-शिवज्ञानविभवानन्दसंयुतः।**
**प्रचण्डातपमध्यस्थशुद्धकर्पूरदीपवत्।**

**शिवाकारे पराकारे कोटिसूर्यप्रकाशके।**
**विलीनचित्तवृत्तिस्तु मुक्तजीव इति स्मृतः॥**
**सजीवन्मुक्त इत्युक्तो रागद्वेषविवर्जितः।"**

इति स्पष्टमुपदिष्टम्।

ननु भ्रान्तब्रह्मजीववादेऽप्यविद्याकृतोपाधिभेदाद्भोगव्यवस्थादय उपपद्यन्ते न स्वतःसम्भवन्तीत्याशङ्कायामाह–

## ॥ ९२ ॥ आभास एव च ॥ ४७ ॥

"अखण्डैकरसप्रकाशमात्ररूपस्य स्वरूपतिरोधानपूर्वकोपाधिभेदोपपादनहेतुराभास एव। प्रकाशैकस्वरूपस्य प्रकाशतिरोधानं प्रकाशनाश एवेति प्रागेवोपपादितम्।: आभास एवेतिवा पाठः। तथा सति हेतव आभासाः। चकारात् **'पृथगात्मानं प्रेरितारं च मत्वा', 'ज्ञाऽज्ञौ द्वावजावीशानीशौ' 'तयोरन्यः पिप्पलं स्वाद्वत्ति'** इत्यादिश्रुतिविरोधश्च। अविद्यापरिकल्पितोपाधिभेदे हि सर्वोपाधिभिरुपहितस्वरूपस्यैकत्वाभ्युपगमाद्भोगव्यतिकरस्तदवस्थ एव।"

किञ्च जीवानामन्तःकरणप्रतिबिम्बत्वाङ्गीकारे बिम्बप्रतिबिम्बभावयोरेकत्रावस्थानादर्शनात्। **'गुहां प्रविष्टौ परमे परार्धे', 'गुहां प्रविष्टावात्मनौ हि तद्दर्शनात्'** इत्यादिश्रुतिसूत्रविशिष्टगुहाधिकरणविरोधाच्च तदविचारितरमणीयम्।

पारमार्थिकोपाध्युपहितब्रह्मजीववादेऽप्युपाधिभेदे हेतुभूतानामदृष्टवशाद्व्यवस्था भविष्यतीत्याशङ्क्याह—

## ॥ ९३ ॥ अदृष्टानियमात् ॥ ४८ ॥

"उपाधि परम्पराहेतुभूतस्यादृष्टस्यापि ब्रह्मस्वरूपाश्रयत्वेन नियमहेत्वभावादव्यवस्थैव। उपाधिभिरदृष्टैश्च स्वसम्बन्धेन ब्रह्मस्वरूपोच्छेदसम्भवात्।"

किञ्च **अद्वैतमते** जीवानां विभुत्वेन सर्वेषां प्रतिबिम्बभूतस्वशरीरेषु विद्यमानत्वाददृष्टानियमात् अदृष्टानां पुण्यपापानामनियमात् नियमाभावात्; केषांचिद्दारिद्र्यं केषांचिदैश्वर्यमिति व्यवस्था न स्यात्। तस्माज्जीवानामणुत्वं बहुत्वं प्रतिशरीरस्वाभाविकभिन्नत्वं चाङ्गीकर्तव्यम्।

ननु 'इदं फलं प्राप्नुयां' 'इदं हरिष्यामि' 'इदं करिष्यामि' 'इदं न करिष्ये' इत्येवंरूपाभिसन्ध्यादयः प्रत्यात्मनियतास्सन्तः स्वयोज्यदृष्टनियमहेतवो भविष्यन्ति इत्याशङ्क्याह—

## ॥ ९४ ॥ अभिसन्ध्यादिष्वपि चैवम् ॥ ४९ ॥

**अभिसन्ध्यादिष्वपि** रागद्वेषादिसाधारणमनस्संयोगसाध्येष्वप्येवमनियमः। तथा च केषांचिज्जीवानां रागवत्त्वं, केषांचित्-द्वेषवत्त्वमिति व्यवस्था न स्यात्। तस्माददृष्टहेतु-

भूताभिसन्ध्यादिष्वप्युक्तादेव हेतोरनियम इति भावः। ननु 'एष एव साधुकर्म कारयति' इत्यादिश्रुतिषु जीवानां स्वातन्त्र्याभावव्यपदेशाज्जीवकृतपुण्यापुण्यफलभोक्तृत्व-मीश्वरस्यैव सम्भवति। तस्य कर्माधीनप्रेरकत्वं कर्मणामनादित्वमिति चेत्तस्यास्वतन्त्रत्वेन कर्मजीवोभयप्रेरकत्वेन च विहिताविहितफलभोक्तृत्वं नेतरस्यैवेति चेन्न— जीवानामीश्वर-वत्सर्वज्ञत्वाभावेऽपि ज्ञेयत्वेन घटपटादिवज्जडत्वाभावात्, राजभृत्यवदीश्वराधीनत्वेऽपि स्वेच्छा-कर्मकर्तृत्वं सम्भवति। तस्मात्तेषामेव पुण्यापुण्यफलभोक्तृत्वमनिवार्यम्। 'ज्योतिष्टो-मेन स्वर्गकामो यजेत', 'कर्मचितो लोकः क्षीयते', 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्', 'सत्यं वद', 'धर्मं चर', इत्यादिश्रुतिशतेषु,

'किंचित्कर्ता च किंचिज्ज्ञो बद्धानादिशरीरवान्।
ईक्षणादिप्रवेशान्तं सृष्टिरीशेन कल्पिता।
जाग्रदादिप्रपञ्चस्य सृष्टिर्जीवेन कल्पिता॥'

इत्यादिस्मृतिष्वपि जीवकर्तृत्वं स्पष्टमुपदिष्टम्।

किञ्च— प्रभाकरप्रभानुस्यूतत्वेन पशुपक्षिमृगकीटादिचेतनव्यवहारसम्भवेऽपि न तेषां कर्तृत्वहानिः। तद्वदीश्वरनियामकत्वेऽपि चेतनत्वेन जीवानां किञ्चित्कर्तृत्वमविरोधम्। नो चेत् पूर्वोदाहृतश्रुत्युक्त्यनुभवविरोधप्रसङ्गः। तस्माज्जीवेश्वरयोरुभयोः कर्तृत्वविधायकश्रुतीना-मविरोधः।

जीवानां ब्रह्मांशत्वेन परिच्छिन्नत्वात् अंशांशिनोरभेदात् तस्यैव सुखदुःखव्यवस्थोप-पद्यत इत्याशङ्क्याह—

## ॥ ९५॥ प्रदेशभेदादिति चेन्नान्तर्भावात् ॥ ५० ॥

"यद्यपि एकमेव ब्रह्मस्वरूपम्; तत् छेदानर्हं नानाविधोपाधिभिः सम्बध्यते— तथाप्युपाधिसम्बन्धे ब्रह्मप्रदेशभेदादुपपद्यत एव भोगव्यवस्थेति चेत्— तन्न, उपाधीनां तत्र तत्र गमनात् सर्वप्रदेशानां सर्वोपाध्यन्तर्भावात् व्यतिकरस्तदवस्थ एव। प्रदेशभेदेन सम्बन्धेऽपि सर्वस्य ब्रह्मप्रदेशत्वात्, तत्तत्प्रदेशसंबन्धदुःखं ब्रह्मण एव स्यात्"।

अतो ब्रह्मण उपाधिवशेन जीव इति वादो ह्यविचारितरमणीयः। 'यतो वा इमानि भूतानि जायन्ते', 'ज्ञाज्ञौ द्वावजावीशानीशौ' इति श्रौतविधिनिरोधेन

'उत्पत्त्यसम्भवात्' इत्यादिसूत्रेषु भगवता **बादरायणेन** पूर्वमेव जीवानामजन्यत्वोपदेशात्। अत्र '**अंशो नानाव्यपदेशात्**' इत्यादिना तेषां ब्रह्मांशत्वोपदेशेन च प्रळये ब्रह्मानुप्रविष्टानामकल्पितानां स्वभावभिन्नानां सृष्टिकाले पुनराविर्भूतत्वमात्रेण ब्रह्मांशत्वमित्यङ्गीकारादवयवावयविवदंशांशित्वं नोपपद्यते। यथा लोके नानाविधपूर्ववासनाबद्धपुरुषशरीरानुप्रविष्टशुक्लरूपेण स्त्रीगर्भानुस्यूतोत्पन्नपुत्रस्य '**आत्मा वै पुत्रनामासि**' इति स्वांशत्वमुपदिष्टम्। तथास्मन्मते प्रळये ब्रह्मानुप्रविष्टजीवबहिर्भूतमात्रत्वेन स्वांशत्वाङ्गीकारात् जन्यत्वाजन्यत्वबोधकश्रुतिसूत्रबाधो न संयुज्यते। तस्मात् '**तयोरन्यः पिप्पलं स्वाद्वत्ति**' इत्यादिश्रुतिसिद्धजीवभोक्तृत्वमविरुद्धम्। अत एव प्रदेशविशेषेण अंशांशिनोरभेदतया ब्रह्मांशत्वेन जीवानां सुखदुःखभोक्तृत्वे ब्रह्मणः परमशिवस्य भोक्तृत्ववादो निराकृतः। '**सोऽन्तरादन्तरं प्राविशत्**', '**अन्तः प्रविष्टः शास्ता जनानाम्**', '**ईशानः सर्वविद्यानां**' इत्यादिश्रौतविधिना जीवान्तर्यामित्वेन जीवनियामकत्वाङ्गीकारात् जीवकृतकर्मसिद्धेष्टानिष्टफलभोक्तृत्वं नेश्वरस्येति निर्णीयते।

इति श्रीमद्यतिव्रजपरिवृढ-श्रीपतिपण्डितभगवत्पादाचार्यस्वामिकृत-भेदाऽभेदात्मक विशेषाद्वैत-
सिद्धान्तव्यवस्थापकवैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

## श्रीकरभाष्ये

**विरोधपरिहाराभिधानस्य द्वितीयाध्यायस्य वियदादित्रयोदशाधिकरणावच्छिन्न**

**पञ्चाशत्सूत्रात्मकः**

## तृतीयः पादस्समाप्तः

---

## अथ श्रीकरभाष्ये द्वितीयाध्यायस्य चतुर्थःपादः

### प्राणोऽत्पत्त्यधिकरणम् ॥ १ ॥

पूर्वपादे ब्रह्मकार्यस्य कृत्स्नस्य वियदादेर्भूतपञ्चकस्य जन्यत्वाजन्यत्वविधायकश्रुतीनां परस्परविरोधं परिहृत्य जीवस्य ब्रह्मकार्यत्वेऽपि चेतनत्वादजन्यत्वं स्वाभाविकभिन्नत्वं तत्स्वरूपं च प्रदर्श्य तस्य तल्लिङ्गशरीरत्वस्य अर्थात् सिद्धत्वात् तद्विचारोऽत्र चरमपादे क्रियते। **'आकाशशरीरं ब्रह्म', 'सत्यात्मप्राणारामं मन आनन्दं'** इत्यादौ ब्रह्मणः शिवस्य मनःप्राणात्मकस्वाभाविकलिङ्गशरीरत्वावगमात् जीवानामपि लिङ्गशरीर-विशिष्टत्वं जन्यत्वं निष्प्रत्यूहम्। अतो लिङ्गशरीरभङ्गपूर्वकं नदीसमुद्रवज्जीवब्रह्मणो स्वरूपैक्यं सर्वथा न सम्भवतीत्याशङ्कायामाह–

## ॥ ९६ ॥ तथा प्राणाः ॥ १ ॥

यथा पञ्चमहाभूतानां ब्रह्मजन्यत्वं तथा प्राणेन्द्रियाणां ब्रह्मकारणत्वमुपपन्नं; **'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च'** इत्यादिश्रुतिश्रवणात्। अस्मिन्नपि पादे पूर्वपक्षे श्रुतीनां मिथो विरोधेनाप्रामाण्याद्ब्रह्मसमन्वयासिद्धिः सिद्धान्ते; तासामविरोधे प्रामाण्यात्समन्वयसिद्धिरिति बोध्यम्। **'आत्मन आकाशस्सम्भूतः'** इत्यादिपञ्चमहा-भूतोत्पत्तिप्रकरणे प्राणेन्द्रियाद्युत्पत्त्यश्रवणात् **'ऋषय एतेऽग्रे सदा सत्त्व एते ऋषयः'** इति। **'प्राणा वा ऋषयः'** इत्यादौ प्राक् सृष्टेः प्राणेन्द्रियसद्भावदर्शनात् अजन्यत्व-मसन्दिग्धतया सूच्यते। **'एतस्माज्जायते प्राणः'** इत्यादौ ब्रह्मकार्यत्वं प्राणादीनां प्रतिभाति। तस्मात्प्राणाद्युत्पत्तिः युक्ता वा न वेति चिन्त्यते। विनिगमकाभावादस्ति विरोधः। "जीववदेवेत्याह पूर्वपक्षी– यथा जीवो नोत्पद्यते, तथेन्द्रियाण्यपि नोत्पद्यन्ते"। यथा जीवोत्पत्तिश्रुतिर्गौणी तथा प्राणोत्पत्तिश्रुतिर्गौणीत्यवगम्यते।

"तथा प्राणा इति प्राण एवेत्यतिदिशति । का पुनरत्र श्रुतिः ? 'असद्वा इदमग्र आसीत्' इत्यत्र तदाहुः, किं तदासीदिति ? 'ऋषयो वाव ते अग्रे सदासीत्' । इति तदाहु 'के ते ऋषय' इति, 'प्राणा वा ऋषय' इति । अतो जगदुत्पत्तेः प्राक् इन्द्रियाणां सद्भावः श्रूयते । प्रणशब्दे बहुवचनादिन्द्रियाण्येवेति निश्चीयते । न चेऽयं श्रुतिः 'वायुश्चान्तरिक्षं चैतदमृतम्' 'सैषाऽस्तमिता देवता यद्वायुः' इतिवत् चिरकालावस्थायित्वेन परिणेतुं शक्या । 'असद्वा इदमग्रआसीत्' इति कृत्स्नप्रपञ्चप्रळयवेलायामप्यवस्थितत्वश्रवणात् । उत्पत्तिवादिन्यस्तु जीवोत्पत्तिवादिन्य इव नेतव्या इति" । एवं प्राप्तेऽभिधीयते– तथा प्राणाः ॥

"वियदादिवदेव प्राणाश्चोत्पद्यन्ते । कुतः ? 'सदेव सौम्येदमग्र आसीत्' 'आत्मा वा इदमग्र आसीत्', 'एक एव रुद्रो न द्वितीयाय तस्थे' 'यदा तम........ शिव एव केवलः' इत्यादिषु प्राक् सृष्टेः शिवस्यैव स्थित्यवधारणात्; 'एतस्माज्जायतेप्राणः' इतीन्द्रियाणामुत्पत्तिश्रवणात् प्रागवस्थानाऽसम्भवात् । न चात्मोत्पत्तिवादवदिन्द्रियोत्पत्तिवादाः परिणेतुं शक्याः । आत्मोत्पत्तिप्रतिषेध श्रुतीनां नित्यत्वश्रुतीनां च दर्शनात् । 'असद्वा इदमग्र आसीत्' इति वाक्येऽपि प्राणशब्दवाच्य परमात्मैव निर्दिश्यते । "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इति प्राणशब्दस्य परमात्मन्यपि प्रसिद्धेः । 'प्राणस्तथानुगमात्' इत्यधिकरणे प्रथमाध्याये बहुधा प्रपञ्चितम् ।' 'प्राणा वाव ऋषयः' इति ऋषि शब्दश्च सर्वज्ञे शिवे युज्यते, नत्वचेतनेष्विन्द्रियेषूपपन्नः ।"

'यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः' इति श्वेताश्वतरे 'विश्वाधिको रुद्रो महर्षिः' इति तैत्तिरीये दर्शनात् ।

'ऋषयः प्राणाः' इति बहुवचनश्रुतिः कथमुपपद्यत इत्याशङ्कायामाह–

## ॥ १७ ॥ गौण्यसम्भवात् तत्प्राक् श्रुतेश्च ॥ २ ॥

बहुवचनश्रुतिर्गौणी, बह्वर्थासम्भवात्तस्यैव परमात्मनः शिवस्य सृष्टेः प्रागवस्थानश्रुतेरेव दर्शनात् । किञ्च– 'नमो रुद्रेभ्यो ये पृथिव्यांयेऽन्तरिक्षे ये दिवि एषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दशदक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु तेऽयं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि" इति शतरुद्रीये शिवस्य

परब्रह्मणः लीलामङ्गलविग्रहवत्त्वेन पृथिव्यादिभूतेषु प्रागादिदिक्ष्वपि बहुत्वव्यवस्थापनान्न सन्देहकळङ्कः। तत्र तत्र **'एतस्माज्जायते प्राणः'** इति वाक्ये तेषां पञ्च महाभूतानां प्राणादीन्द्रियाणां चोत्पत्तिश्रवणात् इन्द्रियाणामुत्पत्तिर्मुख्यैव। एकस्मिन् वाक्ये एकस्य पदस्य क्वचिद्गौणत्वं क्वचिन्मुख्यत्वमित्यस्यासम्भव इति भावः। प्राणानां नित्यत्वे एकविज्ञानेन सर्वविज्ञान न स्यात् 'एकस्मिन् **भगवो विज्ञाते सर्वमिदं विज्ञातं भवति**' इत्यादिश्रुतिसिद्धकारणरूपब्रह्मज्ञानेन कार्यरूपसर्वविज्ञानप्रतिज्ञासिध्यर्थं प्राणेन्द्रियाणामपि ब्रह्मजन्यत्वं सिद्धम्।

**'आत्मन आकाशः सम्भूतः'** **'तत्तेजोऽसृजत'**, इत्यादि-तैत्तिरीय-छान्दोग्याद्युत्पत्तिप्रकरणे इन्द्रियाद्युत्पत्त्यदर्शनात् कथं तदुत्पत्तिरित्याशङ्कायां **छान्दोग्ये** तेषामुत्पत्तिदर्शनात् ब्रह्मजन्यत्वं मुख्यमेवेत्याह—

## ॥ ९८ ॥ तत्पूर्वकत्वाद्वाचः ॥ ३ ॥

ब्रह्मप्रकृतितेजोऽबन्नानि तच्छब्देनोच्यन्ते। प्राणेन मनसा च सहितायाः वाचः **'अन्नमयं हि सौम्यं मनः'**, **'आपोमयः प्राणः'** **'तेजोमयी वाक्'** इत्यनेन तेजोऽबन्नत्वाभिधानादुत्पत्तिश्रुतिरुपदिष्टा। तस्मादुत्पत्तिश्रुतिसद्भावात्सृष्टेः प्रागिन्द्रियाणामभावात् तेषां पञ्चमहाभूतवज्जन्यत्वमनित्यत्वं चाचक्ष्यते। अतः श्रुतीनामविरोधः। तत् हि इदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियतेति श्रुतौ नामरूपात्मकवाग्विषयभूतवियदादिसृष्ट्यभावस्यैव निर्देशात् तदानीं वागिन्द्रियादि कार्याभावाच्च, **'यदा तमः शिव एव केवलः'** इत्यादि श्रुतिशतेषु प्राक् सृष्टेः शिवस्य तत्त्वमात्रस्थितेः श्रवणात्, **'एतस्माज्जायते प्राणो'** इत्यादिश्रुतिनिष्ठजन्यत्वं प्राणादीनामगौणम्। उत मोक्षदशायामपि कर्मवैराग्य गुरु चरेश्वरशेषत्व-कैङ्कर्य-पारतन्त्र्य-भूतदया-शमदमादिसहकृतपरमभक्तिपरमज्ञानविशिष्टानां जीवन्मुक्तानां विदेहमुक्तौ—

गताः कलाः पञ्चदश प्रतिष्ठा
　देवाश्च सर्वे प्रतिदेवतासु।
कर्माणि विज्ञानमयश्च आत्मा
　परेऽव्यये सर्व एकी भवन्ति॥

'यथा नद्यः' 'स यो ह वै परमं', 'ब्रह्म वेद ब्रह्मैव भवति', 'नाब्रह्मवित् कुले भवति' 'तरति शोकं तरति पाप्मानं' 'गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति' इति श्रुतौ लिङ्ग-शरीरविलयपूर्वकनदीसमुद्रवच्छिवतत्त्वप्राप्त्युपदेशात् सायुज्यमुक्तौ लिङ्गशरीरासद्भावात्तो ह्यवैदिकः। '**आकाशशरीरं ब्रह्म सत्यात्मप्राणारामं मन आनन्दम्**' इत्यस्य शिवस्य परब्रह्मणः प्राणेष्वासमन्ताद्रमत इति प्राणारामः मनसि आनन्दो यस्य सः मन आनन्दः इत्यनेन गुणत्रयात्मककर्मजन्यप्रकृतिपरिणामकबाह्येन्द्रियनिरपेक्षतया दिव्यप्रकृत्यात्मकसत्यज्ञानानन्दस्वरूपलीलामङ्गळविग्रहवत्त्वेन तस्य लिङ्गशरीस्य नित्यत्वमनिवार्यम्। '**स्थिरैरङ्गैः पुरूरूप उग्रः**', '**भद्रं कर्णेभिः........स्थिरैरङ्गैः स्तुष्टुवांसस्तनूभिः**' इति भगवती श्रुतिरेवात्र प्रमाणम्। अतो भूतभौतिककर्मजन्यासुरप्रकृतिकजीवलिङ्ग-शरीराणामेव जन्यत्वं मोक्षदशायामपि विलय इति वेदितव्यम्।

---

सप्तगत्यधिकरणम् ॥ २ ॥

एवं जीव-लिङ्गशरीरयोर्ब्रह्मजन्यत्वप्रसाधने तद्विशिष्टानि तत्त्वानि कानीत्याशङ्कायां तदङ्गशरीरस्वरूपं, तद्विशिष्टानि तत्त्वानि चाधिकरणान्तरेणाह–

## ॥ ९९ ॥ सप्तगतेर्विशेषितत्वाच्च हस्तादयस्तु स्थितेऽतो नैवम् ॥ ४ ॥

इन्द्रियाणि सप्त ; कुतः? **'सप्त प्राणाः प्रभवन्ति तस्मात्'** इति श्रुतौ सप्तेन्द्रियावगतेः परलोकगमनस्य विशेषितत्वादिन्द्रियाणि सप्तैव ; तस्मात् श्रोत्रादिज्ञानेन्द्रियपञ्चकं वागिन्द्रियमेकं अन्तःकरणमेकं एतानि सप्तेन्द्रियाणीति चेत्– **हस्तादयस्तु स्थितेऽतो नैवम् हस्तादयः** –पाणिपादपायूपस्थान्यपि जीवे स्थिते सति जीवेन सह शरीरे तिष्ठन्ति; जीवे लोकान्तरगते सति तेन सह लोकान्तरं गच्छन्ति ; **'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति'** इति श्रुतौ सर्वेषामिन्द्रियाणां जीवेन सह परलोकगमन श्रवणात् । अतः **'अस्मात्तु कारणान्नैवं, सप्तेन्द्रियाणि न भवन्ति'** ; किन्तु एकादशेन्द्रियाणीत्यर्थः ।

एकमेवान्तःकरणं, संशयात्मकत्वात्मन इत्युच्यते, निश्चयात्मकत्वात् बुद्धिरिति, अभिमानतत्त्वादहङ्कार इति स्मरणात्मकत्वाच्चित्त मित्युपदेशात । तथा च न सङ्ख्याधिक्यम् । **'सप्त प्राणाः प्रभवन्ति तस्मात्'** इति सप्तेन्द्रियाणि श्रूयन्ते । क्वचित् **'अष्टौ ग्रहाः अष्टावतिग्रहाः'** इत्यष्टौ ग्रहाः । पुरुषपशुबन्धकानि इन्द्रियाणि । रागाद्युत्पत्तिद्वारा इन्द्रियाकर्षकत्वादिविषयाः अतिग्रहा इत्यर्थः । **'सप्त वै शीर्षण्याः प्राणा द्वाववाचौ'** इत्यत्र सह वाचापायूपस्थौ इति नव; **'नववै पुरुषे प्राणाः नाभिर्दशमी'** ; इत्यत्र **'दश दश वै पुरुषे प्राणाः** आत्मैकादश' इत्यत्रैकादशात्मा । एवं क्वचित्त्रयोदशेन्द्रियाणि श्रूयन्ते । अथ चैकादशेन्द्रियाणीत्यत्र चिन्त्यते "तानीन्द्रियाणि किं सप्तैव स्युः ? एवं श्रुतिविप्रतिपत्तौ संशयः – किं प्राप्तम् ? सप्तेति कुतः ? **'सप्त इमे लोका येषु चरन्ति'** इति गतेर्विशेषितत्वाच्च ।

गतिस्तावज्जायमानेन म्रियमाणेन च जीवेन सह लोकेषु सञ्चरणरूपा। अतः सप्तैव श्रूयन्ते। '**सप्त इमे लोका एषु चरन्ति प्राणा गुहाशयान्निहितास्सप्त सप्त**' इति वीप्सा पुरुषभेदाभिप्राया। विशेषितत्वाच्च ते गतिमन्तः प्राणाः स्वरूपतः

'**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।**
**बुद्धिश्च न विचेष्टेत तमाहुः परमां गतिम्॥**' इति।

शरीरान्तःसञ्चरणं विहाय मोक्षार्थगमनं परमा गतिः। एवं जीवेन सह जन्ममरणयो सप्तानामेव गतिश्रवणात् योगदशायां ज्ञानानीति विशेषितत्वाच्च जीवस्य करणानि श्रोत्र-त्वक्-चक्षुः-जिह्वा-घ्राण-बुद्धि-मनांसि सप्तैवेति गम्यते। यानि त्वितराणि विषयाणां ग्राहकत्वेन, '**अष्टौ ग्रहाः**', '**सप्त वै शीर्षण्याः वा प्राणाः द्वाववाञ्चौ**' इत्यादिषु चतुर्दशपर्यन्तप्राणप्रतिपादकवाक्येषु वाक्-पाणि-पाद-पायु-उपस्था-अहंकार-चित्ताख्यानीन्द्रियाणि प्रतीयन्ते, तेषां जीवेन सह गतिश्रवणाभावात् जीवस्याल्पाल्पोपकारकत्वमात्रेणौपचारिकः प्राणव्यपदेशः" इति प्राप्ते प्रचक्ष्महे।

'**हस्तादयस्तु स्थितेऽतो नैवम्**'। "न सप्तेन्द्रियाणि; अपित्वेकादश; हस्तादीनामपि शरीरे स्थितस्य जीवस्य भोगोपकारणत्वात् कार्यभेदाच्च। दृश्यन्ते हि श्रोत्रादीनामिव हस्तादीनामपि कार्यभेद आदानादिः। अतः तेऽपि सन्त्येव[1]। अतो नैवं— हस्तादयो न सन्तीत्येवं न मन्तव्यमित्यर्थः। अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव। बुध्यहङ्कारचित्तशब्दैर्व्यपदिश्यत इत्येकादशेन्द्रियाणि।

अतः '**दशेमे पुरुषे प्राणाः आत्मैकादश**' इति आत्मशब्देन मनोऽभिधीयते—

'**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः।**
**तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश॥**'
**एकादशं मनश्चात्र**.......................।

इत्यादि श्रुति-स्मृति-सिद्धेन्द्रियसङ्ख्या व्यवस्थिता। अधिकसङ्ख्यावादा मनोवृत्तिभेदाभिप्रायाः; न्यूनव्यपदेशास्तु तत्र तत्र विवक्षितगमनादिकार्यविशेषप्रयुक्ताः।"

---

[1] अल्पोपकारत्वं (ग A)

किञ्चात्र तु शब्देन प्राणानां सप्तत्वनिरासः। अतो **'हस्तो वै ग्रहः'** इत्यादिना हस्तादिव्यतिरिक्ताः प्राणाः श्रूयन्ते ; सप्तत्वसङ्ख्याया सम्भवितत्वे सप्तस्वादि व्यतिरेके स्थितौ च सप्तत्वं इन्द्रियनिष्ठैकादशत्वसङ्ख्यायामप्यन्तर्भावयितुं शक्यते ; न्यूनसङ्ख्यया अधिकसङ्ख्यायामन्तर्भावसम्भवादतो नैवं मन्तव्यम्। सप्तैव प्राणाः इति सूत्रार्थः।

यद्यपि ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं मनश्चैकं इत्येकादशेन्द्रियाणि विहाय हृदयाहङ्कारप्राणादीनां त्रयोदशसङ्ख्यामालिका श्रूयते। तथापि तयोरन्तःकरणप्रभेदत्वान्नाधिक-सङ्ख्यापादकत्वमित्येकादशेन्द्रियाणीति निरवद्यम्। **'सप्त वै शीर्षण्या प्राणा'** इत्यत्र न सप्तोपदेशेन इन्द्रियत्वविधानम् ; किन्तु प्राणोपदेशेन स्थानभेदमात्रेण चतुर्णामेवेन्द्रियाणां सप्तत्वमिति न तत्त्वविरोधः। **'नव वै पुरुषे प्राणा नाभिर्दशमी'** इति वाक्यं पुरुषाकारदेहाभिप्रायं न प्राणाभिप्रायं इत्यविरोधः सिद्धः।

नन्वस्य सूत्रस्य पूर्वोत्तरव्याख्यानमसङ्गतम्। **'सप्त प्राणाः प्रभवन्ति'** इति घ्राण-रसना-चक्षुः-श्रोत्र-त्वक्-मनो-वाचां सप्तत्वावगतेः। शीर्षण्या इति विशेषितत्वात् इति हेतु द्वयवैय्यधिकरण्येन सूत्रे चकारानुपपत्तेः। **'ये वै शीर्षण्यास्सप्त ते प्राणाः नेतरः'** परिसङ्ख्या इति च। अत एव तदुत्तरवाक्यव्याख्यानमप्यसङ्गतमिति चेत्तर्हि अन्यथा पूर्वोत्तरवाक्यद्वयं व्याख्यास्यामः।

मरणसमये येषां सहगमनं तेषामेव भोगसाधनत्वादिन्द्रियत्वम्। तथा च **'ते मुख्यप्राणमनूत्क्रामन्तस्सर्वे प्राणा अनूत्क्रामन्ति'** इति **'घ्राणादीनां सप्तानामेव गतिः'** इति च जीवेन सहगमनश्रवणात्सप्तैवेन्द्रियाणि।

ननु सर्वशब्दश्रवणात् कथं सप्तानामेव गतिश्रवणं इति चेत्तत्राह **"विशेषितं-तत्वाच्चेति"**। यत्रैष स चाक्षुषः पुरुषः पराक्-पर्यावर्तते अथारूपज्ञो भवत्येको भवति ; तदा न पश्यति, न जिघ्रति, न शेते, न वदति, न शृणोति, न मनुते, न स्पृशतीत्याहुरिति, चक्षुरादीनां सप्तानामेव प्राकृतानां विशेषितत्वाच्च। सर्वशब्दः प्राकृतानां **'सर्वे ब्राह्मणा भोजयितव्याः'** इत्यत्र सर्वशब्दो यथाविनिमन्त्रितब्राह्मण-परस्तद्वदिति शङ्कानिरासार्थः। अत्र स्ववस्थायां चक्षुरनुष्ठातृदेशः, स एषश्चाक्षुषशब्द-वाच्यः। पुरुषो यदा रूपादिविषयव्याप्तिं विहाय वर्तते तदा नामरूपज्ञो भवति। हृदयचक्षुषोरेको भवति, पार्श्वस्थांश्च नायं पश्यतीत्याहुरिति श्रुत्यर्थः। तदुत्तरवाक्यार्थस्तु,

सप्तभ्योतिरिक्ता हस्तादयोऽपि बन्धकत्वेन श्रूयन्ते। **'हस्तो वै ग्रहः'** इत्यादिना ग्राहकत्वं बन्धकत्वं च हस्तादीनां सहगमनं विना न सम्भवति। **'सर्वे प्राणाः अनूत्क्रामन्ति'** इति विशेषतः सर्वेन्द्रियाणामुत्क्रान्तिश्रवणाच्च भवन्त्येकादशोत्क्रान्तिमन्तः प्राणाः। न च सर्वशब्दस्य प्रकृतविशेषितसप्तप्राणपरत्वं, किन्तु प्रकरणात् श्रुतेर्बलीयस्त्वात् सर्वकरणपरत्वम्। **'सर्वे ब्राह्मणाः भोजयितव्याः'** इत्यत्र सर्वब्राह्मणभोजनासम्भवात् निमन्त्रित ब्राह्मणपरत्वं सर्वशब्दश्रुतेरिति निर्दिश्यते। ॥**पूर्ववदिति**॥ तस्मादेकादशैवोत्क्रामन्तीत्यन्तः प्राणा इति सिद्धम्।

---

## प्राणाणुत्वाधिकरणम्  ॥ ३ ॥

नन्विन्द्रियाणां उत्क्रांतिर्न सम्भवति, तेषां अपरिच्छिन्नाहङ्कारजन्यत्वेन विभुत्वादित्याक्षेपे तन्निराकरणमधिकरणान्तरेण करोति—

## ॥ १०० ॥ अणवश्च ॥ ५ ॥

**'इमे प्राणाः अणवः'**, **'परिच्छिन्ना इन्द्रियाणि च'** इति श्रुतौ प्राणेन्द्रियाणामणुत्वव्यपदेशात् **'त एते सर्व एव समास्सर्वेऽनन्ताः'** इत्यानन्त्यश्रवणाद्विभुत्वम् । तस्मादणुत्वं विभुत्वं वेति सन्दिह्यते । न चेन्द्रियाणामणुत्वमुपपन्नम् । इन्द्रियाणामणुत्वे शरीरगतस्पर्शेन्द्रियस्य सर्वशरीरगतशीतोष्णमृदुत्वादिस्पर्शग्राहकत्वायोगात् पूर्वोक्तश्रुतिविरोधाच्च विभुत्वं युक्तमिति चेदभिधीयते—

**अणवश्चेति** स्वभावतः इन्द्रियाणामणुत्वेऽपि चकारेण कार्यावस्थायामप्यणुत्वं निर्दिष्टम् । **'आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षं'** इति 'सर्वेषामिन्द्रियाणां सूक्ष्मत्वेऽपि पदार्थसन्निकर्षतया व्यापकत्वमपि गम्यते, न तस्मात् श्रुतिविरोधः । इन्द्रियाणां विभुत्वमात्रत्वे काशीस्थविश्वेश्वरदर्शनस्पर्शौ सेतुवासिनामपि स्याताम् ।

"उत— **'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति'** इत्युत्क्रान्त्यादिश्रवणात् परिमितत्वेन निर्देशादुत्क्रान्त्यादिषु पार्श्वस्थैरनुपलभ्यमानत्वात्, श्रोत्रादीन्द्रियाणां प्रदेशान्तरशब्दग्रहणसामर्थ्याभावात्, **शतपत्रसूचीन्यायवत्** शब्दादिविषयेषु क्षिप्रगत्यनुभवाच्च प्राणीन्द्रियाणामणुत्वमेवेति निश्चीयते । आनन्त्यश्रुतिस्तु **'अथ यो ह वै तान् अनन्तानुपास्ते'** इत्युपासनश्रवणात् उपास्यप्राणविशेषणभूतकार्यबाहुल्याभिप्राया ।"

जीवस्य बहुशरीरप्रवेशनिर्गमनव्यापारविधायकश्रुतिष्वपि इन्द्रियगमनस्याप्युपदेशात् मुख्यत्वेन प्राणोत्क्रमणविधायकवाक्यमुपपन्नमित्याशङ्कायामाह—

## ॥ १०१ ॥ श्रेष्ठश्च ॥ ६ ॥

**'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति'** इत्यादि प्राणसंवादे शरीरस्थितिहेतुत्वेन' सर्वेन्द्रियाधारत्वेन च श्रेष्ठतया निर्णीतो मुख्यप्राणः'। किञ्च— **'सुप्तौ सर्वेन्द्रियो परमे प्राणवायुव्यापारदर्शनात्' 'एतस्माज्जायते प्राणः'** इति श्रुतौ च सर्वेन्द्रियाणां प्रागेव प्राणोत्पत्तिदर्शनात्, **'तत्प्राणेष्वन्तर्मनसो लिङ्गमाहुः'** इति श्रुतौ सर्वेन्द्रियाधारमानसेन्द्रियस्यापि प्राणाधारत्वनिर्देशात्, **'इन्द्रियाणां मनो नाथः मनोनाथस्तु मारुतः'** इति स्मृतावपि प्राणात्मकस्य मारुतस्य सर्वाधिक्यावगमाच्च जीववत्प्राणस्यापि श्रेष्ठत्वमनिवार्यम्। अतः प्राणोत्क्रमणमुख्यत्वविधौ न विरोधः।

ननु **"आनीदवातं स्वधया तदेकं'** इति प्रळयसमये सर्वाधारतया प्राणसद्भावश्रवणात् **'एतस्माज्जायते प्राणः'** इति जन्मश्रवणस्य जीवोत्पत्तिवदौपचारिकत्वमिति चेन्न— **'न सन्नचासच्छिव एव केवलः'** इत्यादिषु प्राक् सृष्टेः शिवस्य स्थित्यवधारण श्रुतिविरोधात्, **'एतस्माज्जायते प्राणः'** इत्यत्र प्राणस्य पृथिव्यादितुल्योत्पत्तिश्रवणात्, उत्पत्तिनिषेधाभावाच्च। **'आनीदवातं'** इत्यत्र न चैव श्रेष्ठः प्राणोऽभिप्रेत्योच्यते; अपि तु परशिवब्रह्मण एकस्यैव विद्यमानत्वमुच्यते, **'अवात'** इति तत्रैव श्रवणात्। पूर्वेणैव तुल्यन्यायत्वेऽपि पृथग्योगकरणमुत्तरचिन्तार्थमिति" सिद्धम्।

---

## वायुक्रियाधिकरणम् ॥ ४ ॥

प्राणस्य सर्वश्रेष्ठत्वेऽपि स वायुर्वा, तन्निष्ठस्पर्शक्रिया वा तत्स्वरूपमित्याशङ्कामधिकरणान्तरेण परिहरति—

## ॥ १०२ ॥ न वायुक्रिये पृथगुपदेशात् ॥ ७ ॥

वायुश्च क्रिया च **वायुक्रिये** – प्राणो न भवतः । तस्मात् पृथगुपदेशात् **'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'** इति श्रुतौ वायुप्राणयोः पृथगुत्पत्तिव्यपदेशात् तयोर्न चैकत्वमिति सूत्रसूचितसूक्ष्मार्थः ।

"सोऽयं श्रेष्ठः प्राणः किं महाभूतद्वितीयवायुमात्रम्? तस्य वा स्पन्दरूपा क्रिया? अथवा वायुरेव कञ्चनविशेषमापन्न? इति विशये वायुरेवेति प्राप्तम्, **'यः प्राणः स वायुः'** इति व्यपदेशात्; यद्वा वायुमात्रे प्राणत्वप्रसिध्यभावात् उच्छ्वासनिश्वासादिवायुक्रियायां प्राणशब्दप्रसिद्धेश्च ।"

किञ्च— **छान्दोग्ये— 'मनो ब्रह्मेत्युपासीत'** इत्युपक्रम्य मनोरूपब्रह्मणो वाक्-पाणि-चक्षुः-श्रोत्र-चतुष्पात्वात् **'प्राण एव ब्रह्मणः चतुर्थः पादः, स वायुना ज्योतिषा भाति च तपति च'**, इत्यत्र **भाति** अभिव्यक्तो भवति ; **तपति** स्वव्यापारे उद्गच्छति' इति वायवपेक्षया प्राणस्य भिन्नत्वकथनेन निर्धारभावादिति चेत्, तत् श्रुतिद्वयस्य मिथो विरुद्धतया इन्द्रियव्यापारः प्राणोऽस्त्विति प्राप्ते प्रचक्ष्महे—

प्राणो न वायुक्रिया, न वायुर्नापीन्द्रियव्यापार इत्यर्थः । नन्विन्द्रियेभ्यः पृथगुपदेशेष्विन्द्रियव्यापारात् प्राणो भिन्न इति चेत् न, वृत्तिवृत्तिमतोरभेदात् । तर्हि— **'यः प्राणः स वायुः'** इति श्रुतिविरोधः कथं परिहरणीय इति चेदुच्यते— महावायुरेव

हि प्राणादिपञ्चात्मना वर्तमानः प्राणः इत्युच्यते। तथा च विकार-विकारिणोर्वास्तवा-भेद-काल्पनिकभेदयोस्सत्त्वान्न भेदाभेदश्रुत्योर्विरोध इति व्याचक्षते।

उत– " '**एतस्माज्जायते– खं वायुः**' इति वायुप्राणयोः तत एव पृथ-ग्व्यपदेशात् वायुक्रियाऽपि न भवति प्राणः। न हि तेजः प्रभृतीनां क्रिया; तैः सह पृथक् द्रव्यतयोपदिश्यते। '**यः प्राणः स वायुः**' इति तु वायुरेवावस्थान्तरमापन्नः प्राणः; न तेजः प्रभृतिवत् तत्त्वान्तरमिति ज्ञापनार्थम्। उच्छ्वासनिश्वासादावपि, प्राणः स्पन्दत इति क्रियावति द्रव्य एव प्राणशब्दप्रसिद्धिः, न क्रियामात्रे।" इति सिद्धम्।

किमयं प्राणः वायोर्विकारस्सन् अग्निवद्भूतान्तरं स्यादुत प्राणवाय्वोः पृथग्व्यप-देशात्प्राणः केनोत्पन्न इत्याशङ्क्याह–

## ॥ २०३ ॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥८॥

"नायं प्राणः भूतविशेषः; किन्तु चक्षुरादिवत् जीवोपकरणविशेषः। स चोपकरणैरिन्द्रियैस्सह शिष्यादिभ्योऽवगम्यते। चक्षुरादिभिस्सहायं प्राणः शिष्यते। प्राणसंवादादिषु तत्सजातीयत्वे हि तैः सह शासनं युज्यते, प्राणशब्दपरिगृहीतेषु करणेष्वस्य विशिष्याभिधानमादिशब्देन गृह्यते। अथवा '**य एवायं मुख्यः प्राणः**' '**योऽयं मध्यः प्राणः**' इत्यादिषु विशिष्याभिधानात्।"

'**तेजोरूपतया प्राणो हृदये त्वनुरूपतः।**
**जीवाधीनतया स्थित्वा प्राणापानादिवृत्तिभिः।**
**इडापिङ्गळमार्गेण निश्वासोच्छ्वासरूपतः।**
**बहिर्निर्गत्य निर्गत्य स्वान्तर्गच्छति च क्रमात्॥**'

इति **योगशास्त्रे** प्राणस्य स्वरूपं स्पष्टमुपदिष्टम्। तस्मादीश्वरेच्छया भूतपञ्चकरजोगुणो-द्भूतः प्राण इति वेदितव्यः।

किञ्च– सर्वासु श्रुतिषु चक्षुरादीन्द्रियाणां प्राणस्य पठितत्वात् इन्द्रियसाहचर्याच्च चक्षुरादिवत्प्राणस्य भौतिकत्वं इति व्यवह्रियते। **'भर्ता सम्भ्रियमाणो बिभर्ति' 'एको देवो बहुधा सन्निविष्टः', 'त्वमेको बहूननुप्रविष्टः', 'प्राणानां ग्रन्थिरसि' 'रुद्रो मा विशान्तकः'** इत्यादिश्रुतिभ्यः प्राणः परमेश्वराधारः। **तु**शब्दः उक्तशङ्कानिरासार्थः। प्राणस्य जीववन्न स्वातन्त्र्यं; किन्तु राजापेक्षया मन्त्रिण इव, सारथ्यपेक्षया अश्वा इव इन्द्रियापेक्षया समुत्कृष्टत्वान्नोक्तदोषः। प्राणस्य भूतपञ्चकरजोगुणजन्यत्वेनापि वायूपादानकारणत्वाद्वाय्वन्तर्भूत इति च व्यवह्रियते। तथा **वातुलागमे–**

**'आत्माकाशमयो ज्ञेयः प्राणोवायुमयस्तथा।**
**तेजोमयो ह्यहङ्कारस्तथा जलमयं मनः॥'**

इति सम्यगुपदिष्टम्।

चक्षुरादिवदस्यापि करणत्वे तद्वदस्यापि जीवप्रत्युपकाररूपक्रियया भवितव्यम्। सा तु न दृश्यते। तस्मान्नायं चक्षुरादिवद्भवितुमर्हति इत्याशङ्कायामाह–

## ॥ १०४ ॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ९ ॥

"**आकरणत्वात्, करणं**– क्रिया; तदभावात्– अक्रियत्वात्। अस्य प्राणस्य जीवप्रत्युपकाररूपविशेषरूपक्रियारहितत्वाच्च, यो दोषः उद्भाव्यते, स नास्ति; यत उपकारविशेषरूपां शरीरेन्द्रियधारणादिरूपां क्रियां दर्शयति श्रुतिः; **'यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्यते, स वः श्रेष्ठः'** इत्युक्त्वा वागाद्युत्क्रमणेऽपि शरीरस्येन्द्रियाणां च स्थितिं दर्शयित्वा प्राणोत्क्रमणे शरीरेन्द्रियशैथिल्याभिधानात्; अतः प्राणापानव्यानोदानसमानाकारेण पञ्चधावस्थितोऽयं प्राणः शरीरेन्द्रियधारणादिना जीवस्योपकरोतीति चक्षुरादिवत् उपकरणत्वं" सिद्धम्।

किञ्च– प्राणस्य अकरणत्वादेव न कार्याभावः; कथं तर्ह्यात्मानं प्रति देहधारणेन उपकारभावः? इन्द्रियान्तरेष्वसम्भावितस्यासाधारणस्य देहधारणकार्यस्य कथं निर्वाहः? इति चेद्ब्रूमः–

तथाहि– श्रुतिरुक्तकार्यं प्राणस्यासाधारण्यं दर्शयति। प्राणसंवादे मुख्यप्राणस्य श्रेष्ठत्वं निर्धार्य तान् वरिष्ठः प्राण उवाच **'मा मोहमापद्यथाः अहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि'** इति, **'बाणं शरीरं प्राणेन रक्षन्नपरं कुलायं'** इति श्रुतिरपि देहस्थितं हि प्राणमेवमाह– अपरं अनेकाशुचि कुलायं इति श्रुतिरपि देहाख्यं गृहं प्राणः स्थित्या रक्षति, पुनस्सुप्तिं यातीति। उत **'प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योद्धासयति'** इति श्रुतिः। प्राणस्य शरीरो[1]द्धासकत्वं कार्यान्तरं निर्दिशति। तस्मात्प्राणस्य मुख्यत्वमनिवार्यम्।

नन्वेवं नामभेदात्कार्यभेदाच्च प्राणादीनां सत्त्वात् प्राण एक एवेति व्यवस्था कथमुपपद्यत इति आशङ्क्य तत्राह–

## ॥ १०५ ॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १० ॥

"यथा कामादिवृत्तिभेदे तत्कार्यभेदेऽपि न कामादिकं मनसस्तत्वान्तरम्; **'कामस्सङ्कल्पो विचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव'** इति वचनात्। एवं **प्राणोऽपानोव्यान उदानस्समानः अन इत्येतत्सर्वं प्राण एव'** इति वचनादपानाद्योऽपि प्राणस्यैव वृत्तिविशेषाः; न तत्त्वान्तरमित्यवगम्यते"।

किञ्च– प्राणस्योच्छ्वास-निश्वास-सर्वशरीरक्रियोत्क्रान्त्याख्यानि चत्वारि कार्याणि। पञ्च पञ्चकार्यभक्षितान्नादिरसानां समत्वेन सर्वाङ्गेषु नयनमपेक्ष्य पञ्चविधकार्यभेदेऽपि कारणरूप-प्राणवायुरेक एव। जडस्य प्राणस्य कार्यरूपपरिणामसत्त्वाभावेऽपि तद्विशिष्टतया प्राण-लिङ्गात्मकस्य परशिवस्य सत्त्वात् तस्य क्रियाकारित्वमविरोधम्।

**'प्राणस्य प्राणः'** इत्यादिश्रुतिश्रवणात्, **'तमुत्क्रामन्तं'** इति श्रुतौ प्राणस्यो-त्क्रान्तिहेतुत्वेन सूक्ष्मत्वमिति चेत्सर्वेषां सर्वशरीरव्यापकत्वेन तस्यैव महत्त्वावगमात् अणुरूपस्य व्यापकत्वायोगात्, **'सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण'** इति श्रुतिव्यपदेशाच्च उत्क्रान्तिश्रुत्या अणुत्ववादो ह्यसङ्गत इत्याशङ्क्याह–

---

[1] शरीरीत्थापकत्वात्मकत्वं (ग A)

## ॥ १०६ ॥ अणुश्च ॥ ११ ॥

'**प्राणे सर्वं प्रतिष्ठितं, सर्वं हीदं प्राणेनावृतम्**' इत्यादिश्रुतिश्रवणात् प्राणस्य महत्परिमाणमेवेति यत्तदयुक्तम् । प्राणस्तु हृदये जीवसूक्ष्मरूपेण स्थित्वा प्राणापानादिवृत्त्या बृहत्परिमाण इत्यविरुद्धम् । तस्य महत्त्वे '**तमुत्क्रामन्तं सर्वे प्राणा उत्क्रामन्ति**' इत्यादिबहुश्रुतियुक्त्यनुभवप्रमाणैः प्राणोत्क्रमणस्य दर्शनात्, महत्वमात्रत्वे उत्क्रान्त्यसम्भवाच्च प्राणः अणुश्चेति निश्चीयते । '**सम एभिस्त्रिभिर्लोकैः**' इति श्रुतिस्तु सर्ववायुपरा ; नाध्यात्मिकवायुपरेत्यविरोधः ।

किञ्च– '**आकाशशरीरं ब्रह्म, सत्यात्मप्राणारामं मन आनन्दम्**', '**शान्तिसमृद्धममृतम्**' इति श्रुतिदर्शनात् परशिवकळाभिव्यक्ताप्राकृतपञ्चब्रह्ममयसकलजीवनियामकचिदाकाशशरीरामृतानन्तमहिमाकरमहाकैलासवासमहेश्वरप्राणपरत्वे वा महत्वश्रुतिरिति वेदितव्या । तस्यामृतत्वव्यपदेशेनोत्क्रान्त्यसंभवात् प्राकृतरजोगुणजन्यत्वाभावाच्च ।

---

## ज्योतिराद्यधिकरणम् ॥ ५ ॥

### महेश्वरस्यैव जीवकृतकर्मानुसारेण इन्द्रियप्रेरकत्वप्रतिपादनम्

जडत्वाच्च प्रधानस्य जगत्कारणत्वं पुरा निरस्तमतो ह्यचेतनानां प्राणेन्द्रियाणां स्वतः स्वव्यापारप्रवर्तकत्वं कथमुपपद्यत इत्याशङ्कायामधिकरणान्तरेणाह—

## ॥ १०७ ॥ ज्योतिराद्यधिष्ठानन्तु तदामननात् प्राणवता शब्दात् ॥ १२ ॥

**तु**शब्दोऽत्र निश्चयार्थकः। चक्षुरादीन्द्रियाणि ज्योतिरादीनां सूर्यादिदेवतानामधिष्ठानानि निवासस्थानानि, कुतः? **तदामननात्**। '**अग्निर्वाग्भूत्वा मुखं प्राविशत्**' इति श्रुतौ तासां सूर्यादिदेवतानां आमननात् मुखादिस्थानेषु प्रवेशकथनात् प्राणवता जीवेन सह सूर्यादिदेवतानां परशिवान्तर्यामितया इन्द्रियप्रेरकत्वं उत स्वातन्त्र्येण? कस्मात्? शब्दात्। '**य आदित्यमन्तरो यमयति स त आत्मान्तर्याम्यमृतः**', '**एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः**', '**ईश्वरस्सर्वभूतानां**' इत्यादिश्रुतिषु इन्द्रियाभिमानिविष्ण्वादिसर्वदेवतान्तर्यामितया **महेश्वरस्यैव** जीवकृतकर्मानुसारेण इन्द्रियप्रेरकत्वप्रतिपादकश्रुतिबलादेतदुपपन्नमिति सूक्ष्मार्थः।

"श्रेष्ठानां प्राणानां ब्रह्मण उत्पत्तिः, यत्परिणाम इयत्ता, उक्तस्तेषां प्राणानामग्न्यादिदेवताधिष्ठितत्वं च पूर्वमेव '**अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यां**' इत्यनेन सूत्रेण प्रसङ्गादुपपादितम्। जीवस्य च स्वभोगसाधनानामेषामधिष्ठातृत्वं लोकप्रसिद्धम्; '**एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते**' इत्यादिश्रुतिसिद्धञ्च"।

एवमिह '**आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्**' तत्र '**चक्षुषा रूपाणि पश्यति**' इत्यादिश्रुतिषु परमेश्वरादितरजीवस्याग्न्यादिदेवतानां च प्राणविषयमधिष्ठानं किं स्वायत्तं? उत परायत्तम्? इति विषयः।

तत्र चक्षुषा रूपाणि पश्यति, '**आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत्**' इति श्रुतिदर्शनाज्जीवसूर्यादीनामेव प्राणेन्द्रियप्रेरकत्वम्। शिवस्य परब्रह्मणस्तत्प्रेरकत्वे भोक्तृत्व-प्रसङ्गेन जीवस्य भोक्तृत्वं न स्यात्, तथा चेत्पुण्यपापकर्मफलभूतसुखदुःखात्मक-स्वर्ग-नरक-फलभोक्तृत्वादनीश्वरत्वं [1]**तस्यैवोपपद्यते**। तस्माज्जीवस्य सूर्यादीनां वा प्राणादि-प्रेरकत्वमिति प्राप्ते प्रचक्ष्महे—

'**ज्योतिराद्यधिष्ठानमिति** प्राणवता जीवेन सह ज्योतिरादीनां सूर्यवह्न्यादिदेवतानां प्राणादिविषयमधिष्ठानं तदामननात् तस्य परमात्मनः शिवस्य आमननाद्भवति। **आमननम्**— आभिमुख्येन मननम्। तच्च परमात्मनः सङ्कल्पादेव सम्भवति।" '**ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात्**', [2]**तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी**' इत्यादिश्रुतिषु **सवितुः**— सूर्यस्य **वरेण्यं**— वरणीयमुपासनीयं इत्यादिना सूर्यान्तर्यामितया परमेश्वरस्य प्रेरकत्वदर्शनात् तत्सङ्कल्पादेव सर्वेषां इन्द्रियाधिष्ठानदेवतानां प्रयोजकत्वमित्यर्थः। कुतः? **शब्दात्**— पादादीन्द्रियाणां विष्ण्वाद्यभिमानिदेवतानां जीवात्मनश्च स्वकार्येषु परमपुरुषशिवमननायत्तत्व-शास्त्रात्। यथा **अन्तर्यामिब्राह्मणे** '**योऽग्नौ तिष्ठन्नग्नेरन्तरः यमग्निर्न वेद यस्याग्नि-श्शरीरं योऽग्निमन्तरो यमयति स त आत्मान्तर्याम्यमृतः**', '**यो वायौ तिष्ठन्, य आदित्ये तिष्ठन्, य आत्मनि तिष्ठन्, यश्चक्षुषि तिष्ठन्**' इत्यादिना सर्वान्तर्यामित्वं सर्वनियामकत्वं चोपदिष्टम्। '**यो रुद्रोऽग्नौ यो अप्सु**', '**भीषास्मा-द्वातः पवते भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः॥**' '**न तत्र सूर्यो भाति न चन्द्रतारका नेमा विद्युतो भान्ति कुतोऽयमग्निः**', '**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति**', '**एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः**' इत्यादिषु शिवस्य सर्वान्तर्यामित्वं सर्वभयहेतुत्वं सर्वप्रकाशकत्वं सर्वाधारत्वं च स्पष्टमुपदिष्टम्। अतो जीवविष्ण्वादिभूतानां स्वातन्त्र्येण प्राणेन्द्रियप्रेरकत्वमनुपपन्नमिति निर्दिष्टम्।

ननु '**स वै वाचमेव प्रथमामात्यवहत्सा यदा मृत्युमत्यमुच्यत सोऽग्नि-रभवत्**' इत्यादिना वागादीनामग्न्यादिभावापत्तिकथनात् अग्न्यादिभावस्य तदधिष्ठातृकत्वमेव स्यात्, अतः प्राणदेवतयोरधिष्ठात्रधिष्ठेयभाव एवोपपन्न इत्याशङ्कायामाह—

---

[1] तस्यापद्यते (ग A), तस्यैवापपद्यते (ज)　　[2] यदातमेतदक्षर (ग A)

## ॥ १०८ ॥ तस्य च नित्यत्वात् ॥ १३ ॥

"सर्वेषां परशिवाधिष्ठानत्वेन नित्यत्वात् [1]स्वरूपानुबन्धित्वेन नियतत्वाच्च, तत्सङ्कल्पादेवैषामधिष्ठातृत्वमवर्जनीयम्। **'तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाऽभवत्'** इत्यादिना शिवस्य परमपुरुषस्य स्वाभाविकचिच्छक्तिविशिष्टस्य स्वतन्त्रस्य नियन्तृत्वेन सर्वचिदचिद्वस्तुप्रवेशस्वरूपानुबन्धित्वं समर्थ्यते"। तस्मात्प्राणेन्द्रियदेवतानियामकत्वं तदन्तर्यामित्वं च नेतरस्येति सिद्धम्।

ननु शिवस्य परब्रह्मणः जीवादिनियामकत्वे तस्यैव कर्तृत्वावगमात् जीवकृतपुण्यापुण्यफलभोक्तृत्वमपि तस्यैवेति चेन्न। इन्द्रियादिप्रेरणे सर्वदा जीवस्यैव स्वतन्त्राभिमानित्वेन नेतरस्य तदिन्द्रियजन्यकर्मफलभोक्तृत्वम्।

किञ्च– तदिन्द्रियाद्यधिष्ठानप्रभाकरविष्ण्वादिदेवतान्तर्यामितया शिवस्य जीवकृतकर्मानुसारेण तदिन्द्रियप्रेरकत्वसम्भवात् न तत्कृतकर्मफलभोक्तृत्वमीश्वरस्य। **'तयोरन्यः पिप्पलं स्वाद्वत्ति', 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः'** इति भगवती श्रुतिरपि तथैवोपदिशति। तस्मान्न शङ्काकळङ्कः।

---

[1] स्वरूपानुसम्बन्धित्वेन (ग A)

## त इन्द्रियाणि तद्व्यपदेशाधिकरणम् ॥ ६ ॥

### प्राणमनसोः इन्द्रियादधिकत्वप्रतिपादनम्

'हन्तास्यैव सर्वं रूपनाम त एतस्यैव सर्वे रूपमभवन्वागादय एतस्यैव प्राणस्य रूपं पञ्चधा बभूवुः' इति श्रुतौ प्राणेन्द्रिययोरेकत्वोपदेशात् प्राणस्येन्द्रियत्वं स्यादित्याशङ्क्याह–

## ॥ १०९ ॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १४ ॥

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इत्यत्र प्राणेन्द्रियाणां तत्त्वान्तरत्वं प्रतीयते। 'हन्तास्यैव सर्वे रूपमसामेति ते एतस्यैव सर्वे रूपमभवत्' इति श्रुतौ तु मुख्यप्राणत्वमिन्द्रियाणां बोध्यते। तस्मात् प्राणेन्द्रियाणामेकत्वमुत पृथक्त्वं वेति सन्दिह्यते।

मुख्यप्राणस्येन्द्रियत्वं युक्तम्– 'एतस्माज्जायते प्राणः' इत्यत्र मानसेन्द्रियाणां पृथग्व्यपदेशोऽपि तयोर्न तत्त्वान्तरत्वम्। 'हन्तास्यैव सर्वे रूपमसाम' इति श्रुतेर्बलीयस्त्वात् प्राणस्य करणत्वमुपपन्नमिति प्राप्तेऽभिधीयते। 'त इन्द्रियाणीति'।

प्राणस्तत्त्वान्तरमिन्द्रियेभ्य इति। तत्र हेतुस्तद्व्यपदेशादुक्तहेतुमितरेण सूत्रभागेन विवृणोति। **श्रेष्ठात्** मुख्यप्राणादन्ये ते प्रकृतावागादयः प्राणेन्द्रियाणीत्युच्यन्ते, न प्राणः, 'एतस्माज्जायते प्राणः' इत्यादौ वैलक्षण्योपदेशात्।

नन्वयं भेदव्यपदेशः इन्द्रियमनसोरपि समान इत्युक्तमिति चेन्न; 'मनः षष्ठानीन्द्रियाणि' इति स्मृत्या मानसेन्द्रिययोस्तत्वान्तरत्वाभावाभ्युपगमात्। न च प्रकृतेऽपि 'हन्तास्यैव' इति श्रुतेरिन्द्रियाणां प्राणात् तत्त्वान्तरत्वाभावाभ्युपगमः।' 'त एतस्यैव सर्वे रूपमभवन्' 'तस्मादेत एतानाख्यायन्ते प्राण' इति वाक्यशेषेणेन्द्रियेषु प्राणशब्दस्य लाक्षणिकत्वप्रतिपादनेन प्राणेन्द्रियाणां तत्त्वान्तरत्वाभ्युपगमात्। न हि

इन्द्रियेभ्यस्तत्वान्तरे चक्षुरिन्द्रियशब्दो लाक्षणिको दृष्टः। तस्मात् '**त एतस्यैव सर्वे रूपमभवन्**' इत्यनेन प्राणाधीनचेष्टत्वं इन्द्रियाणां दृश्यते; न तद्व्यापारत्वम्।

किञ्च– भेदश्रुतेः वागादीन्द्रियप्रकरणमुपसंहृतम्। '**अथ हेममासन्यं प्राणमूचुः**' इति भिन्नप्रकरणे प्राणस्येन्द्रियेभ्यो भेदश्रवणात् प्राणव्यापारत्वमिन्द्रियाणामित्युपदिश्यते। '**अथ ह आस्ये भवमासन्यमिमं प्राणं वागादय ऊचुः**' इति प्राणेन्द्रियाणां तत्त्वान्तरत्वमुपदिष्टम्। कुतः? वैलक्ष्यानुभवद्योतनात्। सुप्तौ प्राणस्येन्द्रियलयेऽपि व्यापारदर्शनादतो नोदाहृतवाक्यविरोध इति सिद्धम्।

अपि च– "श्रेष्ठादन्येष्वेव प्राणेषु तद्व्यपदेशात् '**इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः**' इत्यादिमिश्चक्षुरादिषु समनस्केष्वेवेन्द्रियशब्दो व्यपदिश्यते"। तस्मात् श्रेष्ठव्यतिरिक्ता एव प्राणास्तथापि नेन्द्रियान्तर्भूतत्वम्।

अस्मिन्नर्थे हेत्वन्तरमाह–

## ॥ ११० ॥ भेदश्रुतेर्वैलक्षण्याच्च ॥ १५ ॥

'**एतस्माज्जायते प्राणः**' इत्यादिबहुश्रुतिबलात् सुप्ताविन्द्रियवत्कारणशरीरे मनसो लयानुभवेऽपि '**मनः षष्ठानीन्द्रियाणि**' इत्यादिस्मृतेर्दुर्बलत्वात् मनस इन्द्रियत्वं न युज्यते। '**इन्द्रियाणां मनो नाथः मनोनाथस्तु मारुतः इन्द्रियेभ्यः परं मनः**' इत्यादिश्रुत्यनुकूलबहुस्मृतिदर्शनान्मनसो वैलक्षण्यम्। '**तत्प्राणेष्वन्तर्मनसो लिङ्गमाहुः**' '**अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्**' इत्यादिश्रुतिशतेषु प्राणादधिकस्थितत्वोपदेशात्।

किञ्च– साङ्ख्ययोगशास्त्रेषु सूक्ष्मभूतपञ्चकतत्त्वार्धेन मानसोत्पत्तेः तद्भिन्नार्धेन ज्ञानेन्द्रियोत्पत्तेश्च निर्देशात्; सूक्ष्मभूतपञ्चकरजोगुणार्धेन प्राणोत्पत्तेस्तद्भिन्नार्धेन कर्मेन्द्रियोत्पत्तेश्च द्योतनात्, '**आत्मा मनसा संयुज्यते, मन इन्द्रियेण इन्द्रियमर्थेन ततः प्रत्यक्षं**' इति न्यायेन सर्वेन्द्रियव्यापकत्वेन मनस इन्द्रियत्वमौपचारिकम्। तस्मात्प्राणमनसोरिन्द्रियादधिकत्वं निष्प्रत्यूहम्।

---

## संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ७ ॥

### त्रिवृत्करणकर्तुः परमात्मनः शिवस्य चराचरसृष्टिहेतुत्वसमर्थनम्

**'हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्'**, **'नारायणाद्ब्रह्मा जायते'** इत्यादौ हिरण्यगर्भ-नारायणादीनां जगत्कारणत्वावगमात्, **'एतस्माज्जायते प्राणः'** इत्यादिश्रुतिनिष्ठजगज्जन्मादिकारणत्वं परब्रह्मणश्शिवस्यैव कथमुपपद्यत इति आशङ्कायामधिकरणान्तरेणाह—

## ॥ १११ ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १६ ॥

**त्रिवृत्कुर्वतः**— त्रिवृत्करणकर्तुः परमात्मनः शिवस्य सकाशादेव संज्ञामूर्तिक्लृप्तिः-नामरूपात्मकचराचरसृष्टिर्भवति । कस्मात्? उपदेशात् । **'सेयं देवतैक्षत'** इति श्रुतौ परमात्मनश्शिवस्यैव नामरूपात्मकशरीरसृष्टिकर्तृत्वोपदेशात् हिरण्यगर्भविष्ण्वादिकर्तृत्वविधायकानां श्रुतिस्मृतिपुराणवाक्यानां अवान्तरसृष्टिविषयत्वमिति **वायवीयसंहितादिवाक्यानुसारेण जन्माधिकरणे** बहुधा प्रपञ्चितम् । तत्रापि परमशिव एव हिरण्यगर्भ-विष्णु-कालरुद्रशरीरेः स्थित्वा स्थावरजङ्गमात्मकजगज्जन्मादिकं करोतीति सूत्रसूचितसूक्ष्मार्थः ।

पूर्वत्र व्योमाद्यन्तर्यामितया शिवस्य परब्रह्मणः पवनादिकारणत्वमुपदिष्टम्; **'ध्यायीतेशानं प्रध्यायितव्यम्'** इत्यादिना ब्रह्मादिकारणत्वं तस्यैव व्यपदिष्टम् । अथापि तदवान्तरसृष्टौ तदन्तर्यामितया स्थावरजङ्गमात्मक जगत्कारणत्वं तत्रानुक्तम् । तस्मादत्राधिकरणान्तरे निर्णीतम्— **'यो रुद्रोऽग्नौ यो अप्सु'** **'अहमेकः प्रथममासम् । वर्तामि च'** **'नान्यः कश्चिन्मत्तो । व्यतिरिक्तः, सोऽन्तरादन्तरं प्राविशत्'** इत्यादौ शिवस्य सकलपूर्वभावित्वसर्वान्तर्यामित्वाद्यनन्यसाधारणधर्मोपदेशात् । **'धाता यथापूर्वमकल्पयत्, दिवं च पृथिवीं चान्तरिक्षम् ।'** इत्यादिना हिरण्यगर्भस्य जगत्कारणत्वावगमात् **'नारायणात् ब्रह्मा जायते'** इत्यादौ नारायणस्य चतुर्मुखादिकारणत्वदर्शनात् । **'तत्तेज ऐक्षत बहु स्यां प्रजायेय'**, इति **'तदापोऽसृजत'**, **'ता आप ऐक्षन्त' 'ता अन्नमसृजत'** इत्यादौ च वह्न्यादिभूताभिमानदेवतानां कारणत्वनिर्देशात्,

**'विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते'** इत्यादौ जीवस्य भूतकर्तृत्वद्योतनाच्च शिवस्य हिरण्यगर्भादीनां वा सर्वभूतजगज्जन्मादिकारणत्वमिति सन्दिह्यते।

**'हिरण्यगर्भस्समवर्तताग्रे'** इत्यादौ प्रजापतिशब्दस्य हिरण्यगर्भे एव रूढत्वात् **'नारायणात् ब्रह्मा जायते'** इत्यादौ नारायणस्यैव सर्वकारणत्वद्योतनात्।

"किञ्च– **'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि'** इति जीवकर्तृकत्वश्रवणात्; न हि परा देवता स्वेन रूपेण, नामरूपे व्याकरवाणीत्यैक्षत; अपि तु स्वांशभूतेन जीवरूपेण; **'अनेन जीवेनात्मना'** इति वचनात् हिरण्यगर्भादीनामेव जगज्जन्मादिकारणत्वम्।

नन्वेवं चारेणानुप्रविश्य परबलं सङ्कलयानीतिवत् व्याकरवाणीत्युत्तमपुरुषः कर्तृस्थक्रियश्च प्रविशतिर्लाक्षणिकः स्यात्। नैवम्। तत्र राजचारयोः स्वरूपभेदाल्लाक्षणिकत्वम्; इह तु जीवस्यापि स्वांशत्वेन स्वरूपत्वात् तेन रूपेण प्रवेशो व्याकरणं चात्मन एवेति न लाक्षणिकत्वप्रसङ्गः। न च सहयोगलक्षणेयं तृतीया; कारकविभक्तौ सम्भवन्त्यामुपपदविभक्तेरन्याय्यत्वात्। न च करणे तृतीया; ब्रह्मकर्तृकयोः प्रवेशव्याकरणयोर्जीवस्य साधकतमत्वाभावात्। न च जीवस्य कर्तृत्वं प्रवेशमात्रे पर्यवस्यति, नामरूपव्याकरणन्तु ब्रह्मण एव– इति शक्यं वक्तुम्; क्त्वाप्रत्ययेन समानकर्तृकत्वप्रतीतेः। जीवस्य स्वांशत्वेन स्वरूपत्वेऽपि परस्वरूपव्यावृत्त्यर्थः **'अनेन जीवेन'** इति पराक्त्वेन परामर्शः। अतो हिरण्यगर्भकर्तृकेयं नामरूपव्याक्रिया तस्मात्–

**'नाम रूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम्।**
**वेदशब्देभ्य एवादौ देवादीनां चकार सः॥'**

इत्यादिस्मृतिषु चतुर्मुखकर्तृकसृष्टिप्रकरणे नामरूपव्याकरणं सङ्कीर्त्यते।

अत एव जीवस्य वा समष्टिरूपहिरण्यगर्भस्य वा तत्कारणभूतनारायणस्य वा नामरूपव्याकरणं समञ्जसमिति प्राप्ते प्रचक्ष्महे–" ॥ **संज्ञामूर्तिक्लृप्तिस्त्विवति** ॥

"तुशब्दः पूर्वपक्षं व्यावर्तयति। **संज्ञामूर्तिक्लृप्ति–** नामरूपव्याकरणम्। तत्त्रिवृत्कुर्वतः परब्रह्मण एव; तस्यैव नामरूपव्याकरणोपदेशात्।" **'सदेव सौम्येदमग्र आसीत्'** इत्यत्र

सच्छब्दवाच्यः महाप्रळयसाक्षी सर्वकारणशिव एव। कालत्रयावाच्यत्वेन तस्यैव मुख्यत्वं 'ऋतं सत्यं परं ब्रह्म' इत्यादिश्रुतिदर्शनात्। अवान्तरसृष्ट्यादिकारणत्वमपि नान्यस्योपपन्नम्। 'अण्डं हिरण्मयं मध्ये समुद्रं रुद्रस्य वीर्यात्प्रथमं बभूव; तस्मिन् ब्रह्मविष्णू जायेते जातवेदाः' इति श्रुतौ त्रिवृत्करणेन परमशिवस्तेजोऽण्डमुत्पाद्य तत्र पश्चाच्चतुर्मुखादिसृष्ट्युपदेशात् हिरण्यगर्भादीनां त्रिवृत्करणकारणत्वं नोपपन्नम्। अथर्वणशिखायामपि 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते; सर्वाणि चेन्द्रियाणि सह भूतैः; सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुराकाशमध्ये' इति। अथर्वशिरशि प्रथमखण्डे— 'सोऽब्रवीदहमेकः प्रथममासं वर्तामि च भविष्यामि च। नान्यः कश्चिन्मत्तो व्यतिरिक्तः। सोऽन्तरादन्तरं प्राविशत्' इत्युपक्रम्य 'सर्वश्च मामेव यो वेद स सर्वं वेद' इत्यन्तेन सर्वचिदचित्प्रपञ्चानुप्रविष्टतया सर्वशब्दवाच्यत्वमुपदिश्य, द्वितीयखण्डे च पूर्वानुप्रवेशादेव यो रुद्रः स भगवान् यच्च ब्रह्म तस्मै नमो नमः, यो वै रुद्रः स भगवान् यश्च विष्णुस्तस्मै नमो नमः' इत्यारभ्य ब्रह्म-विष्णु-महेश्वरेन्द्र-विनायकादि-सर्वशब्दवाच्यत्वं शिवस्यैव विज्ञायते। तस्मात् सर्वभूतभौतिककारणत्वं सर्वशब्दवाच्यत्वं तस्यैवोपपन्नम्। मनुस्मृतौ—

'अप एव ससर्जादौ तासु वीर्यमवासृजत्।
तदण्डमभवद्धैमं सहस्रार्कसमप्रभम्॥

तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोक पितामहः।
आपो नारा इति प्रोक्ता आपो वै नरसूनवः॥
ता एवायतनं तस्य ततो नारायणः स्मृतः॥

नारायणः परोऽव्यक्तादव्यक्तादण्डसम्भवः।
अण्डस्यान्तस्त्वयो लोकाः सप्तद्वीपा च मेदिनी॥' इति।

शैवपुराणे—

'रुद्रसंज्ञस्य देवस्य रूपे मूर्तिः प्रजायते।
तेन क्षिप्तं रसे वीर्यं परमूर्त्यभिमानिना॥

तदण्डमभवद्दिव्यं सहस्रकिरणप्रभम् ।
विष्णुस्तत्राविशत्साक्षात् मम शक्तेस्तु वैभवात् ॥

पुनर्नारायणाख्यं मे नियोगात्प्राप्तवानसौ ।
इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ॥

आपस्सूक्ष्मो रसो ज्ञेयः रसो नारः प्रकीर्तितः ।
नरहेतुः परो ब्रह्मन् नरः साक्षाच्छिवो मतः ॥

नारमस्यायतनं प्रोक्तं तेन नारायणः स्मृतः ।
ब्रह्मापि नरशार्दूल गन्धमूर्तिस्समाविशत् ॥'

किञ्च– श्रुत्यन्तरेऽपि **'तेजोऽभिमानी रुद्रः अपस्सृजति । तासु च वीर्यं निक्षिपति । तासु तत्त्वसहितो विष्णुरभिवर्तते', आपो नरा । नरो रुद्रः'** इति रुद्रसम्भूतजलतत्त्वायतनत्वेन विष्णोर्नारायणसंज्ञा उपदिष्टा । वेदान्तेषु हिरण्यगर्भादिपूर्वमेव सूक्ष्मभूतोद्भूतलिङ्गशरीरान्तरमेव त्रिवृत्कृतस्थूलाण्डे वृत्तिव्यपदेशात् न सर्वथा हिरण्यगर्भादीनां त्रिवृत्कृताण्डहेतुत्वं निर्दिश्यते ।

"उत त्रिवृत्करणं कुर्वत एव वा नामरूपव्याकरणमुपदिश्यते । **'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ; तासां त्रिवृतं त्रिवृतमेकैकां करवाणि'** इति समानकर्तृकत्वप्रतीतेः । त्रिवृत्करणन्तु चतुर्मुखस्याण्डान्तर्वर्तिनो न संभवति । त्रिवृत्कृतैस्तेजोऽबन्नैर्ह्यण्डमुत्पद्यते । चतुर्मुखस्य चाण्डे सम्भवः स्मर्यते । **'तस्मिन्नण्डेऽभवद्ब्रह्मा सर्वलोकपितामहः'** इति । अतः त्रिवृत्करणं शिवस्यैव । तत्समानकर्तृकं नामरूपव्याकरणं च तस्यैवेति विज्ञायते । कथं तर्हि अनेन जीवेनेति संगच्छते? **'आत्मना जीवेन'** इति सामानाधिकरण्यात् जीवशरीरकं परब्रह्मैव जीवशब्देनाभिधीयते । **यथा 'तत्तेज ऐक्षत, अपोऽसृजत, ता आप ऐक्षन्त', 'ता अन्नमसृजन्त'** इति तेजःप्रभृतिशरीरकं परमेव ब्रह्माभिधीयते" ।

**'यो रुद्रोऽग्नौ'** इत्यादिना सर्वान्तर्यामित्वं तस्यैव स्पष्टमुपदिष्टम् । अष्टमूर्तित्वं वेदशास्त्रपुराणेषु तस्यैव प्रसिद्धम् । तस्माज्जीवसमष्टिभूतहिरण्यगर्भशरीरकस्य परब्रह्मण एव कर्मेदं

नामरूपव्याकरणम् । एवञ्च **'प्रविश्य नामरूपे व्याकरवाणि'** प्रविशतिरुत्तमपुरुषश्चापीह मुख्यार्थावेव भवतः । प्रवेशव्याकरणयोः समानकर्तृकत्वमप्युपपद्यते । चतुर्मुखकर्तृकसृष्टिप्रकरणे नामरूपव्याक्रियोपदेशश्चोपपद्यते । अथ **'सेऽयं देवता'** इत्यादिवाक्यस्यायमर्थः— 'इमास्तेजोऽबन्नरूपास्तिस्रो देवता अनेन जीवेन जीवसमष्टिविशिष्टेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणि, तदर्थमन्योन्यसंसर्गमप्राप्तानां एषां तेजोऽबन्नानां विशेषसृष्ट्यसमर्थानां तत्सामर्थ्याय़ैकैकां त्रिवृतं करवाणि' इति । तस्मात् शिवस्यैव परब्रह्मणः कर्मेदं नामरूपव्याकरणम् ।

अथ स्यान्नामरूपव्याकरणस्य त्रिवृत्करणेनैककर्तृकत्वात्परमात्मकर्तृकत्वमिति न शक्यते वक्तुं, त्रिवृत्करणस्यापि जीवकर्तृकत्वसम्भवात् । अण्डसृष्ट्युत्तरकाले हि चतुर्मुखसृष्टजीवेषु त्रिवृत्करणप्रकार उपदिश्यते ।

**'यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहि'** इति, **'अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो भागस्तत्पुरीषं भवति । यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः'** इत्यादिना तथा पूर्वस्मिन्नपि वाक्ये **'यदग्ने रोहितं रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपां, यत्कृष्णं तदन्नस्य'** इत्यादिना चतुर्मुखसृष्टाग्न्यादित्य-चन्द्र-विद्युत्सु त्रिवृत्करणं प्रदर्श्यते । नामरूपव्याकरणोत्तरकालं च त्रिवृत्करणं श्रूयते । **'सेयं देवतेमास्तिस्रो देवताः'**, **'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतम्' 'त्रिवृतमेकैकामकरोत्'** इति तत्राह—

त्रिवृत्करणस्वरूपनिरूपणम्

## ॥ ११२ ॥ मांसादिभौमं यथा शब्दमितरयोश्च ॥ १७ ॥

पूर्वत्र त्रिवृत्करणहेतुत्वं हिरण्यगर्भादीनामस्तीत्याशङ्कायां तदतिव्याप्तिवारणार्थं अवान्तरसृष्ट्यादिष्वपि **'अनेन जीवेनात्मनानुप्रविश्य'** इत्यादिना हिरण्यगर्भविष्ण्वादिजीवशरीरानुप्रविष्टतया शिवस्य परब्रह्मणः तत्कर्तृत्वं साधितम् । **तत्त्रिवृत्करणं किमित्याकाङ्क्षायां एतत्सूत्रारम्भः—** अविज्ञातं विशेषरूपेणादृष्टमेवाभूदिति यावत् । तासां तिसृणां देवतानां समासस्समुदाय इति यावदिति श्रुत्यर्थः । इमास्तिस्रस्त्रिवृता देवताः

पुरुषशरीरं प्राप्य त्रिवृत्कार्यत्रयरूपेणैकैका देवता तेजआदिलक्षणा अवर्तत इति द्वितीयः श्रुत्यर्थः। तथाहि— पृथिव्याः व्रीहियवादिरूपायाः पुरुषेण अशितायाः कार्यत्रयं शरीरे वर्तते। पुरीषं मांसं मनश्चेति। एवं पीतानामपां मूत्रलोहितप्राणश्चेति कार्यत्रयं, तेजोऽग्न्यादिदीपितस्य घृतादिरूपस्य कार्यत्रयं अस्थि-मज्जा-वाक्चेति। प्राणे जलाधीन-स्थितिमत्वमात्रेण जलकार्यत्वव्यपदेशः; तस्य वायुकार्यत्वेन प्रसिद्धेः। एवं मनसोप्यन्न-भक्षणे स्वास्थ्यमात्रेण तत्कार्यत्वं, वाचोऽपि ज्ञानानुकूलत्वसाम्येन तेजःकार्यत्वं व्यपदिश्यते। एवं देहे कार्यत्रयरूपेण वर्तनमेवाध्यात्मिकं त्रिवृत्करणमिति तदिदमाह सूत्रकारः **मांसादीति—**

"यदुक्तमण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टदेवतादिविषयोऽयं '**तासां त्रिवृतं त्रिवृतमेकैकामकरोत्**' इति त्रिवृत्करणोपदेश इति तन्नोपपद्यते; '**अन्नमशितं त्रेधा विधीयते**' इत्यत्र मांस-मनसोः पुरीषादणुत्वेनाणीयस्त्वेन च व्यपदिष्टयोः कारणानुविधायित्वेन आप्य तेजसत्वप्रसङ्गात्, '**आपः पीताः**' इत्यत्रापि मूत्रप्राणयोः स्थविष्ठाणीयसोः पार्थिवत्व-तैजसत्वप्रसङ्गाच्च; न चैवमिष्यते। मांसादि हि भौममिष्यते। पुरीषवन्मांसमनसी अपि भौमे— पार्थिवे इष्येते। '**अन्नमशितं त्रेधा**' इति प्रक्रमात्। '**यथा शब्द-मितरयोश्च**' इतरयोरपि '**आपः पीताः**', '**तेजोऽशितं**' इति पर्याययोर्यथाशब्दं विकारा इष्यन्ते। '**आपः पीतास्त्रेधा विधीयन्ते**' इत्यपामेव त्रेधा परिणामः शब्दात् प्रतीयते। तथा '**तेजोऽशितं त्रेधा विधीयते**' इत्यपि तेजस एव त्रेधा परिणामः शब्दात् प्रतीयते। अतः पुरीष-मांस-मनांसि पृथिवीविकाराः, मूत्र-लोहित-प्राणाः अब्विकाराः, अस्थि-मज्जा-वाचस्तेजोविकाराः इति प्रतिपत्तव्यम्। '**अन्नमयं हि सोऽम्य मनः, आपोमयः प्राणः। तेजोमयी वाक्।**' इति वाक्यशेषविरोधाच्च। अतः '**तासां त्रिवृतं त्रिवृतमेकैकामकरोत्**' इत्युक्तः त्रिवृत्करणप्रकारः अन्नमशितमित्यादिना न प्रदर्श्यते। तथा सति मनःप्राणवाचां त्रयाणामप्यणीयस्त्वेन तैजसत्वात् '**अन्नमयं हि सोम्य मनः**' इत्यादिर्विरुध्येत। प्रागेव त्रिवृत्कृतानां पृथिव्यादीनां पुरुषं प्राप्तानां अन्नमशितमित्यादिना एकैकस्य त्रेधा परिणाम उच्यते। अण्डसृष्टेः प्रागेव च तेजोऽबन्नानां त्रिवृत्करणेन भवितव्यम्, अत्रिवृत्कृतानां तेषां कार्यारम्भासामर्थ्यात्। अन्योन्यसंयुक्तानामेव हि कार्यारम्भसामर्थ्यम्। तदेव च त्रिवृत्करणम्। तथा च स्मर्यते।

'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
महदाद्याविशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥' इति ।

अत एव च '**अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् तासां ; त्रिवृतं त्रिवृतमेकैकामकरोत्**' इति पाठक्रमो अर्थक्रमेण बाध्यते । अण्डान्तर्वर्तिष्वग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनं **श्वेतकेतोः** शुश्रूषोरण्डान्तर्वर्तित्वेन तस्य बहिष्ठवस्तुषु त्रिवृत्करणप्रदर्शनायोगात् त्रिवृत्कृतानां कार्येष्वग्न्यादित्यादिषु क्रियते ।"

"स्यादेतत् '**अन्नमशितं, आपः पीताः, तेजोऽशितम्**' इति त्रिवृत्कृतानामन्नादीनामेकैकस्य तेजोऽबन्नात्मकत्वेन त्रिरूपस्य कथमन्नमापस्तेज इत्येकैकरूपेण व्यपदेश उपपद्यत' इत्याशङ्कायामाह"

## ॥ ११३ ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ १८ ॥

वैशेष्यं विशेषभावः, विशेषशब्दो विकारशब्दवद्धर्मपरो धर्मिपरश्च । अत्र तु धर्मिपरः विशेषभावो वैशेष्यमाधिक्यरूपम् । त्रिवृत्करणेन त्रिरूपेऽप्येकैकस्मिन् अन्नाद्याधिक्यात्तत्र तत्रान्नादिवादः द्विरुक्तिर्निश्चयात्मकत्वमध्यायपरिसमाप्तिभावं च दर्शयति ।

किञ्चात्र गमनाकुञ्चनप्रसारणादिरूपेण प्राणादिरूपेण च वायुकार्यस्य दर्शनात् तद्भिन्नभूतचतुष्टयस्य अवकाशप्रदानेनाकाशकार्यस्य सर्वानुभवसिद्धत्वात् कथं त्रिवृत्करणमात्रत्वमुपपन्नमिति चेत् भूतत्रयोपदेशमात्रेण **कैमुतिकन्यायेन** परिशेषभूतद्वयमर्थात् सूचितम् । अतश्शरीरस्य पाञ्चभौतिकत्वेनापि विरोधः ; 'यथा लिङ्गशरीरोत्पत्तिनिरूपणे ह्यपञ्चीकृतसूक्ष्मभूतोद्भूतान्तःकरणज्ञानेन्द्रियाद्युक्तौ सर्वत्र गुणत्रयत्रिवृत्करणसङ्क्रमसत्त्वेऽपि सूक्ष्मभूतसमष्टिसात्त्विकार्धेनान्तःकरणं ; तद्भिन्नार्धेन ; ज्ञानेन्द्रियपञ्चकोशोत्पत्तिः तद्वत्सूक्ष्मपञ्चभूतसमष्टिरजोगुणार्धेन प्राणस्तदितरार्धेन कर्मेन्द्रियपञ्चकोत्पत्तिः' इति । गुणाधिक्येन तदात्मकत्वशास्त्रव्यपदेशवदत्र स्थूलशरीरे भूतत्वाधिक्येन पृथिवीत्वव्यवहारो न विरुध्यते ।

नन्वन्तःकरणाद्युत्पत्तौ न गुणत्रयसङ्क्रमणं इति चेन्न। मानसेन्द्रियादौ गुणत्रयात्मकत्वस्य कालभेदेन सर्वानुभवसिद्धत्वात्[1], '**कारणगुणाः कार्ये परिसंक्रामन्ति**' इति न्यायाच्च।

केचित्तु '**अनेन जीवेनानुप्रविश्य**' इत्यत्र जीवस्यानुप्रवेशकर्तृत्वं, नामरूपव्याकरणकर्ता तु परमेश्वरः इत्याहुः। तन्मते श्रुतिविरोधः '**तत्सृष्ट्वा तदेवानुप्राविशत्' तदनुप्रविश्य सच्च त्यच्चाभवत्**' इति नामरूपव्याकरणस्य तत्समभिव्याहृतानुप्रवेशस्य च परमात्मकर्तृकत्वावगमात् समानकर्तृकत्वं न घटते।

जीवस्यापीश्वराद्वस्तुतोऽनन्यत्वेन तदनुप्रवेशो ह्यौपचारिक इति **अद्वैतवादिनो** वदन्ति। तदसमंजसम्-प्रात्यक्षिकश्रुतिस्मृतिविरोधात्, कल्पितगजाश्वयोरिव जीवेश्वरयोः कल्पितत्वे चेतनत्वायोगेन कर्तृत्वायोगात् बिम्बप्रतिबिम्बयोरेकत्र व्यवस्थापनासम्भवाच्च। '**यतो वा इमानि भूतानि जायन्ते**' इत्यादिश्रुतिषु चेतनाचेतनोत्पत्ति-स्थिति-लयकारणत्वं परमेश्वरभिन्नस्य न सम्भवति। '**प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतुः**' इत्यत्र सर्वजीवानां तिरोधानानुग्रहकर्तृत्वस्य च परमेश्वराधीनत्वावगमात्, भक्तानां चरमशरीरिणां सर्वकालसर्वावस्थासु पुनर्जन्महेतुभूतशरीरेन्द्रियाद्यभिमानकर्तृत्वनिराकरणेन शिवाधीनताबुद्धिप्रसङ्गेन निराभारतया **भ्रमरकीटन्यायेन** स्वाभाविकजीवत्वनिवृत्तिपूर्वकशिवत्वप्राप्तिस्सिध्यतीति द्वैताद्वैतसिद्धान्तस्थापकसर्ववेदान्ततात्पर्यार्थस्सङ्गृह्यते।

इति श्रीमद्यतिव्रजपरिवृढ-श्रीपतिपण्डितभगवत्पादाचार्यस्वामिकृत-भेदाऽभेदात्मक-विशेषाद्वैत-सिद्धान्तव्यवस्थापक-वैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

## श्रीकरभाष्ये

### विरोधपरिहाराभिधानस्य द्वितीयाध्यायस्य प्राणादिसप्ताधिकरणावच्छिन्न-तथा प्राण इत्यष्टादशसूत्रात्मकः चतुर्थःपादस्समाप्तः

## द्वितीयाध्यायस्समाप्तः

---

[1] परिभेदवादः (ज) (ग A)

अथ श्रीपतिपण्डितभगवत्पादाचार्यविरचिते

ब्रह्ममीमांसासूत्र-

# श्रीकरभाष्ये

## तृतीयाध्यायस्य

### प्रथमः पादः

## तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

पूर्वाध्याये परब्रह्मणः सच्चिदानन्दस्वरूपस्य सर्वशक्तिमतः सर्वविलक्षणस्य चराचर-प्रपञ्चकारणस्य लीलामङ्गळविग्रहस्य शिवस्य जगज्जन्मादिकारणत्वविरोधो निराकृतः। तत्र **प्रथमपादे** साङ्ख्य-योग-तार्किकाद्वैतादिवादो निरस्तः। **द्वितीये** प्रधानकारणत्वं निरस्तम्। **तृतीये** सृष्ट्यवान्तरविरोधपरिहारपूर्वकं जीवनित्यत्वादिधर्मः प्रदर्शितः। **चतुर्थे** प्राणेन्द्रियाणां स्वरूपं परमशिवसकाशात्तज्जन्यत्वं चोपदिश्य सर्वेषां नामरूपव्याकरणं प्रदर्शितम्। एतदध्याय**प्रथमपादे** जीवस्य लोकान्तरगमनागमनविचारो व्याचक्ष्यते। **द्वितीये** परमशिवस्वरूपलक्षणादिप्रसङ्गः। **तृतीये** तदुपासनविशेषगुणाः उपन्यस्यन्ते। **चतुर्थे** ब्रह्मचर्याद्याश्रमचतुष्टयधर्माः निरूप्यन्ते।

### जीवस्य लोकान्तरगमनागमनविचारः

परमकारुणिकः परमेश्वरः सर्वजीववात्सल्येन तदाधारभूतत्रिवृत्कृताण्डोत्पत्तिं जीवानु-प्रवेशेन नामरूपव्याकरणं च कृतवानिति प्रस्तावे प्रथमं जीवस्य शरीरभावान्नीरूपत्वा-दीश्वरानुप्रविष्टत्वादतीन्द्रियत्वादगोचरत्वादप्रमेयत्वात् ब्रह्मस्वरूपत्वात् तस्य लोकान्तरगमनागमनं कथमुपपन्नमित्याशङ्कायामाह—

## ॥ ११४ ॥ तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

**तदन्तरप्रतिपत्तौ** लोकान्तरप्राप्तिकाले लिङ्गशरीरेण अणुरूपतया जीवोऽस्मिन् लोके अग्नौ हुतैरदृष्टशब्दवाच्यैः समित्पुरोडाश-दधि-क्षीर-सोमरस-चरु-दर्भाज्यप्रभृतिभिर्द्रव्यैः सम्परि-ष्वक्तः परिवेष्टितस्सन् धूमादिमार्गेण स्वर्गलोकं **रंहति**— गच्छति; कुतः? **प्रश्न-निरूपणाभ्याम्**। 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति।'[1] इति

[1] छां. ५-३-३.

प्रश्नः। '**इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति**' इति प्रतिवचनम्। उभाभ्यां प्रश्न-प्रतिवचनाभ्यां स्वाभिमानेन कर्मसु प्रवृत्तानां जीवानां अनेकशरीरप्रवेश-निर्गमनव्यापारवत्त्व-मुपदिष्टम्। [1]एतत् दुष्कृतिनामप्युपलक्षणम्। '**एष एव साधुकर्म कारयति**' इत्यादि-बहुश्रुतिदर्शनात् जीवकृतकर्मानुसारेण परमेश्वरस्य पुण्यापुण्यलोकप्रापकत्वमर्थात्सूचितम्। तस्मात् स्वाभिमानपुण्यापुण्यकृतबद्धजीवानां जनन-मरणाद्यैहिकामुष्मिकमहाक्लेशभयातुराणां अपुनरावृत्तजीवत्वनिवृत्तिपूर्वकशिवत्वप्राप्ति[2]रूपकैवल्यविभूतिः सम्पादनीयेति सूत्रसूचितभावार्थः।

'**अयमात्मा ब्रह्म**', '**अहं ब्रह्मास्मि**', '**तत्त्वमसि श्वेतकेतो**', '**तत्त्वमेव त्वमेव तत्**' इत्यादिषु शारीरस्य ब्रह्मत्वव्यवस्थापनात्, '**ज्योतिष्टोमेन स्वर्गकामो यजेत**', '**पुण्यचितो लोकः क्षीयते कर्मचितो लोकः क्षीयते**' इत्यादौ तस्य स्वर्गादिगमनागमनप्राप्त्युपदेशात् परलोकगमनागमनमस्ति वा न वा इति चिन्त्यते।

जीवस्य परलोकप्राप्तिरनुपपन्ना, कुतः? ब्रह्मरूपत्वात्, कर्मकर्तृत्वस्य अन्तःकरण एव सत्वात्, सुप्ति-मूर्छादौ मनोरहितत्वेन निष्क्रियत्वभावस्य सिद्धत्वात्, '**न जायते म्रियते वा**' इति श्रुतौ '**अच्छेद्योयमदाह्योऽयं**' इत्यादिस्मृतौ च तस्य जन्ममरणदुःखादिविलक्षणत्वस्योपदेशितत्वात्।

किञ्च— **शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वमिति न्यायेन** अन्तःकरणकृत-कर्मणामप्यचैव क्षणत्रयेणैव नष्टत्वदर्शनात् शरीरचरमश्वासकाले तद्विशिष्टपृथिव्यादिभूतानां महाभूतेषु विलयद्योतनाच्च जीवस्य सर्वथा परलोकगमनागमनशास्त्रमयुक्तमिति प्राप्ते प्रचक्ष्महे—

'**अयमात्मा ब्रह्म**' इत्यत्र माण्डूक्ये परमशिवप्रकरणे शिवात्मकप्रणवपरत्वेन व्यपदेशात् जीवपरत्वसाधनेऽपि न जीवब्रह्मत्ववादो युक्तः। '**सर्वो वै रुद्रः**', '**यस्य पृथिवी शरीरम्**', '**यस्य आपः शरीरं**', '**यस्य आत्मा शरीरं**' इत्यादिष्वष्ट-मूर्तौ शिवे जीवस्यैकमूर्तित्वोपदेशात्, '**असावादित्यो ब्रह्म**', '**कं ब्रह्म, खं ब्रह्म**' इत्यादिवत्तस्य ब्रह्मत्वमविरोधम्। यथा '**अहं ब्रह्मास्मि**', '**तत्त्वमसि**' इत्यादिश्रुतयः सर्व-वेदान्तमुख्यार्थप्रकाशवद्द्वैताद्वैतविधायकत्वेनोपासकस्य जीवस्योपास्यशिवप्राप्तिं प्रतिपादयन्ति, तथान्यत्र दृष्टान्तानुसारेण '**यथा नद्यः**' इत्यादिषु जीवब्रह्मणोः प्राप्यप्रापकत्वं स्पष्ट-मुपदिष्टम्। '**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति**' इत्यत्र जीवेश्वरयोः

---

[1] एतेन (ग A) [2] एतत्कैवल्य (ग A)

संसारभोक्तृत्वाभोक्तृत्वावगमात् , छात्राभावेनाचार्ये विद्याप्रकाशकत्वाभावेऽपि न यथा तस्य विद्वत्त्वभङ्गप्रसङ्गः तद्वत्सुषुप्ति-मूर्छादौ जीवस्य मनोरहितत्वेन कर्मकर्तृत्वादर्शनेऽपि अकर्तृत्वं नोपपद्यते । जीवस्य कर्तृत्वे नानादित्वेऽपीहामुत्र गमनागमनबोधकशास्त्रमविरोधम् । क्षणत्रयेण कर्मणां नष्टत्वेऽप्यपूर्वफलोत्पादकत्वाद्गमनागमनशास्त्रमप्यविरोधम् ।

वेदवेदान्तेषु सूक्ष्मावस्थापन्नदधि-क्षीरादिद्रव्याणामेवादृष्टशब्दवाच्यत्वेनादृष्टानामपि द्रव्यत्वाद्देवशरीराकारेण परिणामस्सम्भवति । तस्मात् "पञ्चाग्निविद्यायामेवं प्रश्न-प्रतिवचने आम्नायेते । 'श्वेतकेतुं किलाऽऽरुणेयं पाञ्चालः प्रवाहणः कर्मिणां गन्तव्यदेशं पुनरावृत्तिप्रकारं च देवयान-पितृयानपथव्यावर्तने अमुष्य लोकस्य प्राप्तारं च वेत्थ' इति पृष्ट्वा, इदमपि पप्रच्छ– 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति । तत इमं पश्चिमं प्रश्नं प्रतिब्रुवंश्च द्युलोकमग्नित्वेन रूपयित्वा 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति । तस्या आहुतेः सोमो राजा सम्भवति' इत्यादिना– 'देवाख्याः जीवस्य प्राणाः' अग्नित्वेन रूपिते द्युलोके श्रद्धाख्यं वस्तु प्रक्षिपन्ति ; सा च श्रद्धा सोमराजाख्यामृतमयदेहरूपेण परिणमते ; तं चामृतमयं देहं देहान्त एव प्राणाः पर्जन्येऽग्नित्वेन रूपिते प्रक्षिपन्ति । स च देहस्तत्र प्रक्षिप्तो वर्षं भवति ; तच्च वर्षं त एव प्राणाः पृथिव्यामग्नित्वरूपितायां प्रक्षिपन्ति ; तच्च तत्र प्रक्षिप्तमन्नं भवति ; तच्चान्नं त एव पुरुषेऽग्नित्वरूपिते प्रक्षिपन्ति ; तच्च तत्र रेतो भवति ; तच्च त एव योषायामग्नित्वरूपितायां प्रक्षिपन्ति ; तच्च तत्र प्रक्षिप्तं गर्भो भवति' इत्युक्त्वाऽऽह, 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति । एवं पञ्चम्यामाहुतौ हुतायामापः पुरुषशब्दाभिलाप्याः भवन्तीत्यर्थः । एवमुक्ते पूर्वास्वप्याहुतिषु अनुवर्तमानानामेवापां सूक्ष्मरूपाणामिदानीं पुरुषाकारत्वं भवतीत्युक्तं भवति । अत एव प्रश्नप्रतिवचनाभ्यां देहहेतुभूतैः भूतसूक्ष्मैः सह जीवः तत्र तत्र यातीति गम्यते ।"

अतः 'यदेव ज्ञानफलं तदेव कर्मफलं' इति श्रौतविधिदर्शनात् शिवार्पणकृतानां ज्योतिष्टोमादिकर्मणां चित्तशुद्धिद्वारा शिवप्राप्तिहेतुत्वेन मुमुक्षूणां फलाभिलाषरहितं कर्म कर्तव्यमिति वेदान्तेषु व्याचक्ष्यते ।

ननु 'आपः पुरुषवचसः' इत्युक्ते अपां पुरुषाकारपरिणामप्रतीतेर्गच्छता जीवेन तासामेव परिष्वङ्गः प्रतीयते ; तस्मात्कथं सर्वेषां भूतसूक्ष्माणां परिष्वङ्ग इत्याशङ्कायामाह–

## ॥ ११५ ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

तुशब्दोऽत्र शङ्कानिरासार्थः । '**तासां त्रिवृतमेकैकामकरोत्**' इति त्रिवृत्करणेन देहारम्भकत्वव्यवस्थापनात् शरीरारम्भकत्वं न केवलमपामिति निर्णीयते । '**समित्पुरोडाशादीनां पार्थिवत्वं, दधि-क्षीरादीनामाप्यत्वं, घृतस्य तैजसत्वं**', इत्येवं रूपेण होमद्रव्याणां त्र्यात्मकत्वात्त्रिविधत्वात् '**आपः पुरुषवचसो भवन्ति**' इत्येतदनुपपन्नमिति चेत् भूयस्त्वात् होमद्रव्याणां मध्ये ह्यपां बाहुल्यमात्रेणात्र अप्शब्दप्रयोगः । तथा च अप्शब्दस्य पार्थिवाप्य-तैजसद्रव्याणामुपलक्षणत्वान्न विरोधः । देहे च लोहितादि-[1]भूयस्त्वं गम्यते । तेन आरम्भकेष्वपां भूयस्त्वम् । तस्मात् '**वेत्थ यथा पञ्चम्यामाहुतौ आपः पुरुषवचसो भवन्ति**' इति प्रश्नप्रतिवचनाभ्यां स्पष्टमुपदिष्टम् । अस्याः श्रुतेरयमर्थः–

### पञ्चाग्निक्रमेण गर्भोत्पत्तिप्रकारः

पञ्चम्यामाहुतौ योषिद्रूपे पञ्चमेऽग्नौ हुताः आपः दधि-क्षीर-आज्यप्रभृतिहोमद्रव्यरूपाः पुरुषवचसः गर्भस्थपिण्डाकारेण परिणता यथा भवन्ति तथा वेत्थ– जानासि किम् ? इति केनचित् प्रश्ने कृते, इति तु पञ्चम्यामाहुतौ आपः पुरुषवचसो भवन्तीति प्रतिवचनम् ।

अस्यायमर्थः– अस्मिन् लोके यजमानेन अग्नौ हुतानि समित्पुरोडाशाज्य-दधि-क्षीर-प्रभृतीनि द्रव्याणि सूक्ष्मरूपाणि भूत्वा लिङ्गशरीरविशिष्टेन यजमानेन सह धूमादिमार्गेणातिवाहिकैर्देवैः द्युलोकाख्ये अग्नौ हूयन्ते । हुतानि तानि देवशरीररूपेण परिणमन्ते । तच्च देवशरीरं किञ्चित्कालं स्वर्गभोगान् भुक्त्वा पुण्यक्षयानन्तरं नवनीतवद्द्रवीभूतं भवति । तच्च द्रवीभूतशरीरं आतिवाहिकैर्देवैः पर्जन्याख्यवह्नौ हूयते । तच्च जलात्मकत्वेन परिणमते । तज्जलं पृथिव्यात्मकाग्नौ आतिवाहिकैर्हूयते । तदोषधिद्वारा व्रीहि-यवादि-धान्यरूपेण परिणमते । तद्धान्यमन्नात्मकत्वेन पुरुषरूपाग्नौ हूयते । तदन्नं रेतोरूपेण परिसङ्क्रमते । तद्रेतो योषिद्रूपाग्नौ हूयते । तद्रेतो गर्भस्थशरीराकारेण व्याप्यत इति द्युः-पर्जन्य-पृथिवी-पुरुष-योषिद्रूपपञ्चाग्निक्रमेण गर्भोत्पत्तिरभिधीयते ।

जीवस्य चेतनत्वात्परलोकगमनागमनयोः प्राणेन्द्रियाणां प्रयोजनाभावात् स्वकर्तृक-पुण्यापुण्यकर्माणि स्वयमेव यान्तीत्याशङ्क्य तत्राह–

---

[1] भूयस्त्वेनारम्भकेष्वपां भूयस्त्वं गम्यते (ग A)

## ॥ ११६ ॥ प्राणगतेश्च ॥ ३ ॥

'तमुत्क्रान्तं प्राणोऽनूत्क्रामति' इत्यादिश्रुतौ भूतसूक्ष्मपरिष्वक्तोत्क्रामकजीवस्य धूमादिमार्गेण प्राणादिभिस्सह स्वर्गलोकगतिराम्नायते। तस्माद्धोमद्रव्याणामपि जीवेन सह गमनमर्थात्सूच्यते। स्वर्गादिष्वपि तस्य प्राणादिसाधनाभावे साध्यतत्तल्लोकभोगासम्भवात् पूर्वोक्तमबाधितम्। लोके कर्मणां क्षणत्रयेण विनष्टत्वेऽपि वाक्यश्रवणादिवदद्दष्टफलजनकत्वेन परलोकभोग उपपद्यते। तथा स्मृतिरपि–

'त्रिक्षणेनैव जीवस्य कृतकर्मक्षये सति।
अन्नादिवददृष्टाख्यं फलमुत्पद्यते सदा॥'
तेन प्राणादिभिर्जीवो गत्वा स्वर्गादिकं फलम्।
भुक्त्वा तत्पञ्चदशकान् भोगान् शुभाशुभान्।
षोडशान्तेन भागेन पुनर्भूलोकमश्नुते॥' इति।

अन्यत्र–

'मनष्षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति।
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः॥
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्॥'

इति निराश्रयस्य गत्यसम्भवात् स्वाश्रयमनःप्राणेन्द्रियादिभिस्सह भूतस्य वैशिष्ट्येन परलोकगतिरभ्युपगन्तव्येति सिद्धम्।

'अग्निं वागप्येति सूर्यं चक्षुरप्येति मनश्चन्द्रमसमप्येति' इति श्रुतौ चरमकाले प्राणेन्द्रियाणामभिमानदेवतासु लयश्रवणादिन्द्रियादीनां जीवेन सह परलोकगमनमनुपपन्नमित्याशङ्क्य निराकरोति।

## ॥ ११७ ॥ अग्न्यादि गतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

**'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति, वातं प्राणः, चक्षुरादित्यं, मनश्चन्द्रं'** इत्यादिना प्राणादीनां जीवस्थूलशरीरवियोगसमये अग्न्यादितदभिमानदेवतासु लयव्यपदेशान्न तेषां जीवेन सह गमनमिति गतिश्रुतिरन्यथा नेयेति चेन्न। **भाक्तत्वात्** पृथग्बोधकत्वात् **'ब्रह्म वेद ब्रह्मैव भवति'।** **'न तत्र प्राणा उत्क्रामन्ते, तत्रैव समवलीयन्ते', 'अग्निर्मे वाचि श्रितः, वाक् हृदये, हृदयं मयि, अहममृते, अमृतं ब्रह्मणि',** इत्यादिश्रुतिसिद्धरागद्वेषादिविनिर्मुक्तशिवयोगिविदेहमुक्तिविषयत्वात्। अन्यथा **'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति'** इत्यादिबहुश्रुतिविरोधो दुर्निवारः। **'ओषधीर्लोमानि वनस्पतीन्केशाः'** इत्यनपियद्भिर्लोमादिभिस्सह व्यपदेशात् चक्षुराद्यप्ययश्रुतिरधिष्ठातृदेवताविलयक्रमणपरेति निर्णीयते।

**'असिमन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति'** इति श्रुतौ द्युलोकाख्यप्रथमाग्नौ श्रद्धाया एव हूयमानत्वदर्शनात् दधि क्षीरादीनां द्युलोकाख्याग्निहूयमानत्वमसमञ्जसमित्याशङ्कायामाह—

## ॥ ११८ ॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

" यदुक्तं अद्भिः सूक्ष्माभिर्भूतान्तरसंसृष्टाभिः परिष्वक्तो जीवो गच्छतीति प्रश्नप्रतिवचनाभ्यामवगम्यत इति— तन्नोपपद्यते। द्युलोकाग्निविषये प्रथमे होमेऽपां होम्यत्वाश्रवणात्। **'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति'** इति श्रद्धैव हि होम्यत्वेन श्रुता। श्रद्धा नाम जीवस्य मनोवृत्तिविशेषत्वेन प्रसिद्धा। अतो नाऽऽपस्तत्र होतव्या इति चेत्—

न; यतः ताः— आप एव श्रद्धाशब्देन तत्राभिधीयन्ते। कुतः? प्रश्नप्रतिवचनोपपत्तेः। **'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति'** इति प्रश्नस्य प्रतिवचने— उपक्रमे हि श्रद्धा द्युलोकाग्नौ होम्यत्वेन श्रुता। तत्र यदि श्रद्धाशब्देन आपो नोच्येरन्, ततोऽन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्यसङ्गतं स्यात्। **'इति तु पञ्चम्यामाहुतावापः पुरुषवचसः'** इति प्रतिवचननिगमनं च श्रद्धाया अप्त्वमेव सूचयति। **'वेत्थ यथा'** इति प्रश्नगतः प्रकारः. **'इति तु पञ्चम्यां'** इति इतिशब्देन परिहारो निगम्यते। श्रद्धा-सोमराजवर्ष-अन्न-रेतो-गर्भरूपेणापः '[1]परिणाम-

[1] परिणामक्रमं (ग A)

मुक्त्वा हि, **'एवमापः पुरुषवचसः'** इति निगम्यते। श्रद्धाशब्दस्य चाप्सु वैदिकप्रयोगो दृश्यते, **'अपः प्रणयति। श्रद्धा वा आपः'** इति। 'श्रद्धां जुह्वति। तस्या आहुतेः सोमो राजा सम्भवति' इति सोमाकारेण परिणामश्चापामेवोपपद्यते। अतो भूतान्तरसंसृष्टाभिरद्भिः सम्परिष्वक्तो जीवो रंहतीत्युपपन्नम्।" तस्मादाप एव दधि-क्षीरादिरूपेण होतव्यास्सन्तः श्रद्धाशब्देन लक्षणया प्रतिपाद्यन्ते।

ननु प्रश्नप्रतिवचनयोरपामेवात्र व्यपदिष्टत्वात्कर्मिणामेव स्वर्गगमनमश्रुतम्। तैस्सह होमद्रव्याणां गमनं कथमुपपन्नमित्यत्राह—

## ॥ ११९ ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

"यत्पुनरुक्तं— 'अद्भिः सम्परिष्वक्तो जीवो यातीत्ययमर्थः, एतस्माद्वाक्यादवगम्यत इति— तन्नोपपद्यते ; अस्मिन्वाक्ये जीवस्याश्रवणात्। अत्र हि श्रद्धादय एवमबवस्था-विशेषा होम्यत्वेन श्रुताः ; न तु जीवस्तत्परिष्वक्त इति चेत् तन्न— इष्टादि[1]कारिणां प्रतीतेः।" उत्तरत्र **'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति, धूमाद्रात्रिं, रात्रेरपरपक्षं, अपरपक्षाद्दक्षिणायनं, दक्षिणायनात्संवत्सरमभिसम्प्राप्नुवन्ति। मासेभ्यः पितृलोकं पितृलोकादादित्यमादित्याच्चन्द्रमसं, एष सोमो राजा तद्देवाना-मन्नं तं देवा भक्षयन्ति'**। तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते ; यथेतमाकाशमाकाशाद्वायुं, वायुर्भूत्वाभ्रं भवति ; अभ्रं भूत्वामेघो भवति, मेघो भूत्वा वर्षति ; त इह व्रीहि-यवा-ओषधि-वनस्पतय[2]स्तिल-माषा इति जायन्ते ; अतो वै खलु दुर्निष्प्रपतरम्। **'यो यो ह्यन्नमत्ति यो यो रेतस्सिञ्चति तद्भूय एव भवति'**। इति श्रुतौ ब्रह्मज्ञानशून्यफलाभिलाषीष्टापूर्तकर्मिणो द्युलोके सोमराजानो भवन्तीत्यमृतमयशरीरेण सुकृतफलं प्राप्य तत्फलभोगानन्तरं एकभागावशेषेण मर्त्यलोकमागत्य गर्भं प्राप्नुवन्ति इति। अत्रापि द्युलोकाग्नौ **'श्रद्धां जुह्वति', 'तस्या आहुतेस्सोमो राजा सम्भवति'** इत्यत्र सोमराजशब्देन प्रत्यभिज्ञानात् तत्प्रश्नप्रतिवचनयोरप्याद्भिः परिष्वक्तः तदात्मकांशो जीव एव आप इत्युपदिश्यते। देहस्य जीवविशेषणतैकस्वरूपस्य वाचक-शब्दो विशेष्ये जीव एव पर्यवस्यति। तस्मात् सम्परिष्वक्तो जीवो यातीत्युपपद्यते।

---

[1] कर्मिणां (ग A)     [2] स्त्विमा अप इति (ग A)

नन्वस्तु कर्मिणां स्वर्गलोकगमनं तथापि तल्लोके तेषां तद्भोगो न विधीयते। '**तं देवा भक्षयन्ति**' इति श्रुतौ अमृतमयदिव्यदेहावच्छिन्नकर्मणां स्वर्गगतानां देवै भक्ष्यमाणत्वव्यवस्थापनात् व्याघ्रादिभिरिव देवैः भक्षितानां कर्मिणां भोगासम्भवात् सोमो राजेति न जीव उच्यते। जीवस्यानन्दनीयत्वात्तन्नोपपद्यत इत्याशङ्कायामाह–

**भक्तादिशरणान्तपञ्चस्थलेषु द्वैतसिद्धिः–ऐक्यस्थलेऽद्वैतसिद्धिश्च**

## ॥ १२० ॥ भाक्तं वा नात्मवित्त्वात्तथा वा दर्शयति ॥ ७ ॥

**वाशब्द**श्चोद्यं व्यावर्तयति। '**एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति**' **इति** सोमराजात्मकस्य देवभोज्यत्वदर्शनात् नासौ जीव इति चेदेतद्भाक्तमेव भक्ष्यमाणत्वं, अनात्मवित्त्वेन देवोपकरणभावित्वमुपदिष्टम्।

किञ्चेष्टादिकारिणो ह्यनात्मवित्त्वात्सदेवानां भोगोपकरणत्वेनेहामुत्र च वर्तते। इहेष्टादिना तदाराधनं कुर्वन्नुपकरोत्याराधनप्रीतैर्देवैर्दत्तममुं लोकं प्राप्य तत्र तत्समानभोगस्तदुपकरणं भवति। '**यथा पशुरेवं स देवानां**' इत्यनात्मविदो देवानामुपकरणत्वं दर्शयति श्रुतिः। स्मृतिरप्यात्मविदां ब्रह्मप्राप्तिमनात्मविदां च देवभोग्यत्वं दर्शयति। '**देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि**' इत्यतो जीवस्य देवानां भोगोपकणत्वाभिप्रायमन्नत्वेन भक्ष्यत्ववचनम्। अतस्तद्भाक्तम्। तेन तृप्तिरेव च देवानां भक्षणमिति श्रूयते। '**न ह वै देवा अश्नन्ति न पिबन्ति, एतदेवामृतं दृष्ट्वा तृप्यन्ति**' इति व्याचक्ष्यते। तस्माच्छिवतत्त्वज्ञानशून्यानां सुकर्मिणां देवभृत्यत्वं '**अथ योऽन्यां देवतामुपास्तेऽन्योऽसौ अन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानां**' इति श्रुतौ व्यपदिश्यते।

श्रुत्यन्तरेऽपि– '**यो वै स्वां देवतामतियजते; प्रस्वायै देवतायै च्यवते, न परां प्राप्नोऽति; पापीयान् भवति**' इति दर्शनात्, यः शिवातिरिक्तोपेन्द्रादिदेवतां यज्ञादिकर्मभिरुपास्ते। 'असाविन्द्रादिमत्तोऽन्यः अहं चन्द्रोपेन्द्रादेरन्यः' इति पूजयति;

**'मायां तु प्रकृतिं विन्द्यात् मायिनं तु महेश्वरम्।**
**तस्यावयवभूतोत्थं व्याप्तं सर्वमिदं जगत्।'**

इति श्रुतिसिद्धब्रह्मोपेन्द्रादिजीवानां शिवांशबुद्धिं विहाय यः भेदबुध्या पूजयति सः शिवतत्त्वं न वेद। यथा पशुरनड्वान् कृष्यादिना उपकरोत्येवं कर्मठोऽपि भूलोके इन्द्रादीनां हविःप्रदानं कुर्वन् परलोकेऽपि तत्परिचर्यां कुर्वन् पशुवदुपकरोति। तथा च देवपशुत्वमात्रेण कर्मिणां देवभक्ष्यत्वं न तु व्याघ्रादिवत्कर्मिणां मांसरुधिरादिकं[1] देवा भक्षयन्ति। अतस्तत्तल्लोके: तेषाममृतभक्षकत्वेन मांसभक्षकत्वाभावः। पर्यवसितार्थस्त्वत्र[2], फलासक्तकर्मिणां तल्लोकभोगप्राप्तिः शिवार्पणसुकर्मिणां पापक्षयद्वारा चित्तशुद्धिं लब्ध्वा श्रद्धा-भक्ति-वैराग्यादिसहकृतश्रवण-मनन-निदिध्यासहेतुना पाशविच्छेदलक्षणावच्छिन्नशिवज्ञानानुसरणेन शिवत्वप्राप्तिरिति निश्चीयते। 'शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य' इत्यादिश्रुतिषु—

'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥'

इत्यादिस्मृतिष्वनन्यभक्त्या शिवानुग्रहहेतुना शिवाभिन्नत्वमुपदिष्टम्; तथापि भक्तिरवश्या-चरणीया। तथा शैवे शिवं प्रति व्यासवचनम्—

'यद्यपि भेदापगमे साम्ब तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः॥

इति सम्यगुपदिष्टम्। अतो भक्तानां भक्तादिशरणान्तपञ्चस्थलेषु जीवभावसत्त्वेन शिव-जीवयोः उपास्योपासकत्वेन स्वामि-भृत्यन्यायात्मकस्वभावद्वैतसिद्धिः। ऐक्यस्थले— 'यथा नद्यः' इत्यादिश्रुतिशतसिद्धनदीसमुद्रवज्जीवब्रह्मैकत्वेन अद्वैतसिद्धिश्चेति राद्धान्तः। तथापि शिवजीवयोस्समुद्र-तरङ्गन्यायबद्धेदाभेदभावो निष्प्रत्यूहः। तस्मादात्मविदां परमेश्वरोप-करणत्वं, अनात्मविदां देवोपकरणत्वमिति फलितार्थो दर्शितः अतस्सर्वथा बद्धजीवो भूतसूक्ष्मैस्सम्परिष्वक्तस्सन् स्वर्गादिकं रंहतीति सिद्धम्।

---

[1] मांसमदिरादिकम् (ग A)   [2] परिशिष्टार्थस्त्वत्र (ग A)

## कृतात्ययाधिकरणम् ॥ २ ॥

### कर्मविशेषस्सन् जीवो मृत्युलोकं प्रत्यवरोहति

नन्वेवं सुकृतिनां स्वर्गलोकगमनमस्तु, तत्र तद्भोगानन्तरं तत्पुनरागमनं कथमित्याशङ्कायां तत्प्रकारमधिकरणान्तरेण दर्शयति–

## ॥१२१॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥८॥

**कृतात्यये** स्वर्गोद्देशेन कृतस्य पुण्यस्य अत्यये नाशे सति **यथा** येनमार्गेण स्वर्गलोकं प्रति इतो गतः तेन मार्गेण वा अनेवं मार्गान्तरेण वा। मार्गान्तरेणेत्येतदनास्थयेति प्राप्तम्। तेनैव मार्गेणेति राद्धान्तः। **अनुशयवान्** भुक्तावशिष्टसञ्चितकर्मणा शिष्टस्सन् भूलोकमागच्छति, कर्मानुसारेण तदनुगुणयोनिं प्राप्नोति। कुतः, **दृष्टस्मृतिभ्यां** श्रुति-स्मृतिभ्यामित्यर्थः। केवलेष्टापूर्तदत्तकर्मिणां धूमादिपितृयानमार्गेण कर्मफलानुगुण्येन स्वर्गभोगमनुभूय तत्क्षणे पुनरागमनमाम्नातम्। '**यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते**' इत्यादिश्रुतिषु जीवस्य भोगावसाने पुनरावर्तनव्यपदेशात् सर्वकर्मक्षयेण कर्मविशेषेण वा प्रत्यवरोहतीति **सन्दिह्यते**।

सर्वकर्मक्षयेण पुनरागमनं **युक्तम्**। उपभुक्तशिष्टकर्म अनुशयः। स च कृत्स्नफलभोगे सति नावशिष्यते। '**यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्त**' इति श्रुत्यनन्तरञ्चाप्राप्यान्तं '**कर्मणस्तस्यत्किञ्चेहकरोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण**' इति।

**किञ्च–** '**यथैतमाकाशमाकाशाद्वायुः**' इत्यादिष्वपि कर्मविशेषवार्ताऽश्रवणात् '**यावत्सम्पातं**' इति श्रुतौ– '**सम्पातः कर्मसमष्टिः,** सम्पातमनतिक्रम्य यावत्सम्पातं' इति व्याचक्ष्यते। तत्रोषित्वा तदनुभूयत्वनिर्देशाच्च सर्वकर्मफलभोगावसानेनैव जीवोऽवतरतीति प्राप्ते प्रचक्ष्महे–

अनुशयवान् कर्मविशेषस्सन् जीवो मर्त्यलोकं प्रत्यवरोहति ; कुतः ? श्रुति-स्मृतिभ्याम् । 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति',

'कर्मविशेषे सुकृते च भूयो,
भूलोकमागत्य पुनश्च कर्म ।
करोति मोहात्पुनरन्त्यकाले
स्वर्गादिलोकान् भजते पुनःपुनः ॥'

किञ्च– ''तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा : अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' इति प्रत्यवरूढान् प्रति श्रूयते । 'अमुष्माल्लोकात् प्रत्यवरूढेषु रमणीयकर्माणो रमणीयां ब्राह्मणादियोनिं प्रतिपद्यन्ते ; कपूयचरणाः कुत्सितकर्माणः कुत्सितां श्व-सूकर-चण्डालादियोनिं प्रतिपद्यन्त' इति प्रत्यवरूढानां पुण्य-पापकर्मयोगं दर्शयति ।

स्मृतिरपि– 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्यकर्मफलमनुभूय ततः शेषेण विशिष्टदेश-जाति-कुल-रूपायु-श्रुत-वित्त-वृत्त-सुख-मेधसो जन्म प्रतिपद्यन्ते; विष्वञ्चो विपरीता नश्यन्ति' इति । तथा, 'ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते । तत् चक्रवदुभयोर्लोकयोः सुख एव वर्तते' इति । यावत्सम्पातमिति फल-दान-प्रवृत्तकर्मविशेषविषयम् । 'यत्किञ्चेह करोत्ययम्' इतीदमपि तद्विषयमेव । अभुक्तफलानामपकृतप्रायश्चित्तानां च कर्मणां कर्मान्तरफलानुभवान्नाशोऽप्यनुपपन्नः ।

अतोऽमुं लोकं गताः सानुशया एव यथेतमनेवं च पुनर्निवर्तन्ते– आरोहण-प्रकारेण प्रकारान्तरेण च पुनर्निवर्तन्त इत्यर्थः । आरोहणं हि धूम-रात्र्यपरपक्ष-दक्षिणायन-षण्मास-पितृलोकाकाश-चन्द्रक्रमेण ; अवरोहणं तु चन्द्रमसस्थानादाकाश-वायु-धूमाभ्र-मेघक्रमेण । तत्राकाशावरोहणात् यथेतं, वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेश्चानेवम् ।" नोचेत्सद्यस्समुद्भूतस्य सुखदुःखानुभवो न सम्भवेत् । अतो अनुशयवान् निवर्तत इति राद्धान्तः ।

### चरणशब्दार्थविचारः

ननु '**रमणीयचरणाः**' इति श्रुत्यनुसारेण श्रौतकर्मिणां पुनरागमनमिति यदुक्तं तदसमञ्जसम्। '**यज्ञेन दानेन तपसानाशकेन**' इत्यादिश्रुतिषु ज्ञानकर्म-समुच्चयेन अपुनरावृत्तिमोक्षस्थित्युपदेशात् रमणीयचरणा इत्यत्र स्मृत्युक्तशौचाचमन-स्नान-सन्ध्यादिपरत्वमेवेत्याशङ्क्य आह–

## ॥१२२॥ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥९॥

'**रमणीयचरणाः कपूयचरणाः**' इति चरणशब्देन पुण्य-पापात्मकस्मार्तकाम्यादि-लौकिककर्मपरत्वमेवेति चेन्न– तदुपलक्षणार्थेति कार्ष्णाजिनिः। चरणशब्दस्य लोकवेदयोः श्रौतस्मार्तादिसत्कर्माचारे प्रसिद्धेः। '**श्रौतस्मार्तसदाचारश्चरण**' इति गीयते।

'**तेनैव चित्तशुद्धिस्स्यात्ततो यान्ति परं पदम्** ॥' इति श्रुतिः।
'**वक्ष्यामि धृतलिङ्गस्य चरणश्रुतिसम्मतम्।**

**स्मृतितन्त्रपुराणेषु प्रसिद्धं ते समाहितः।**
**श्रुतिस्मृत्युदितं धर्मं नित्यनैमित्तिकाश्रयम्** ॥

**कुर्याल्लिङ्गाङ्गसम्बन्धी द्विजन्मा कामवर्जितः।**
**विध्युक्तकर्मानुष्ठानाच्चित्तशुद्धिर्भवेद्ध्रुवम्** ॥
**चित्तशुध्या भवेद्भक्तिर्भक्तिरव्यभिचारिणी।**
**तया सञ्जायते ज्ञानं नश्यत्यज्ञानमात्मनः** ॥
**तस्मान्मोक्षस्ततः कर्म विध्युक्तं सम्यगाचरेत्** ॥'

इत्यादिना शङ्करसंहितायामपि चरणशब्दः श्रौतस्मार्तसदाचारपर इति स्पष्टमुपदिष्टम्। लौकिकाः खलु '**चरणमाचारश्शीलं वृत्तं**' इति पर्यायानभिमन्यन्ते। वेदे च– '**यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि; यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि**'। '**सत्यं वद; धर्मं चर**'; '**न सुरां पिबेत्**'; '**न**

कलञ्जं भक्षयेत्'; 'न परदारान् गच्छेत्'। 'नानृतं वदेत्'; 'सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्'; 'त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्'; अमृतस्य देवधारणो भूयासम्, शरीरं मे विचर्षणम्' इत्यादिश्रुतिषु चरणात्मक-सत्कर्माचरणं परमशिवभक्त्याधारभूतचित्तशुध्यर्थं व्यपदिश्यते। तस्माच्चरणात् श्रौतस्मार्तशीलात् पुनरावृत्तिरहितनित्यमङ्गळालयनिरतिशयनिरुपमानपरमपदाभिधान-महाकैलासप्राप्तिरिति कार्ष्णाजिनिः आचार्यश्चरणं श्रौतस्मार्तकर्मोपलक्षणार्थं मन्यते। सदाचारवाचकचरणशब्देन ह्यजहल्लक्षणाया श्रौतस्मार्ताचाराङ्गकं कर्मविधीयत इति राद्धान्तः।

## आचारप्राशस्त्यम्

ननु सुखदुःखहेतुभूतस्मार्तकाम्यादिकर्माचरणवत्केवलश्रौताचरणेन पुनरावृत्तिव्यपदेशो सर्वेषां वेदानां पौरुषेयादिवदानर्थक्यं निष्प्रत्यूहमित्याशङ्क्य तत्राह—

## ॥ १२३ ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

स्मार्तकाम्यकर्मवत् श्रौतकर्माचरणस्यापि पुनरावृत्त्यभ्युदयफलहेतुत्वे तदुभयोस्समानत्वेन श्रौतकर्मणामानर्थक्यमिति चेन्न— तदपेक्षत्वात्। राजाज्ञानुसारेण अमात्याज्ञाप्रकाशवत् 'श्रुतेरिवार्थं स्मृतिरन्वगच्छत्' इति न्यायेन स्मृतेस्तदपेक्षत्वात् न वेदाधिक्यभङ्गः। तत्रापि—

'स्वयं वेदार्थविज्ञाने प्रत्यवायो महान् भवेत्।
स्मृतितन्त्रपुराणेभ्यो वेदार्थं ग्राहयेद्बुधः॥'

इति स्मृतावेव वेदार्थविज्ञाने नियमविधिदर्शनात्। अपि च—

'आचारहीनः पुरुषो लोके भवति निन्दितः।
तस्मादाचारवान् ज्ञानी भवेदादेहपातनात्॥'

आचारहीनं न पुनन्ति वेदा ह्याचारहीनं न पुनन्ति शास्त्रम्।
आचारहीनं न हि श्रौतकर्म ह्याचारहीनं न गुरुः पुनाति॥'

इत्यादि वचनेभ्यः स्मार्ताधिकारिण एव श्रौतकर्माधिकारोपदेशात्, **'यत्सत्त्वे यत्सत्त्वं' इति न्यायेन** तयोरङ्गाङ्गित्वम्। तस्मात्तयोरुत्तम-मध्यमादिभावसत्त्वेऽपि परम्परया मोक्ष-हेतुत्वमिति **कार्ष्णाजिन्याचार्याभिप्रायः**। तस्माच्चरणश्रुतिः कर्मोपलक्षणार्थेति व्यवह्रियते।

किञ्च– श्रौतकर्मण एव **स्थूलारुन्धतीन्यायेन** चित्तशुद्धिवद्वेदान्तज्ञानकारणत्वम्। तद्ज्ञानास्यपुनरावृत्तिनिरतिशयनिश्श्रेयसफलकत्वानङ्गीकारे–

'परीक्ष्य लोकान् कर्मचितान्
ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्
समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्॥'

**'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः', 'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'ईशं ज्ञात्वा अमृता भवन्ति', 'तस्याभिध्यानात् योजना-त्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः'। 'तमेवं विदित्वामृतत्वमेति', 'नान्यः पन्था विद्यतेऽयनाय'** इत्याद्यपौरुषेयश्रुतिशतविरोधो दुर्निवारः।

स्वेष्टानुसारेणाचार्यान्तराभिप्रायं प्रदर्श्य स्वाभिप्रायमाह–

सुकृतदुष्कृते एव चरणशब्दाभिधेये

## ॥ १२४ ॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

**रमणीयचरणाः कपूयचरणाः'** इत्यत्र चरणशब्देन सुकृत-दुष्कृते एव शक्त्या प्रतिपाद्यते। **'पुण्यं कर्माचरति; पापं कर्माचरति'** इति कर्माणि चरतेः प्रयोगात् पृथङ्निर्देशस्य च प्रात्यक्षिकश्रुतिसिद्धाचारानुमितश्रुतिसिद्धविषयत्वेन **गोबलीवर्द-न्यायेन** उपपत्तेः। **'मुख्ये सम्भवति न लक्षणा न्याय्या'** इति सुकृत-दुष्कृते एव 'चरणशब्दाभिधेये' इति **बादरिराचार्यो** मन्यते। अत्र **बादरिमतमेव** स्वमतम्।

आचारानुमितश्रुतिविहितसन्ध्यावन्दनादेः कर्मान्तराधिकारसम्पादनं फलमिति तु स्वीकृतम्। उत– अङ्गरहितस्याङ्गिनः फलजनकत्वाभावादाचारसहितमेव वैदिकं कर्म फलजनकम्। अतश्चरणशब्दस्याजहल्लक्षणैवाङ्गीकर्तव्येति निश्चीयते। तस्मात्सानुशया एव प्रत्यवरोहन्तीति सिद्धम्।

---

## अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

**दुष्कृतिनः नरके महदुःखमनुभूय तत्तकर्मविशेषेण पापयोनिं लभन्ते**

एवमिष्टापूर्तदत्तकर्मिणां सुकृतिनां स्वर्गलोकगमनप्रसाधने दुष्कृतिनां का गतिरित्याशङ्कायामाह–

## ॥ १२५ ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

**अनिष्टादिकारिणां** दुष्कृतिनां **श्रुतमपि च,** यथाशमनकिङ्करानुसारेण वैवस्वतदर्शनं, तथा '**ये वैके चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति**' इति श्रुतिदर्शनात् तदुभयोरिन्दुमण्डलद्वारा पुण्यापुण्यलोकप्राप्तिः। तथापि दुष्कृतिनां निरयानुभवो न निवार्यते। श्रुतौ इष्टानिष्टादिकारिणामपि शशिमण्डलगतेरुपदेशात्सुकृतिनामिव दुष्कृतिनां स्वर्गानुभूतिरस्ति न वेति चिन्त्यते।

'**ये वैके चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति**' इति श्रुतौ पुण्यापुण्यकर्मिणां सर्वेषां अविशेषगतिनिरूपणात्तदुभयोरपि स्वर्गानुभूतिरस्तीति प्राप्ते प्रचक्ष्महे–

'**अनिष्टादिकारिणामपि श्रुतम्**', '**चन्द्रमसमेव ते सर्वे गच्छन्ति**' इति श्रुतौ अनिष्टादिकारिणां चन्द्रलोकगमने श्रुतेऽपि स्वकर्मानुसारेण पापिनां नरकप्राप्तिरेव निर्णीयते। श्रुत्यन्तरेऽपि 'यमशासनात् दुष्कृती फलमनुभूयैव तच्छेषेण मर्त्यलोकं अहरहर्गच्छति' इति नान्यथा दुष्कृतिनाम्। 'यथा वै सुकृती शमनभटैः तञ्च दृष्ट्वा तदाज्ञया स्वर्गलोकं प्रयाति;'

सुकर्मणा सुधीश्चन्द्रं प्राप्य वैवस्वतं भटैः।
दृष्ट्वा वैवस्वतं पूर्वं ततस्स्वर्गं प्रयाति हि॥

दुर्मतिः कर्मणा क्रूरैरपि वैवस्वतान्तिकैः ।
चन्द्रद्वारा यमं दृष्ट्वा स्वस्य कर्मानुसारतः ॥
दुःखात्मकं महाघोरनरकं प्रतिपद्यते ॥'

इति स्कान्दे श्रूयते । तस्मात्तदुभयोरपि चन्द्रप्राप्तिसत्त्वेऽपि स्वकर्मानुसारेण दुष्कृती यमलोके तदाज्ञया नरके महाघोरदुःखमनुभूय तत्तत्कर्मविशेषेण कुत्सितयोनिं लभते ।

**जीवानां यमाज्ञाधारकत्वव्यपदेशात् न जडस्य कर्मणः स्वातन्त्र्यम्**

**'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'अहरहस्सन्ध्यामुपासीत ; नो चेन्नरकं व्रजेत्', 'पुण्यात्स्वर्गो पापान्नरकः'** इत्यादिषु कर्मण एव कर्तृत्वदर्शनाद्यमस्य जीवकृतपुण्यापुण्यानुभवप्रदायकत्वं कथमुपपन्नमित्याशङ्क्य तत्राह–

## ॥१२६॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥१३॥

यथा लोके दुष्कृतिनां तत्कर्मानुसारेण प्रभुदण्डनं तद्वत्सुकृतीतराणां **संयमने** नरके स्वदुष्कृतकर्मानुसारेणेन यमशासनात् । [1]तदनुभूय पुनरारोहावरोहौ, प्रथमं नरकं प्राप्य तत्कर्मविशेषेण पुनरागमनं चेत्येवंविध–**'आरोहावरोहौ'** अङ्गीकर्तव्यौ ; यस्मात् **तद्गतिदर्शनात्** । **'वैवस्वतं संयमनं जनानां यमं राजानं'** इत्यादिषु जीवानां यमाज्ञाधारकत्वव्यपदेशात् न जडस्य कर्मण एव स्वतन्त्रत्वम् । तस्मात्कर्मैककारणत्व-प्रधानपूर्वमीमांसावादः श्रुतियुक्त्यनुभवविरुद्ध एव ।

**शिवस्य परब्रह्मणः वैवस्वतादिकर्तृत्वप्रतिपादनम्**

ननु वैवस्वतस्यैव जीवकृतपुण्यापुण्यनियामकत्वेन परब्रह्मणो निष्प्रयोजकत्वं स्यादि-त्याशङ्क्य तत्राह–

## ॥ १२७ ॥ स्मरन्ति च ॥ १४ ॥

---

[1] तत् खेदमनुभूय (ग A).

'ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां', 'एष एव साधुकर्म कारयति' इत्यादिश्रुतिषु ब्रह्मादिसर्वभूतनियामकत्वं शिवस्यैव स्मरन्ति। तस्मात्तज्जीवानुगुण्येन कर्तृत्वं नेतरस्योपपन्नम्। अतः 'भीषास्माद्वायुः पवते भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' इत्यादिषु पवनादिसर्वदेवानां भयहेतुत्वं च दृष्टम्। यथा लोके राजाज्ञानुसारेण सचिवादीनां लोककृतकर्मानुगुण्यविचारकत्वं तत्फलप्रापयितृत्वयोः सम्भवेऽपि तत्कर्तृत्वं राज्ञः प्रतिपद्यते, तद्वद्वैवस्वतस्यापि शिवाज्ञया सर्वभूतपुण्यापुण्यविचारकत्व-तत्फलप्रदायकत्वयोश्च सत्त्वेऽपि तत्कर्तृत्वं शिवस्यैव निर्दिश्यते।

'स एव विष्णुस्स प्राणस्स कालोऽग्निस्स चन्द्रमाः।
स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्॥'

'सोऽन्तरादन्तरं प्राविशत्', 'यो रुद्रोऽग्नौ' इत्यादिश्रुतिशतेषु सर्वोपादानत्वसर्वनियामकत्व-सर्वान्तर्यामित्वादिधर्माणां तस्यैवोपदेशात् ब्रह्म-विष्णु-रुद्र-इन्द्र-चन्द्र-दिनेन्द्र-मृत्यु-कालाद्यन्तर्यामितया तस्यैव सर्वकर्तृत्वमुपपन्नम्। स्मृतावपि तद्वदुपदिश्यते—

'शिवाज्ञया हरिब्रह्मरुद्रमृत्युयमादिनाम्।
सर्वकार्येषु प्रवृत्याऽपि तत्कर्तृत्वं शिवस्य हि॥

राजाज्ञाकृतभृत्यस्य कर्म तस्य न युज्यते।
शिवाधीनैकचित्तस्य कर्म तस्य न गम्यते॥'

इति दर्शनाद्वैवस्वतादिकर्तृत्वं नान्यस्येति सिद्धम्।

अस्मिन्नर्थे हेत्वन्तरमाह—

## ॥ १२८ ॥ अपि सप्त ॥ १५ ॥

दुष्कृतिनां गन्तव्यत्वेन रौरवादिसप्तनरका अपि परमेश्वरकृता इति श्रुतौ स्पष्टमुपदिष्टम्। अतो यमान्तर्यामितया सुकृतिदुष्कृतिनां सुखदुःखफलप्रदायकत्वं तस्यैवोपदिश्यते। तथा च स्मृतिः—

'पापिनां वासयोग्यानि नरकाणि बहूनि च।
कल्पयित्वा महादेवस्तेषु सप्त प्रधानतः॥
कृतवान् रौरवादीनि महादुःखपराणि च।'

इति दर्शनात् अनन्याधिकारत्वं शिवस्य निष्प्रत्यूहम्।

ननु 'वैवस्वतं संयमनं जनानां यमं राजानं' इत्यादिषु परमेश्वरनिरपेक्षतया यमस्य सर्वजीवशिक्षाधिकारवत्वेन व्यवस्थापनात् शिवस्य तत्कर्तृत्वे तद्वन्निर्धृणत्वं दुर्निवारमित्याशङ्क्य तत्राह–

## ॥ १२९ ॥ तत्रापि तद्व्यापारादविरोधः ॥ १६ ॥

तत्रापि यमस्य सर्वजीवपुण्यापुण्यकर्मविचाराध्यक्षत्वेऽपि तद्व्यापारात् परमेश्वरनिर्णीतव्यापारात् परमशिवस्य ब्रह्मणस्सर्वाधिकारवत्वविधायकपूर्वोक्तश्रुतिस्मृत्यागमादीनामविरोधः। यथा दयाशीलस्य प्रभोरपि स्वाज्ञाभङ्गात्पुत्रादीनां दण्डनं विहितं तद्वत्परमेश्वरस्यापि तदाज्ञारूपश्रुतिस्मृत्यागममार्गातिक्रमिणां अनिष्टादिकारिणां यमलोके स्वकर्मानुगुणयातनाप्रदायकत्वेन न हि परमदयालुत्वहानिः।

नन्विष्टानिष्टादिकारिणां स्वर्गनरकादिफलभोक्तृत्वमस्तु शिवज्ञानसिद्धानां भक्तानां का गतिरित्याशङ्कायामाह–

## ॥ १३० ॥ विद्याकर्मणोरिति प्रकृतत्वात् ॥ १७ ॥

'ब्रह्मविदाप्नोति परम् तदेषाभ्युक्ता', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सहब्रह्मणा विपश्चितेति' इति।

'उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम्।
ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात्॥'

'वेदान्तविज्ञानसुनिश्चितार्थाः........परिमुच्यन्ति सर्वे', 'सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रं', 'ध्याननिर्मथनाभ्यासात् पाशं दहति पण्डितः', 'तस्याभिध्यानात् योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' इत्यादिश्रुतिशतेषु शिवज्ञाननिष्ठस्य बाह्याभ्यन्तरयोः तद्ध्यान-धारण-पूजा-नमस्कार-स्मरणाद्युपासनाकर्मनिष्ठस्य च तदुभयोः तदनुग्रहेण ब्रह्मनाड्यभिधानसुषुम्नामार्गेण प्रतिपादितत्वात् शोषितेषणात्रयदोषशमदमादिसहकृतशिवज्ञाननिष्ठागरिष्ठानां कैवल्यविभूत्यात्मकशिवसायुज्यं, [1]तद्भक्तिविशिष्टानां कल्याणविभूत्यात्मकसालोक्यादिमुक्तित्रयं चाधिकारिभेदेन व्यपदिश्यते। परमशिवाज्ञारूपज्योतिष्टोमादिकर्मावलम्बिनां देवयानमार्गेण स्वर्लोकसुखानुभूतिः तदितराणां श्रुतिस्मृत्यागममार्गातिक्रमिणां दुष्कृतिनां तत्तत्कर्मानुसारेण यमलोके वा घोरदुःखानुभूतिश्च निर्णीयते।

ननु परमशिवाज्ञारूपश्रौतस्मार्तादिकर्मिणां तद्ध्यानधारणाद्युपासनाहीनानामपि सालोक्यादिचतुर्विधमुक्तिस्सम्भवतीति आशङ्क्य तत्राह—

॥ १३१ ॥ न तृतीये तथोपलब्धेः ॥ १८ ॥

तृतीये मोक्षमार्गे गच्छतां शिवैकनिष्ठानां पुण्यापुण्यलब्धस्वर्गनरकप्राप्तिर्न सम्भवति ; तदुपलब्धेः।

'यदा पश्यः पश्यते रुक्मवर्णं
कर्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति॥'

इत्यादिश्रुतिशतेषु पुण्यापुण्यविलक्षणशिवैकप्राप्तेर्भक्तानामुपदिष्टत्वात्, श्रुत्यन्तरेष्वपि 'विष्णुरित्था परमस्य विद्वान् जातो बृहन्नभिपाति तृतीयम्' इत्यादिषु बृहच्छब्देनादिविष्णुः तृतीयं कैलासं रक्षतीत्युपदिश्यते।

'परात्परतरं ब्रह्म तत्परात्परतो हरिः।
यत्परात्परतोऽधीशस्तन्मे मनः शिवसङ्कल्पमस्तु॥'

---

[1] बाह्यतद्भक्ति (ग A)

इत्यादिषु महेश्वरस्य ब्रह्मविष्ण्वपेक्षया तृतीयस्य सर्वातिशयित्वमुपदिष्टम् । तथा स्मृतौ च–

'आदिविष्णुर्महाविद्वान् महादेवात्सदाशिवात् ।
जातस्सन् परमं धाम तृतीयं नित्यवैभवम् ॥

कैलासं भक्तकल्याणविभूतिफलदायकम् ।
शिवभक्त्या सदा पाति गौरीशक्त्यंशसम्भवः ॥'

इति दर्शनात् सर्वकाल-सर्वावस्थासु शिवाज्ञारूपश्रौत-स्मार्तकर्मानुष्ठानविशिष्टस्सन्नहं-ममत्वाभिमान-निरवकाशहेतुभूतशाम्भवदेशिकशुभेच्छानन्दामृतानुभवेन शरीरेन्द्रियमनःप्राणजीवादिष्वपि शिव-भावारूढस्सन् शिवभक्तस्सदा स्थाप्य इत्युपदिश्यते ।

केचिदत्र– **'चन्द्रमसमेव ते सर्वे गच्छन्ति'** इति वाक्ये सर्व इत्यत्र कृतसङ्कोचत्वमङ्गीकृत्य सुकृतिमात्रपरत्वं, प्रसाध्य **'तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धां तपः इत्युपासते तेऽर्चिषमभिसम्भवन्ति । अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति'** इत्यादिना देवयानस्य विद्याविषयत्वं पितृयानस्य पुण्यकर्मपरत्वं इति वदन्ति । तथापि नास्मन्मतविरोधः । तत्पक्षे श्रुतेस्सङ्कोचः पूर्वोक्त-स्मृतिनिरवकाशत्वादिदोषप्रसङ्गश्च दुर्निवारः ।

अस्मिन्नर्थे हेत्वन्तरमाह–

## ॥ १३२ ॥ स्मर्यतेऽपि च लोके ॥ १९ ॥

लोकेऽपि च भक्ताः पुण्यपापकर्मफलमनुभवन्तीति स्मर्यते । पूर्वं शिवार्पितकर्मिणामद्य शिवयोग-शिवज्ञाननिरतिशयानन्दानुभवेन सदा संसारदुःखतापत्रयदावानलविलक्षणस्वभावेन च **'अयं प्राक् शिवस्मरणेन शिवार्पितसुकर्मवान्'** इति स्मर्यते । पुण्यकर्मिणां गज-तुरग-राज्य-धन-धान्य-पुत्र-पौत्रानन्देन **'अयं पूर्वं सुकृतवान्'** इति स्मर्यते । दुष्कृतिना-मन्धत्व-बधिरत्व-मूकत्व-दरिद्रत्वादिमहाशोकव्याकुलितमानसत्वेन **'अयं दुष्कृतवान्'** इति स्मर्यते । तस्माल्लोकव्यवहारबलादपि पामरैरपि त्रिविधानुभवो निर्दिश्यते ।

अस्मिन्नर्थे हेत्वन्तरमाह—

॥ १३३ ॥ दर्शनाच्च ॥ २० ॥

'सर्वेषामहं भाक्तिकः, अयं पुण्यवान्, अयं अपुण्यवान्' इति तु 'पूर्वानुभूतिसंस्कारजन्यज्ञानं स्मरणं' इति न्यायेन सुषुप्तिसुखानुभवस्मरणादिवन्न स्मरणमात्रं किन्तु श्रुत्युक्तयनुभवदर्शनाच्च भाक्तिकानां पुण्यकर्मिणां च निःश्रेयसाभ्युदयफलभोक्तृत्वम्। पापिनां तु 'वेत्थ यथा केनासौ लोको न सम्पूर्यते' इत्यस्य प्रश्नस्य प्रतिवचने 'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति' 'जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते' इति श्रुतौ दुष्कृतिनां घोररौरवादिनरकेषु महादुःखमनुभूय पञ्चमाहुत्यपेक्षया पुनश्शरीरारम्भकत्वञ्च दृश्यते।'

'यश्शिवं साम्बमीशानं सर्वलोकगुरुं परम्।
चिन्तां विसृज्य दिवसानीषणत्रयमोहितः॥

वृथा यापयते लोके स वै शमनकिङ्करैः।
सदा सन्ताडितोरस्कः यातनाख्यशरीरकम्॥

धृत्वा तन्मार्गमध्ये च घोरदुःखाकुलान्वितः।
यमद्वारपुरोभाग महावैतरणी[1]जले॥

वह्निज्वालाकुले घोरे तप्यमानकलेबरः।
यमं प्राप्याज्ञया तस्य स्वकर्मविधिना ततः॥

रौरवादिषु सर्वेषु नरकेषु पुनः पुनः।
दुःखं प्राप्य पुनस्तद्वत्कर्मशेषेण भूतले॥

चक्रनेमिक्रमेणैव जायते म्रियते सदा।
जरायुजाण्डजादीनि प्राप्यते नात्र संशयः॥'

[1] 'नद्यौ' इत्यपपाठः। आर्षत्वात्साधुतासाधनसम्भवेऽपि छन्दोभङ्गः अनिवारणीयो भवति। अतः 'जले' इति शोधितः पाठ अत्र सन्निविष्टः (सं)।

इति [1]पुराणेष्वपि दुष्कृतिनां यातनाशरीरयमलोकमार्गमध्ये तत्किङ्करैर्दण्ड्यत्वं, ततो वैवस्वताज्ञया महाघोरनरकप्राप्तिश्च, तदनन्तरं स्वकर्मानुसारेणाण्डजादि चतुर्विधभूतग्रामप्राप्तिश्चेति प्रसिद्धम् ।

केचित्तु 'जायस्व म्रियस्व इत्येतत्तृतीयं स्थानं' इति श्रुतौ तृतीयस्थानत्वेन नरकस्य प्रयोगदर्शनात् **'न तृतीये तथोपलब्धेः'** इति सूत्रस्थतृतीयशब्दस्य नरकविषयत्वं साधयन्ति । **'विष्णुरित्था परमस्य विद्वान् जातो बृहन्नभिपाति तृतीयम्'** **'तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'** इत्यादिश्रुतिषु—

'अनेकजन्मशुद्धानां श्रौतस्मार्तानुवर्तिनाम् ।
विरक्तानां प्रबुद्धानां प्रसीदति महेश्वरः ॥

प्रसन्ने सति [2]मुक्तस्स्यात् मुक्तः शिवसमो भवेत् ।
अल्पभावोऽपि यो मर्त्यस्तस्य जन्मत्रयात्परम् ॥'

इत्यादिस्मृत्यागमादिष्वपि पाप-पुण्यविलक्षणस्य परमपदस्य मुक्तिरूपशिवपदस्य तृतीयत्वं स्पष्टमुपदिष्टम् । नरकपरत्वे **'विद्याकर्मणो'**रिति तु **'प्रकृतत्वात्'** इति तत्पूर्वसूत्रे विद्याकर्मप्रसङ्गप्रदर्शनात् स्थानप्रकरणलिङ्गात् श्रुति-सूत्रार्थतात्पर्यं ज्ञातव्यमिति विधिविरोधात् पुराणादिष्वपुनरावृत्तनिरतिशयानन्दब्रह्मपदस्य नरकस्वर्गलोकादूर्ध्वव्यवस्थादर्शनाच्च नरकस्य तृतीयत्वश्रुतिर्गौणीति निश्चीयते ।

ननु पुराणादिषु पञ्चमाहुतिशास्त्रविरोधेन **कुम्भसम्भव-द्रौपद्याद्युत्पत्तिदर्शनात्** तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति । **'अण्डजं जीवजं उद्भिज्जं'** इति श्रुतौ अण्डजादित्रिविधव्यवस्थोपदेशाच्च पञ्चमाहुतिविधायकस्य भूतग्रामचतुष्टयनिर्देशकस्य च शास्त्रस्य परस्परविरोधोऽस्तीत्याशङ्क्य तत्राह—

## ॥ १३४ ॥ तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

---

[1] स्कान्दे (ग ३)  [2] 'मुक्तोऽभूत्' (ज) इत्यपपाठः— यतः स पाठः भूतामेकमेव वर्णयति ; अतः 'मुक्तस्स्यात्' इति शोधितः ।

**'पञ्चम्यामाहुतौ आपः पुरुषवचसो भवन्ति'** इति श्रुतिनिष्ठशरीरारम्भविधायक-शास्त्रस्य कुम्भसम्भवाद्युत्पत्तिविधायकपुराणस्य **'न हिंस्यात्सर्वभूतानि'** इति श्रुतेस्सर्व-त्रोपयोगित्वेन सामान्यत्वम् । यथा **'अग्नीषोमीयं पशुमालभेत'** इति श्रुतेस्तन्मात्रपरत्वेन विशेषत्वं, तद्वत् **'सत्यकामस्सत्यसङ्कल्पः', 'चन्द्रमा मनसो जातश्चक्षोस्सूर्योऽजायत'** इत्यादौ परमेश्वरस्य सत्यसङ्कल्पत्वं ; **उपास्योपासकयोरभेद इति न्यायेन** तद्भक्तानां **विश्वामित्रा**दिमहापुरुषाणां सत्यसङ्कल्पत्वेन जगद्विचित्रसृष्टिदर्शनात् । पञ्चमाहुतिविधायकशास्त्रस्य कारणपुरुषातिरिक्तपुण्यापुण्यकर्मिपरत्वमिति निश्चीयते ।

किञ्च– परमेश्वरसृष्टावपि भूतग्रामचतुष्टयेषु अण्डज-जरायुजानामेव पञ्चमाहुतित्वस्य स्वेदजोद्भिज्जानां तद्विलक्षणत्वस्य च द्योतनान्न सन्देहकलङ्कः । **संशोकजस्य** स्वेदजस्यापि उद्भिज्जेष्वन्तर्भावात् त्रीण्येव बीजानीति श्रुतिनिष्ठत्रित्वव्यवस्थाऽविरोधः । वृक्ष-लता-पर्वतादि-वाचकतृतीयोद्भिज्जशब्देन **'मञ्चाः क्रोशन्ति'** इत्यत्राजहल्लक्षणावत्तत्सङ्ग्रहः अर्थात् ग्राह्यः । तस्मात् **'चन्द्रमसमेव ते सर्वे गच्छन्ति'** इति श्रुतेस्सङ्कोचासहिष्णुत्वेन पुण्यापुण्यकर्मिणां सर्वेषां अण्डजत्व-जरायुजत्व-प्राप्तानां चन्द्रप्राप्तिपूर्वकपञ्चम्याहुत्युपदेशो ह्यविरोधः ॥

---

## तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

### पुण्यकर्मिणां स्वर्गात्पुनरागमनप्रकारः

पूर्वत्र दुष्कृतिनां शमनलोके नरकप्राप्तिं पश्चादिह लोके अन्धत्व-मूकत्व-बधिरत्व-दरिद्रत्वादिप्राप्तिं अण्डजादिरूपेणोत्पत्तिञ्च प्रदर्श्य तत्प्रसङ्गे: पापिनां विवेकार्थं दृष्टान्तानुसारेण पुनरावृत्तिरहितभक्तानां पुण्यकर्मिणाञ्च प्रसङ्गः कृतः। तत्र पुण्यकर्मिणां स्वर्गात्पुनरागमनं कथमित्याशङ्कायां तत्प्रपञ्चार्थं अधिकरणान्तरमाह–

## ॥ १३५ ॥ तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

पूर्वं सुकृतात्मनां भूतसूक्ष्मोद्भूतलिङ्गशरीरेण सह स्वकर्मविशेषेण स्वर्गादवरोहणमस्तीत्युक्तम्। तदवरोहणप्रकारोऽत्र प्रदर्श्यते। '**अथैतमेवाध्वानं पुनर्निवर्तन्ते ; यथेतमाकाशं, आकाशाद्वायुः, वायुर्भूत्वा धूमो भवति ; धूमो भूत्वा अभ्रं भवति ; अभ्रं भूत्वा मेघो भवति ; मेघो भूत्वा प्रवर्षति**' इति श्रुतिश्रवणात् स्वर्गलोकान्पुनरागच्छतामिष्टादिकारिणां आकाश-वायु-धूमाभ्र-मेघादिषु अवस्थामात्रं उत भोगप्राप्तिः ? आकाशादिप्रतिपत्तौ देवमनुष्यादिभाववदाकाशादिभावस्तत्सादृश्यापत्तिमात्रमेवेति सन्दिह्यते। '**ज्योतिष्टोमेन स्वर्गकामो यजेत**' इत्यादौ सुकृतात्मनां स्वर्गलोकभोगात्तन्मध्येऽपि तदात्मकत्वेन तद्भोगोप्यस्तीति प्राप्ते प्रचक्ष्महे–

**तत्स्वाभाव्यापत्तिः**– तत्सादृश्यापत्तिः, कस्मादेतत्? **उपपत्तेः**। सोमभावमनुष्यभावादौ हि सुखदुःखभोगाय तद्भावः। अत्र त्वाकाशादौ सुखदुःखभोगोपभोगाभावात्तद्भावानुपपत्तेस्तथा प्रतिवचनं तत्संसर्गकृततत्सादृश्यापत्यभिप्रायम्। क्षीणसुकृतानां तेषां सम्बन्धमात्रस्यैवोपपन्नत्वाद्भोगस्य तेषु न चोपपत्तिः।

इदमुपलक्षणम। तेषां पुनर्योनिप्राप्त्यन्तं स्थूलशरीराभावेऽपि लिङ्गशरीरेण तेषां तन्मध्ये भोगसामर्थ्याभावादिति निश्चीयते।

---

## नातिचिराधिकरणम् ॥ ५ ॥

### व्योमादौ सत्वरत्वं व्रीह्यादौ किञ्चित्कालविलम्बनम्

नान्वाकाशादिष्ववस्थानमपि तेषामेकैकस्मिन् एकैकदिनमात्रमेव न बहुसंवत्सरकाल मित्याशङ्कायामधिकरणान्तरेणाह--

## ॥ १३६ ॥ नातिचिरेण विशेषात् ॥ २३ ॥

फलाभिलाषकृतेष्टापूर्तादिकर्मिणां स्वर्गादवरोहणे व्योमादिषु तत्र तत्र बहुकालस्थिति-नियमः सत्वरनियमो वेति संशयः।

**'आकाशाद्वायुः'** इत्यादिना व्योमादिभूतेषु बहुकालावस्थानं तत्तदाकारप्राप्तिश्चावगम्यते--

किञ्च--इह **'व्रीहि-यव-ओषधि-वनस्पतयस्तिल-माषा इति जायन्ते'** इति श्रुतौ प्रवर्षानन्तरं व्रीहियवादिभावो दर्शितः। तस्माज्जीवस्य तत्र तत्र बहुकालस्थितिरेवेति प्राप्ते प्रोच्यते-- ॥ **नातिचिरेणेति** ॥

कुतः? ॥ **विशेषात्** ॥ उत्तरत्र व्रीहियवादिप्राप्तौ **'अतो वै खलु दुर्निष्प्रपतरम्'** इति विशिष्यकृच्छ्रनिष्क्रमणत्वाभिधानात् आकाशादिप्राप्तौ अचिरनिष्क्रमणं गम्यते। **'अतो वै खलु दुर्निष्प्रपतरं'** इत्यत्र छान्दसः तकारलोपः। दुर्निष्प्रपतरं--दुःखनिष्क्रमणतरमित्यर्थः। अतः व्योमादिसम्बन्धानन्तरं व्रीहियवाद्यवस्थायां कर्मिणां दुःखेन निर्गमनं कालविळम्बेनान्नद्वारा पुरुषसम्बन्धः। अङ्कुरमारभ्य धान्यनिष्पत्तिपर्यन्तं विळम्बः। धान्यनिष्क्रमणानन्तरमपि कुसूलादिप्रक्षेपेण किञ्चित्कालविळम्बनं इति तात्पर्यार्थोऽवगम्यते। तस्मात् व्योमादौ सत्वरत्वं व्रीह्यादौ किञ्चित्कालविळम्बनमिति निश्चीयते।

---

[1] तत्शब्द (ग A)

## अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

**व्रीह्यादिषु दुष्कृतलब्धजडशरीरेण तद्भोगमनुभूय पुनः सुकृतविशेषेण पुण्ययोनिपरिग्रहः**

सुकृतिनां सर्वत्र सुखानुभवविधिदर्शनात्तेषां व्रीहियवादिष्वपि चिरकालव्यवस्थान-व्यपदेशात्तत्र स्वर्गानन्दानुभववदानन्दानुभोगः किं न स्यादित्याशङ्कायामाह—

## ॥ १३७ ॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

**अन्याधिष्ठिते** अन्यः व्रीहियवाद्योषध्यभिमानिभिः जीवान्तरैरधिष्ठिते सहकृते व्रीहियवादौ सुकृतात्मनां चिरकालावस्थानमात्रमेव भोगः । कस्मात्? **पूर्ववदभिलापात्**—पूर्ववदाकाशादिष्विव व्रीहियवादिष्वपि संबन्धमात्रस्यैवेह श्रुतौ कथितत्वात् । तथा च व्रीहियवादिस्थावरदेहाभिमानजीवानामेव वातातपवर्षादिजन्मसुखदुःखानुभूतिः, न पान्थतुल्यत्वादाश्रितसुकृतात्मनाम् । **'अवरोहन्तो जीवाः व्रीहियवादिभावेन जायन्ते'** इति श्रूयते । **'मेघो भूत्वा प्रवर्षति । त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते'** ते किमन्यैर्भोक्तृभिः व्रीह्यादिशरीरैरधिष्ठितान् व्रीह्यादीनाक्षिपन्ति ; उत ते भोक्तारो व्रीह्यादिशरीरा जायन्त इति सन्दिह्यते ।

**'त इह व्रीहियवा इति जायन्ते'** इति श्रुतिदर्शनात्, **'यतो वा इमानि भूतानि जायन्ते', 'सोमः पवते जनिता मतीनां'** इत्यादौ **'देवा जायन्ते', 'मनुष्या जायन्ते'** इतिवद्व्रीहियवादिशरीरा एव सुकृतिनो जायन्त इति प्राप्ते प्रचक्ष्महे— ॥ **अन्याधिष्ठित** ॥ इति ।

जीवान्तरेणाधिष्ठिते "व्रीह्यादिशरीरे तेषां संश्लेषमात्रमेव । कुतः? **पूर्ववदभिलापात्** । आकाशादिमेघपर्यन्तवत् केवलतद्भावाभिलापात् । यत्र हि भोक्तृत्वमभिप्रेतं ; तत्र तत्साधनभूतं कर्माभिलप्यते । **'रमणीयचरणाः........कपूयचरणाः'** इति । इह चाकाशादिवन्नाभिलप्यते कर्म, कर्मफलप्रदाने प्रवृत्तस्य स्वर्गोपभोग्यफलस्येष्टादेः कर्मणः स्वर्गोपभोगादेव

समाप्तत्वात्, अनारब्धस्य '**रमणीयचरणाः.........कपूयचरणाः**' इति वक्ष्यमाणत्वात्, मध्ये कर्मान्तराभावाच्च आकाशादिभाववचनवत् व्रीह्यादिभावेन जन्मवचनमौपचारिकम्।"

ननु वेदविहितज्योतिष्टोमादिसुकृतकर्मसु पशुविशसनमांसभक्षणादिघोरपापकर्मदर्शनात् पुण्यापुण्योभयात्मकत्वं प्रतीयते। तस्मात्सुखालयस्वर्गे दुष्कृतदुःखानुभवायोगात् तेषां पुनरागमेन व्रीहियवादिदुष्कृतलब्धजडशरीरेण तद्भोगमनुभूय पुनः पूर्वोक्तस्वकृतसुकृतविशेषेण ब्राह्मणादिमहदैश्वर्यविशेषजन्मपरिग्रह एवेत्याशङ्कायामाह—

## ॥ १३८ ॥ अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

"नैतदस्ति— यत् अन्याधिष्ठिते व्रीह्यादिशरीरे संश्लेषमात्रं, भोक्तृत्वहेत्वभावान्न व्रीह्यादिभावेन जन्म— इति। भोक्तृत्वहेतुसद्भावात् 'स्वर्गोपभोग्यफलं इष्टादिकर्मैव' अशुद्धं पापमिश्रितम्, अग्नीषोमीयादि हिंसायुक्तत्वात्। हिंसा च '**न हिंस्यात् सर्वा भूतानि**' इति निषिद्धत्वात् पापमेव।

न चात्र पदाहवनीयादिवदुत्सर्गापवादभावः सम्भवति; भिन्नविषयत्वात्। अग्नीषोमीयहिंसाविधिः हिंसायाः क्रतूपकारकत्वं बोधयति; '**न हिंस्यात्**' इति तु हिंसायाः प्रत्यवायफलत्वम्। अथोच्यते— अग्नीषोमीयादिषु विधितः प्रवृत्तेर्न तद्विषयं निषेधविधिरास्कन्दति; रागप्राप्तविषयत्वात्तस्येति— नैवम्। इहापि रागप्राप्तेरविशेषात्। '**स्वर्गकामो यजेत**' इत्येवमादौ हि प्रवर्तते। अग्नीषोमीयादिष्वपि तेषां फलसाधनभूतस्य यागादेरुपकारकत्वं शास्त्रादवगम्य रागादेव प्रवर्तते। लौकिक्यामपि हिंसायां केनचित् प्रमाणेन हिंसायाः स्वसमीहितसाधनत्वमवगम्य रागात् प्रवर्तत इति न कश्चन विशेषः। तथा नित्येष्वपि कर्मसु, '**सर्ववर्णानां स्वधर्मानुष्ठाने परं अपरिमितं सुखम्**' इत्यादिवचनात् फलसाधनत्वमवगम्य रागादेव प्रवृत्तिरिति तेषामप्यशुद्धियुक्तत्वम्। अतः इष्टादीनां पापमिश्रत्वेनाशुद्धियुक्तानां स्वर्गोऽनुभाव्यं फलं तत्रानुभूय हिंसांशस्य फलं व्रीह्यादिस्थावरभावेनानुभूयते। स्थावरभावञ्च पापफलं स्मरन्ति; '**शरीरजैः कर्मदोषैर्याति स्थावरतां नरः**' इति। अतो व्रीह्यादिभावेन भोगाय अनुशयिनो जायन्त इति चेत्— तन्न; कुतः? शब्दात्— अग्नीषोमीयादेः संज्ञपनस्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावशब्दात् पशोर्हि संज्ञपननिमित्तकां स्वर्गलोकप्राप्तिं वदन्तं

शब्दमामनन्ति, '**हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति**' इत्यादिकम्। अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा; प्रत्युत रक्षणमेव। तथा च मन्त्रवर्णः–

'**न वा उ एतन्म्रियसे नरिष्यसि देवान् इदेषि पथिभिः सुगेभिः।**
**यत्र यन्ति सुकृतो नापि दुष्कृतः तत्र त्वा देवः सविता दधातु॥**' इति।

चिकित्सकञ्च तादात्विकाल्पदुःखकारिणमपि रक्षकमेव वदन्ति; पूजयन्ति च तज्ज्ञाः।"

### छागपशुप्रत्याम्नायेन पिष्टपशुग्रहणमविरोधम्

किञ्च– 'वायव्यं पशुमालभेत' इत्यादिश्रुतिचोदितत्वेन यागीयहिंसायाः न पापजनकत्वम्। 'तस्माज्जीवाधिष्ठित-व्रीहियवादिषु सुकृतात्मनां सम्बन्धमात्रमेव न भोग' इति निश्चीयते।

**ननु 'अग्नीषोमीयं पशुमालभेत'** इत्यादिश्रुतिषु श्रौतकर्मसु पशुविशसनमुक्तम्। तन्नरमेधाश्वमेधादिवत् प्रात्यक्षिकपशुविशसनं पितृमेधादिवत् पिष्टपश्वादिग्रहणं वा युक्तम्। ※

'**मा हिंस्यात्सर्वा भूतानि**', '**अग्नीषोमीयं पशुमालभेत**', '**छागस्य वपया मेधसोऽनुब्रूहि**' इत्यादिश्रुतिषु हिंसानिषेधाविधिव्यपदेशात् पिष्टपशुपरिग्रहः अर्थादुपदिश्यते। '**पुरुषं वै देवाः पशुमालभन्त; तस्मादालब्दात् मेध उदक्रामत्; सोऽश्वं प्राविशत्; तस्मादश्वो मेध्योऽभवदथैनमुत्क्रान्तमेधमत्याज्यन्त; स किंपुरुषोऽभवत्; तेऽश्वमालभन्त;**

---

※ सूचना :—'ज' कोशे (पृ. ३११) '**पितृमेधादिवत् पिष्टपश्वादिग्रहणं वा युक्तम्**' इत्यनन्तरं 'किञ्च तत्सुकृतात्मनस्तपो-विद्या ................ सम्भवतीत्याशङ्कायामाह– सू॥– '**रेतस्सिग्योगोऽथ**'॥ (२६)' इत्यन्तः पाठः सर्वेषु मातृकाकोशेषु दृश्यते। तच्च पाठः (ज. पृ. ३१२) '**सुकृतात्मनां व्रीह्यादिजन्मवचनमौपचारिकम्**' इति वाक्यादनन्तरं भाव्यम्। '**अशुद्धमिति चेन्न शब्दात्**' ॥ २५ ॥' इत्यस्य सूत्रस्य भाष्यं तत्रैव परिसमाप्यते। अन्यः सन्दर्भविरोधो दुर्निवारः। (सं)

सोऽश्वादालब्धादुदक्रामत् ; स गां प्राविशत् ; अथैनमुत्क्रान्तमेधमत्यज्यन्त ; स शरभोऽभवत् ; ते गामालभन्त ; सोऽविं प्राविशत् ; तस्मादविर्मेध्योऽभवत् ; अथैनमुत्क्रान्तमेधमत्याज्यन्त ; स गवयोऽभवत् ; तेऽविमालभन्त ; सोऽवेरालब्धादुदक्रामत् ; सोऽजं प्राविशत् ; तस्मादजो मेध्योऽभवत् ; अथैनमुत्क्रान्तमेधमत्याज्यन्त ; स वृषभोऽभवत् ; तेऽजमालभन्त ; सोऽजादालब्धादुदक्रामत् । स [1]व्रीहिं प्राविशत्' इति । ऋग्वेदेऽपि वपायाः परिशेषप्रमाणेन व्रीह्याद्योषधि[2]प्रवेशकथनात् ।

मनुस्मृतावपि–

कुर्याद्घृतपशुं सङ्गे कुर्यात्पिष्टपशुं तथा ।
न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कदाचन ॥

यावन्ति पशुरोमाणि तावत्कृत्वेऽह मारणम् ।
वृथा पशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि ॥

यो बन्धनवधक्लेशान् प्राणिनां न चिकीर्षति ।
स सर्वसहितः प्रेप्सुः सुखमत्यन्तमश्नुते ॥' इति ।

शातातपेऽपि–

'ज्योतिष्टोमादिकृत्येषु तन्मन्त्रोच्चारणेन वै ।
पशुप्राणान् हरेद्विप्रो न बन्धनविधेः क्वचित् ॥

यो मन्त्रसिध्या यज्ञेषु पशुप्राणान्निहन्ति वै ।
स तु प्रत्यक्षपशुना कुर्याद्यज्ञं सुशोभनम् ॥

मन्त्रसिद्धिविहीनानां प्राकृतानां द्विजन्मनाम् ।
पिष्टाकारेण छागेन ज्योतिष्टोमादिकं विधिः ॥'

---

[1] माहिषं (ग A) [2] प्रवेशित्व (ग A)

इति दर्शनाच्च। मन्त्रोच्चारणमात्रेण पशुप्राणाकर्षणसमर्थानां वाक्शुद्धियुतानां चेतनछाग-पशुना ज्योतिष्टोमादिकं निर्दिश्यते। तद्वदसमर्थानां पिष्टपशुयाग एव युक्तः। पिष्ट-पशोर्मन्त्रेण प्राणावाहनस्य तद्वत्प्राणोत्क्रमणस्य च सम्भवेन वैदिकलौकिकविरोधो न भवति। सोमलताप्रतिनिधित्वेन यथाम्ललतापरिग्रहणं तद्वत् छागपशुप्रत्याम्नायेन पिष्टपशुग्रहणम-विरोधम्।

ननु इह लोके सोमलताऽदर्शनात्, तत्प्रतिनिधित्वेनाम्ललतापरिग्रहणमुपपन्नम्। छागस्येह सम्भवेन तद्वन्न विधीयत इति चेन्न। पितृमेधकामानां अश्वमेधादिवत्पितृमेधे प्रत्यक्षस्वपितृवधप्रसङ्गात्, पित्रात्मकपिण्डच्छेदनेन पितृमेधस्य निष्फलत्वदोषाच्च प्रेतत्व-निवृत्तौ तण्डुल-गो-वृषभसंस्कारकर्मणः '**चातुर्मास्या वै पशवः**' इत्यत्र पिष्टपशुग्रहण-विधेश्च दत्ताञ्जलित्वसम्भवाच्च।

किञ्च—मन्त्रसिद्धिप्रधानभूतविधिविहितोपनयन-विवाहादिशुभाऽशुभकर्मारम्भश्रुतविघ्नेश्वरादि-पूजाविधायकशास्त्रविरोधः प्रतीयते। तथा चेन्मृत्पाषाणादिकृतदेवपूजा-नमस्काराभावसम्भवात् श्रुतिविरुद्धबुद्धमतप्रवेशो दुर्निवारः। तस्माद्यागीयकर्मसु पिष्टपशुपरिग्रहणं युक्तम्।

**किञ्च**— तत्सुकृतात्मनः तपो-विद्या-यशो-धनाद्यवच्छिन्नसत्कुलप्रसूतत्वे केन मार्गेण तस्य तज्जन्म सम्भवतीत्याशङ्कायामाह—

## ॥ १३९ ॥ रेतस्सिग्योगोऽथ ॥ २६ ॥

सुकृतात्मनां व्रीह्यादिजन्मवचनमौपचारिकम्। व्रीह्यादिप्रवेशानन्तरमेवोत्तमपुरुषशरीरे प्रविश्य रेतोरूपेण परिणम्यते '**यो यो ह्यन्नमत्ति यो यो रेतस्सिञ्चति तद्भूय एव भवति**' इति रेतस्सिग्भावोऽनुशायिनां श्रूयमाणो यथा तद्योगमात्रमुपदिष्टं। तद्वत् व्रीह्यादिभावोऽपि निर्दिष्टः।

पुरुषहृदयप्रविष्टानां सुकृतकर्मिणां शुक्लावच्छिन्नानां कथं शरीरोत्पत्तिस्सम्भवतीत्याशङ्कायामाह—

## ॥ १४० ॥ योनेः शरीरम् ॥ २७ ॥

द्युलोके देवत्वं प्राप्तानां सुकृतात्मनां यदा रेतोरूपेण योनिप्रवेशस्तस्य तदैव शरीरमुत्पद्यते । तथापि तेषां गर्भवेदनादिदुःखसद्भावात् बाल्याद्यवस्थास्वपि तत्तत्क्लेशानुभवदर्शनाच्च जन्ममरणदुःखदूरीकृताचार्यकटाक्षलब्धशक्तिपातादिवशेन निर्धूतपाशपटलस्सन् प्रारब्धप्रतिभासनाशपर्यन्तं शिवतत्त्वज्ञानदृढफलक-ध्यान-धारण वैराग्य-शम-दम-जीवकरुणा-परमभक्ति-श्रवणाद्युपासनमेव निरन्तरमनन्यभावेनसम्पादनीयमिति भावः । तथा [1]**सिद्धान्तशिखामणौ**—

अस्थिरे क्षणिके सौख्ये पुत्रदारादिसम्भवे ।
क्षयित्वादियुते स्वर्गे कस्य वाँञ्छा विवेकिनः ॥
शिवे परमकल्याणे भक्ताभीष्टफलप्रदे ।
संस्थाप्य सर्वदा चित्तं विचरेद्भक्तिमान्नरः ॥' इति ।

**शैवे**—

पुत्रमित्रकळत्रादीन् बान्धवाभाससंज्ञिकान् ।
महामोहैकजनकान् शिवज्ञाननिरोधकान् ॥
विहाय शङ्करे चित्तं [2]दातव्यं मोक्षकाङ्क्षिभिः ॥

इति श्रवणान्मुमुक्षूणां परलोकगमनागमनसाधकपुण्यपापकर्मकर्तृत्वं विहाय निरन्तरं शिवज्ञानार्थं शिवोपासनमेव कर्तव्यमिति वेदितव्यम् । तस्मात्सुकृतात्मनां प्राणाकाशादिप्राप्तिप्रभृतितद्योगमात्रमेवेति सिद्धम् ।

---

[1] सिद्धान्तागमे (ग A)
[2] स्था (ग ')

इति श्रीमद्यतिव्रजपरिवृढ-श्रीपतिपण्डितभगवत्पादाचार्यस्वामिकृत-भेदाऽभेदात्मक-विशेषाद्वैत-सिद्धान्तव्यवस्थापक-वैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

## श्रीकरभाष्ये

उपासनाभिधानस्य तृतीयाध्यायस्य तदन्तरप्रतिपत्त्यादिषष्ठाधिकरणावच्छिन्न-तदन्तरप्रतिपत्तावित्यादिसप्तविंशतिसूत्रात्मकः प्रथमः पादस्समाप्तः

## तृतीयाध्यायस्य प्रथमः पादः

---

Sri Jagadguru Vishwaradhya
Jnana Simhasan Jnanamandir
LIBRARY.
Jangamwadi Math, VARANASI,
Acc. No. ~~2128~~
002

## श्रीकरभाष्ये तृतीयाध्यायस्य द्वितीयः पादः

### स्वप्नप्रपञ्चदृष्टान्तेन जगन्मिथ्यात्ववादिमतनिराकरणम्

[1]परमेश्वराज्ञाभूतातिवर्णाश्रमानुकूल[2]श्रुतिस्मृत्युक्तः पुण्यकर्मानुष्ठानाद्दुरितक्षयः । दुरितक्षयेण श्रुतिस्मृत्यागमादिसच्छास्त्रविश्वासः । तद्विश्वासविचारेण नित्यानित्यवस्तुविवेकः । तद्विवेकादिहामुत्र फलभोगविरागः । तद्विरागेण शमादिषट्कसम्प्राप्तिः । तत्फलेन मोक्षैकनिष्ठया [3]शिवाचार्यानुग्रहः । ततो मोक्षानुकूलपति-पशु-पाशात्मकतत्त्वत्रयविचारः । अतश्शिवसाक्षात्कारचित्तैकत्वकारणशिवयोगाभ्यासः । तदभ्यासेन अहं-ममत्वाद्यभिमाननिवृत्तिः । तन्निवृत्तिद्वारा शिवैकत्वसिद्धिसम्भवात् पापबुद्धिनिवृत्तिपूर्वकपुण्यकर्मानुष्ठानहेतुना वर्णाश्रमाचारनिष्ठानां सुकृतिनामिह परलोकेषु सुखानुभूतिः । तद्व्यतिरिक्तानां पापिनां घोरनरकवेदना च दर्शिता ।

इह तु केचित् निष्प्रपञ्च-निर्धर्मिक-निर्गुण-निरवयव-निर्भेदनित्ये ब्रह्मणि प्रपञ्चकारणत्वायोगात् स्वप्नप्रपञ्चदृष्टान्तेन जाग्रत्स्वप्नसुषुप्तिमूर्छावस्थानां चतसृणामपि मिथ्यात्वं साधयन्ति । तच्छुद्धाद्वैत-बुद्धाद्वैत-शुष्काद्वैत-शून्याद्वैतादिदुर्मतनिराकरणार्थमेतदधिकरणप्रारम्भः ।

### सन्ध्याधिकरणम् ॥ १ ॥

### स्वप्नस्य भविष्यच्छुभाशुभफलसूचकत्वदर्शनात् स्वप्नस्यापि सत्यत्वप्रतिपादनम्

ननु ‘स्वप्नेन्द्रजालसदृशमचिन्त्यरचनात्मकं’ इत्यादि पुराणागमादिषु स्वप्नत्प्रपञ्चस्य मिथ्यात्वकथनात्पूर्वोक्तपुण्यापुण्यकर्मिणां स्वर्गनरकानुभवानां असत्यत्वमर्थात्सिद्धम् ; अतः परमेश्वरार्पणपूर्वकसुकृतकर्मानुष्ठानस्य न किञ्चित्प्रयोजनमित्याशङ्कायामाह—

---

[1] परमेश्वराज्ञाभूतवर्णाश्रमानुकूल (ज)   [2] श्रौतस्मार्तोक्त (ग A)   [3] सदाचार्यानुग्रहः (ग A)

## ॥ १४१ ॥ सन्ध्ये सृष्टिराह हि ॥ १ ॥

सन्ध्ये स्वप्नावस्थायां, **सृष्टिः** सन्ध्यास्वप्नावस्थानुगतचराचरप्रपञ्चसृष्टिः पारमार्थिकी। कुतः? **आह हि**। **'न तत्र रथा न रथयोगा न पन्थानो भवन्ति'। अथ रथान् रथयोगान्पथः सृजते'** इत्यादिश्रुतौ स्वप्नप्रपञ्चस्य प्रतिपादितत्वात् सत्यत्वम्; तस्मात् स्वप्नप्रपञ्चदृष्टान्तेन जाग्रत्प्रपञ्चस्य मिथ्यात्वानुमानप्रधान-अद्वैतबुद्धमत-सिद्धान्तः अनुपपन्न इति सूक्ष्मार्थः।

**"न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान् रथयोगान् पथः सृजते। न तत्राऽऽनन्दा मुदः प्रमुदो भवन्ति; अथानन्दान् मुदः प्रमुदः सृजते। न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति; अथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते। स हि कर्ता"** इति श्रुतौ स्वप्नमधिकृत्य श्रूयते। तस्मादत्र जाग्रत्प्रपञ्चसृष्टिवत् स्वप्नप्रपञ्चसृष्टिः जीवकृता, ईश्वरकृता वा? तत्सत्यमसत्यं वा? इति सन्दिह्यते।

**'ईक्षणादिप्रवेशान्तसृष्टिरीशेन कल्पिता।**
**जाग्रदादिसुषुप्त्यन्तसृष्टिर्जीवेन कल्पिता॥'**

इति वाक्यदर्शनात् "सन्ध्ये सृष्टिर्जीवेनेति। कुतः? सन्ध्यं स्वप्नावस्थानमुच्यते, **'सन्ध्यं तृतीयं स्वप्नावस्थानम्'** इति वचनात्। सा तु जीवेनैव सृजते। स हि कर्ता' इत्याह हि। स्वप्नदृग्जीव एवात्र प्रतीयते।"

किञ्च–स्वप्नगतगजस्यन्दनादिप्रपञ्चस्य प्रबोधे मिथ्यात्वदर्शनात् तद्वज्जाग्रत्प्रपञ्चस्यापि रज्जुसर्पादिवन्मिथ्यात्वमुपपन्नमिति प्राप्ते प्रचक्ष्महे।

**सन्ध्ये** स्वप्ने **सृष्टिः** गज[1]तुरगादिनानाचित्रसृष्टिः, **आह हि** जीवान्तर्यामितया व्यापकस्य परशिवब्रह्मणः इति श्रुतिः प्रतिपादयति। **'ईश्वरस्सर्वभूतानां', 'प्रधानक्षेत्रज्ञपतिर्गुणेशः'**

---

[1] 'गज' इति द्विरुक्तिः ग A प्रतौ दृश्यते।

इत्यादिबहुश्रुतिषु सर्वजीवनियामकत्व-सर्वजीवबन्ध-मोक्षकर्तृत्व-सर्वज्ञत्वादिधर्माणां परमेश्वरस्यैव दर्शनादत्र [1]स्वकृतरथ-रथयोगसृष्टिरपि परमेश्वरायत्तेति वेदितव्यम् ।

किञ्च— स्वप्नाध्यायानुसारेण स्वप्नस्य भविष्यच्छुभाशुभफलसूचकत्वदर्शनात् स्वप्नस्यापि सत्यत्वम् ।

### जीवान्तर्यामितया स्वप्नप्रपञ्चस्य कर्तृत्वमीश्वरस्यैव

ननु— '**य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः**' इति श्रुतौ स्वप्ने पुत्रमित्रकळत्रादिसृष्टेः स्वतन्त्रतया जीवस्यैव कर्तृत्वव्यपदेशात् कथमीश्वरस्य स्वप्नादिसृष्टिस्सम्भवति इत्याशङ्कायामाह—

## ॥ १४२ ॥ निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

"**य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः**' इत्येवं जीवं स्वप्ने कामानां निर्मातारमेके शाखिनो वदन्ति । '**सर्वान् कामान् छन्दतः प्रार्थयस्व**' '**शतायुषः पुत्रपौत्रान् वृणीष्व**' इति जीवस्य च सत्यसङ्कल्पत्वं प्रजापतिवाक्ये श्रुतम् " । तस्माज्जीवस्यैव स्वाप्नकर्तृत्वमिति चेदयुक्तम्— परमेश्वरस्याष्टमूर्तिषु जीवस्यैक-मूर्तित्वात् स्वप्नस्रष्टृत्वादिधर्माः परमेश्वरस्योपपन्नाः । अत एव '**खं ब्रह्म कं ब्रह्म**' '**असावादित्यो ब्रह्म**', '**अयमादित्यो ब्रह्म**' इत्यादिश्रुतिषु शिवैकनिष्ठब्रह्मशब्दस्या-काश-वायु-जल-सूर्य-जीवादिषु प्रयोगो दृष्टः । अतोऽत्र जीवं स्वेच्छानुसारेण स्वप्नप्रपञ्चस्य निर्मातारं स्रष्टारं श्रुतिः प्रतिपादयति ।

तथा च कर्तुरिच्छानुसारेणोत्पाद्यमानत्वादपि स्वप्नकालिकाः पुत्रमित्रकळत्रादयः पदार्थाश्च सत्या एवाङ्गीकर्तव्याः । पुत्रादयश्च तत्र काम्यमानतया कामशब्देन निर्दिश्यन्ते, मिथ्यात्वपक्षे कर्तुरिच्छाधीनत्वानुपपत्तेः । न हि मिथ्याभूतस्य शुक्ति-रजत-रज्जु-सर्पादेः कर्तुरिच्छाधीनत्वं लोके दृष्टम् । तथा च जीवान्तर्यामितया स्वप्नप्रपञ्चस्य कर्तृत्वमीश्वरस्येति श्रुतेस्तात्पर्यम् ।

---

[1] स्वकृतेत्यस्य जीवकृतेत्यर्थः— पूर्वं जीवनियामक ईश्वर इति प्रतिपादनात् जीवकृतासृष्टिरीश्वर-कृतैवेत्यर्थः । ' इति ' ग A ' प्रतावधिकः पाठोऽत्र दृश्यते (सं) ।

एतेन च स्वप्नप्रपञ्चस्य तात्पर्येण श्रुतिप्रतिपाद्यत्वमस्ति । '**न तत्र रथा**' इति पूर्ववाक्ये पारमार्थिकरथादीनां प्रतिषिद्धत्वात् स्वप्नप्रपञ्चदृष्टान्तेन ब्रह्मैक्यत्ववादोऽप्यनुपपन्न इति सिद्धम् ।

**जडप्रधानस्य परमशिवभिन्नशक्तिरूपस्य तद्विशिष्टस्य बद्धजीवस्य च न स्वप्नप्रपञ्चकर्तृत्वम्**

ननु '**अजामेकां लोहितशुक्लकृष्णां**' इत्यादिश्रुतिषु जडस्य प्रधानस्य जगत्कारणत्व निर्देशाच्चेतनस्य जीवस्य कथं स्वप्नप्रपञ्चकर्तृत्वमित्याशङ्कायामाह–

## ॥ १४३ ॥ मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

तुशब्दः जीवकर्तृत्वं व्यावर्तयति । "स्वप्ने रथपुष्करिण्याद्यर्थजातं मायामात्रं परमपुरुषपरशिवसृष्टावित्यर्थः– मायाशब्दोऽह्याश्चर्यवाची ।

'**जनकस्य कुले जाता देवमायेति निर्मिता ।**"
'**हिमाद्रितनया गौरी माया नाम्नी महेश्वरी ॥**
**भक्ताभीष्टप्रदा नित्या शिवाधीना चिदात्मिका ।**'

इत्यादिपुराणेषु, '**मायां तु प्रकृतिं विन्द्यात् मायिनं तु महेश्वरम्**' इत्यादिश्रुतिष्वपि दर्शनात् ।" अत्रापि '**न तत्र रथा रथयोगा न पन्थानः**' इत्यस्य सकलेतरपुरुषानुभावितया न भवन्तीत्यर्थः । '**अथ रथान् रथयोगात् पृथक् सृजते । स्वप्नदृगनुभाव्यतया तत्कालमात्रावसानान् सृजते ॥**' इत्याश्चर्यरूपत्वमेवाह । एवंविधाश्चर्यरूपा सृष्टिस्सत्यसङ्कल्पस्य परमपुरुषस्य शिवस्योपपद्यते, न जीवस्य । तस्य सत्यसङ्कल्पत्वादियुक्तस्यापि संसारदशायां **कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्** न जीवस्य तथा विधाश्चर्यसृष्टिरुपपद्यते । '**कामं कामं पुरुषो निर्मिमाणः**' इति च श्रुतिः परमपुरुषमेव निर्मातारमाह ।

'**य एष सुप्तेषु जागर्ति**' '**तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।**
**तस्मिन् लोकाः श्रितास्सर्वे तदु नात्येति कश्चन ॥**'

इत्युपक्रमोपसंहारयोः परमशिवासाधारणस्वभावप्रतीतेः ।

'**अथ वेशान्तान् पुष्करिण्यस्स्रवन्त्यः सृजते स हि कर्ता**' इति च तया श्रुत्या ऐकार्थ्यात्परमपुरुषमेव कर्तारं निर्दिशति । तस्माज्जडप्रधानस्य परमशिवभिन्नशक्तिरूपस्य गुणत्रयात्मकस्य तद्विशिष्टस्य किञ्चिज्ज्ञस्य बद्धजीवस्य च स्वप्नप्रपञ्चनिर्मातृत्वमनुपपन्नम् ।

**जीवस्य पाशमायामोहितत्व-पाशमोक्षयोश्च परमेश्वरायत्तत्वात् स्वप्नकर्तृत्वमपि नेतरस्य**

**किञ्च**- लोके जीवेच्छानुसारेण स्वप्नप्रपञ्चोत्पत्त्यदर्शनात् अनिष्टानां दुःस्वप्नानामपि द्योतनाच्च जीवेश्वरयोः चित्त्वेनैकत्वान्न तयोर्वैलक्षण्यमित्याशङ्कायामाह-

## ॥ १४४ ॥ पराभिध्यानात्तु तिरोहितम् ; ततो ह्यस्य बन्ध-विपर्ययौ ॥ ४ ॥

'**ज्ञाऽज्ञौ द्वावजावीशानीशौ**' इत्यादिश्रुतियुक्त्यनुभवैः दिव्यमणिव्यर्थपाषाणादिवत् शिव-जीवयोरन्योन्यभेदस्य सिद्धत्वेन **पराभिध्यानात्** शिवाभिन्नचिच्छक्तिव्यतिरिक्तत्रिगुणात्मक पाशरूपजडपराप्रकृत्यभिध्यानात् दृढस्पृष्टत्वात् जीवस्य स्वज्ञानं **तिरोहितं** आवृतम् । **ततः** आवृतत्वाद्धेतोः **अस्य** बन्ध-मोक्षविपर्ययौ । शरीरेन्द्रियमनःप्राणादिषु अहं-ममेत्यभिमानो बन्धः । बहुजन्मकृतपुण्यपरिपाकेन स्वज्ञान-शिवज्ञानपूर्वक-पाशरूपमायाशक्तिनिवृत्तिफलकशिवत्व-प्राप्तिरेव मोक्षः । उभावेतावुपपन्नौ । तथा शैवे श्रूयते-

'शिवे सनातने साम्बे नित्यकल्याणवैभवे ।
परापरेति भेदेन तस्य शक्तिः प्रकाशिता ॥'

अपरा सच्चिदानन्दलक्षणा सर्वमङ्गला ।
गुणत्रयविभेदेन भासते सर्वजन्तुषु ॥

शिवार्पणकृतात्पुण्यात् शिवानुग्राहको भवेत् ।
तस्माद्गुणात्मिका माया पाशरूपा पराभिधा ॥
विनश्यते तथा जीवः शिवो भवति नान्यथा ।' इति ।

'ईशं ज्ञात्वा' 'तस्याभिध्यानात्' 'ज्ञात्वा शिवं' 'श्रद्धाभक्तिः' इत्यादि श्रुतावपि 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते ; अथ सोऽभयं गतो भवति ; यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते ; अथ तस्य भयं भवति', 'एष ह्येवानन्दयाति', 'भीषास्माद्वातः पवते' इत्यादि श्रुतिषु च तस्य बन्ध-मोक्षप्रसङ्गो बहुधा प्रपञ्चितः ।

केचिज्जीवस्य सत्यसङ्कल्पत्वादिकं स्वाभाविकमपि परमेश्वरमायया तिरोहितमिति वदन्ति । तदयुक्तं– सत्यसङ्कल्पस्वभावस्य मायातिरोहितत्वासम्भवात्, अमुक्तस्य जीवस्य स्वतः स्वाभाविकसत्यसङ्कल्पत्वे परमेश्वरनिष्ठाऽद्वितीयसत्यसङ्कल्पत्वादेरतिव्याप्तिप्रसङ्गादिदोषाच्च । तस्मात्तस्य पाशमायातिरोहितत्वम् । पाश-मोक्षयोश्च परमेश्वरायत्तत्वात् । अतः स्वप्नकर्तृत्वमपि नेतरस्येति सिद्धम् ।

**शिवाचार्यकृपालब्धशक्तिमहिम्ना जीवस्य शिवज्ञाननिरोधकाहं ममत्वादिकमुत्पाट्यते**

शाम्भवमायया तिरोहितस्वज्ञानस्य जीवस्य शिवज्ञाननिरोधकं अहंममत्वादिकं केनेकोत्पाट्यत इत्याशङ्कायामाह–

## ॥ १४५ ॥ देहयोगाद्वा सोऽपि ॥ ५ ॥

प्रळयकाले जीवस्य सुषुप्तिवत्पाशरूपपराभिध्यानादचिच्छक्तियोगात्स्वज्ञानं तिरोहितम् । सृष्टिकालेप्यचिच्छक्तियोगेन स्थूल-सूक्ष्म-शरीरसंयोगात् अहं-ममत्वादिकं सम्भवति विवेकिनाम् । अतोऽहं-ममत्वादितूलमूलाज्ञाननिवर्तकः स्वज्ञान-शिवज्ञाननिवर्तकः साधनोपायः अद्यैव कर्तव्य इति वेदवेदान्तेषु गीयते ।

**'आचार्यवान् पुरुषो वेद'** इति । **'अत्याश्रमस्थस्सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य', 'स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्'** इत्यादिश्रुतिषु शरीरसंयोगाज्जीवस्य परमशिवप्रतिविम्बभूत**शिवाचार्यकृपालब्ध शक्तिपातादि**द्वारेन मोक्ष आम्नायते ।

**शक्तिपातस्वरूपः**

शक्तिपातविधानन्तु शिवागमेषु दर्शितं यथा–

**'परिपक्वमहापाशमलविच्छेदहेतुकम् ।**
**शक्तिपातं [1]शिवाचार्यो कुर्याच्छिष्यस्य सादरात् ॥**

**शक्तिपातेन जीवो हि ब्रह्मरूपत्वमश्नुते ।**
**शक्तिपातश्च सर्वेषां अपरिच्छिन्नमव्ययम् ॥**

---

[1] सदाचार्यो (ग A)

परमानन्दजननलक्षणं वा प्रयोजनम् ।
तच्छक्तिपातं देवेशि तीव्रमन्दादिभेदतः ॥
[1]भक्ताद्यैक्यान्तभेदेन षड्विधं परिकीर्तितम् ।' इति ।

तस्मात् शक्तिपातलक्षणमाम्नायते । **परिपक्वमलोत्पाटनहेतुश्शक्तिपातः** । तेन जीवस्य परशिवब्रह्मरूपतया निरतिशयापरिच्छिन्नसुखाविर्भावलक्षणप्रयोजनमुपदिष्टम् ।

**शक्तिपातस्तु तीव्रमन्दादिभेदेन भक्ताद्यैक्यान्तस्थलेषु षड्विधोऽभूत्**

पति-पशु-पाशादिपरमरहस्यप्रकाशकनिगम-आगम-उभयवेदान्तशास्त्रश्रवण-मनन-निदि - - - ध्यासनानुक्रमेण अखण्डाकारवाक्यजन्यबुद्धिवृत्तौ निरतिशयानन्दात्मकमहेश्वरत्वाविर्भावः **प्रथमो भक्तस्थले** निर्दिष्टः ।

तद्वद्विद्यासम्पुटोद्घूलनलक्षणोन्मेषणप्रकटामलसत्त्वचिद्घनसदाशिवतत्त्वसाक्षात्कारो **द्वितीयो माहेश्वरस्थले** प्रदर्शितः ।

कुण्डलिन्याः सुषुम्नामार्गेण चक्रषट्कं भित्त्वा ब्रह्मरन्ध्रदेशे शिवयोगाभ्यासवशात् शिव-शक्तिसंयोगलक्षणः **तृतीयः प्रसादिस्थले** प्रपञ्चितः ।

शिष्यानुग्रहातिशयेन देशिकः स्वदेहमुत्सृज्य छात्रशरीरे प्रविश्य तदीयनाडीशोधन-द्वारा तत्कुण्डलिन्या सप्तचक्रेषु सञ्चारणेन शिववत् सर्वभुवनगमनपरोक्षप्रदर्शनरूपः **चतुर्थः प्राणलिङ्गिस्थले** निरूपितः ।

प्राणापानपवन[2]संयोगेन सुषुम्नानाडीमध्यप्रकाशकचित्कलामयकल्याणविभूतिं लब्ध्वा सदा अणिमाद्यष्टैश्वर्यसम्पन्नः **पञ्चमः शरणस्थले** कथितः ।

विद्याऽविद्याविलक्षण-निरतिशय-निरञ्जन-निर्विकार-निरवयव-परमाकाशरूप-परिपूर्ण-शिव-तत्त्वसाक्षात्कारानुभवेन प्रचण्डातपमध्यनिक्षिप्तनिर्वातनिश्चलकर्पूरदीपवत् स्थितिं व्यपोह्य शरीरेन्द्रिय-

---

[1] भक्त्या (ग A) [2] संयोगतया (ग A)

मनःप्राणादिबाह्याभ्यन्तरवस्तुपरिज्ञानशून्यमनोविलयात्मकोन्मन्यवस्थाप्राप्तिः **षष्ठो ह्यैक्यस्थले** अभिधीयते ।

एवंविधशक्तिपातेषु **पिपीलिका-मर्कट-पक्षि-गो-मत्स्य-कच्छपन्यायेन** स्वाभाविकजीवत्वनिवृत्तिपूर्वकशिवत्वप्राप्तिरेव मोक्ष इत्युपदिश्यते । तस्माज्जीवस्येश्वराधीनत्वमीश्वरस्य जाग्रत्स्वप्नसुषुप्त्यवस्थाकल्पकत्वमनिवार्यम् । **'तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन'** इति स्मृतौ सर्वेश्वरस्य सर्वेषु सुप्तेषु जागरणं सर्वलोकाश्रयत्वमित्याद्यनन्यसाधारणधर्मा ह्युपदिष्टाः । जीवानामल्पाल्पकर्मानुगुणफलानुभवार्थं तावन्मात्रकालावस्थानात् तदेकानुभाव्यानर्थानुत्पादयतीति राद्धान्तः ।

### मिथ्यात्वसमर्थनपरत्वे श्रुति-सूत्रविरोधो दुर्निवारः

ननु नित्यनिर्विकारस्वभावस्य ब्रह्मणः दुर्विकारमिथ्याभूतप्रपञ्चकर्तृत्वायोगात् स्वप्नप्रपञ्चकारणत्वमनुपपन्नम् । तत्र पुत्रमित्रकलत्रादिवस्तुजातस्य जाग्रदवस्थायामविद्यमानत्वात् मिथ्यात्वमनिवार्यम् । तद्वज्जाग्रत्प्रपञ्चस्यापि गन्धर्वनगरादिवदसत्यत्वमेवेत्याशङ्कायामाह—

## ॥ १४६ ॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ६ ॥

**"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।**
**समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥ '** इति ।

**'अथ स्वप्नाः– 'पुरुषं कृष्णं कृष्णदन्तं पश्यति । स एनं हन्ति'** इत्यादेश्च स्वप्नाध्यायविदश्च [1]स्वप्नं शुभाशुभयोः सूचकमाचक्षते । **सूचकत्वञ्च** स्वसङ्कल्पायत्तस्य [2]नोपपद्यते । तथा च अशुभस्यानिष्टत्वात् शुभस्य सूचकमेव स्रष्टा पश्येत् । अतः स्वप्नसृष्टिरीश्वरेणैव कृता " इति निश्चीयते । जीवस्य स्वप्नसृष्टिमात्रोपयोगिसत्यसङ्कल्पस्वाद्याविर्भावस्तदानीं स्यादिति शङ्काव्यावृत्त्यर्थमिदं सूत्रम् । स्वप्नाध्यायविदः स्वप्नवाचिवेदवाक्यविदः । शुभाशुभफलप्राप्तिव्यपदेशान्न स्वप्नस्य मिथ्यात्वम् । अत एव प्रपञ्चस्यापि सत्यत्वमर्थात्सिद्धम् । "

---

[1] स्वप्नं स्वप्नाभ्युदयानभ्युदयफल सूचक (ग A)　　[2] नोत्पद्यते (ग A)

अत्र "परे तु **स्वप्नार्थानां** ईश्वरसृष्टतया वियदादिवत् **पारमार्थ्यं** पूर्वपक्षीकृत्य देशकालनिमित्तैः दुर्निरूपतया मिथ्यात्वं सिद्धान्तयन्ति। एषां च मते जीवकर्तृकत्वमेव '**सृजत**' इति यदुच्यते तदौपचारिकम्। सुखदुःखदर्शननिमित्तसुकृतदुष्कृतकर्तृत्वनिबन्धनः औपचारिकः स्वप्नार्थकर्तृत्वव्यपदेशः। '**बहिष्कुलायादमृतश्चरित्वा**' इति स्वप्नविषया श्रुतिश्च बहिरिव चरित्वेत्येवं परा तस्मिन् प्रकरणे तदीश्वरप्रतिपादनं जीवस्य तदनन्यत्वेन सत्यसङ्कल्पतया स्रष्टृत्वशङ्कां व्युदस्यति। '**क्षरं प्रधानममृताक्षरं हरः**', '**क्षरात्मनावीशते देव एकः**', '**तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः**', इति श्रुतौ जीवस्य ज्ञानैश्वर्यशक्त्यादिसर्वमहिमातिशयवत्वं पाशतिरोधाननिवृत्तिः शिवध्यानाभिधानात्तु उपदिष्टम्। अतोऽस्य बन्धमोक्षौ शिवाधीनौ। स च तिरोभावः सूक्ष्मस्थूलदेहयोगादिति योजयन्ति।"

तत्र **तावत्पादानुगतार्थतत्संगती** अनुपपन्ने, जीवत्वावस्थानिरूपणं चेत् पादकृत्यं **फलाधिकरणासङ्गतिः**। न चेश्वरो जीवावस्था, तस्य ब्रह्मणि कल्पितस्य जीवाध्यस्तत्वात्। परमात्मनिरूपणं पादकृत्यं चेत् स्वप्नार्थानां जीवकर्तृकतया मिथ्यात्वोक्तिरिह न सङ्गच्छते। पूर्वपक्षश्चानुपपन्नः, मिथ्यात्वस्य सिद्धान्तकरणायोगात्। मिथ्यात्वं **ह्यारम्भणाधिकरणे** कृत्स्नप्रपञ्चस्य समर्थितम्। यदा वियदादेरपि मिथ्यात्वसिद्धिः तदा कैमुत्यसिद्धं स्वप्नार्थमिथ्यात्वमित्यधिकरणवैयर्थ्यम्। वियदादीनां व्यावहारिकसत्यत्वमस्ति; स्वाप्नार्थानां तदपि नास्ति व्यवहारविसंवादात् इति; वियदादिवैलक्षण्यप्रतिपादनार्थोऽयमारम्भ इति चेन्न। व्यवहारविसंवादस्य प्रबोधसमये सर्वलोकसम्प्रतिपन्नत्वात्।

'**वैधर्म्याच्च न स्वप्नादिवत्**' इत्यत्र तद्वैषम्यस्योक्तत्वाच्च श्रुतिवाक्यकृतसत्यत्वशङ्काव्युदसनार्थं आरम्भ इति चेन्न—सूत्र-श्रुतिवाक्यासामञ्जस्यात्। तथा हि मिथ्यात्वं समर्थनीयञ्चेत् सर्वलोकाश्रयत्वादिभिः स्वरसप्रतिपन्नमीश्वरसृष्टत्वं न बाधितव्यम्। ईश्वरसृष्टत्वस्य व्यावहारिकसत्यत्वनिवृत्त्यविरोधात्। उपासनाविशेषप्रीतपरमेश्वरदेवताप्रसादलब्धानां स्वप्नानां ब्रह्मदत्तोपाधिदृष्टानामपि व्यावहारिकसत्यत्वनिवृत्तेस्त्वदिष्टत्वात्। व्यावहारिकसत्यत्वाभावः साध्यश्चेत् जीवकर्तृत्वाश्रयणमपि विरुद्धम्; जीवकर्तृकघटादीनामिव व्यावहारिकसत्यत्वप्रसङ्गात्। जीवस्रष्टृत्वस्यान्तिमसूत्रद्वयव्युदस्तत्वाच्च जीवस्य मुख्यं स्रष्टृत्वं व्युदस्तम्; सुखाद्यवभासमूलादृष्टकर्तृत्वादौपचारिकं कर्तृत्वमिति न विरोध इति चेत् जीवादृष्टमूलानां देहेन्द्रियसर्गादीनामिव व्यावहारिकसत्यत्वप्रसङ्गात् जीवादृष्टमूलत्वेऽपि देहसर्गादीनामीश्वराधीनत्वमस्ति इति

चेत् तादृशमीश्वराधीनत्वं स्वाप्नार्थानामप्यस्ति; तदधीनत्वस्य भवदनुमतत्वाच्च। सर्वदेह-सर्वकालवर्ति-सर्वजन्तुदृष्ट-स्वाप्नप्रपञ्चानां जाग्रत्प्रपञ्चादपि महत्तरतया तेषामन्यार्धीनत्वे परमैश्वर्यमीश्वरस्य न स्यात्। उभयविधप्रपञ्चस्यापि प्रतीतिसत्वमविशिष्टम्। बाधस्याशुतरत्व-विळम्बौ हि वैषम्यम्।

एवं जीवानां साक्षात् स्वप्नार्थकर्तृत्वाभावस्य मिथ्यात्वादुपयुक्तस्य सूत्रितत्वादेव सूत्रकारेण मिथ्यात्वस्य निषेध्यत्वमवगम्यते। सूचकश्चेति विरुद्धसूत्रप्रणयनाच्च विरुद्धत्वं वक्ष्यामः। अतो ह्यस्मिन् साध्ये सूत्राण्युपयुक्तानि स्युः; न त्वनुपयुक्तविरुद्धानि। तदेव साध्यं भवितुमर्हति। ईश्वरस्य स्रष्टृत्वं पूर्वपक्षयुक्तिश्चेत्, 'पुत्रादयश्चे'ति सूत्रांशो निष्फलः। पुत्रादिस्रष्टृत्वस्य जीवेषु सम्भवतः ईश्वरसाधकत्वायोगात्। मायाशब्दस्य मिथ्यात्ववाचित्वाभावाच्च। अक्षराननुगुणत्वं सूचकश्चेति सूत्रं च विरुद्धम्। मिथ्यात्वविरोधित्वादर्थक्रियायाः सूच्यस्यैव पारमार्थ्यं न सूचकस्येत्यभिप्राय इति चेन्न— अशाब्दत्वात्।

उत्सूत्राभिप्रायकल्पने च श्रुतिविरुद्धकल्पनायोगात् पराभिध्यानात्तिरोधाननिवृत्तिरिति योजनायां अध्याहारव्युत्क्रमान्वयौ स्फुटतरौ। सोऽपीति तिरोभावपरामर्शश्चायुक्तः, तिरोभावशब्दस्याप्रकृतत्वात्। तिरोहितमिति निर्दिष्टे तिरोधानरूपधात्वर्थमात्रस्य तदिति परामर्शार्हस्य स इति परामर्शायोग्यत्वाच्च पुलिङ्गपदेषु प्रयुक्तेषु कस्यचिदर्थ उचितः परामर्शनीयः। श्रुतिवाक्यञ्च निरूप्यम्। 'न भवन्तीति' श्रुतिर्मुख्या। 'तदनुरोधेन सृजतिर्भाक्त' इति वा भवतां निर्वाहः। सृजतेर्भाक्तत्वं स्थितम्। पूर्ववाक्यमपि विफलं; लोकप्रसिद्धत्वात् स्वाप्नमिथ्यात्वस्य। अप्राप्ते हि शास्त्रमर्थवत्। अतो वैयर्थ्य भाक्तत्वाभ्यां वाक्यद्वयमपि दुस्तरम्।

मिथ्याभूतं स्वप्नार्थजातमनूद्य भाक्तेन सृजातिना जीवादृष्टमूलत्वं प्रतिपाद्यत इति वाक्यैकत्वमिति चेन्न— उद्देश्यविशेषणभूतमिथ्यात्वानुरोधेन उपादेयवचनस्वारस्यभङ्गस्य न्यायविदामनभिमतत्वात् उभयमुख्यत्वसम्भवेऽन्यतरामुख्यत्वाश्रयणानुपपत्तेश्च। न च 'न भवन्ति' इति जागरितानुभूतार्थाभावपरः; प्रबोधे दृश्यानां रथादीनां स्वप्नसमये-विद्यमानत्वात्। न च स्वप्नार्थानां प्राक्कालीनाभावपरः। स्वप्नकल्पितानां पूर्वमभावस्य लोकसिद्धत्वात्। न च, न भवन्तीति स्वप्नजाग्रद्दृष्टानां अन्योन्याभावोक्तिः, लोक-

प्रसिद्धत्वादेव । अतः स्वाम्नार्थानां [1]प्रसिद्धरथादिभावप्रतिषेधेन तद्वैजात्यं प्रतिपाद्यते । तेन तदेकानुभाव्यस्वतत्तत्कालावस्थायित्वरूपं वैलक्षण्यमुक्तं स्यात् । अतो वैलक्षण्यविशिष्टं ईश्वरसृष्टत्वं प्रतिपादयिषितमिति वाक्यैकत्वमवैयर्थ्यं अभाक्तत्वं न्यायविरोधश्च भवति ।"
तस्मान्मिथ्यात्वसमर्थनपरत्वे श्रुतिसूत्रविरोधो दुर्निवारः ।

---

[1] स्वप्नदृक्प्रसिद्धेति (ग A मात्रपाठः) ।

## तदभावाधिकरणम् ॥ २ ॥

### सुप्तिगमनहेतुत्वं शिवस्यैव

ननु स्वप्नकारणत्वमीश्वरस्यास्तु ; सुप्तिहेतुत्वं कस्योपपद्यते ? तत्सुप्तौ स्थूल-सूक्ष्म-जाग्रत्स्वप्नप्रपञ्चपरिज्ञानं कस्य ? शारीरः शरीरे कुत्र शेते ? तस्य प्रपञ्चविस्मृतिः केनोऽत्पद्यते ? इति शङ्कायामधिकरणान्तरं दर्शयति ।

### जीवस्य राजसादृश्य प्रतिपादनम्

## ॥ १४७ ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

पूर्वमत्र स्वप्नावस्थां विचार्य तत्कर्तृत्वं तत्कृतकर्मानुसरणेन परशिवस्य ब्रह्मणः प्रसाध्य इदानीं सुषुप्त्यवस्थाकर्तृत्वं तज्जीवनियामकत्वञ्च तस्यैवेति निर्णीयते । जाग्रत्स्वप्नेष्वहंममत्वादिना शरीरेन्द्रियाद्यभिमानवान् शारीरः सुप्त्यवस्थायां तदभावस्सन् तस्य शरीरेन्द्रियाद्यभिमानस्याभावो यस्य सः देहाभिमानरहितस्सन् नाडीषु चात्मनि च चकारात् हृत्पुण्डरीके शेते । नाडीहृत्पुण्डरीकादिप्राकारप्रवेशद्वारा तत्पुण्डरीकावच्छिन्न-शिवचिच्छक्त्यंशभूतगुणत्रयसमष्ट्यात्मकतमःप्रधानप्रासादे जीवाख्यो राजा शेत इत्युपदिश्यते । कुतः ? तच्छ्रुतेः । आसु तदा नाडीषु सुप्तो भवति । नाडीभ्यः प्रत्यवसृप्य पुरीतति शेते । पुरीततः प्रत्यवसृप्य सति शेते । 'सति सम्पद्य न विदुः सति सम्पद्यामहे' इति श्रुतौ नाडीपुरीतद्द्वारा शारीरस्य पुरीतदवच्छिन्ने सर्वाधिष्ठानपरशिवब्रह्मघोरतमस्वरूप-प्रधाने सुषुप्त्यवस्थायां शयनश्रवणादित्याचक्ष्यते । तच्छ्रुत्यर्थस्तु जीवाख्यो राजा जाग्रत्स्वप्न-प्रपञ्चयोः स्वराष्ट्रयोः सञ्चरन् कारणशरीराख्यस्वपुरं प्रविश्य ततो नाडीः प्रविशति ; नाडीभ्यो निर्गत्य हृदयपुण्डरीकं प्रविशति ; तत्पुण्डरीकान्निर्गत्य तदवच्छिन्नब्रह्मसान्निध्ये तद्घोरशक्त्यात्मकतमःप्रधानप्रासादे शेते ।

अथ "यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानाति । आसु तदा नाडीषु सुप्तो भवति" इति । तथा 'अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद, हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते, ताभिः

**प्रत्यवसृप्य पुरीतति शेते'** इति **'यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य तदा सम्पन्नो भवति'**। इति। **'सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति', 'कर्णिकायां स्वप्नः, लिङ्गे सुषुप्तिः, पद्मत्यागे तुरीया'**–

**'जाग्रत्स्वप्नेषु जीवस्तु रागद्वेषादिसङ्कुलः।**
**सुषुप्तौ तदभावाच्च जीवश्शङ्करतां गतः॥'**

इत्यादिश्रुतिस्मृतिषु जीवस्य सुषुप्तौ द्वासहस्रसप्ततिनाडीषु तन्मूलभूतपुरीतन्नाड्यां हृदयपुण्डरीके ब्रह्मणि तमः प्रधाने च शयनोपदेशात्, **'यथा व्रीहिभिर्यजेत यवैर्वा यजेत'** इत्यादिवत् [1]विकल्पो वा समुच्चयो वा इति सन्दिह्यते। **'अथ यदा सुषुप्तौ भवति'** इति श्रुतावस्य जीवस्य स्वहृदयपुण्डरीकप्रासाद[2]शायित्वव्यपदेशात्तस्यैव सुप्तिकर्तृत्वं सूचितम्। **'लिङ्गे सुषुप्तिः' 'सता सौम्य तदा सम्पन्नो भवति'** इत्यादिश्रुतिशतेषु तस्य तत्र तदीश्वरप्राप्तिमत्त्वमिति यत्तदयुक्तम्।

**'ब्रह्मविदाप्नोति परम्', 'न स पुनरावर्तते'** इत्यादिषु ईश्वरप्राप्तानामपुनरावृत्ति-व्यवस्थापनात्, सुप्तौ भूयो भूयोऽपि पुनरावृत्तेरस्य दर्शनाच्च। तदीश्वरावच्छिन्नतमश्शक्ति-विलीनत्वमिति यत्तदनुपपन्नम्– तमःप्रकाशवत्तत्प्रकाशस्य ज्ञानात्मकस्य ब्रह्मणस्तमोरूपज्ञान-शक्तेः परस्परविरोधस्वभावत्वात्; **'एकमेवाद्वितीयं ब्रह्म', 'एक एव रुद्रो न द्वितीयाय तस्थे'** इत्यादिबहुश्रुतिविरोधाच्च।

ननु आगमनप्रयोजनत्वे तुल्यकार्यतया युगपदनेकस्थानवृत्त्ययोगात् कार्यभेदाव-गमकत्वेन प्रासादखट्वापर्यङ्कानामिव कार्यभेदात् समुच्चयविधित्वमाश्रित्य, **'व्रीहिभिर्यजते'** इत्यत्र पुरोडाशनिष्पादनप्रयोजनवत् सुप्तिप्रयोजनकत्वेन कदाचिन्नाडीषु कदाचित् हृदय पुण्डरीके परमात्मनि च तस्य तत्र शयनमिति चेदसमञ्जसं, मुख्यविध्यभावहेतुत्वेन अनवस्थाप्रसङ्गात्। अतः स्वहृदयपुण्डरीक एव सुप्तौ स्थितिरिति प्राप्ते प्रचक्ष्महे–
**॥ तदभाव इति ॥**

---

[1] उदिते जुहोति अनुदिते जुहोति इति विकल्पे वा (ज)

[2] शयित्व (ग A)

**‘सुषुप्तिकाले सकले विलीने तमोभिभूतस्सुखरूपमेति।’** इत्यादि-श्रुतिशतश्रवणात्सुप्तौ परमेश्वरपाशशक्त्या जीवस्य जाग्रत्स्वप्नाभावस्सुप्तिः नाडीषु पुरीतति आत्मनि च भवतीत्येषां स्थानानां समुच्चयो निर्णीयते। कुतः? **तच्छ्रुतेः**; तस्य स्थानत्रयविधायकश्रुतिदर्शनात्। तस्मात्तस्य सुप्तौ हृत्पुण्डरीकावच्छिन्नशिवतत्त्वप्राप्तिसम्भवेऽपि तमोरूपपाशशक्तिविशिष्टतया तत्प्राप्तेरनुपपन्नत्वात् पुनःपुनरागमनमुपपद्यते। **‘न स पुनरावर्तते’** इति श्रुतीनां परमेश्वरध्यानधारणाद्युपासनज्ञानद्वारा पाशविच्छेदलक्षणपूर्वकमुक्तजीवपरत्वादविरोधः। जीवस्य गमनागमनवेळायां तत्पाशशक्त्या स्वज्ञानतिरोहितत्वसम्भवात् सुप्तिगमनहेतुत्वमपि शिवस्य स्पष्टमुपदिष्टम्। अत एव **‘प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः’**, **‘यतो वा इमानि भूतानि जायन्ते’** इत्यादौ सृष्टि-स्थिति-लयाविर्भाव-निरोधानात्मक-प्रधानजीवविषयकपञ्चकृत्यपरायणत्वं परमशिवान्नेतरस्येति गम्यते। तेजस्तिमिरवत्पाशशक्तिपरमेश्वरयोः न परस्परविरोधः, श्रुतियुक्त्यनुभवसिद्धत्वात्; स्वाधीनशक्तत्वात्, स्वजन्यत्वाच्च। **‘समस्तसाक्षिं तमसः परस्तात्’**, **‘विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्’**[1] इत्यादिश्रुतिषु अविरोधतया तमःपरत्व-तमोधिष्ठानत्व-स्वाधीनसर्वशक्त्यनवच्छिन्नत्वानां निर्देशात् तत् समुचितम्। सोपानारोहणस्य सौधप्रवेश-विरोधवन्नाड्यादिप्रवेशस्तु मूलाज्ञानतमश्शक्तिविशिष्टतया परमेश्वरसान्निध्यप्रवेशाप्रतियोगीति सिद्धम्। अतस्सुप्तौ तूलाज्ञानापन्नस्य जीवस्य मूलाज्ञानावच्छिन्नहेतुद्वारा नाड्यादिमार्गेण जाग्रत्स्वप्नायासशमनाय शिव एव स्वसान्निध्ये निवेश्य स्वानन्द[2]निवेशं ददातीति निश्चीयते।

ननु परमेश्वरो हि जीवस्य स्वसान्निध्ये परमानन्दप्रदस्य, तथापि पुनःप्रबोधकाले पुण्यापुण्यफलभोगार्थं शारीरस्यैव स्वातन्त्र्येण पुनरागमनमस्तु इत्याशङ्कायामाह—

## ॥ १४८ ॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥

“यतो ब्रह्मैव साक्षात्सुषुप्तिस्थानं, **अतः** अस्मात् ब्रह्मणः एषां जीवानां **प्रबोधो** निर्दिष्टः। **‘स त आगम्य न विदुस्सत आगच्छामहे’** इति इत्यादिश्रुति-

[1] ऋतं सत्यं परं ब्रह्म .... (ज). [2] लेशं ददातीति (ग A).

श्रवणात्। तस्माज्जीवस्य न स्वतः प्रबोधकर्तृत्वम्। सुप्त्यवस्थानन्तरं हृदयपुण्डरीके प्रभासमानज्योतिर्मयलिङ्गे परब्रह्मणि मायापाशावच्छिन्नशयनो जीवः प्रबोधः; प्रकृष्टो बोधो यस्य सः– शरीरेन्द्रियाद्यभिमानविशिष्टस्सन् पुनरुत्थाय जाग्रत्प्रपञ्चाख्यराष्ट्रदर्शनाय हृदय-पुण्डरीकपुरीतन्नाडीप्राकारद्वारा शरीराख्यपुराद्बहिर्गच्छति। **'स यदा प्रबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गाः प्रतिष्ठेरन्, एवमेव तस्मादात्मनस्सर्वे प्राणा यथायतनं प्रतिष्ठन्ते, प्राणेभ्यो देवाः, देवेभ्यो लोकाः'** इति श्रुतिरेषात्र भगवता स्पष्टमुपदिष्टा। **'स त आगम्य'** इति श्रुत्या समुच्चय एवाङ्गीकर्तव्यः। **'विकल्पपक्षे च अष्टौ दोषाः'** इति **श्रीकण्ठशिवाचार्यैः** उक्तम्। यदा जीवो नाडीषु शेते तदा पुरीत-द्ब्रह्मवाक्ययोः प्राप्तं प्रामाण्यं परित्यजेत, अप्राप्तं चाप्रामाण्यं स्वीक्रियेत। यदा पुनः पुरीतद्ब्रह्मणोः शेते, तदा पुरीतद्ब्रह्मवाक्ययोः पूर्वं त्यक्तप्रामाण्यं स्वीक्रियेत, पूर्वस्वीकृतं चाप्रामाण्यं परित्यज्येत' एवं प्राप्ते–

**अष्टौ दोषाः**

परित्यागः, अप्राप्तस्वीकारः, परित्यक्तस्वीकारः, स्वीकृतपरित्यागश्च इति दोषचतुष्टयम्। पुरीतद्ब्रह्मवाक्यकोटौ तथा नाडीवाक्यकोटौ च दोषचतुष्टये योजिते सति अष्टौ दोषाः भवन्ति। अतो न विकल्पपक्ष इति सिद्धम्।

नाड्यादीनामेकार्थत्वात् व्रीहियवादीनामिव विकल्प इति पूर्वपक्षयुक्तिं परे वदन्ति। परम्परयैकप्रयोजनत्वे समुच्चयस्स्यादिति निरपेक्षत्वप्रतीतिरेव विवक्षितेति तैरपि वक्तव्यम्। 'तासु तथा भवति। यथा सुप्तः स्वप्नं न कञ्चन पश्यति। अथास्मिन् प्राण एवैकधा भवति ताभिः प्रत्यवसृप्य पुरीतति शेते' इति नाड्यादिसमुच्चयश्च श्रुत्या प्रदर्श्यत इति सिद्धान्तयुक्तिरुक्ता। तत्र नाडीनां प्रत्यवसर्पणमार्गत्वमात्रं प्रतिपन्नमिति तासां सुषुप्तिस्थानत्वे समुच्चयाप्रतीतेः तदनादरः। नाडीपुरीततोर्जीवाधारत्वव्यपदेशः। तदुपाध्याधारतया ब्रह्माधारत्वं नाम ब्रह्मात्मकत्वमिति चायुक्तम्। **'सुषुप्त्युत्क्रान्त्योर्भेदेन'** इति सूत्रितत्वात् वैयधिकरण्यश्रुतीनामस्वारस्याच्च।

ननु यत्रैष एतत्सुप्तो य एष विज्ञानमयः पुरुषस्तदैष प्राणानां विज्ञानेन विज्ञानमादाय **'एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते'** इति, **'पुरीतति शेते'** इति च श्रुत्योः कथं न विरोधः? अत्र आकाशो परमात्मनीति परे तथापि हृदय इति

वचः पुरीतच्छयनेन विरुद्धम् । अतः आकाशशब्दवाच्यपुरीतदाख्यधर्म्यैक्यादविरोध इति वाच्यम् । 'हृदयवेष्टनमानं पुरीतत् । तच्च हृदयाधारः । अतो न विरोध' इत्यन्ये । तच्चायुक्तम्– हृदयान्नाडीभिः प्रत्यवसृप्य पुरीतति शयनस्य हृदि शयनस्य च विरोधात् ।

अन्ये तु 'स्वप्ने स्वान्तर्यामिकः परमात्मानं उपैति' इति वदन्ति । तच्चायुक्तम्– अन्तर्यामिण ईश्वराद्व्यतिरिक्तस्यैव परमात्मनः प्रामाणिकत्वात् ; 'प्राज्ञेनात्मना सम्परिष्वक्तः' इति श्रुतिविरोधाच्च । तस्मात्पूर्वोक्तं समञ्जसम् ।

---

## कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥

**सुषुप्तौ संसरन् जीवः परशिवाख्यं ज्योतिर्लिङ्गं उपसम्पद्य आश्वस्तः पुनर्भोगायोत्तिष्ठति**

ननु पूर्वदिनीया एव जीवास्सुप्तिदशायां सूक्ष्मावस्थापन्नान्तःकरणविशिष्टतया हृत्पुण्डरीकावच्छिन्ने ज्योतिर्लिङ्गे लीनास्सन्तः उत्तरदिनेषु स्थूलावस्थापन्नान्तःकरणावच्छिन्नतया तदभिव्यक्ताः भवन्ति वा? उत पूर्वदिनीयान्तःकरणावगतजीवानां सर्वात्मना सुषुप्त्यवस्थायां ब्रह्मण्यात्यन्तिकलये सत्यभिमानान्तःकरणयोगाः तदभिमानजीवाः उत्पद्यन्ते वा? इत्याशङ्कायां अधिकरणान्तरेण निर्णयमाह—

## ॥ १४९ ॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ १ ॥

[1]यस्तु पूर्वदिने सुप्तिदशायां हृदयपुण्डरीकावच्छिन्नज्योतिर्लिङ्गात्मकपरशिवे लीनः स एवोत्तरदिने स्थूलान्तःकरणापन्नतयाभिव्यक्तो भवति। कुतः? ॥ **कर्मानुस्मृतिशब्दविधिभ्यः** ॥ पूर्वदिने कृतस्य श्रोत्रियस्य चाश्रोत्रियस्य कर्मणः अस्मिन् दिने स्मरणात्, **'त इह व्याघ्रो वा सिंहो वा'** इति श्रुतिश्रवणात्, **'ज्योतिष्टोमेन स्वर्गकामो यजेत'** इत्यादिविधिवाक्याच्चेत्येतेभ्यो हेतुभ्यः इत्युच्यते। प्रतिदिनं भिन्नभिन्नजीवाङ्गीकारे अन्यस्य ज्योतिष्टोमकर्तृत्वं अन्यस्य तद्भोक्तृत्वमिति स्वर्गकामस्य ज्योतिष्टोमविधायकवाक्यं अप्रमाणं स्यात्। **'त इह व्याघ्रो वा सिंहो वा'** इत्यारभ्य **'यद्यद्भवन्ति तत्तदा भवन्ति'** इति वाक्यं अप्रमाणं स्यात्; तस्य वाक्यस्य पूर्वदिनीयानामेव जीवानां सुप्तिदशायां सूक्ष्मरूपान्तःकरणविशिष्टानां उत्तरदिनेषु स्थूलान्तःकरणविशिष्टतया अभिव्यक्तिरिति निर्दिश्यते। नोचेत्पूर्वदिनानुभूतकर्मणोऽस्मिन्दिने स्मरणं न स्यात्; अन्येनानुभूतस्यान्येन स्मरणासम्भवाच्च। **'यत्रैतत्पुरुषस्स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति'** इति श्रुतिरेवात्र विषयः। किं सुप्त एव प्रबोधसमये उत्तिष्ठति उत अन्य इति सन्दिह्यते।

---

[1] यो जीवः पूर्वदिने (ग.).

'**ब्रह्म वेद ब्रह्मैव भवति**', '**न स पुनरावर्तते**', '**यथा नद्यः**' इत्यादि श्रुतिशतेषु ब्रह्मभावापन्नस्य पुनरावृत्तिप्रतियोगित्वव्यपदेशात् । '**सता सौम्य तदा सम्पन्नो भवति**' इत्यत्र ब्रह्मप्राप्तानां सुप्तानां कथं पुनरावृत्तिरुपपद्यते ? सर्वेषां जीवानां सुप्तिप्रबोधदर्शनात् उत्थितोऽन्य एव इति प्राप्तेऽभिधीयते ।

"'**स एव**' त्वित्यत्र तुशब्दः पक्षं व्यावर्तयति । स एवोत्तिष्ठति । कुतः ? ॥ **कर्मानुस्मृतिशब्दविधिभ्यः** ॥ कर्म तावत्, सुषुप्तेन पूर्वकृतं पुण्यपापरूपं तत्त्वज्ञानात् प्राक् तेनैव भोक्तव्यम् । अनुस्मृतेरपि । '**य एवाहं सुप्तः स एव प्रबुद्धोऽस्मि**' इति शब्दोऽपि सुप्तप्रबुद्ध स एवेति दर्शयति । '**त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति**' इति विधयश्च मोक्षार्थाः । सुषुप्तस्य मुक्तत्वेऽनर्थकास्तु । न चासौ सर्वोपाधिविनिर्मुक्तपरशिवत्वं प्राप्तः, '**तद्यत्रैतत्सुषुप्तः**' इति, '**सुषुप्तं प्रकृत्य नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति ; नो एवेमानि भूतानि । विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि**' इति श्रुतिश्रवणात् । मुक्तस्य च '**परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते**' । '**स तत्र पर्येति जक्षत् क्रीडन् रममाणः**', '**स स्वराड् भवति ; तस्य सर्वेषु लोकेषु कामचारो भवति**', '**सर्वं ह्यपश्यः पश्यति सर्वमाप्नोति सर्वशः**' इति कल्याणविभूतिं प्राप्तानां कैलासवासिनां सालोक्य-सामीप्य-सारूप्यसिद्धानां सर्वज्ञत्वादिपरमेश्वरधर्माः श्रूयते । अतस्सुप्तः संसरन्नेव आयस्तसर्वकरणो ज्ञानभोगाद्यशक्तो विश्रमस्थानं परशिवाख्यं ज्योतिलिङ्गं उपसम्पद्य आश्वस्तः पुनर्भोगायोत्तिष्ठति ।"

---

## मुग्धाधिकरणम् ॥ ४ ॥

### सुषुप्त्यवस्था-मूर्छावस्थयोः परस्परवैलक्षण्यकथनम्

शरीरत्रयेष्ववस्थात्रयं श्रुतियुक्त्यनुभवारूढमपि सुषुप्तिसदृशतया मूर्छावस्था काचिद्दृष्टा। तस्मात्सा तद्विलक्षणा तदन्तर्भूता वेति शङ्कायां अधिकरणान्तरेण सुषुप्त्यवस्थामूर्छावस्थयोः परस्परवैलक्षण्यमाह—

## ॥ १५० ॥ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥

मूर्छावस्थायां हृत्पुण्डरीकावच्छिन्नज्योतिर्लिङ्गे ब्रह्मणि देहाद्यभिमानविशिष्टस्य जीवस्यार्धसम्पत्तिरर्धलय एव। न तु सुषुप्तिदशायामिव सर्वात्मना तदभिमानलयः। मूर्छितस्य पुरुषस्य बाह्यपदार्थज्ञानाभावेऽप्यान्तरदुःखानुभवसन्धानस्य विद्यमानत्वेन देहाद्यभिमानस्यापि लेशतो ऽङ्गीकर्तव्यत्वात्। तथा च परिशेषात् अवस्थात्रयविलक्षणत्वात् मूर्छावस्था भिन्नैव। पूर्वत्र सुप्तजीवप्रकारत्वमभिधायेदानीं मुग्धमधिकृत्य चिन्त्यते। 'मूर्छितः पुरुष' इति लोके सर्वानुभवदृष्टत्वान्मूर्छेति काचिदवस्था विद्यते। तदवस्था सुषुप्त्यादिष्वन्यतमा न वेति विशयः।

अवस्थान्तरकल्पने मानाभावात् "सुषुप्त्यादीनामन्यतमावस्थायामेव मूर्छाप्रसिध्युपपत्तेः इयमन्यतमावस्था इति प्राप्ते प्रचक्ष्महे।"

"मुग्धे पुरुषे या अवस्था सा मरणायार्धसम्पत्तिः, कुतः? ॥ **परिशेषात्** ॥ न तावत्स्वप्नजागरौ; ज्ञानाभावात्। निमित्तवैरूप्यादाकारवैरूप्याच्च न सुषुप्तिमरणे। निमित्तं हि मूर्छाया अभिघातादिः। पारिशेष्यात् मरणायार्धसम्पत्तिर्मूर्छा। मरणं हि सर्वप्राणदेहसम्बन्धोपरतिः।"

किञ्च— निमित्तवैरूप्यात्सुषुप्तिव्यावृत्तिः, आकारवैरूप्यान्मरणव्यावृत्तिः, न सुषुप्तिमरणेत्युक्तेरासन्नतया सुषुप्तिमरणयोर्मध्यस्थत्वात्पारिशेष्यमुक्तम्। पश्चान्मरणान्तर्भावशङ्का-

माकारवैरूप्यं विवृतम् । सुषुप्तौ प्राणो भूयिष्ठमुपपद्यते ; मूर्छायामल्पः किञ्चिदुपलभ्यते ; मृतौ न किञ्चिदपि । बाह्यवायुना भूयिष्ठमाप्यायितस्सुषुप्तौ मूर्छायां किञ्चिदाप्यायित; अनाप्यायितस्य प्राणस्योपलम्भानर्हत्वात् ।

अन्ये तु 'मूर्छितः किं मरणाय परमात्मानमभिसम्पन्नः ? उत स्वाप्ने तस्मिन्विलीनः ? उत प्रकारान्तरगतः' इति विचारमाचक्षते ।

जाग्रदादिष्वन्यतमे स्वेकविचारान्तर्भावात् पृथक्करणे फलाभावात् द्वेधा विचार उचितः । विचारस्य परमात्मपर्यन्तत्वञ्च विहितम् । तस्मात्सूक्ष्मप्राणदेहसम्बन्धावस्थितिर्मूर्छेति निर्णीयते ।

---

## उभयलिङ्गाधिकरणम् ॥ ५ ॥

### परब्रह्मणः शिवस्य मूर्तामूर्तोभयलिङ्गत्वप्रतिपादनम्

पूर्वत्र त्वंपदार्थवाच्यस्य जीवस्य परमात्मज्ञाननिरोधकमहाघोरसंसारोत्तारणहेतुभूत-वैराग्योदयार्थं सूत्रकारेण तस्य जाग्रत्स्वप्नसुषुप्तिमुग्धोत्क्रान्त्यवस्थां निरूप्य तत्कर्मानुसरणेनैव ईश्वरस्य तत्कर्तृत्वनिरूपणात् तत्पदार्थः परमात्मा कीदृशः? सावयवो वा? निरवयवो वा? इत्याशङ्कायां तल्लक्षणमधिकरणान्तरेण निरूपयति—

## ॥ १५१ ॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

**परस्य** जगत्कारणस्य शिवस्य **उभयलिङ्गं** भावप्रधानो निर्देशः । उभयलिङ्गत्वं नाम [1]लिङ्गरूपेण शिवभक्तगात्रेषु, **काशी**-श्रीशैलादिदिव्यस्थलेषु च पण्डित-पामर-तारणार्थं स्थितिः । किञ्च देव-मनुष्यादिसर्वशरीरान्तर्यामितया मूलाधार-हृदय-भ्रूमध्यादिप्रदेशेषु **ज्योति**-र्लिङ्गात्मकत्वेन प्रकाशकत्वम् । महा**कैलास-मेरु मन्दरादि**स्थलेषु पराम्बिकावच्छिन्नतया भक्तानां सालोक्यादित्रिविधापवर्गात्मककल्याणविभूत्यर्थं धर्मार्थ-काम-फलसिध्यर्थञ्च दिव्यलीलामङ्गळविग्रह-विशिष्टत्वं, पराकाशरूपेण निरवयवस्वभावतया निखिलजगद्व्यापकत्वञ्च निर्दिष्टम् । अतस्तस्य तदुभयं स्वाभाविकमेव ।

केचित्— 'परस्य निर्गुणनिरवयवत्वमात्रं स्वाभाविकं, सत्यसङ्कल्पत्वादिसगुणत्व-मागन्तुकं उभयोरेकत्र विरोधात्, मन्दबुद्धीनामुपासनार्थं मिथ्याभूतसगुणत्वमौपाधिकभेदे-नाङ्गीकर्तव्यम्;' इति वदन्ति । तन्मतं निराकरोति ॥ [2]**न स्थानत इति** ॥ उपाधितः सगुणत्व-निर्गुणत्वयोर्भेदो न सम्भवति । कुतः? सर्वत्र हि वेद-वेदान्त-आगमादिष्वपि परस्य ब्रह्मणः तदुभयमसन्दिग्धतया प्रतिपादनात्तस्योभयलिङ्गत्वं स्वाभाविकमेवेति निर्दिश्यते । **'रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्या'** इति; **'या ते रुद्र**

---

[1] अर्चनीयलिङ्गरूपेण (ग A). [2] स्थान इति (ग A).

शिवा तनूरघोरा पापकाशिनी । तया नस्तनु वा शन्तमया गिरिशन्ताभिचाकशी हि'। 'सोमा रुद्रा युवमेतान्यस्मै विश्वा तनूषु भेषजानि धत्तम्। अवस्यतं मुञ्चतम्' इत्यादिना वेदेषु, 'आकाशशरीरं ब्रह्म', शान्तिसमृद्धममृतम्' इत्यादिना वेदान्तेषु,

अन्तरलिङ्गधारणम्

'आधारे कनकप्रख्यं हृदये विद्रुमप्रभम्।
भ्रूमध्ये स्फटिकच्छायं लिङ्गं योगी विभावयेत् ॥

लिङ्गधारिब्राह्मणलक्षणम्

मुखे मन्त्रं हृदि ध्यानं मस्तके लिङ्गधारणम्।
रुद्राक्षश्च शिखा भस्म तद्वै ब्राह्मणलक्षणम् ॥'

इत्यादिषु स्मृतिषु बाह्यलिङ्गधारणश्चोपदिष्टम्

'अन्तर्धारणशक्तो वा ह्यशक्तो वा द्विजोत्तमः।
संस्कृत्य गुरुणा दत्तं शैवं लिङ्गमुरस्थले ॥
धार्यं विप्रेण मुक्त्यर्थं एवं वेदेषु गीयते।
तस्मात्स्थूले च सूक्ष्मे च शिवलिङ्गं चिदात्मकम्।
धारयेत्सततं भक्त्या भवबन्धविमुक्तये ॥'

इत्यादिना शिवागमेष्वपि तदुभयस्य समानत्वेन स्वाभाविकतया बहुधा प्रपञ्चितत्वात् अर्धजरतीन्यायवदप्रसिद्धत्वात् पक्षैकत्वमयुक्तम्। अतः 'उभयविधिबलादुभयसिद्धिः' इति न्यायेन तस्योभयलिङ्गत्वं निष्प्रत्यूहमेव।

परमेश्वरस्य दहरोपास्यत्वसमर्थनम्

तैत्तिरीये- 'दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसँस्थम्।
तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ॥'

इति परमेश्वरस्य दहरोपास्यत्वं विधाय, 'सः कः' इत्याशङ्कायां-

'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः।
तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः ॥'

इति तत्रोपास्यो महेश्वर इति स्पष्टमुपदिश्य, तद्भक्तवरिष्ठत्वेन दृष्टान्ततया '**सहस्रशीर्षं देवं**' इत्यनुवाके नारायणहृदयावच्छिन्नशिवोपासनं प्रदर्श्य '**निधनपतये नमः**' इत्यादिना तस्य सर्वात्मकत्वमभिधाय '**एतत्सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्**' इति बाह्याभ्यन्तरभेदेन तस्य मूर्ताऽमूर्तत्वव्यपदेशात् ।

किञ्च— **कैवल्ये** '**हृत्पुण्डरीकं विरजं विशुद्धं**' इत्यारभ्य '**उमासहायं परमेश्वरं प्रभुं……… ध्यात्वा मुनिर्गच्छति भूतयोनिं**' इति, '**बालाग्रमात्रं हृदयस्य मध्ये विश्वदेवं जातवेदसं वरेण्यं**' इत्यथर्वशिरसि, '**अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः**' इति कठवल्यां, '**अथास्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्**' इति छान्दोग्ये, '**एषोऽसौ परमो हंसो भानुकोटिप्रकाशो येनेदं व्याप्तं तस्याष्टधा वृत्तिर्भवति, पूर्वदले पुण्ये मतिः…लिङ्गे सुषुप्तिः**' इति हृदयान्तर्वर्तिनः परब्रह्मणश्शिवस्य लिङ्गरूपत्वं स्पष्टमुपदिष्टम् । '**ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः**' इति **सामशाखायां**, '**लिङ्गं ब्रह्मैव केवलम्**' इति **सामरुद्रसूक्ते** दर्शनात् परस्य सावयवत्वं निरवयवत्वं उभयात्मकत्वं वा ?

किञ्च— सर्वजीवान्तर्यामित्वेन जीवकृतपुण्यापुण्यफलभोक्तृत्वं च युक्तं न वा ? इति सन्दिह्यते ।

## उभयात्मत्वप्रतिपादनम्

'**उभयविधिबलादुभयसिद्धः**' इति न्यायेन शिवस्य परब्रह्मणः मूर्ताऽमूर्तत्वमश्रौतमिति चेत्तदयुक्तम् । '**अचक्षुः श्रोत्रं तदपाणिपादं**', '**नित्यं सर्वगतं सुसूक्ष्मम्**', '**अप्राणो ह्यमनाश्शुभ्रः**', '**आकाशवत्सर्वगतो निरञ्जनः**', '**निष्कलं निर्गुणं शान्तं निरवद्यं निरञ्जनं**' '**अशब्दमस्पर्शमरूपमव्ययं**' इत्यादिश्रुतिकदम्बेषु तस्य मूर्तत्वस्य निषिद्धत्वात्, मूर्तत्वे व्यापकत्वाभावात्, जीववद्राग-द्वेष-सुख-दुःखानुभावप्रसङ्गात्, '**शीर्यत इति शरीरं**' इति व्यवस्थादर्शनात्, स्वेच्छाधीनविग्रहत्वेप्यपुरुषार्थत्वसम्भवाच्च **अर्धजरतीन्यायवेदकस्य** परस्योभयधर्मत्वं सम्भवति । '**यस्यात्मा शरीरं**', '**यो रुद्रोऽग्नौ**' इत्यादिषु सर्वान्तर्यामित्व सर्वशरीरत्वञ्चोपपन्नमिति चेत्तदनुपपन्नम्— तद्धर्मप्राप्तिप्रसक्तेः, तत्र तत्र व्यवस्थितस्य तत्तत्सम्बन्धरूपपुरुषार्थद्योतनाच्च, '**नेह नानास्ति**' इत्यादिश्रुतिष्वद्वितीयत्वव्यवस्थापनेन ब्रह्मभिन्नजीवेश्वरादिप्रपञ्चस्य मिथ्यात्वस्य अर्थात्सिद्धत्वात् रज्ज्वारोपितसर्पवत्कालत्रयेऽपि पारमार्थिकत्वेन सावयवत्वसर्वज्ञत्वादिधर्मावच्छिन्नेश्वरो नास्तीति प्राप्ते प्रचक्ष्महे—**न स्थानतोऽपीति** ।

हिकारेण पूर्वपक्षं निरस्यति । '**न स्थानतोऽपि परस्य**' इति । न माहेश्वरादि-पञ्चविंशतिलीलामङ्गलविग्रहस्थानतोऽपि परस्य ब्रह्मणः अपुरुषार्थवेशः ग्रन्थः ? सम्भवति कुतः ? उभयलिङ्गं सर्वत्रा यतस्सर्वत्र **श्रुतिस्मृत्यागमपुराणादिषु** तस्योभयलिङ्गत्वं मूर्तामूर्तोभयात्मकत्व-मुपदिश्यते । अतस्तस्य बाह्ये **काशी-श्रीशैल-गोकर्ण-केदार-चिदम्बरादि**दिव्यस्थलेषु सद्भक्त गात्रेषु **मेरु-मन्दर-कैलासादि**प्रदेशेषु च भक्ततारणार्थमर्चावतारेण **मूर्तत्वं, मूलाधार-हृदय-भ्रूमध्य-ब्रह्मरन्ध्रादि**स्थलेषु जगदेककारणभूतचिदाकाशरूपेण **अमूर्तत्वं** चोपपन्नम् । **तैत्तिरीयके** च '**दहरं विपापं**' इत्यादिना ज्योतिर्लिङ्गानुसन्धानरूपान्तर्लिङ्गधारणं, '**एतत्सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्**' इत्यनेन बाह्यसीङ्गधारणं चोपदिष्टम् । '**यश्छन्दसां ऋषभो विश्वरूपः, छन्दोभ्योऽध्यमृतात्सम्बभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देवधारणो भूयासं, शरीरं मे विचर्षणं, जिह्वा मे मधुमत्तमा, कर्णाभ्यां भूरिविश्रुवं । ब्रह्मणः कोशोऽसि मेधया पिहितः श्रुतं मे गोपाय**' इति **बाह्यलिङ्गधारणं**, '**सत्यात्मप्राणारामं मन आनन्दं**', '**य एषोऽन्तर्हृदय आकाशः तस्मिन्नयं पुरुषो मनोमयः, अमृतो हिरण्मयः । अन्तरेण तालुके, य एष स्तन इवालम्बते, सेन्द्रयोनिः, यत्रासौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले**' इत्यादिना **आभ्यन्तरलिङ्गधारणञ्च** दृश्यते ।

किञ्च– **सच्चत्यच्चाभावात् निरुक्तञ्चाऽनिरुक्तञ्च** विज्ञानं चाऽविज्ञानञ्च, **सत्यञ्चाऽनृतञ्च सत्यमभवत्**' इति मूर्तामूर्तत्वमेकस्य तस्योपदिष्टम् । '**तस्याभिध्यानाद्योजना-त्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः**' इति **श्वेताश्वतरे तस्याभिध्यानात्** इत्यनेनान्त-र्लिङ्गानुसन्धानं ; **योजनात्** इत्यनेन बाह्यलिङ्गधारणं चोपदिष्टम् ।

**लिङ्गधारणस्थानानि निरूप्यन्ते**

'सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवान् तस्मात्सर्वगतः शिवः ॥'

इत्यनेन **श्वेताश्वतरे** ।

**मस्तके कन्धरे कक्षे कुक्षौ वक्षस्थलेऽपि वा ।**
**तथा पाणितले वापि प्राणलिङ्गं धरेत्सुधीः ॥**

इति वचनात् बाह्यलिङ्गधारणम् । '**सर्वभूतगुहाशयः**' इत्यादिना अभ्यान्तरेऽप्युपदिष्टम् ;

'त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते।
धारयन्ति तु ये भक्त्या धारयन्ति तमेव ते ॥'

इति बृहज्जाबाले लिङ्गधारणस्य सर्वातिशयत्वं मनसि निधाय तत्तुल्यत्वं त्रिपुण्ड्रधारणस्योपदिश्यते ।

किञ्च– कैवल्यशाखायां 'उमासहायं .... तमसः परस्तात्' इत्यत्र 'उमासहायं' इत्यादिना सगुणत्वं, 'समस्तसाक्षिं तमसः परस्तात्' इत्यादिना निर्गुणत्वं, चैकस्योपपद्यते। 'साक्षी चेता केवलो निर्गुणश्च' इति श्रुत्यन्तरप्रतीतेः साक्ष्यात्मकस्य परस्य निर्गुणत्वमुपदिष्टम्। तथा [1]स्मृतावपि–

शिवं प्रशान्तममृतं सर्वज्ञं सर्वतोमुखम्।
सत्यसङ्कल्पसंयुक्तं सत्यकामं सनातनम् ॥
मूर्ताऽमूर्तात्मकं शुद्धं भक्ताभीष्टफलप्रदम् ॥

मणिकङ्कणकेयूरमकुटादिविभूषितम्।
नीलग्रीवं विरूपाक्षं उमावामाङ्कभासितम् ॥

कोटिसूर्यप्रतीकाशं कोटिकन्दर्पसुन्दरम्।
पशुपाशविनिर्मुक्तं पञ्चकृत्यविशारदम् ॥'

इति [2]पौराणिके च–

'तेजोबलैश्वर्यमहावबोध-
सुवीर्यशक्त्यादिगुणैकराशिः।
परः पराणां परिपूर्णकामः
निरस्तहेयो निखिलेश्वरश्शिवः ॥'

इत्यादिसकल[3]सद्गुणोपेतं शिवाख्यं परमं पदं परब्रह्मैव श्रुतिस्मृतिभ्यस्तदुभयलक्षणमवगतम्।

---

[1] शातातपे (ग A) [2] स्कान्दे (ग A) [3] धर्मोपेतं (ग A)

**किञ्च—** सदा सर्वान्तर्यामितया व्यवस्थितेऽपि दिव्यलीलामङ्गलविग्रहेऽपि परमशिवे स्ववशीकृतमायिकत्वाज्जीववन्न कश्चिद्दोषकलङ्कः । **'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्'**। **'स्थित्यदनाभ्याञ्च'** इत्यादिषु परब्रह्मणश्शिवस्य अकर्मवश्यत्वेन दोषाभावो ह्युपदिष्टः, **'एष त आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः'** इत्यादिबहुश्रुतिषु,

**'अस्तिकश्चिन्महादेवो रमणीयगुणाकरः ।**
**सर्वलोकस्य निर्माता पशुपाशविलक्षणः ॥**

**समस्तकल्याणगुणात्मकोऽसौ**
**स्वशक्तिलेशाद्धृतभूतसर्गः ।**
**स्वभावसिद्धोभयलिङ्गसंज्ञः**
**प्रधानक्षेत्रज्ञपतिर्महेशः ॥'**

इत्यादिषु तस्य सर्वान्तर्यामित्व-सर्वमङ्गळगुणाकरत्व-सर्वदोषविलक्षणत्वादिकस्य चोपदेशात्, शीर्यत इति शरीरं इति व्यवस्थायाः प्राकृतजीवविषयत्वमिति वेदितव्यम् ॥

ननु शिवस्य परब्रह्मणः स्वाभाविकमूर्ताऽमूर्तत्वव्यपदेशो घटाकाशयोरिव तयोरन्योन्यभेदस्य अर्थात्सिद्धत्वात्, **'एकमेवाद्वितीयं ब्रह्म'**, **'एक एव रुद्रो'** इत्यादिबहुश्रुतिविरोधस्सम्भवतीत्याशङ्क्य निराकरोति—

## ॥ १५२ ॥ भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

**'बिम्बत्वं प्रतिबिम्बत्वं यथा पूषणि कल्पितम् ।**
**जीवत्वमीश्वरत्वं च ब्रह्मण्येकत्र कल्पितम् ॥'**

इत्यादिना स्मृतिपुराणेषु जीवेश्वरयोरौपाधिकभेदवत्त्वावगमात् तस्य मूर्ताऽमूर्तत्वविधायकश्रुतीनामौपाधिकभेदमात्रपरत्वमेवोपपन्नम् ; नोचेन्मूर्ताऽमूर्तब्रह्मणोः परस्परभेदादिति चेन्न—

॥ **प्रत्येकमतद्वचनात्**[1] ॥ '**द्वैवाव ब्रह्मणो रूपे मूर्तञ्चामूर्तमेव च**',

'**अचिन्त्यमव्यक्तमनन्तबोधं**
**शिवं प्रशान्तममृतं ब्रह्मयोनिम् ।**
**तमादिमध्यान्तविहीनमेकं**
**विभुं चिदानन्दमरूपमद्भुतम् ॥**'

इत्यादिश्रुतिशतेष्वभेदतया स्वाभाविकत्वेन तस्य मूर्ताऽमूर्तोभयलिङ्गत्वं यतो व्यपदिश्यते अतस्तद्विरुद्धस्मृतिपुराणसिद्ध-औपाधिकभेदो नाङ्गीकर्तव्यः ।

किञ्च— '**यः पृथिव्यां तिष्ठन्**' इत्यादिषु प्रतिपर्यायं '**स त आत्मान्तर्यामयमृतः**' इत्यन्तर्यामिणश्शिवस्य तद्गतधर्मवत्वमिति चेत्तदसत् । पृथिव्याद्यष्टमूर्तित्वेऽपि तद्विलक्षणत्वमेवाभिधीयते, '**समस्तसाक्षिं तमसः परस्तात्**', '**विश्वाधिको रुद्रो महर्षिः**' इत्यादिश्रुतिदर्शनात् ।

ननु— '**सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः**' इत्यादिश्रुत्या ब्रह्मणस्सावयवत्वं सगुणत्वमेव मुख्यमिति [2]चेत्— '**अशब्दमस्पर्शमरूपमव्ययम्**' इत्यादिना तस्य निरवयवत्वं निर्गुणत्वमेव स्वाभाविकमिति केचित् , केचिच्च निर्गुणत्व-सगुणत्वयोरेकपक्षे परस्पर-श्रुतिविरोधप्रसङ्गात् तदुभयग्राह्यमिति वदन्ति । तस्मादव्यवस्था दृश्यते ; विनिगमकाभावात् । अनन्त्रयाणां मध्ये किमुपपन्नमित्याकांक्षायामाह—

## ॥ १५३ ॥ अपि चैवमेके ॥ १३ ॥

**अपि च** '**द्वैवाव ब्रह्मणो रूपे मूर्तञ्चाऽमूर्तमेव च**' इति सर्वसंशयोच्छेदक-मुख्यसिद्धान्तविधायकश्रुतिमात्रं प्रमाणमिति यत् तन्न । कुतः ? **एवमेके** एवं सर्वश्रुति

---

[1] प्रत्येकमन्यसाधारणं ब्रह्मोभयलिङ्गत्वम् । कुतः ? अतद्वचनात् (ग A)

[2] केचित् (ग A)

विशेषेण एके मुख्यवैदिकाः वामदेवागस्त्यादयः परब्रह्मणः शिवस्योभयलिङ्गत्वं वदन्ति । अतस्तदेव ग्राह्यम् । सिद्धान्तशिखामणौ--

'साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
एतानि मानभूतानि नोपहन्यानि युक्तिभिः ॥

वेदाः प्रमाणं सर्वेषां साङ्ख्यादीनां महामते ।
वेदानुसरणादेषां प्राधान्यमिति निश्चितम् ॥

पाञ्चरात्रस्य योगस्य साङ्ख्यस्य च महामुने ।
वेदैकदेशवर्तित्वं शैवं वेदमयं स्मृतम् ॥

वेदैकदेशवर्तिभ्यः साङ्ख्यादिभ्यो महामुने ।
सर्ववेदानुसारित्वात् शैवतन्त्रं विशिष्यते ॥' इति ।

वामदेवसंहितायामपि--

'सर्वात्मकश्शिवोऽनन्तस्सर्ववेदान्तसम्मतः ।
मूर्तोऽमूर्तात्मको नित्यो निरवद्यो निरञ्जनः ॥'

इति दर्शनादुभयलिङ्गत्वं तस्य स्वाभाविकमिति सिद्धम् ।

'अशरीरं वा वसन्तं', 'अप्राणो ह्यमनाः' इत्यादिषु ब्रह्मणः निर्गुणत्व-निरवयवत्वयोरेव प्राधान्यतया भूयःप्रपञ्चितत्वात्सगुणत्वं औपाधिकत्वान्मिथ्याभूतत्वाच्च अप्रधान-मित्याशङ्क्य निराकरोति--

## ॥ १५४ ॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

'अचिन्त्यमव्यक्तमनन्तबोधं शिवं प्रशान्तममृतं ब्रह्मयोनिं' इत्यादिबहुश्रुतिषु निरवयवशिवतत्त्वस्यैव प्रसाधितत्वादरूपमेव हि शिवतत्त्वमङ्गीकर्तव्यम् इति चेत्--

**तत्प्रधानत्वात्। 'नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः',**

**'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।**
**ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः॥'**

**'नमस्ते रुद्र मन्यव उतोऽत इषवे नमः, नमस्ते अस्तु धान्वने बाहुभ्यामुत ते नमः'** इत्यादिश्रुतिशतेषु तत्सगुणत्व-सावयवत्व-ध्यान-पूजा-नमस्कारादीनां निर्गुण-निरवयव-शिवतत्त्वप्राप्तिप्राधान्योपदेशात्तस्य मूर्तामूर्तोभयधर्मवत्वम्। **उभयधर्मबलादुभयधर्मसिद्धिरिति न्यायात्** तुल्यत्वेन स्वाभाविकतया वेदितव्यम्। **'आकाशो ह वै नामरूपयोर्निर्वहिता', 'ते यदेतदन्तरा तद्ब्रह्म'** इति सर्वानुप्रवेशेऽपि नामरूपकार्यस्पर्शेन नामरूपयोर्निर्वाहस्यैव प्रतिपादनात्तस्य तदुभयलिङ्गत्वमनिवार्यम्।

ननु **'सत्यं ज्ञानमनन्तं ब्रह्म'** इत्यादिभिर्निर्विशेषप्रकाशैकस्वरूपं ब्रह्मावगम्यते। अन्यत्र सर्वज्ञत्व-सत्यसङ्कल्पत्व-सावयवत्व-सत्यकामत्वादीनां **'नेति नेति'** इत्यादिभिः प्रतिषिध्यमानत्वेन मिथ्याभूतत्वमित्यवगन्तव्यम्। अतः कल्याणगुणाकरसावयवत्वं कथमुपपद्यत इत्याशङ्क्य तत्राह—

## ॥ १५५ ॥ प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

यथाग्नेयकोणाधिपवैश्वानरस्याहवनीयादिसर्वदेशवैश्वानरस्य च स्वप्रकाशत्व-तमोनिवारकत्व-शीतापहारकत्वादिधर्मैकत्वात् अवैयर्थ्यं, तथा **'सत्यं ज्ञानमनन्तं ब्रह्म'** इत्यादि-श्रुतिसिद्धामूर्तस्य **'नमो हिरण्यबाहवे हिरण्यवर्णाय'** इत्यादिवाक्यसिद्धहिरण्मयत्व-सत्यसङ्कल्पत्व-सर्वज्ञत्वाद्यनन्यसाधारणधर्मावच्छिन्नस्य ब्रह्मणः अवैयर्थ्यात् उभयोरपि स्वप्रकाश-स्वरूपत्वमभ्युपगम्यते। तस्मादुभयलिङ्गत्वमविरोधेनैकस्य ब्रह्मणः बहुधा प्रपञ्चितम्। **'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं' 'अथ कस्मादुच्यते महादेवः? यस्सर्वान् परित्यज्य आत्मज्ञानयोगैश्वर्येण महति महीयते, तस्मादुच्यते महादेवः'** इत्यादिश्रुतिशतेषु मूर्तामूर्तब्रह्मणोरवैयर्थ्यव्यपदेशादुभयलिङ्गत्वं तस्य स्वाभाविकमित्यनवद्यम्।

किञ्च— सर्वज्ञत्व-सर्वेश्वरत्व-सर्वकारणत्व-सर्वमयत्व-सर्वान्तर्यामित्व-सर्वफलदातृत्व-सत्यसङ्कल्पत्वादिधर्मविशिष्टसगुणब्रह्मणो मिथ्यात्वव्यवस्थापने **'त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्', 'दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसँस्थम्'** इत्यादिषु शिवलोकफलप्राप्तिविधायकत्वाद्य अन्तरङ्गप्रसिद्धदहर-शाण्डिल्य - उपकोसल-वैश्वानर-प्रतर्दनविद्यानां वैयर्थ्यं दुर्निवारम्। **'यादृशो यक्षस्तादृशो बलिः'** इति **स्वकल्पितन्यायेन** सगुणमिथ्याभूतेश्वरलोकप्राप्त्यादिफलजनकश्रुतीनां मिथ्यात्वं अविरोधमिति चेत्— **'यादृशो यक्षस्तादृशो बलिः'** इति **स्वकीयन्यायेन अर्धजरतीन्यायवत्** पक्षैकदेशाङ्गीकारस्यायुक्तत्वात् सगुणमिथ्याभूतवेदप्रतिपादितनिर्गुणब्रह्मणोऽपि मिथ्यात्वस्यार्थसिद्धत्वात् केवलनिर्गुणस्य वेदप्रतिपादकत्वासम्भवाच्च तदवैदिकवादो ह्यविचारितरमणीयः।

**'एवं वा अरेऽयमात्मानमन्तरो बाह्यः कृत्स्नः प्रज्ञानघनः'** इति श्रुतौ निर्गुणशुद्धचैतन्यमात्रत्वोपदेशात् कथं सगुणब्रह्मप्राधान्यं इत्याशङ्क्याह—

## ॥ १५६ ॥ आह च तन्मात्रम् ॥ १६ ॥

**'द्वे वाव ब्रह्मणो रूपे'** इत्यादिश्रुतिषु असन्दिग्धतया ब्रह्मणः मूर्तांऽमूर्तत्वव्यवस्थापनात्, श्रुतिसङ्कोचे मानाभावात्, **'अथात आदेशो नेति नेति'** इत्यादिवाक्यानां मूर्तांऽमूर्तप्रपञ्चनिषेधपूर्वकप्रत्यग्बोधमात्रपरत्वात्, **'स्थिरेभिरङ्गैः पुरुरूप उग्रः'** इत्यादिजगदेककारणभूतशिवैकस्वरूपनित्यमङ्गळदिव्यविग्रहाणां नित्यत्वावगमाच्च **'सत्यं ज्ञानमनन्तं ब्रह्म'** इत्यादिश्रुतयः परशिवस्वप्रकाशस्वरूपतामात्रप्रतिपादकाः, न सत्यसङ्कल्पत्वादिविशिष्टसिद्धब्रह्मशरीरनिषेधपराः। अत एव **तन्मात्रं** तयोर्मूर्तांऽमूर्तब्रह्मणोः प्रतिपादकत्वमात्रमेव श्रुतिः ॥ **आह च** ॥ प्रतिपादयतीत्यर्थः।

तैत्तिरीये च **'सच्च त्यच्चाभवत्'** इत्यादिना मूर्तामूर्तोभयत्वं दृश्यते। अतो न सन्देहः।

ननु ब्रह्मपरशिवस्योभयलिङ्गत्वं श्रुतिसिद्धत्वात् प्रसिद्धमस्तु। तथापि यज्ञदत्त-देवदत्तादिवदुभयोः परस्परधर्मवैलक्षण्यद्योतनात्कथमेकत्वमित्याशङ्क्य तत्राह—

## ॥ १५७ ॥ दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

सर्ववेदान्तगणस्तद्ब्रह्मणः कल्याणगुणाकरत्वं दिव्यमङ्गळविग्रहत्वं निरस्तनिखिलदोषकलङ्कत्वं सर्वव्यापकत्वममूर्तत्वञ्च सर्वान्तर्यामित्वञ्च दर्शयति। **चाथोऽपि** च **स्मर्यते**। तथा स्मृतावपि मूर्ताऽमूर्तत्वं [1]स्वाभाविकत्वेन स्मर्यते। सर्वशक्त्यात्मकस्य पवनादिवद्व्यापकस्याऽमूर्तस्य सर्वकाम-सर्वगन्ध-सर्वरसतत्त्वादिधर्मावच्छिन्नस्य मूर्तस्य च परस्परस्वाभाविकभेदसत्त्वेऽप्यभेद अनवद्य इति **स्मर्यते**।

**'तमीश्वराणां परमं महेश्वरं**
**तं देवतानां परमञ्च दैवतम्।**
**पतिं पशूनां प्रथमं पुरस्तात्**
**विधाम देवं परमेशमीड्यम्॥'**

**'स कारणं कारणकारणाधिपो न चास्य कश्चिज्जनिता न चाधिपः।'**

**'न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते'**[2]

**'निष्कलं निष्क्रियं शान्तम्'** इत्यादिश्रुतिषु,

[3]मयाध्यक्षेण प्रकृतिस्सूयते सचराचरम्।
**हेतुनानेन कौन्तेय जगद्धि परिवर्तते॥**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥**
**सर्वज्ञः सर्वकृत्सर्वशक्तिज्ञानबलादिवान्।**
**अन्यूनश्चाप्यवृद्धिश्च स्वाधीनोऽनादिमान्वशी॥**

---

[1] स्वाभाविकत्वेनोपदिष्टम् (ग A).

[2] अत्र "परा शक्तिः भीषास्मात् वातः . . . . स एको ब्रह्मण आनन्दः . . . . . यतो वाचो' इत्यधिकः पाठः 'ज' प्रतौ दृश्यते।

[3] अत्र च– 'यो मामजमनादिं च वेत्ति लोकं महेश्वरम्।
विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितं जगत्॥' इत्यधिकः पाठः 'ज' कोशे दृश्यते।

क्लमतन्द्राभयक्रोधकामादिभिरसंयुतः ।
निरवद्यः परः प्राप्तेः निरधिष्ठोऽक्षरः क्रमः ॥'

इत्यादिस्मृतिष्वपि ब्रह्मणः शिवस्योभलिङ्गात्मकव्यपदेशान्मूर्तामूर्तयोर्भेदे सति अभेद उपपन्नः ।

अस्मिन्नर्थे हेत्वन्तरमाह–

## ॥ १५८ ॥ अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

निरवयवस्य व्यापकस्य शिवस्यैव सदाशिव-महेश्वर-कालरुद्र-ईशानादिसावयवरूपेण स्थितस्यापि घटपटादिवदन्योन्यभेदो असङ्गतः । अत एव जलदर्पणादिप्रतिबिम्बितसूर्यादिवद्भेदे सत्यप्यभेदश्च दृश्यते । अत एव चोपमा–

'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथैवैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥'

इत्यादिश्रुतिषु मूर्तामूर्तब्रह्मणोर्भेदाऽभेदवत्त्वेनोभयलिङ्गत्वस्य स्पष्टमुपदिष्टत्वान्न सन्देहकलङ्कप्रसङ्गः ।

ननु 'दृश्यते जलचन्द्रवत्' इत्यादिषु विम्बप्रतिबिम्बभावेन मूर्तामूर्तब्रह्मणोर्भेदाभेदप्रसाधनेऽपि भेदस्यौपाधिकत्वेनापारमार्थिकतया मिथ्यात्वात् तयोस्सर्वदा भेदमात्रमेव श्रुतेस्तात्पर्यमित्याशङ्क्य निराकरोति–

## ॥ १५९ ॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

तुशब्दः शङ्कानिरासार्थः । 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इति श्रुतौ अम्बुदर्पणादिषु औपाधिकभेदेन यथा सूर्यमुखादयो गृह्यन्ते न तथा सदाशिवादि-

मूर्तिस्थाने महादेवो गृह्यते। अम्ब्वादिषु हि सूर्यादयो भ्रान्त्या तत्रस्था इव गृह्यन्ते न परमार्थतस्तत्रस्थाः। इह तु 'द्वे वाव ब्रह्मणो रूपे" इत्यादिश्रुतिशतेषु उभयोरपि पारमार्थिकत्वेन तुल्यत्वमुच्यते। अतो दृश्यते जलचन्द्रवदित्यादिषु तथात्वमेव गम्यते।

ननु 'यस्य पृथिवी शरीरं', 'यः पृथिव्यां तिष्ठन्' इत्यादिषु परमेश्वरस्य पृथिव्याद्यष्टमूर्तित्वतदन्तर्यामित्वयोरुपदेशात् शिवादिमूर्तानामेव तन्मूर्तित्वमिति व्यवस्था कथमुपपद्यत इत्यत्राह–

॥ १६० ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ २० ॥

**अन्तर्भावात्**– सदाशिवादीनामप्राकृतस्वाभाविकाभिन्नचिच्छक्त्यंशत्वेन शिवान्तर्भूतत्वात् **वृद्धिह्रासभाक्त्वं** त्रिगुणात्मकशिवभिन्नशक्त्यंशभूतपृथिव्याद्यष्टमूर्तीनामिव जन्मनाशादिदोषाश्रयत्वं न सम्भवति; कस्मात्? **'उभयसामञ्जस्यात्'** उभयोर्मूर्तामूर्तब्रह्मणोर्भेदाऽभेद सामञ्जस्यात्। कुतः? **एवं दर्शनाच्च।** 'द्वेवाव ब्रह्मणो रूपे' इत्यादिश्रुतिशतेषु मूर्ताऽमूर्तब्रह्मणोर्भेदत्वे [1]सत्यभेदसामरस्यद्योतनाच्च पाश[2]रूपजडप्रकृत्यावृतपृथिव्याद्यष्टमूर्तीनामिव सदाशिवादीनां न तद्भेदत्वं[3] निश्चीयते; उत– 'आकाशशरीरं ब्रह्म सत्यात्मप्राणारामं मन आनन्दं' इति, आकाशत इति आकाशः; सत्यात्मा-सत्यस्वरूपं, प्राणारामं-प्राणेष्वासमन्ताद्रमन्त इति प्राणारामम्; मनसि आनन्दो यस्य मन आनन्दं; इत्यनेन वाक्येन मूर्ताऽमूर्तत्वमुपलक्षितम्। 'आकाशशरीरं ब्रह्म' इत्यत्र अमूर्तत्वम्, 'प्राणारामं' इत्यादिषु मनः-प्राणात्मकलिङ्गशरीरोपदेशात्, तल्लिङ्गशरीरव्यपदेशेन स्थूलदेहस्यार्थसिद्धत्वात् स्थूलं विना सूक्ष्मस्य प्रवृत्यसम्भवाच्च मूर्तत्वमुपदिष्टम्। एतेन जगदेककारणस्य नित्यनिष्कलङ्कस्य सर्वज्ञस्य मूर्ताऽमूर्तस्यैव ब्रह्मत्वमवगम्यते। स्मृतावपि–

'मूर्ताऽमूर्तात्मकोऽनन्तः प्रपञ्चातीतवैभवः।
निष्कलङ्को निराधारो निर्लिप्तः शिव उच्यते॥

अनन्तानन्तकल्याणगुणैकघन ईश्वरः।
शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः॥'

[1] सत्यप्यभेदसामरस्य (ज). [2] कृतजड (ज). [3] तद्भेदो (ज)

इति दर्शनात् शिवशब्दवाच्यं ब्रह्म उभयलिङ्गम्' इति व्याचक्षते। 'तस्य ह वा एतस्य पुरुषस्य रूपं यथा महारजनं वासः' इत्यादिना आकारविशेषश्चाभिधाय, 'अथात आदेशो नेति नेति', 'न ह्येतस्मादिति', 'नैत्यन्यत्परमस्ति', 'सर्वप्रकृतं ब्रह्मणः प्रकारं' इति शब्देन परामृश्य तत्सर्वं प्रतिषिध्य सर्वविशेषाधिष्ठानं सन्मात्रमेव ब्रह्म, विशेषास्त्वेवं विधं स्वस्वरूपं अजानता ब्रह्मणा कल्पिता इति दर्शयति।

---

## प्रकृतैतावत्वधिकरणम्  ॥ ६ ॥

अतः कथमुभयलिङ्गत्वं ब्रह्मण इत्यत्राह—

### परमशिवस्य ब्रह्मणः उभयलिङ्गत्वसमर्थनम्

## ॥ १६१ ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २१ ॥

"नैतदुपपद्यते— यद्ब्रह्मणः प्रकृतविशेषवत्वं 'नेति नेति" इति प्रतिषिध्यत इति ; तथा सति भ्रान्तजल्पितायमानत्वात् । न हि ब्रह्मणो विशेषणतया प्रमाणान्तराप्रज्ञातं सर्वं तद्विशेषणत्वेनोपदिश्य पुनस्तदेवानुन्मत्तः प्रतिषेधति ।

यद्यपि निर्दिश्यमानेषु केचन पदार्थाः प्रमाणान्तरप्रसिद्धास्तथाऽपि तेषां ब्रह्मणः प्रकारत्वं अप्रज्ञातमेव । इतरेषान्तु स्वरूपं ब्रह्मणः प्रकारत्वञ्च अज्ञातम् । अतस्तेषामनुवादासम्भवादत्रैवोपदिश्यन्ते । अतस्तन्निषेधो नोपपद्यते । यस्मादेवं, तस्मात् **प्रकृतैतावत्त्वं** ब्रह्मणः प्रतिषेधतीदं वाक्यम् । ये ब्रह्मणो विशेषाः प्रकृताः, तद्विशिष्टतया ब्रह्मणः प्रतीयमाना इयत्ता, **'नेति नेति'** इति प्रतिषिध्यते । नेति नेति, नैव नैवम् ; उक्तप्रकारमात्रविशिष्टं न भवति ब्रह्म ; उक्तप्रकारविशिष्टतया या ब्रह्मणः इयत्ता प्रकृता ; सात्र इति शब्देन परामृश्यत इत्यर्थः ।

यतश्च निषेधानन्तरं ब्रह्मणो भूयो गुणजातं ब्रवीति ; अतश्च प्रकृतविशेषणयोगित्वमात्रं ब्रह्मणः प्रतिषेधति । **'ब्रवीति हि भूयो गुणजातम्, न ह्येतस्मादिति नेत्यन्यत् परमस्ति । अथ नामधेयं सत्यस्य सत्यमिति । प्राणा वै सत्यं तेषामेष सत्यम्'** इति ।

अयमर्थः— 'इति न' इति यद्ब्रह्म प्रतिपादितं तस्मादेतस्मादन्यद्वस्तु परं न अस्ति— ब्रह्मणोऽन्यत् स्वरूपतो गुणतश्चोत्कृष्टं नास्तीत्यर्थः । तस्य च ब्रह्मणः सत्यस्य

सत्यमिति नामधेयम्। तस्य च निर्वचनं, **'प्राणा वै सत्यं तेषामेष सत्यम्'** इति। प्राणशब्देन प्राणसाहचर्याज्जीवाः परामृश्यन्ते। ते तावत् सत्यं; वियदादिवत् स्वरूपान्यथाभावरूपपरिणामाभावात्। तेषामेव सत्यं— तेभ्योऽप्येष परमपुरुषस्सत्यम्; जीवानां कर्मानुगुण्येन ज्ञानसङ्कोचविकासौ विद्येते; परमपुरुषस्य तु अपहतपाप्मनस्तौ न विद्येते; अतः तेभ्योऽप्येष सत्यम्।

अतश्चैवं वाक्यविशेषोदितगुणजातयोगात् नेतिनेतीति ब्रह्मणस्सविशेषत्वं न प्रतिषिध्यते; अपि तु पूर्वप्रकृतेयत्तामात्रम्। अत उभयलिङ्गमेव परं ब्रह्म।

ब्रह्मणः प्रमाणान्तरागोचरत्वेन तत्सम्बन्धितया मूर्तामूर्[1]तादिरूपानुवादेन तन्निषेधासम्भवात प्रकृतेयत्ताप्रतिषेधो उक्तः;

तदेव प्रमाणान्तरागोचरत्वं द्रढयति इत्याह—

## ॥ १६२ ॥ तदव्यक्तमाह हि ॥ २२ ॥

" **तत्**— ब्रह्म प्रमाणान्तरेण नैव व्यज्यते। **आह हि**— शास्त्रम्। **'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्'**", 'न चक्षुषा गृह्यते नापि वाचा' **'नावेदविन्मनुते तं बृहन्तम्', 'नैषा तर्केण मतिरापनेया'** इत्यादिश्रुतिष्वभक्तागोचरत्वं स्पष्टमुपदिष्टम्।

मूर्तामूर्तस्य शिवस्य परब्रह्मणस्स्वरूपमपरिच्छेद्यं स्वप्रकाशश्च केन विज्ञायते? इत्याशङ्कायामाह—

## ॥ १६३ ॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥

**'अपि च संराधने** सम्यग्बाह्याभ्यन्तर्ध्यानधरण-पूजा-नमस्कारादिधर्मविशिष्टशिवाराधने भक्तिरूपापन्ने भक्ताधिकारतारतम्येन केषाञ्चित् स्वप्ने केषाञ्चिज्जाग्रदवस्थायाञ्च मूर्तामूर्तिमकोभयलिङ्गसाक्षात्कारः, नान्यथेति **प्रत्यक्षानुमानाभ्यां** श्रुतिस्मृतिभ्यामवगम्यते। **'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन; यमेवैष वृणुते तेन**

---
[1] प्रतिषेधे श्रुतिरुक्ता (ज)

लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ', 'ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः ' इत्यादिश्रुतिषु[1] स्मृतिषु; तथा शातातपस्मृतौ च–

आराधक-आराध्यशब्दार्थनिर्वचनम्

'भक्त्या साम्बं महादेवमाराध्यं विश्वतोमुखम् ।
मूर्ताऽमूर्तात्मकं नित्यं ध्यानपूजादिमार्गतः ॥
आराधकस्य कर्तव्यं आराधनविधिस्तदा ।
बाह्येचाभ्यन्तरे चैव शिवानुग्रहसिद्धये ॥' इति ;

स्मृत्यन्तरेऽपि–

उमासहायमाराध्यं सर्वज्ञं प्रभुमव्ययम् ।
मूर्ताऽमूर्तात्मकं दिव्यं कोटिसूर्यसमप्रभम् ॥
कोटिचन्द्रप्रतीकाशं कोटिविद्युल्लतामयम् ।
नित्यमाराधयेद्धीमान् श्रद्धाभक्त्यादिसंयुतः ॥
आभ्यन्तरे तथा बाह्ये लिङ्गरूपं महेश्वरम् ।
[2]आराधयति शास्त्रेण स आराध्यो महीतले ॥ इति ;

कृष्णगीतायाञ्च–

'नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
भक्त्यात्वनन्यया शक्य अहमेवंविधोऽर्जुन ॥
ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप ॥' इति ;

वेदपादस्तवे–

'ईश्वरं तमहं वन्दे यस्य लिङ्गमहर्निशम् ।
यजन्ते सह भार्याभिः इन्द्रज्येष्ठा मरुद्गणाः ॥'

---

[1] अत्र 'इत्यादिश्रुति'ष्वित्यनन्तरं 'सर्वलिङ्ग ....' 'अमृतस्य ...' 'शरीरं मे विचर्षणं' 'क्षरं प्रधानं ...' 'तस्याभिध्यानात् ....' 'त्र्यम्बकं यजामहे' 'श्रद्धाभक्तिध्यान' इत्यधिकः पाठः ('ज' कोशे दृश्यते ।)  [2] 'यो राधयति' इत्यपपाठः 'आराधयति' इति शोधितः (सं)

इति ; वेदपादस्तवे–

'ईश्वरं तमहं वन्दे यस्य लिङ्गमहर्निशम् ।
यजन्ते सह भार्याभिरिन्द्रज्येष्ठा मरुद्गणाः ॥'

इति च बहुधा प्रपञ्चितत्वात् भक्तिरूपापन्न ध्यान-धारणाद्युपासनारूपमाराधनं मुमुक्षूणां कर्तव्यम् ।

ननु

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' ।
'यन्मनसा न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥'

इत्यादिश्रुतिषु ब्रह्मणो मनोवाक्कायवेद्यत्वादर्शनात् कथं तस्योपासनविधिरिति चेन्न– 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिषु श्रुतेरविशुद्धान्तःकरणाग्राह्यत्वोपदेशात् भक्तानां ब्रह्म-साक्षात्कारः प्रतिपिद्यते । 'ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः', 'दृश्यते त्वग्र्यया बुद्ध्या', 'ब्रह्मविदाप्नोति परं' इत्यादिश्रुतिशतेषु विशुद्धान्तःकरणग्राह्यत्वात् परमेश्वरस्य इति उपदेशादनयोः श्रुत्योरविरोध इति भावः ।

स्मृतावपि–

'यं विनिद्रा जितश्वासाः सन्तुष्टनियतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानाः तस्मै योगात्मने नमः ॥'

इत्यविशुद्धान्तःकरणाग्राह्यत्वं ब्रह्मणः प्रदर्शितम् । अतो 'यन्मनसा न मनुते' इत्यादि-वाक्यानां तत्परत्वमेवेति निश्चीयते ।

तत्पदार्थशिवाराधनेन त्वम्पदार्थभूतसाधकस्य तत्पदार्थसाक्षात्कारेऽपि त्वम्पदार्थभूत-स्वाभाविकजीवत्वं कथं निवर्तेत इत्याशङ्कायामाह–

## ॥ १६४ ॥ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥

"इतश्च— प्रकाशात्मकमेव प्रतिपेदिरे, न मूर्ताऽमूर्तादिविशिष्टत्वं ; यतः साक्षात्कृत-परशिवब्रह्मस्वरूपाणां **वामदेव-अगस्त्य-उपमन्यु-दूर्वास-दधीचि-विश्वामित्र गौतम रेवण-सिद्धादीनां** दर्शने **प्रकाशादिवत्** जीवन्मुक्तदशायां ज्ञानानन्दादिस्वरूपवत् मूर्ताऽमूर्तात्मक-तयापि ब्रह्म प्रकाशते। **'तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं [1]सूर्यश्च'** इत्यादिब्रह्मस्वरूपभूतप्रकाशानन्दादिश्च तेषां वामदेवादीनां संराधनात्मके ध्यान-धारण[2]पूजाद्युपासन**कर्मण्यभ्यासात्**, उपलभ्यते ; तद्बाह्याभ्यन्तरशिवाराधकानां तेषामेव मूर्ताऽमूर्तादिब्रह्मसाक्षात्कारोऽप्यविशेषेण तदात्मकत्वेन प्रतीयते।"

'[3]**एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन [4]रूपेणाभिनिष्पद्यते', 'स उत्तमः पुरुषः'** इत्यादि[5]श्रुत्यन्तरेषु परशिवध्यानधारण-पूजाद्युपासकानामेव तदनुग्रहात् स्वाभाविकजीवत्व[6]निवृत्तिपूर्वकशिवत्वप्राप्तिर्विदेहमुक्तौ दृश्यते।

ननु **'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'** इत्यादिषु श्रवणादिना ब्रह्मसाक्षात्कारावगमात् बाह्याभ्यन्तरयोस्तदाराधकानामेव तत्साक्षात्कार इति व्यवस्था कथमुपपद्यत इत्याशङ्कायामाह—

## ॥ १६५ ॥ अतोऽनन्तेन तथा हि लिङ्गम् ॥ २५ ॥

**अतः**— शिवध्यान-धारणाद्याराधनादेव **अनन्तेन**— चराचरप्रपञ्चात्मकत्वेन **लिङ्गं** परब्रह्मैव। **तथाहि**— यथा ध्यान-धारणाद्युपासनकाले तदुपासकानां ज्ञानदृष्ट्या मूर्ताऽमूर्ता-

---

[1] 'सूर्यश्च तं मामायुरमृतमुपास्व' इति 'ज' कोशेऽधिकः पाठो दृश्यते। [2] पूजाद्युपासके (ज).
[3] अत्र 'ज' प्रतौ— 'श्रुत्यन्तरेषु— यथा नद्यस्स्यन्दमानाः समुद्रे अस्तं .... — .... .... .... .... .... ...रूपमुपैति दिव्यम् ॥' इति अधिकः पाठः दृश्यते। [4] रूपेण निष्पद्यते (ज). [5] श्रुत्यन्तरेष्वपि (ज).
[6] निवृत्तिपूजाद्युपासकानामेव तदनुग्रहात् स्वाभाविकनिवृत्ति (ज).

त्मकपरशिवब्रह्मसाक्षात्कारो भवति, तदनवच्छिन्नाभ्यासमाहात्म्येन तथा व्यवहारदशायां प्रपञ्चदर्शनेन तत्प्रपञ्चस्सर्वः तद्ब्रह्मरूपेण तस्य भाति। अत्र हिकारो निश्चयार्थो निर्णीयते। अत एव केवलश्रवणमननादीनां ध्यानधारणादीनामिव न तत्साक्षात्कार-हेतुत्वम्। 'आत्मा वा अरे द्रष्टव्यः' इत्यादिना तदुपासकानां तच्छ्रवणमननादिकं सूच्यते। नो चेत् न्याय-वैशेषिक-वैद्यशास्त्रश्रवणादीनामिव वैफल्यप्रसङ्गो दुर्निवारः। तस्मात्तदाराधनप्रयुक्ततच्छ्रवण-मननादीनामेव तत्साक्षात्कारः फलमिति निश्चीयते। 'ब्रह्म विदाप्नोति परम्' इत्यादिश्रुतीनामपि वेदशब्देनोपासनाज्ञानमेवाभिधीयते, न शास्त्र-ज्ञानमात्रत्वम्; केवलशास्त्रज्ञानस्य जल्प वितण्डा-हेत्वाभासादिवादोपयोगमात्रत्वमिति वेदितव्यम्।

## स्वानुभवज्ञानस्य फलहेतुत्वप्रदर्शनम्

'अनुभूतिं विना मूढो वृथा ब्रह्मणि मोदते।
प्रतिबिम्बितशाखाग्रफलास्वादनमोदवत्॥'

इत्यादिश्रुतिषु स्वानुभवज्ञानस्यैव फलहेतुत्वव्यपदेशात्।

## उपासनस्य सर्वाधिक्यप्रतिपादनम्

किञ्च– शिवाराधनमहिमाविशेषेण विश्वामित्र-अगस्त्य-सानन्द-शतानन्द-रेवण-सिद्धादीनां सर्गान्तरकल्पनत्वादिसामर्थ्यं शास्त्रेषु दृश्यते। लोके गरुडमन्त्राद्युपासकानां तत्प्रतियोगिनस्सर्पादयः गरुडादिभावनया भयाविष्टास्सन्तः नम्रीभावेन तदाज्ञावशवर्तिनो भवन्ति। तस्मादुपासनस्य सर्वाधिक्यमनवद्यम्।

'द्वेवाव ब्रह्मणो रूपे' इत्यादिश्रुतिनिष्ठब्रह्मोभयलिङ्गोपासनं श्रुत्यां कर्तव्यम्। तदुक्तं स्कान्दे–

'उरस्थले हरिर्लिङ्गं धृत्वा मूर्ध्नि पितामहः।
लिङ्गस्थं मां समाराध्य स्वं स्वं पदमवापतुः॥

तथा चाभ्यन्तरे लिङ्गं ज्ञानरूपं शिवात्मकम् ।
धृत्वा तद्ध्यानयोगेन शिवं प्राप्नोति नान्यथा ॥'

इति दर्शनाच्च तदुभयलिङ्गं ब्रह्मोपपन्नमिति सिद्धम् ।

---

## अहिकुण्डलाधिकरणम् ॥ ७ ॥

### जीवब्रह्मणोः भेदाभेदस्वरूपप्रतिपादनम्

प्रथमाध्याये 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः' इत्यारभ्य भेदादिमतत्रयमुक्त्वा तत्त्रयाणां मध्ये बौद्धादिवच्छुद्धैकदेशप्रामाण्यमतद्वयं निरस्य सर्वश्रुतिसमन्वयत्वेन **भेदाभेद**मतस्यैव सर्वाधिक्यं **'अवस्थितेरिति काशकृत्स्नः'** इति सूत्रेण राद्धान्तितम्। **स च भेदाऽभेदः** प्रपञ्च-ब्रह्मणोस्सम्भवतीति; **द्वितीयाध्याये 'अधिकं तु भेदनिर्देशात्'** इत्यादिसूत्रैः घट-पटवत्परस्परभेदं **'तदनन्यत्वमारम्भणशब्दादिभ्यः'** इत्यादिना मृद्घटयोरिव तदनन्यत्वञ्च प्रसाध्य तद्धेतुभूताभिन्ननिमित्तोपादानकारणानङ्गीकारमतानि वेदबाह्यानि निराकृत्य; एतदध्यायेन **'स्थानतोऽपि परस्य'** इत्युभयलिङ्गाधिकरणेन भेदाभेदतया ब्रह्मणश्शिवस्योभयलिङ्गत्वप्रसाधने त्वम्पद-तत्पदार्थभूताराधकाराध्ययोर्जीव-ब्रह्मणोर्भेदो वा अभेदो वा भेदाऽभेदो वेति संशये तयोर्मोक्षपर्यन्तं वास्तवभेदाऽभेदसत्त्वेऽपि परिशुद्धान्तःकरणेन मोक्षदशायां ब्रह्मसाक्षात्कारे तद्भेदविनाशपूर्वकात्यन्ताभेद एवोपपन्न इत्यधिकरणान्तरेणाह—

## ॥ १६६ ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २६ ॥

उभयव्यपदेशात्— **'ज्ञाऽज्ञौ'**, **'द्वासुपर्णा'** इत्यादिश्रुतिषु जीव-ब्रह्मणोर्भेदव्यपदेशात् **'अहं ब्रह्मास्मि'**, **'अयमात्मा ब्रह्म'**, **'तत्त्वमसि'** इत्यादिश्रुतिषु अभेदावगमाच्च तयोर्भेदाऽभेदौ अङ्गीकर्तव्यौ; अहिकुण्डलवत्। यथा कुण्डलीभूतसर्पस्य दीर्घीभूतसर्पस्य च सर्पत्वेनैकत्वेऽपि द्वैतप्रधानसाङ्ख्यमतस्य अभेदप्रधानयोगमतस्य चैकत्वेन निर्दिष्टत्वात्, केचित् द्वैतमेकमतमिति अद्वैतमेकमतमिति वदन्ति।

भ्रान्त्या तन्न विधेयम्, **'तत्तु समन्वयात्'**, **'गतिसामान्यात्'** इत्यादिना **प्रथमाध्याये** भेदश्रुतीनामभेदश्रुतीनाञ्च ब्रह्मण्येव समन्वयव्यवस्थापनात्, **'यथा नद्यः'** इत्यादिश्रुतिषु भेदाऽभेदस्य स्पष्टमुपदिष्टत्वात्, **'साङ्ख्य-योगौ पृथक् बालाः प्रवदन्ति**

न पण्डिताः' इति कृष्णगीतायां कृष्णेन, अत्र च भगवता व्यासेनापि तत्पदत्वम्पदार्थभूतजीव-ब्रह्मणोर्भेदाऽभेदनिर्देशार्थमिदं सूत्रं निर्दिष्टम्। यथा ह्रस्वत्व-दीर्घत्वात्मकविरुद्धपरिमाणवत्वात् भेदाऽभेदौ अङ्गीक्रियेते; एवं जीव-ब्रह्मणोरपि चित्त्वेनैकत्वेऽपि अणुत्व-विभुत्वात्मकविरुद्धपरिमाणवत्वात् भेदाऽभेदौ अङ्गीकर्तव्यौ इति सूक्ष्मार्थः।

'नित्यो नित्यानां चेतनश्चेतनानां', 'पृथगात्मानं प्रेरितारञ्च मत्वा', 'अस्मान्मायी सृजते विश्वमेतत्', 'ईशानस्सर्वविद्यानां' इत्यादिश्रुतिषु आराध्याराधकयोः जीव-ब्रह्मणोर्भेदावगमात्, 'सदेव सौम्येदमग्र आसीत्', 'सर्वमात्मैवाभूत्तत्केन कं पश्येत् केन कं वदेत्' इत्यादिश्रुतिषु ब्रह्मैकत्वव्यपदेशेन सदाऽद्वैतनिर्देशात्, 'तत्त्वमसि' 'अहं ब्रह्मास्मि', 'शिव एको ध्येय' इत्यादिश्रुतिषु तयोर्भेदाऽभेदव्यवस्थापनाच्च जीव-ब्रह्मणोराराधकाराध्ययोर्भेदो वा, अभेदो वा भेदाऽभेदो वा इति सन्दिह्यते।

वस्तुविरोधान्न भेदाऽभेदः। 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति' 'ज्ञाऽज्ञौ' इत्यादिश्रुतिशतेषु घटपटयोरिव जीव-ब्रह्मणोरन्योन्यस्वाभाविकभेदव्यपदेशात्, स्वाभाविकस्य भेदस्य निवृत्यसम्भवात् तत्त्वमस्यादिवाक्यानां औपचारिकत्वेन स्तुतिपरत्वात्, अभेदे उपास्योपासकत्वविरोधात् 'अथात आदेशो नेति नेति' इति श्रुतौ मूर्ताऽमूर्तचिदचिद्वस्तुरूपतया ब्रह्मण इयत्तामात्रनिषेधाच्च न कदाचिदप्युपास्योपासकयोरभेदस्सिध्यतीति प्राप्ते प्रचक्ष्महे– ॥ उभयव्यपदेशादिति ॥

'यथा नद्यः स्यन्दमानाः', 'एष सम्प्रसादः स्वेन रूपेणाभिनिष्पद्यते' इत्यादिश्रुतिषु आराधकाराध्यजीव-ब्रह्मणोर्नदी-समुद्रवत्परस्परस्वाभाविकभेदसत्वेऽपि मोक्षदशायां प्राप्य-प्रापकत्वेन भेदाऽभेदव्यपदेशात्तदेव युक्तम्। ॥ अहिकुण्डलवत् ॥ कुतः? ॥ उभयव्यपदेशात् ॥ 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि', 'ब्रह्मैवेदँ सर्वम्', 'आत्मैवेदं सर्वं' इत्यादिषु तादात्म्यत्वेन अभेदव्यपदेशात् अनेन जीवेनात्मनानुप्रविश्य' इति भेदव्यपदेशाच्च अहेः कुण्डलभाव-ऋजुभाववत् तयोर्ज्ञानात्मकत्वेनैकत्वेऽपि परस्परविरुद्ध-सर्वज्ञत्व-किञ्चिज्ज्ञत्व विभुत्व-अणुत्व-नित्यमुक्तत्व-नित्यबद्धत्वादिधर्माणां दर्शनात् भेदाऽभेद एव निश्चीयते। श्रुतिसङ्कोचे मानाभावात्, उभयश्रुत्योस्तुल्यबलत्वाच्च भेदश्रुतीनां सर्वासां संसारदशाविषयत्वं, अभेदश्रुतीनां मोक्षदशापरत्वम्। 'स्थान-प्रकरण-

**लिङ्गात्समन्वयः'** इति **न्यायेन** प्रकरणानुकूलार्थो ग्राह्य इति निर्णीयते। नोचेदन्योन्य-विरोधात्सर्वं शास्त्रं अप्रमाणं स्यादिति वेदितव्यम्।

ननु सुप्ति-प्रबोधादिवत्कालभेदेन भेदाऽभेदोऽस्तु तमःप्रकाशवत्परस्परविरोधस्वभावादेक-काले तयोस्तदसङ्गतमित्याशङ्कायामाह—

## ॥ १६७ ॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥

**वाशब्दः** पूर्वपक्षनिरासार्थः। यथा प्रभाकरप्रभायाः प्रभाश्रयप्रभाकरमण्डलस्य **तेजस्त्वात्** तेजस्त्वेनैकत्वेऽपि व्यापकत्व-परिच्छिन्नत्वरूपविरुद्धपरिमाणवत्वात् भेदाऽभेदौ अङ्गीकृतौ, एवं **जीव-ब्रह्मणोरन्योन्यविरुद्धधर्मबाहुल्यात्** भेदाऽभेदौ **अङ्गीकर्तव्यौ** इति व्याचक्षते। सङ्कुचित-विस्तृतपटादिबहुदृष्टान्तानुरोधेनापि जीव-ब्रह्मणोर्भेदाऽभेदो निश्चीयते।

**किञ्च—** ब्राह्मणत्वादिजातियोगेन सर्वेषां ब्राह्मणादीनां जात्यैकस्वभावत्वे सिद्धेऽपि उत्तमाधमादिभावेन नीलपीतादिरूपेण च परस्परभेददर्शनात् तद्वज्जीव-ब्रह्मणोरपि चिज्जात्येक-त्वेऽपि सर्वज्ञत्व-किञ्चिज्ज्ञत्वादिना परस्परभेदो विद्यते। तस्मात्तयोर्भेदाऽभेदो वस्तुविरोधादयुक्त इति दुर्वादो निरस्तः।

ननु प्रभा-तदाश्रययोरिव जीव-ब्रह्मणोर्जातियोगमात्रेण गज-अश्व-गवादिवत्, जातिव्यक्ति-**न्यायेन** श्रुति-स्मृति-युक्त्यनुभवव्यवहारबलात् देशकालभेदाऽभेदस्सिद्ध इति यदुक्तं तदसङ्गतम्; तस्य संसारदशाविषयत्वात्। ब्रह्मसाक्षात्कारे **'यथा नद्यः'** इत्यादिश्रुति-शतविहिततया स्वरूपैक्यस्याप्यङ्गीकारात्, स्वाभाविकस्य भेदस्य निवृत्त्ययोगाच्च घटाकाशा-दिवज्जीवत्वमौपाधिकभेदेनाङ्गीकर्तव्यमित्याशङ्कायामाह—

## ॥ १६८ ॥ पूर्ववद्वा ॥ २८ ॥

वाशब्दोऽत्र एकैकपक्षस्वीकर्तृमतद्वयनिरासार्थः। ॥ **पूर्ववत्** ॥ पूर्वाधिकरणे **'द्वेवाव ब्रह्मणो रूपे'** इत्यादिश्रुतिबलात् मूर्ताऽमूर्तब्रह्मणोर्यथा भेदाऽभेदो निर्दिष्टः तथात्रापि संसार-दशायां जीव-ब्रह्मणोस्स्वाभाविकभेदः मोक्षदशायां तद्वत्स्वाभाविकाऽभेदो निर्दिष्टः।

किञ्च संसारदशायामपि चित्त्वैकत्वेन प्रभाकरप्रभादिवत् भेदाऽभेदो ह्यङ्गीकर्तव्यः। उत– **'भेदव्यपदेशाच्चान्यः'**, **'अधिकन्तु भेदनिर्देशात्'** इत्यादिना यथा प्रपञ्च-ब्रह्मणोः कार्य-कारणभावेन परस्परस्वभावभेदं प्रदर्श्य, **'तदनन्यत्वं'** इत्यादिना प्रतिज्ञा-दृष्टान्तश्रुत्यनु[1]सारेण तद्वदभेदं प्रसाध्य, स्वाभाविकभेदस्य निवृत्त्ययोगमाशङ्क्य, **'उपसंहारदर्शनात्'** इत्यत्र तक्रादिसम्पर्कवशेन क्षीरस्य स्वाभाविकक्षीरत्वनिवृत्तिपूर्वक-दधित्वप्राप्तिवज्जीवब्रह्मणोः परस्परपारमार्थिकभेदसत्त्वेऽपि मोक्षदशायामभेदस्सिद्ध इति यथा **पूर्वाध्याये** प्रपञ्चितं तद्वदत्रापि तयोस्तद्विवक्षितमिति वेदितव्यम्।

अत्र **पूर्ववदिति** सूत्राभिप्रेतस्तु **पूर्वसूत्र पूर्वाधिकरण-पूर्वाध्यायन्यायेन** परस्परविरुद्ध-भेदाऽभेदश्रुतीनां तात्पर्यार्थो ग्राह्यः। श्रुत्यैकदेशप्रामाण्येन भेद एव मुख्य इति दुर्वादः सुगतादिवदवैदिकत्वादग्राह्य एव।

ननु तत्त्वमस्यादिभेदाऽभेदविधायकश्रुतिवत् **'द्वासुपर्णा'** इत्यादिश्रुतिषु द्वैतस्य **'नेह नानास्ति किञ्चन'** इत्यादिषु तद्वदद्वैतस्य द्योतनात् कथमुभयोर्बौद्धादिवन्नविधेयत्व-मित्याशङ्कायामाह–

## ॥ १६९ ॥ प्रतिषेधाच्च ॥ २९ ॥

**'द्वासुपर्णा'** इत्यादिभेदश्रुतिमात्रप्राधान्ये **'तत्त्वमसि'** इत्याद्यैक्यश्रुतिप्रतिषेधात्, तत्त्वमस्याद्यैक्यश्रुतिमात्रप्राधान्ये **द्वासुपर्णेत्या**दिभेदविधायकश्रुतिप्रतिषेधाच्च **'यथा नद्यः'** इत्यादिश्रुतिषु असन्दिग्धतया दृष्टान्तानुसारेण प्राप्य-प्रापकत्वेन जीव-ब्रह्मणोर्भेदाऽभेदावगमात् वैदिकानां तदेव ग्राह्यम्। पक्षैकस्वीकारे परस्परश्रुतिविरोधात् बौद्धादिवदवैदिकत्वमनिवार्यम्। अतः पूर्वाधिकरणे मूर्ताऽमूर्तब्रह्मणोः भेदाऽभेदवदत्र त्वन्तत्पदार्थभूतजीव-ब्रह्मणोः द्वैताऽद्वैतोभय-विधायकश्रुतिनिर्वाहार्थं बद्धमुक्तदशयोः पारमार्थिकं द्वैतमद्वैतञ्च कालभेदेन भेदाऽभेदो ह्यङ्गीकर्तव्यः।

---

[1] रोधेन

किञ्च– सांसारिकदशायामपि 'अंशो नानाव्यपदेशात्', 'प्रकाशादिवत्तु नैवं परः' इत्यादिषु द्वैताऽद्वैतस्यैव स्पष्टमुपदिष्टत्वात् प्रभाकर-मण्यादिवत् अंशांशिन्यायेन तयो-र्भेदाऽभेदो युक्तः। तस्मात् 'यस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति, सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिश्रुतिषु कारणभूतब्रह्मज्ञानेन कार्यभूतविज्ञानप्रतिज्ञाविधायकं सर्वं शास्त्रं उपपन्नम्। अत्र सत्यपदस्य वस्तुमात्रपरत्वं बोध्यम्।

---

## पराधिकरणम् ॥ ८ ॥

### जीवब्रह्मणोः भेदाभेदसमर्थनम्

'नेह नानास्ति', 'नान्योऽतोऽस्ति द्रष्टा........ मन्ता' इत्यादिश्रुतिषु जीवब्रह्मणोर्भेदनिरासावगमात्कथं भेदाऽभेदमतमुपपन्नमित्याशङ्कायामाह–

## ॥ १७० ॥ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३० ॥

ब्रह्म, अतः जीवात् परं भिन्नम्। कुतः? **सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः** हेतुभ्यः। **'एष सेतुर्विधारण एषां लोकानामसंभेदाय'** इत्यादिश्रुतिषु जीव-ब्रह्मणो-र्नियाम्य-नियामकत्वात्मकसेतुत्वस्य व्यपदेशात्। उन्मानव्यपदेशात्, **'बालाग्रशतभागस्य शतधा कल्पितस्य च। जीवो भागस्स विज्ञेयः' 'आकाशस्सर्वगतश्च नित्यः'** इत्यादि-श्रुतेषु जीव-ब्रह्मणोरणुत्व-विभुत्वात्मकान्योन्यभेदपरिमाणश्रवणात्। **'अधिकन्तु भेदनिर्देशात्', 'ज्ञाऽज्ञौ'** इत्यादिश्रुतिषु भेदव्यवस्थापनात् **'नान्योऽतोऽस्ति द्रष्टा'** इत्यादिवाक्यानां तत्सर्वज्ञत्वाद्यद्वितीयमहिमातिशयविषयत्वाच्च सदा जीवब्रह्मणोरभेद इति वादोऽप्यनङ्गीकरणीयः इति सूत्रसूचितसूक्ष्मार्थः।

**'अथ य आत्मा स सेतुर्विधृतिः एवं सेतुं तीर्त्वाऽथ सन्नद्धो भवति', 'अमृतस्य परं सेतुः',** इत्यादिश्रुतिरेवास्य विषयः। **'अयमात्मा ब्रह्म', 'प्रज्ञानं ब्रह्म', 'तत्त्वमसि'** इत्यादिश्रुतिषु जीवब्रह्मणोरेकत्वोपदेशात् भेदो वा, **'द्वासुपर्णा', 'एषामीशे पशुपतिर्द्विपदां चतुष्पदां'** इत्यादिश्रुतिषु तयोरन्योन्यभेदव्यवस्थापनादभेदो वेति विशयः।

'सदेव सौम्येद', 'ब्रह्म वा इदमग्र', 'आत्मा वा इदमग्र' 'एकमेवाद्वितीयम्', 'एक एव रुद्रो न द्वितीयाय तस्थे' इत्यादिश्रुतिषु भेदनिरासदर्शनात् **'एष सेतुर्विधारणः'**

इति श्रुतौ तयोर्भेदो व्यवह्रियत इति चेत्तदसत्; यथा लोके सेतूनां वारिमर्यादाव्यवस्थापकत्वं एवं ब्रह्मणोऽपि वर्णाश्रममर्यादाव्यवस्थापकत्वम्। अतो ब्रह्मणः सेतुत्वादृश्यम्। तच्च ब्रह्मसाक्षात्कारपर्यन्तं जीव-ब्रह्मणोः औपाधिकमिथ्याभूतभेद एवाङ्गीकर्तव्यः। जीव-ब्रह्मणोरणुत्व-विभुत्वव्यपदेशेन भेद इति चेत्तदप्ययुक्तम्। 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति श्रुतौ ब्रह्माण्डान्तर्वर्तिनो जीवचैतन्यस्यैकपादत्वं ब्रह्माण्डाद्बहिर्विद्यमानस्य ब्रह्मचैतन्यस्य त्रिपादत्वञ्च त्वंपदार्थ-तत्पदार्थ-विवेकार्थमुक्तम्। तत्त्वंपदार्थयोर्भेदज्ञानस्य तत्त्वंपदार्थज्ञानं विनाऽसम्भवात्, तत्त्वंपदार्थज्ञानार्थं स्थूलारुन्धतीन्यायेनान्तःकरण विशिष्टस्य जीवस्याणुत्वं मायाविशिष्टब्रह्मणो विभुत्वञ्चोक्तम्। तस्मात्तच्छ्रुतेर्न भेदतात्पर्यम्; अणुपरिमाण-विभुपरिमाणयोर्मायाकल्पितत्वेन मिथ्याभूतत्वात् सर्वथाऽभेद एव वास्तव इति प्राप्ते प्रचक्ष्महे—

'अथ 'य आत्मा स सेतुर्विधृतिः' इत्यस्य परस्य सेतुत्वव्यपदेशात्, सेतुशब्दस्य च लोके कूलान्तरप्राप्तिहेतौ प्रसिद्धेः इतोऽन्यदनेन प्राप्यमस्तीति गम्यते। तथा 'एवं सेतुं तीर्त्वाऽन्धः सन्नन्धो भवति' इति तरितव्यस्थास्याभिधीयते। 'अतश्चान्यत्प्राप्यमस्ति' 'उन्मितं परिमितमिदं परं ब्रह्म', 'चतुष्पाद्ब्रह्म षोडशकलमित्युन्मानव्यपदेशात्', स चायमुन्मानव्यपदेशस्तेन सेतुना प्राप्यस्यानुन्मितस्यास्ति; तां द्योतयति। तथा सम्बन्धव्यपदेशश्च सेतु-सेतुमतोः प्रापकत्व-प्राप्यत्वलक्षणो दृश्यते। 'अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्', 'अमृतस्यैष सेतुः' इति। अतश्च परात्परमस्ति; भेदेन च परात्परं व्यपदिश्यते; 'परात्परं पुरुषमुपैति दिव्यम्', 'परात्परं यन्महतो महान्तम्' इति च। तथा 'तेनेदं पूर्णं पुरुषेण सर्वम्' 'ततो यदुत्तरतरं तदरूपमनामयम्' इत्यादिश्रुतिषु जीव-ब्रह्मणोर्घटपटवत् अन्योन्य-वैलक्षण्यव्यपदेशात् जीव एव ब्रह्मेति वादो ह्यसङ्गतः। बिम्ब-प्रतिबिम्बभाववज्जीवस्य दर्शितत्वादौपाधिकभेद एवेति यत्तदयुक्तम्। 'ज्ञाऽज्ञौ', 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोन्यः', 'उत्पत्तेरसम्भवात्', 'अधिकं तु भेदनिर्देशात्' इत्यादिश्रुति-सूत्रविरोधप्रसङ्गात्। तस्मात् जीव ब्रह्मणोरादौ, रस-लोहवत्परस्परं-स्वाभाविकभेदसत्वेऽपि सदाचार्यकटाक्षाज्जीवश्शिवो भवतीति निश्चीयते।

ननु 'अयमात्मा ब्रह्म' इत्यादिषु जीवस्यैव ब्रह्मत्वोपदेशात् स्वाभाविकभेदस्य निवृत्त्ययोगात्, 'जीवत्वमीश्वरत्वञ्च ब्रह्मण्येकत्र कल्पितं' इत्यादिषु तस्य कल्पितत्व-व्यवस्थापनाच्च रज्जुसर्पवद्भेदस्योपाधिकत्वेन अनवस्थितत्वमेवेत्याशङ्क्य तत्राह—

## ॥ १७१ ॥ सामान्यात्तु ॥ ३१ ॥

**तुशब्दः** पक्षं व्यावर्तयति । **॥ सामान्यात् ॥** समानस्य भावः सामान्यम् ; तस्मात् सामान्यात् । द्वासुपर्णेत्यादिभेदश्रुतिभ्यः जीवब्रह्मणोर्भेदस्य तत्त्वमस्यादिश्रुतिभ्यः तयोरभेदस्य च तुल्यत्वेन व्यपदेशात् तदुभयंविधायकश्रुत्योः कालभेदेन समन्वयात् तदुभयश्रुत्योः गौणत्व-मुख्यत्वव्यवस्थापनाङ्गीकर्तव्या । **भ्रमर-किटिन्यायेन** स्वाभाविकत्व-निवृत्तिदर्शनात् आरोपिताभेद औपचारिक आगन्तुक इत्यादिवादो ह्यविचारितरमणीयः ।

किञ्च– **'त्रिश्वाधिको रुद्रो महर्षिः'** इत्यादिषु शिवस्य चिदचित्प्रपञ्चाधिकत्व-व्यपदेशात् 'अहं ब्रह्म' इति जीव-ब्रह्मवादो न युक्तः । अथ **'य आत्मा स सेतुर्विधृतिः'** इत्यादिना सेतुत्व-तरितव्यत्व-परिमितत्व-प्रापकत्वादिभेदेन तयोर्भेदव्यपदेशात् तदेवावश्यकमिति चेत्तदसङ्गतम् । **'सर्वं खल्विदं ब्रह्म, तज्जलानि शान्त उपासीत'** इत्यत्र तस्य अभिन्ननिमित्तोपादानकारणत्वोपदेशात् । **'एतमितः प्रेत्य अभिसम्भविताऽस्मि'** इति प्राप्यत्वमुच्यते श्रुत्यन्तरे । **'उमासहायं', 'ध्यात्वा मुनि……समस्तसाक्षिं तमसः परस्तात्'** इत्यनेन तमः परस्य शिवस्य मुक्तजीवप्राप्यत्वं दर्शितम् । **'यथा नद्यः'** इत्यादिश्रुतिषु नदी-समुद्रदृष्टान्तेन जीवभावनिवृत्तिपूर्वकशिवत्वप्राप्तेरेव स्पष्टमुपदिष्टत्वात् उभयश्रुत्योस्समानत्वेन प्रामाण्यं निश्चीयते ।

ननु भेदाऽभेदश्रुत्योः कालभेदविषयत्वेऽपि तयोर्बद्ध-मुक्तदशाभेदेन वैशेष्यात्कथं समानत्वमित्याशङ्क्याह–

## ॥ १७२ ॥ बुध्यर्थः पादवत् ॥ ३२ ॥

**'योऽयं चतुष्पात् ब्रह्म षोडशकलं', 'पादोऽस्य…त्रिपादस्यामृतं दिवि'** इति यथैकस्यैव ब्रह्मणो ब्रह्माण्डातीतत्रिपाद्विभूत्यधिष्ठानत्वेन त्रिपादवत्त्वं, चिदचित्प्रपञ्चात्मकब्रह्माण्ड-रूपैकपाद्विभूत्यधिष्ठानत्वेनैकपादवत्त्वञ्च समुचितम् , तद्वदभेदश्रुतीनां भेदश्रुतीनाञ्च परमेश्वर-प्रणीतत्वात् तुल्यप्रमाणत्वम् । **बुध्यर्थः** निश्चयार्थः । **'ब्रह्मविदाप्नोति परम्'** इत्यत्र ब्रह्माण्डातीतत्रिपाद्विभूत्यात्मकशिवोपासकज्ञानेन शिवत्वप्राप्तिश्च, **'सत्यं ज्ञानमनन्तं ब्रह्म'**, **'यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह'** इत्यनेन

ब्रह्माण्ड-अन्तर्वर्तिनो महेश्वरस्य उपासनाज्ञानेनैकपादविभूत्यात्मकमहेश्वरेण सह सर्वकाम-फलभोक्तृत्वञ्च श्रूयते ।

किञ्च– ब्रह्माण्डान्तर्वर्तिनो महेश्वरस्य 'वाक् पादः, प्राणः पादः, चक्षुः पादो, मनः पादः' इत्यादिना वागादिपादव्यपदेशोऽपि दृश्यते ।

केचित् ब्रह्मणः पादव्यपदेशं उपासनार्थमित्याहुः । तदसङ्गतम् । मूर्ताऽमूर्त-ब्रह्मणोरेकत्वोपदेशार्थं तस्य सर्वाधिष्ठानत्वं सर्वविलक्षणत्वादिमहिमा प्रपञ्चित इति निश्चीयते ।

ननु मूर्ताऽमूर्तब्रह्मणोः ब्रह्माण्डान्तर्यामित्वेन तद्विलक्षणत्वेन च घटपटादिवदन्योन्य-वैलक्षण्याभावदर्शनात् तथा भेदाऽभेदविधायकोभयश्रुतीनां परस्परभेदार्थबोधकत्वात् एकस्मिन् परब्रह्मणि समन्वयः कथमुपपद्यत इति आशङ्कायामाह–

## ॥ १७३ ॥ स्थानविशेषात् प्रकाशादिवत् ॥ ३३ ॥

स्थानविशेषात्– 'पादोऽस्य विश्वा भूतानि' इत्यत्र चिदचित्प्रपञ्चहृदयप्रविष्टत्वेन एकपादविभूतिस्थानस्य 'त्रिपादस्यामृतं दिवि' इत्यनेन प्रपञ्चातीतत्वेन शिवस्य त्रिपाद्विभूतिस्थानस्य च विशेषात् तयोर्भेदव्यपदेशात् प्रकाशादिवत् यथा सूर्यस्य तत्प्रकाशस्य च परस्परविशेषेप्येकत्वं तथा मायाविशिष्टस्य तद्विलक्षणस्य च, भेदव्यपदेशक-गुणप्राधान्यवाचकश्रुतीनां निर्गुणप्रतिपादकाभेदश्रुतीनाञ्च साधक-साध्य-उपायबोधकत्वेनैकत्वे अविरोधः । भेदरूपध्यान-धारणादिकर्मानुसन्धानपूर्वकत्वेन निरन्तरानुसन्धानावच्छिन्न ज्ञानानुभव-सिध्युपदेशात् पूर्वोत्तरसौधवदुभयश्रुत्योः स्थानविशेषादपि मणिप्रकाशादिवदविरोधः सिद्धः ।

ननु द्वैताऽद्वैतोभयविधायकश्रुतीनां अङ्गाङ्गिन्यायेन परस्परसापेक्षत्वमस्तु ; तथाप्युभय-श्रुत्योः परस्परफलभेदव्यपदेशात्कथमेकत्रोपपत्तिरित्याशङ्क्याह–

## ॥ १७४ ॥ उपपत्तेश्च ॥ ३४ ॥

'अमृतस्यैष सेतुः' इत्यादिना शिव-जीवयोः प्राप्य-प्रापकसम्बन्धव्यपदेशादन्यत्र च 'ब्रह्म वेद, ब्रह्मैव भवति', 'हिरण्मयोऽहं शिवरूपमस्मि', 'अहं ब्रह्मास्मि', 'तत्त्वमसि', इत्यादिषु तथा निर्देशाच्च भेदश्रुतीनामभेदश्रुतीनाञ्च ब्रह्मण्युपपत्तेश्च परस्परविरोधो निषिध्यते ।

स्वस्मिन्नेव दशमन्यस्य विवेकेन मन्थानादिवत् स्वप्राप्तिरिति चेन्न। प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ न स्वस्योपायत्वोपपत्तिः। '**नायमात्मा प्रवचनेन लभ्यः न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्**' इत्यादिश्रुतिशतेषु जीवस्य निरन्तराविच्छिन्नध्यान-धारणाद्युपासनेन परमशिवप्राप्तिव्यपदेशात्, '**यज्ञेन दानेन तपसा नाशकेन**' इत्यादिश्रुतिषु ज्ञान-कर्मसमुच्चयोपपत्तेश्च निर्देशात् भेदाऽभेदश्रुतीनां सर्वासामविरोधेन ब्रह्मप्राप्त्युपपत्तिर्युक्ता।

---

## तथान्यप्रतिषेधाधिकरणम् ॥ ९ ॥

### जीव-ब्रह्मणोः प्राप्य-प्रापकत्वनिर्णयः

ननु द्वैताऽद्वैतविधायकश्रुतीनां बद्ध-मुक्तदशाभेदेन साध्य-साधकत्वेन प्राप्य-प्रापकत्वेन च परस्परविरोधपरिहारोऽस्तु ; तथापि **'समाने वृक्षे पुरुषो निमग्नः'**, **'द्वा सुपर्णा सयुजौ सखायौ'** इत्यादिश्रुतिषु जीव-ब्रह्मणोस्तुल्यत्वोपदेशात्, **'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः'** इत्यादिषु तयोर्ज्ञानात्मकत्वेन जन्यत्वनिर्देशात्, **'यस्मात्परं नापरमस्ति किञ्चित्'** इत्यादिषु शिवाधिकत्वमात्रनिरासदर्शनाच्च तयोस्समानत्वेन प्राप्य-प्रापकत्वादिकं कथमुपपन्नमित्याशङ्कायामाह—

## ॥ १७५ ॥ तथाऽन्यप्रतिषेधात् ॥ ३५ ॥

पूर्वाधिकरणे श्रुत्येकदेशविधायकद्वैताऽद्वैतमतद्वयं निरस्य सर्वश्रुतिपूर्वापरमव्यपरामर्शि-हेतुत्वेन द्वैताऽद्वैतमते मुख्यवैदिकसिद्धान्ते सर्वश्रुतिसमन्वयं प्रसाध्य, जीव ब्रह्मणोः श्रुति-स्मृति-पुराणेषु समानत्वप्रतीतिमात्रेण समानत्वमस्तीत्याशङ्कायामत्र जीवरूपनारायणादीनां शिवतुल्यत्वं सर्वथा न सम्भवतीति **'तथान्यप्रतिषेधात्'** इत्यादिना दर्शितम्। **'समाने वृक्षे पुरुषो निमग्नः'**, **'एक एव रुद्रः'** इत्याद्युभयविधिविधायकश्रुतिदर्शनात् शिवसमोऽन्यो जीवोऽस्ति वा न वा, इति चिन्त्यते। **'यस्मात्परं नापरमस्ति किञ्चित्'** इत्यादि-श्रुतिषु शिवादधिकवस्त्वभावेऽपि तत्तुल्यो नारायणोऽस्तीत्यवगम्यते ; **'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्'** इत्यत्र कस्यचित्पुरुषस्य अनन्तमुख-पादविशिष्टं **'पादोऽस्य विश्वा भूतानि'** इति चेतनाऽचेतनप्रपञ्चावच्छिन्नत्वं, **'त्रिपादस्याऽमृतं दिवि'** इति परम-व्योमारूढत्वं, **'तस्माद्विराडजायत। विराजो अधिपूरुषः'** इति अव्यक्तहिरण्य-गर्भोत्पादनहेतुत्वं, **'आदित्यवर्णं तमसस्तु पारे'** इति तमःपरत्वं, **'तमेवं विद्वानमृत इह भवति'** इति तदुपासकानां पुनरावृत्तिराहित्यहेतुत्वञ्चोपदिश्यते। पुनस्तस्य **'सहस्र-शीर्षं देवं'** इत्यारभ्य **'पतिं विश्वस्य'** इति विश्वपतित्वं ; **'नारायणपरं ब्रह्म'**

इति नारायणशब्दवाच्यस्यैव परब्रह्मत्वं ; '**परमात्मा व्यवस्थितः**' इति दहराकाशो-पास्यत्वं चास्य प्रतीयते। एते धर्माः शिवस्यावगम्यन्ते। '**सर्वाननशिरोग्रीवः**' इति मन्त्रोपनिषदि '**विश्वतश्चक्षुरुत विश्वतो मुखः**' इति **महोपनिषदि शिवसङ्कल्पे** च, '**सर्वतश्चक्षुरुत सर्वतो मुखः**' इत्यथर्वशिरसि बहुमुखपादादिमत्वं परमेश्वरस्योपदिश्यते। '**मायान्तु**', '**तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्**' इति जगदंशप्रविष्टत्वं; '**विश्वाधिको**', '**हिरण्यगर्भं पश्यत जायमानं**' इति हिरण्यगर्भजनकत्वं ; '**समस्तसाक्षिं तमसः परस्तात्**' इत्यादिषु विश्वसाक्षित्वं तमःपरत्वञ्चोपदिश्यते। एवं विश्वरूपत्वादिधर्मसाम्यं अनयोर्नारायण-महेश्वरयोः श्रुति-स्मृति-पुराणादिषु तत्पूजाविधिः समानतया श्रूयते। लोके च **अष्टाक्षर-पञ्चाक्षर-मन्त्रोभयस्य सालग्राम-शिवलिङ्गोभयस्य** पूजा-तीर्थ-प्रसादविशेषश्च तुलसी बिल्व-कमलाक्षारुद्राक्षो-र्ध्वपुण्ड्र-तिर्यक्पुण्ड्र-विष्णुक्षेत्र-शिवक्षेत्रादिकस्य उभयोस्समानत्वेनावगमात् **परमेश्वरसमो** नारायणोऽ-स्तीति भ्रान्ते प्रचक्ष्महे।

॥ **तथान्यप्रतिषेधादिति** ॥ '**यस्मात्परं नापरमस्ति किञ्चित्**' इत्यादिश्रुतिषु यथा परशिवाधिको नास्ति तथा जगत्कारणमहेश्वरस्य समोऽपि नास्ति। '**न तत्सम-श्चाभ्यधिकश्च दृश्यते**' इत्यादौ **तदान्यप्रतिषेधात्**, उत '**एक एव रुद्रो न द्वितीय तस्थे**',[1] '**शिव एको ध्येयः शिवङ्करः सर्वमन्यत्परित्यज्य**' इत्यादिभि-र्जगत्कारणमहेश्वरादन्यपुरुषनिरास एवावगम्यते। तस्मात् शिवसदृशो न विद्यते।

## विष्णोः शिवशक्त्यंशत्वप्रतिपादनम्

उत—

**'एकैव शक्तिस्तु महेश्वरस्य**
**भिन्ना चतुर्धा विनियोगकाले।**
**भोगे भवानी पुरुषेषु विष्णुः**
**क्रोधे च काळी समरे च दुर्गा॥'**

---

[1] अत्र '**असङ्ख्याताः सहस्राणि**', '**द्यावापृथिवी**', '**य एको रुद्र उच्यते**', '**क्षरं प्रधानं**', '**यथा चर्मवदाकाशं**', '**यद्वातस्तं**', '**ऋतं सत्यं**' इत्यादिकाः श्रुतयः '**ज**' कोशे दृश्यन्ते।

इति **सामशाखायां** विष्णोः[1] शिवशक्त्यंशत्वव्यवस्थापनात्, शक्ति-शक्तिमतोः भेदाऽभेदात् निमित्तकारणभूतशिवस्य उपादानभूतनारायणस्य च नामरूपादिभेदेन भेदव्यपदेशेऽपि तयोरभेदात् स्वाश्रयातिरिक्ताभावात् सर्वधर्मोपपत्तिः। अत एव '**तस्माद्विराडजायत**' इत्यनेन हि पुरुषस्योपादानत्वं, '**हिरण्यगर्भं पश्यत जायमानम्**', '**द्यावापृथिवी जनयन्देव एकः**' इति परमेश्वरस्य निमित्तत्वं चोपदिश्यते। अत एव **स्कान्दे**–

**'सर्वशक्तिमतस्साम्बात् शिवात्परमकारणात्।**
**प्रादुर्भवति सृष्ट्यादौ पराशक्तिर्महेश्वरी॥**

**सादिभोक्तृत्वकाले हि पुरुषाख्येन वर्तते।**
**सहस्रशीर्षा पुरुषः सहस्राक्षस्सहस्रपात्॥**
**इति सा श्रूयते यस्मात् तस्माच्छिवमयं जगत्।'**

इत्यनेन शिवशक्त्यात्मना चिदचित्प्रपञ्चपरिणामत्वात् भेदाऽभेदोभयविधायकश्रुतीनां समन्वय उपदिश्यते। अत एव '**सर्वो वै रुद्रः**' इति शिवस्य सर्वात्मकत्वमुपक्रम्य पुरुषस्य नारायणस्य उपादानत्वात्कथं सर्वात्मकत्वमुपपद्यते इत्याशङ्कायां– '**पुरुषो वै रुद्रः**' '**पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि**' इत्यनेन पुरुषोऽपि परमेश्वरमहाविभूत्या जगदाकार इति दर्शितम्। सर्वज्ञ-सर्वशक्त-सर्वस्वतन्त्र-सर्वाधिक-नित्यतृप्त-निरतिशयानन्दात्मक-परब्रह्माभिधानशिवस्यैव विश्वनिमित्तोपादानकारणभूतत्वात् सर्वेषां वाक्यानां समन्वय अविरुद्धः।

'**सोऽकामयत बहु स्यां**' इति श्रुतौ स एव स्वसङ्कल्पेन स्वात्मनः पुरुषमुत्पाद्य स्वविभक्त-स्वांशभूतेन सकलजगद्भवतीत्युपदिश्यते। '**तत्सृष्ट्वा तदेवानुप्राविशत्**' इत्यादिना तथा श्रूयते। '**मायां तु**' इत्यादिना तद्वद्गम्यते। तस्मादुपादानधर्माः निमित्ते ह्युपदिश्यन्ते। तथाप्युपादानान्निमित्तस्याधिकत्वात् विष्णवाद्यधिकत्वं शिवस्य सिद्धम्। '**वासुदेवः परा प्रकृतिः**', '**प्रकृतिस्त्वं पुमान् रुद्रः**' इत्यादिस्मृतिपुराणेषु **विष्णोः प्रकृतित्वं शिवस्य पुरुषत्वं स्पष्टं** उपदिष्टम्। अतश्शिवस्याद्वितीयत्वं निष्प्रत्यूहम्।

---

[1] शिवशक्तित्वेनोपदेशे शक्तेः सङ्कोचविकासत्वं शक्तस्य परमशिवस्य तद्भावत्वशास्त्रे रूढत्वात् नारायणादधिकत्वं घण्टाघोषः। किञ्च (ग A).

नन्वेकस्य शिवस्य सर्वात्मकत्वं सर्वनियामकत्वं सर्वान्तर्यामित्वं सर्वविलक्षणत्वञ्च कथमुपपद्यत इत्याशङ्कायामाह—

## ॥ १७६ ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥

**अनेन** ब्रह्मणः **सर्वगतत्वं** सर्वजगतो व्याप्यत्वं **आयामशब्दादिभ्यः** सर्वव्याप्तिवाचिशब्देभ्योऽवगम्यमानमस्मात्परं नास्तीत्यवगमयति । आयामशब्दस्तावत् **'विश्वतश्चक्षुरुत विश्वतो मुखः', 'अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः'। 'तेनेदं पूर्णं पुरुषेण सर्वं', 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्', 'विश्वं भूतं भुवनं चित्रं बहुधा जायमानञ्च यत्'। 'सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु', 'ऋतँ सत्यं परं ब्रह्म', 'सर्वानन शिरोग्रीवः', 'देवा ह वै स्वर्गं लोकमगमन्, ते देवा रुद्रमपृच्छन्। को भवानिति ? सोऽब्रवीत्, अहमेकः प्रथममासँ। वर्तामि च भविष्यामि च, नान्यः कश्चिन्मत्तो व्यतिरिक्तः। तेनेदं पूर्णं पुरुषेण सर्वम्', 'नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः'। 'सर्वं खल्विदं ब्रह्म', 'ब्रह्म वेद ब्रह्मैव भवति', 'ऐतदात्म्यमिदं सर्वं', 'आत्मैवेदं सर्वं'** इत्यादयः श्रुतयः आदिशब्दात् गृह्यन्ते। तस्माद्यथाकाशस्य **सर्वान्तरत्वं सर्वव्यापकत्वं सर्वविलक्षणत्वं पवनादिकारणत्वं सर्वाधिष्ठानत्वं** चोपपन्नं ; तथैकस्यैव **ब्रह्मणस्सर्वगतत्व-सर्वमयत्व-सर्वविलक्षणत्वादिकमुदीर्यते। तस्मादद्वितीयं शिवत्वमेवेति** निश्चीयते।

---

## फलाधिकरणम् ॥ १० ॥

### जैमिनिमतनिराकरणम्

ननु **'ज्योतिष्टोमेन स्वर्गकामो यजेत'** इत्यादिश्रुतिषु कर्मण एव सर्वफलदातृत्वव्यपदेशादीश्वरस्य न किञ्चित्प्रयोजनम्। तस्मात् **चतुर्थ्यन्तदेवताप्रधानपूर्वमीमांसान्यायेन** कर्मण एव सर्वभूतोत्पत्ति-स्थिति-लयहेतुत्वेन सर्वातिशायित्वमनिवार्यमित्याशङ्कायां कर्ममात्रप्रधाननिरीश्वरमतान्तर्भूतं जैमिनिमतं निराकरोति—

## ॥ १७७ ॥ फलमत उपपत्तेः ॥ ३७ ॥

अतः कर्मभिर्ज्योतिष्टोमादिसर्वकर्मभिराराधितादीश्वरादेव जीवानां **तत्फलस्य उपपत्तेः** सम्भवात् न केवलकर्मणः फलदातृत्वम्; कुतः? ॥ **उपपत्तेः** ॥ चेतनस्येश्वरस्यैव फलजनकत्वस्योपपन्नत्वात् जडस्य कर्मणः स्वातन्त्र्येण फलजनकत्वानुपपत्तेः परमेश्वरातिरिक्तस्य कर्मफलदातृत्वं सर्वथा न सम्भवति। पूर्वत्र भेदाऽभेदविधायकश्रुतीनां सर्वासां असङ्कोचेन ब्रह्मणि समन्वयं प्रसाध्य, जीवानामैहिकामुष्मिकफलभोगार्थं परमेश्वरोपासनं विधाय, तत्र निष्कामोपासकानां तिरस्कृतमलिनवासनानां यज्ञ-दान-तपः-सत्य-ब्रह्मचर्य-ध्यान-धारण-पूजा-नमस्कार-सङ्कीर्तन-श्रवण मननादिशुद्धवासनायुक्तभक्तानां स्वाभाविकजीवत्वनिवृत्तिपूर्वकशिवत्वप्राप्तिं फलमभिधाय, इह तु कर्मण एव सर्वफलदातृत्वं, क्षणध्वंसित्वात् जडत्वञ्चाभिधाय, जडत्वाच्च तन्न सम्भवतीति दर्शितम्; **'ज्योतिष्टोमेन स्वर्गकामो यजेत'. 'एष एव साधु कर्म कारयति'** इत्यादिश्रुतिषु कर्म-ब्रह्मणोरुभयोरपि स्वातन्त्र्यावगमात् कर्मफलदातृत्वं कर्मणः परमेश्वरस्य वा युक्तमिति सन्दिह्यते।

**शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वमिति न्यायेन** कर्मणः क्षणध्वंसस्वभावत्वेऽपि तज्जन्यापूर्वफलेन तदुत्तरकाले फलदातृत्वं सम्भवति। **'स्वकर्मसूत्रग्रथितो हि लोकः'**

कर्मणा जायते जन्तुः कर्मणैव प्रवर्धते ।
कर्मणा म्रियते यस्मात् तस्मात्कर्मैव देवता ॥ '

इत्यादिश्रुतिस्मृतिषु कर्मणः कर्तृत्वदर्शनात् । यानशकटमेघादिचलनस्य तद्भिन्नगिरि-वृक्ष-चन्द्रादिष्वारोपवत् कर्मफलदातृत्वस्य परमेश्वरे भ्रान्तिप्रसक्तत्वात् तस्यैव तत्समुचितमिति प्राप्ते प्रचक्ष्महे ।

जडत्वात् त्रिक्षणविनष्टत्वात् जन्यत्वाच्च यज्ञ-दान-होम-ध्यान-धारण-पूजादिर्जीवकृत-कर्मणां तत्तत्कर्मफलदातृत्वं न सम्भवति । '**एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते**' इत्यादिश्रुतिषु—

' यथा लोके सदा राजा पुण्यापुण्यकृतो जनान् ।
तत्तत्कर्मानुसारेण फलं दास्यति तादृशम् ॥

तथा महेश्वरो नित्यं जीवकर्मानुसारतः ।
परापरेषु लोकेषु फलभोगान् प्रदास्यति ॥

जनकच्छेदको दण्डः शिवलोके महीयते ।
क्रतुकर्मकरो दक्षः स्वशिरच्छेदनात्मकम् ।
लब्धवान् फलवैरूप्यं कर्मकर्तृत्वबुद्धितः ॥ '

इत्यादिस्मृतिपुराणेषु च सर्वकर्मफलदातृत्वस्य महादेव एव व्यवस्थापनात् लदाराधन बुध्या विवेकिभिः यज्ञ-दान-तपः-पूजादितदाज्ञारूपं कर्म तदनुग्रहार्थमाचरितव्यम् ।

अस्मिन्नर्थे हेत्वन्तरमाह—

## ॥ १७८ ॥ श्रुतत्वाच्च ॥ ३८ ॥

**' स वा एष महानज आत्मान्नादः ', ' आवो राजानमध्वरस्य रुद्रँ होतारँ सत्ययजँ रोदस्योः ', ' गाथपतिं मेधपतिं ', ' वाजश्च मे प्रसवश्च मे ', ' धाता च मे विष्णुश्च मे '** इत्यादिश्रुतिषु,

'सर्वकर्मेश्वरस्साम्बः सर्वकर्मफलप्रदः ।
तस्मात्तं पूजयेन्नित्यं सर्वकामार्थसिद्धये ॥'

इत्यादिस्मृतिषु 'नाश्वमेधात्परो यज्ञः रुद्रस्याराधनं प्रति ।' इति रामायणादिषु च सर्वकर्माराध्यत्वस्य सर्वकर्मफलदातृत्वस्य श्रुतत्वाच्च शिवस्यैव श्रवणाच्च न जडस्य कर्मणस्स्वातन्त्र्यम् । तस्मात्सर्वकाल-सर्वावस्थास्वप्यनन्यबुध्या मुमुक्षुभिः शिवाराधनं कर्तव्यम् ।

ननु जैमिन्याचार्यकृतशास्त्रेषु यत्र कुत्रापि परमेश्वराराधनप्रसाधनाभावात् तदाराधनं वैदिकानां न विधेयमित्याशङ्कायामाह–

॥ १७९ ॥ धर्मं जैमिनिरत एव ॥ ३९ ॥

यतः वेदवेदान्तागमेषु शिवस्य परब्रह्मणः सर्वकर्मफलदातृत्वेन सर्वाधिकत्वं तदाराधनस्य सर्वकामफलहेतुत्वञ्च साधितं, अत एव जैमिन्याचार्योऽपि–

'ईश्वरं तमहं वन्दे यस्य लिङ्गमहर्निशम् ।
यजन्ते सह भार्याभिः इन्द्रज्येष्ठा मरुद्गणाः ॥'

इत्यादिना स्वकृतवेदपादस्तवे शिवलिङ्गाराधनस्य परमपुरुषार्थहेतुत्वेन तद्धर्मानुपदिशति अतः 'यजेत स्वर्गकामः' इत्यादिकर्मप्राधान्यश्रुतीनामपि कर्मफलदातृत्वं शिवस्यैवेति तात्पर्यम् । अत एव 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतौ स्वाभिप्रायः स्पष्टमुपदिष्टः । तस्मात्कर्मणः फलदातृत्वं सर्वथा न सम्भवतीति सिद्धम् ।

ननु स्वातन्त्र्येण कर्मणः तत्फलदातृत्वस्य श्रुतितात्पर्याभावे सर्वश्रुत्यर्थविज्ञानिना बादरायणेनापि कण्ठोक्त्या यत्रकुत्रापि परमेश्वरस्य कर्मफलदातृत्वव्यवस्थाऽदर्शनात् कथं तस्य फलदातृत्वमुपपन्नमित्याशङ्कायामाह–

॥ १८० ॥ पूर्वन्तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥

"तुशब्देन निश्चयार्थो निर्णीयते। पूर्वोक्तपरब्रह्मणश्शिवस्यैव फलदातृत्वं भगवान् बादरायणो मन्यते। कुतः? ॥ **हेतुव्यपदेशात्** ॥ '**यज देवपूजासङ्गतिकरणदानेषु**' इति देवताराधनभूतयागाद्याराध्यभूताग्निवाय्वादिदेवतानामेव तत्तत्फलहेतुतया तस्मिन्स्तस्मिन्नपि वाक्येव्यपदेशात्। '**वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति**', '**स एवैनं भूतिं गमयति**' इत्यादिषु कामिनस्सिषाधयिषितफलसाधनत्वप्रकारोऽपदेशोऽपि विध्यपेक्षित एवेति न अतत्परत्वशङ्का युक्ता। एवमपेक्षितेऽपि फलसाधनत्वप्रकारे शब्दादेवावगते सति तत्परित्यागं अश्रुतापूर्वादिपरिकल्पनञ्च प्रामाणिका न सहन्ते। लिङ्गादयोऽपि देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां शब्दानुशासनानुमतां अभिदधति; नान्यदलौकिकमिति प्रागेवोक्तम्। तदेवं '**वायुर्वै क्षेपिष्ठा देवता**' इत्यादिशब्दात् वाय्वादीनां फलप्रदत्वमवगम्यते। वाय्वाद्यात्मना च शिव एवाराध्यतया फलप्रदायित्वेन चावतिष्ठत इति श्रूयते। '**इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः। तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः**' '**तदेव शुक्रममृतं तद्ब्रह्म स आपस्स प्रजापतिः**', '**यो रुद्रोऽग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश**' इत्यादिषु सर्वान्तर्यामित्वं शिवस्योपदिष्टम्। अतः सर्वकर्माराध्यः सर्वकर्मफलप्रदाता नान्य इत्युच्यते।

ननु क्षणिकस्य कर्मणः फलसाधनत्वव्यवस्थापनार्थं अपूर्वं प्रकल्प्य तद्वाक्यशेषादन्यपरत्वमिति चेन्न। '**यो वै रुद्रः स भगवान्**' इत्यादिना वाय्वादिसर्वदेवतात्मकत्वं शिवस्यैव **अथर्वशिरसि** श्रूयते। '**यो मां वेद स सर्वान् देवान् वेद**' इति स्वज्ञानात् स्वात्मसकलदेवताज्ञानं तत्रैव शिवेनोपपादितम्। अतस्सर्वफलदाता सर्वदेवतारूपः सर्वकर्माराध्यः परब्रह्म शिव एव। तथा **स्मृतौ**–

'यस्सर्वदेवताभक्त्या यजते सर्व[1]मार्गतः।
तदन्तर्यामिरूपेण फलं साम्बः प्रसीदति॥' इति।

**कृष्णगीतायां**–

'**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥**

---

[1] शास्त्र (ज)

स तया श्रद्धया युक्तः तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥
[1]'अहं हि सर्वयज्ञानां-भोक्ता च प्रभुरेव च ।'

इत्यादिना कृष्णोऽपि वामदेवादिवत् शिवभक्तत्वेन स्वान्तर्यामित्वेनाहंप्रत्ययस्फुरणरूप प्रत्यगात्माकारशिवभावनया सर्वमहमेवेत्युपदिष्टवान् । लोके राजभृत्योऽपि सर्वजनदत्तधनादिकं स्वद्रव्यवत्परिगृह्य तदन्तर्यामिराजसमर्पणं करोतीति दृष्टम् । तथा विष्ण्वादिनानादेवताराधनमपि तदन्तर्यामित्वेन शिवः परिगृह्य तत्तत्फलं प्रदास्यतीति सिद्धम् ।

इति श्रीमद्यतिव्रजपरिवृढ-श्रीपतिपण्डितभगवत्पादाचार्यस्वामिकृत-भेदाऽभेदात्मक-विशेषाद्वैत-सिद्धान्तव्यवस्थापक-वैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

## श्रीकरभाष्ये

उपासनाभिधानस्य तृतीयाध्यायस्य सन्ध्यादिदशाधिकरणावच्छिन्न-सन्ध्येसृष्टिराहहीत्यादिचत्वारिंशत्सूत्रात्मकः

## तृतीयाध्यायस्य द्वितीयः पादः समाप्तः

---

1 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ।
..................यान्ति मद्याजिनोऽपि माम् ॥'

इति कृष्णोऽपि वामदेवादिवत् । (न)।

## अथ श्रीकरभाष्ये तृतीयाध्यायस्य तृतीयः पादः

### सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

### परमशिवोपासनगुणाः उपन्यस्यन्ते

पूर्वपादे तत्पदार्थभूतपरशिवब्रह्मोपासनेन त्वंपदार्थभूतपशुरूपजीवस्य पाशनिवृत्तिपूर्वक-पशुपतिप्राप्तिरूपपरमपुरुषार्थफलप्रपञ्चने तदुपासनं कथमित्याकाङ्क्षायां **तृतीयपाद** आरभ्यते। कैश्चिदत्र सगुणेश्वरस्य मिथ्याभूतत्वात् तदुपासनेन नित्य-निर्गुण-निरवयव-परिपूर्णपरब्रह्म-साक्षात्कारायोगात् **'न कुर्यान्निष्फलं कर्म'** इति **न्यायाच्च** सर्वपरिपूर्ण-निर्गुणब्रह्मसाक्षात्कार-हेतुभूततद्विधायकवेदान्तश्रवण-मननादिकमेव युक्तमित्याशङ्कायां पाकस्य वह्निवत्सगुणब्रह्मोपासनायोगे निर्गुण-ब्रह्मसाक्षात्कारायोगात् केवलवेदान्तश्रवणादेर्वैद्यशास्त्रादिश्रवणवदपुरुषार्थत्वात् श्रुतिनिष्ठ-सगुणब्रह्मोपासनविधायक-दहराद्युपासनादेव निरवयव-निर्गुण-षट्स्थलपरशिवब्रह्मसाक्षात्कार इत्युप-देशार्थं एतदधिकरणमाह—

### सर्वशाखाप्रतिपाद्यसजातीयशिवप्रधानदहराद्युपासननिरूपणम्

## ॥ १८१ ॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

**सर्ववेदान्तप्रत्ययं** सर्वशाखागतसर्वोपनिषत्प्रतिपाद्यं **दहरोपासन**मेकमेव। एवं सर्वशाखाप्रसिद्धं **वैश्वानरोपासन**मप्येकमेव। एवं **शाण्डिल्योपासन**मप्येकमेव। एवं **उपकोसलोपासन**मेकमेव। कुतः? ॥ **चोदनाद्यविशेषात्** ॥ चोद्यन्ते विधीयन्त इति व्युत्पत्त्या चोदनाशब्देन अग्निहोत्रादिकर्माण्युच्यन्ते। तथा च **चोदनाद्यविशेषात्** सगुणब्रह्मोपासनानामपि चोदनादिभिरग्निहोत्रादिकर्मभिस्सह **अविशेषात्** तुल्यत्वात्। तथापि सर्वशाखाप्रसिद्धाग्निहोत्राख्यं कर्म यथैकमेव, यथा ज्योतिष्टोमाख्यं कर्मैकं, यथा वाजपेयाख्यं

कर्म सर्वशाखाप्रतिपाद्यमेकमेव, एवं **सर्वशाखाप्रतिपाद्यं सजातीयशिवप्रधानदहराद्युपासन-मेकमेवेति** सूत्रसूचितसूक्ष्मार्थः ।

इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय विद्याभेदाऽभेदचिन्ता प्रस्तूयते । प्रथमं तावदेकस्याः वैश्वानरविद्यादिकायाः अनेकशाखासु श्रूयमाणायाः किमेकविद्यात्वं ? उत विद्याभेदः ? इति सन्दिह्यते । शाखाभेदतया प्रकरणभेदात् सर्वशाखासु परब्रह्मणः शिवस्य उपासनायां भेद एव । **तैत्तिरीयके– 'दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसँस्थम् । तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्'** । इत्यत्र दहराकाशे शिवोपासनमुपदिश्यते । **छान्दोग्ये– 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम् । तद्वाव विजिज्ञासितव्यम् ॥'** इत्यादिना दहराकाशस्यैव उपासितव्यत्वेन व्यपदेशादन्योन्य विरोधो दृश्यते ।

## शिरोव्रतम्

किञ्च– **तैत्तिरीयके– 'ऋतँ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं'** इत्यादिना दहरोपास्यपरब्रह्मणः कृष्णपिङ्गळत्वादयो धर्माः, **छान्दोग्ये– 'एष त आत्मापहतपाप्मा'** इत्यादिना अपहतपाप्मत्वादयो गुणास्तस्य श्रूयन्ते । तस्मात्तत्र तत्र गुणभेददर्शनादुपासन-भेदो ह्यर्थादुपदिश्यते । तथा– **छान्दोग्ये– पञ्चाग्नि-शाण्डिल्य-उपकोसल-उद्गीथ-प्रतर्दनादि-विद्यासु** तत्र तत्र भेदो बहुधा प्रपञ्चितः । **मुण्डकशाखायां– शिरोव्रताख्यो धर्मः'** श्रूयते । **'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्'** इति शिरोव्रतवतां आथर्वणिकानामेव विद्योपदेशनियम उच्यते । तस्माद्धर्मभेदादुपासनाभेदः । ततः शाखादिभेदादुपासनानांभेद इति प्राप्ते प्रचक्ष्महे–

" सर्ववेदान्तप्रत्ययमेकमुपासनमिति ; कुतः ? **चोदनाद्यविशेषात्** । चोदना तावत् **'उपसीत', –'विद्यात्'** इत्येवंजातीयको धात्वर्थविशेषविधिः । आदिशब्देन **'एकं वा संयोगरूपचोदनाख्याऽविशेषात्'** इति कर्मकाण्डशाखान्तराधिकरण-सूत्रोक्ताःसंयोग-रूप-आख्याः गृह्यन्ते । चोदनादीनामविशेषात् सैवेयं विद्येति शाखान्तरे प्रत्यभिज्ञायते । तथा हि– **छान्दोग्यवाजसनेयकयोः', 'वैश्वानरमुपास्ते'** इति चोदना तावदेकरूपा ।" तथा **'तस्मिन् यदन्तस्तदन्वेष्टितव्यम्' इति छान्दोग्ये** दहरविद्याविधिः **'तस्मिन् यदन्तस्तदुपासितव्यम्' इति तैत्तिरीयके** । तत्र स्थानाद्य

भेदात् उपास्यब्रह्मणोऽप्यभेदात् उभयत्रोक्तानां धर्माणामविरोधात् विद्यैक्यमेव। छान्दोग्य-बृहदारण्यशाखयोः। द्युः-पर्जन्य-पृथिवी-पुरुष-योषिदाख्यस्य अग्निपञ्चकस्य वेद्यतया यावत्स्वरूपमाम्नातं तदुभयत्रापि समानम्। तस्मान्न विद्याभेद इति सिद्धम्।

शाखाभेदेन गुणभेदस्य श्रूयमाणत्वात् नानाशाखागतानां सजातीयोपासनानां ऐक्य-मनुपपन्नमित्याशङ्कायामाह—

## ॥ १८२ ॥ भेदान्नेति चैदेकस्यामपि ॥ २ ॥

"अविशेषपुनःश्रुत्या प्रकरणान्तराच्च विधेयभेदान्न विध्यैक्यं इति चेत्—एकस्यामपि विद्यायां प्रतिपत्तृभेदात्[1] पुनः श्रुतिः प्रकरणान्तरञ्च उपपद्यते। अत्र ह्येकस्मिन् प्रतिपत्तरि पुनः श्रुतिः प्रकरणान्तरञ्च विद्यते; तत्रान्यथानुपपत्त्या विधेयभेदात् विद्याभेदः। प्रतिपत्तृभेदे तु तत्प्रतिपत्त्यर्थतया पुनः श्रुत्याद्युपपत्तेस्तत्र न विधेयांतरसम्भवः"। तस्मादेवं नानाशाखागतानां सजातीयोपासनानां परमशिवविषयाणां एकत्वमेव उपदिश्यत इति निर्णीयते।

"यच्चोक्तं शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियमदर्शनात् विद्याभेदः प्रतीयत इति तत्राह—"

### शिरोव्रतस्वरूपनिरूपणम्

## स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥३॥

"नैतदस्ति— शिरोव्रतोपदेशनियमदर्शनं विद्याभेदं द्योतयतीति; शिरोव्रतस्य विद्याङ्ग-त्वाभावात्, स्वाध्यायस्य तथात्वं सिध्यर्थ— 'तज्जन्यसंस्कारभाक्त्वसिध्यर्थं हि शिरोव्रतोप-देशनियमः न विद्यायाः। कुत एतत्? 'नैतदचीर्णव्रतोऽधीते' इति तस्य अध्ययन-संयोगात्; समाचारे अधिकाराच्च समाचाराख्ये ग्रन्थे 'इदमपि वेदव्रतेन व्याख्यातं' इत्यतिदेशात्। 'तेषामेवैतां ब्रह्मविद्यां वदेत' इत्यत्र वेदविद्यामित्यर्थः। ॥ सववच्च तन्नियमः॥ यथा हि सवहोमाः सप्तसूर्यादयः शतौदनपर्यन्ता आथर्वणिकैकाग्निसम्बन्धिनः

---

[1] प्रतिपत्त्यभेदात्पुनः (ज). प्रतिपत्तृभेदः तत्तच्छाखाध्येतृपुरुषभेदः.

तत्रैव भवन्ति, न त्रेताग्निषु :'' '**तेषामेवैतां ब्रह्मविद्यां वदेत**' इत्याथर्वणे शिरोव्रतस्यापि तत्परत्वनिर्देशान्न विद्याभेदो व्यपदिश्यते ।

ननु यदि सकलशाखागतानां परशिवब्रह्मसजातीयोपासनानां ऐक्यमङ्गीक्रियते '**तद्गुपसंहारोऽर्थाभेदात्**' इति वक्ष्यमाण**सूत्रन्यायेन** सकलसजातीयोपासनाप्रकरणप्रतिपाद्यानां सत्यसङ्कल्पत्व--सर्वज्ञत्व-सर्वेश्वरत्व--त्रिलोचनत्व--नीलकण्ठत्व--उमापतित्व--कृष्णपिङ्गळत्वादिगुणानां मेळनरूप उपससंहारः [1]उपासकानां निर्णेतव्यः । एवं स्थिते सति एकैकस्य पुरुषस्य सकलशाखा-ध्ययनस्याशक्यत्वात् कथं सकलशाखाप्रतिपाद्यगुणमेळननिर्णय इति चेन्न । '**स्वाध्यायोऽध्येतव्यः**' इति श्रुतौ स्वस्य अध्यायः स्वाध्याय इति व्युत्पत्या स्वाध्यायशब्देन स्वशाखा उच्यते । तथा च **स्वाध्यायस्य तथात्वेन हि** '**समाचाराधिको नव**' इति **न्यायेन** अध्ययन-विधिप्रकरणे स्वाधिकारोपदेशादेकस्य पुरुषस्य सकलशाखाध्ययनाभावेऽपि सकलशाखाध्येतृभिः **भरद्वाज-अत्रि-गौतम-उपमन्यु-दधीचि-वामदेव-अगस्त्य-श्वेता**दिमहर्षिकृतग्रन्थात् नानाशाखा-गतानां अग्निहोत्रादिकर्माङ्गिनां मेळननिश्चयः, तद्वदुपासकानां सकलशाखाध्ययनसामर्थ्या-सम्भवेऽपि सकलशाखाध्येतृभिः '**वेमाराध्य-उद्भटाराध्य-मरुळसिद्ध-रेवणसिद्धाराध्यादिभि-र्महात्मभिः कृताद्वेदान्तभाष्यादिग्रन्थात्**' सकलशाखागतानां सत्यसङ्कल्पत्व-कृष्णपिङ्गळ-त्वादिगुणानां एकत्वनिश्चयो युक्त इत्युपदिश्यते ।

## परमशिवस्य दहरादिसकलविद्योपास्यत्वप्रतिपादनम्

**तैत्तिरीय-कैवल्या**दिनानाशाखागतानां उपासनानां सर्वज्ञैः **अगस्त्या**दिमहर्षिभिः एकत्वोपदेशादपि परस्परभेददर्शनात् कथमेकत्वमुपपन्नमित्याशङ्कायामाह--

## ॥ १८४ ॥ दर्शयति च ॥ ४ ॥

सर्ववेदान्तेषु परशिवोपासनस्य फलैक्याद्वैक्यं दर्शयति च । कैवल्ये--'**हृत्पुण्डरीकं........विशदं विशोकं**' इत्यारभ्य '**उमासहायं........तमसः परस्तात्**' इति, **तैत्तिरीयके--** '**ऋतं सत्यं परं ब्रह्म**' इति दहरोपास्यपरमपुरुषस्य शिवस्य मूर्तत्वञ्चउदिष्टम् । '**अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म**' इत्यारभ्य

[1] उपासनानां (ग.)

'**तस्मिन्यदन्तस्तदन्वेष्टव्यम्**'। इत्युक्त्वा किं तत्र विद्यते यदन्वेष्टितव्यमिति प्रश्नपूर्वकं अपहतपाप्मत्वादिगुणाष्टकविशिष्टः परब्रह्म शिवस्तस्मिन् उपास्य इत्युक्तम्।

किञ्च– **तैत्तिरीयके** च छान्दोग्यस्थं प्रतिनिर्देशमुपजीव्य '**तत्रापि दहरं**……… **तदुपासितव्यम्**' इति गुणाष्टकविशिष्टस्य परब्रह्मणश्शिवस्योपासनमुच्यते। तस्मात्सर्वत्र विद्यैक्यं गुणोपसंहारादेव उपपद्यते।

तदेव **शाखान्तराधिकरणन्यायसिद्धं** विद्यैक्यं स्थिरीकृत्य तत्प्रयोजनं किमित्याकाङ्क्षायां तत्राह–

## ॥ १८५ ॥ उपसंहारोऽर्थाभेदात् विधिशेषवत् समाने च ॥ ५ ॥

"एवं सर्ववेदान्तेषु समाने सत्युपासने, वेदान्तान्तराम्नातानां गुणानां वेदान्तान्तरे **उपसंहारः** कर्तव्यः। कुतः? **विधिशेषवत् अर्थाभेदात्**। यथैकस्मिन् वेदान्ते श्रुतो वैश्वानर-दहरादिविधिशेषो गुणः तद्विद्यासम्बन्धात् तदुपकाररूपप्रयोजनसिध्यर्थमनुष्ठीयते, तथा वेदान्तान्तरोदितोऽपि तद्विद्यासम्बन्धित्वेन तदुपकाराविशेषात् उपसंहर्तव्य" इत्युपदिश्यते। **चशब्दोऽवधारणे** निर्दिष्टः।

### उपासनायाः प्रयोजनं दर्शयति

ननु **छान्दोग्ये** दहरविद्यायां अपहतपाप्मत्वादयो धर्माः श्रूयन्ते। तद्वत्तैत्तिरीयशाखायामदर्शनात् **तैत्तिरीयनिष्ठकृष्णपिङ्गळत्वादिगुणानां** **छान्दोग्ये** यत्रकुत्राप्यदर्शनात् **गुणोपसंहारन्यायेन** सर्वेषां वेदान्तानां समन्वयः कथमुपपद्यत इति चेन्न। सर्वत्र **तैत्तिरीय-छान्दोग्यादिश्रुतिनिष्ठानां** दहराद्युपासनधर्माणां अपहतपाप्मत्वादीनां तुल्यत्वेन **व्यपदेशादुपसंहारन्यायो** युक्तः। विद्योपकाररूपसामर्थ्यादैकत्वात् यथैकविधिशेषतया विहितानामङ्गानामग्निहोत्रादिषु तथैव चोदनादिभिस्समाने दहराद्युपासनगुणानां सत्वात्समञ्जसम्।

किञ्च– नानाशाखागतपरमेश्वरोपासनप्रकरणप्रतिपाद्यानां सत्यसङ्कल्पत्वादिगुणानां सर्वत्र द्योतनात् **उपसंहारो** न विरुध्यते। अर्थभेदान्नानाशाखागतगुणविशिष्टसजातीयोपासनायाः परशिवब्रह्मलोकप्राप्तिलक्षणफलस्य अभेदात् एकत्वमर्थात्सिद्धम्। तथा च परशिवब्रह्मलोकप्राप्तिलक्षणैकफलसाधनभूतानां नानाशाखागतसजातीयोपासनसम्बन्धिनां सत्यसङ्कल्पत्वादिगुणानां

मेळनरूपोपसंहारः कर्तव्यः । यद्यप्यस्मिन् सूत्रे गुणोपसंहारकथनात् एकस्य पुरुषस्य सर्वशाखाध्ययनासम्भवात्कथं नानाशाखागतगुणोपसंहारशङ्का पश्चात्परिहर्तव्या । तथाप्युत्तरत्रसूत्रे वक्ष्यमाणं गुणोपसंहारं सिद्धवत्कृत्य सकलशाखाध्ययनायोगात् गुणोपसंहारो नोपदिश्यत इति शङ्का पूर्वं निरस्ता ।

---

## अन्यथात्वाधिकरणम् ॥ २ ॥

'**भेदान्नेति चेदेकस्यां**' इति सूत्रेण भेदात्सजातीयोपासनानां भिन्नशाखागतानां भिन्नार्थमाशङ्क्य निराकृतम्; तथापि इदानीं '**उपासीत**' इत्यादिशब्दानां तत्र भिन्नत्वोपदेशात् कथमभेदस्सम्भवतीत्याशङ्कायामधिकरणान्तरेणाह—

**फलैकत्वादत्रापि विद्यैक्यं दर्शयति**

## ॥ १८३ ॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

**शब्दात्**— 'उपासीतेति शब्दानां नानाशाखासु भिन्नत्वावगमात् **अन्यथात्वं** परस्परशाखागतानां परशिवब्रह्मोपासनवाक्यानां परस्परभिन्नत्वमेवोपदिश्यते। '**समिधो यजति**', '**इडो यजति**' इत्यादिषु यजतिशब्दानां भिन्नत्वेन यागभेदाङ्गीकारादिति चेन्न। ॥ **अविशेषात्** ॥ शब्दभेदस्यावगमेऽपि गुणविशेषाभावात् '**समिधो यजति**' इत्यादिवाक्येष्वपि समिधादिदेवताभेदादेव यागभेदः; न तु यजतिशब्दानां भिन्नत्वमात्रेण। तथा च सजातीयोपासनानुपूर्व्युक्तरीत्या गुणभेदाभावात् भिन्नशाखागतानां सजातीयोपासनानां न भेद इति सूत्रसूचितसूक्ष्मार्थः।

पूर्वाधिकरणे जीवानां पाशनिवृत्तिपूर्वकपरशिवब्रह्मप्राप्तिलक्षण**तैत्तिरीय-छान्दोग्य-कैवल्यादि**शाखापठितदहरविद्यामुपदिश्य तत्र नानाशाखागतनानात्वावभासकश्रुतीनां कथमेकत्वमित्याक्षिप्य फलैकत्वादेकत्वप्रसाधने **उद्गीथ**विद्यायां **छान्दोग्ये** परस्परभेदावगमात् कथमेकत्वमिति पूर्वपक्षे फलैकत्वादत्रापि विद्यैक्यं दर्शयति।

किञ्च— प्रत्यभिज्ञाहेतुभूतचोदनाद्यविशेषोऽस्ति न वेति निरूप्य निर्णीयते। अस्ति उद्गीथविद्या वाजिनां छन्दोगानां च। वाजिनां तावत् '**द्वये ह प्राजापत्या देवाश्चासुराश्च**' इत्यारभ्य '**ते ह देवा ऊचुः हन्तासुरानत्यज्ञ उद्गीथेनात्ययाम**' इत्युद्गीथेनासुरविध्वंसनं प्रतिज्ञाय उद्गीथे वागादिमनःपर्यन्तदृष्ट्या असुरैरभिभवमुक्त्वा '**अथ ह इममासन्यं प्राणमूचुः**' इत्यादिना उद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा '**भवत्यात्मना पराऽस्य द्विषन् भ्रातृव्यो भवति य एवं वेद**' इति शत्रुपराजयफलाय उद्गीथे प्राणदृष्टिर्विहिता। एवं छन्दोगानामपि '**देवासुरा ह वै यत्र संयेतिरे**' इत्यारभ्य '**तद्धि देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः**' इत्युद्गीथेनासुरपराभवं प्रतिज्ञाय तद्वदेवोद्गीथे वागादिदृष्टौ दोषमभिधाय '**अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे**' इत्यादिना उद्गीथे [1]प्राणदृष्ट्या असुरपराभवमुक्त्वा। '**यथाश्मानमाखणमृत्वा(क्षि)विध्वंसते एवं हैव स विध्वंसते; य एवं विदि पापं वा [2]कामयते**' इति शत्रुपराभवाय उद्गीथे प्राणदृष्टिर्विहिता। वेदनविषयविधिप्रत्ययाश्रवणेऽपि फलसाधनत्वश्रवणाद्वेदनविषयो विधिः कल्प्यते। उद्गीथविद्यायाः क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलत्वेऽपि **आर्थवादिकमपि** फलं तदविरुद्धं ग्राह्यमेवेति प्रतिपादितम्। तत्र संशीय्यते। किमत्र विद्यैक्यं उत नेति।

'**य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते**', '**हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य**', '**यथा कप्यासं पुण्डरीकमेवमक्षिणी, तस्योदिति नाम, स एष सर्वेभ्यः पाप्मभ्यः उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद। तस्यर्क्साम च गेष्णौ। अथ एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्साम तदुक्थ्यं तद्यजुस्तद्ब्रह्म। तस्यैतस्य तदेव रूपम्। यदमुष्य रूपम्। यावमुष्य गेष्णौ तौ गेष्णौ। यन्नाम तन्नाम।**' इति उद्गीथविद्यायां सूर्यमण्डलान्तर्वर्तिनः पुरुषस्य हिरण्मयत्वादिकं प्रदर्श्य '**कप्यासं पुण्डरीकामेवमक्षिणी तस्योदिति नाम**' इति वाक्ये तस्याक्षिद्वयत्वव्यपदेशात्, '**ध्येयस्सदा सवितृमण्डलमध्यवर्ती नारायणः**' इति स्मृतिषु तथोपदेशान्नारायण इति स्पष्टमुपदिष्टम्। '**एषोऽन्तरादित्ये हिरण्मयः पुरुषः**' इत्यारभ्य '**नमो हिरण्यबाहवे हिरण्यवर्णाय**' इति तैत्तिरीयके भानुमण्डलान्तर्वर्तिनः पुरुषस्य हिरण्मयत्वाम्बिकापतित्वादिपरशिवासाधारणधर्मव्यवस्थापनात्।

---

[1] प्राणदृष्टौ (ज). [2] कामयत (ज).

**'सौरमण्डलमध्यस्थं साम्बं संसारभेषजम् ।**
**नीलग्रीवं विरूपाक्षं विष्णुवल्लभमव्ययम् ॥'**

इति स्मृतौ च तस्य सदाशिवपरत्वं निर्दिष्टम् । तस्मात् विद्यैक्यं कदाचिन्नोपपद्यत इति प्राप्ते अत्रोच्यते ।

प्रथमाध्यायस्य प्रथमपादे अन्तस्तद्धर्मोपदेशाधिकरणे छान्दोग्य-तैत्तिरीयवाक्ययोरन्योन्यवैरुध्यं निरस्तम् ।

किञ्च- उभयत्रोद्गीथस्यैवाध्यस्तप्राणभावस्योपास्यत्वश्रवणात् चोदनाद्यविशेषात् फलसंयोगस्तावत् शत्रुपरिभवरूपो न विशिष्यते । रूपमप्यध्यस्त प्राणभावोद्गीथाख्योपास्यैकत्वादिविशिष्टम् । चोदना च विविधात्वर्थगताऽविशिष्टा । आख्या चोद्गीथविद्येत्यविशिष्टा । अत्र राद्धान्तितच्छायया परिचोद्य परिहरति ॥ **अन्यथात्वमित्यादिना** ॥ यदुक्तं **विद्यैक्यमिति** तन्नोपपद्यते, रूपभेदात् रूपान्यथात्वं हि शब्दादेव प्रतीयते । **वाजसनेयके** हि- **'अथ ह इममासन्य प्राणमूचुस्त्वं न उद्गायेति, तथेति तेभ्य एव प्राण उदगायत्'** इत्युत्थानस्य कर्तरि प्राणदृष्ट्या असुरपराभवमुक्त्वा **'य एवं वेदेति'**। कर्तर्येव प्राणदृष्टिरेवं शब्दादवगम्यते । छान्दोग्ये- **'अथ ह य एवायं मुख्यप्राणस्तमुद्गीथमुपासांचक्रिरे'** इत्युद्गानस्य कर्मण्युद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा । **'य एवं विदि पापं कामयते'** इत्येवंशब्दात् कर्मण्येवोद्गीथे प्राणदृष्टिर्विहिता । अत एकत्र कर्तरि प्राणदृष्टिशब्दात्, अन्यत्र कर्मणि प्राणदृष्टिशब्दाच्च रूपान्यथात्वं स्पष्टम् । रूपान्यथात्वे च विधेयभेदे सति केवलचोदनाद्यविशेषोऽकिञ्चित्कर इति विद्याभेद इति चेत्तन्न ॥ **अविशेषात्** ॥ अविशेषेण ह्युभयत्र उद्गीथसाधनकपरपरिभव उपक्रमे प्रतीयते । **वाजसनेयके- 'ते ह देवा ऊचुर्हन्ताऽसुरान्यज्ञ उद्गीथेनात्ययाम'** इत्युपक्रमे श्रूयते । **छान्दोग्येऽपि- 'तद्धि देवा उद्गीथमाजुह्रुरनेनैनानभिहनिष्याम"** इति । अत उपक्रमाविरोधाय **'तेभ्य एव प्राण उदगायत्'** इत्यध्यस्तप्राणभावोद्गीथोद्गानकर्मभूत एव पाकादिष्वोदनादिवत् सौकर्यातिशयविवक्षया कर्तृत्वेनोच्यते । अन्यथोपक्रमगत उद्गीथशब्दः कर्तरि लाक्षणिकः स्यात् । अतो विद्यैक्यम् ।

## दहरादिविद्यानां फलैक्यात् विद्यैक्यम्

ननु तद्वैकशाखागतानां भिन्नशाखागतानामपि परशिवब्रह्मलोकप्राप्तिरूपैकफलसाध्यानां **दहर-शाण्डिल्य-उपकोसल**प्रभृतीनां मनःप्रधानभूतान्तरङ्गोपासनात्मककर्मणामप्यभेदाङ्गीकारे बाह्य-कर्मणामपि सर्वेषां मनःप्राधान्यात् '**अहरहः सन्ध्यामुपासीत**', '**ज्योतिष्टोमेन स्वर्ग-कामो यजेत**' इत्यादिकर्मकाण्डप्रकरणपठितज्योतिष्टोमादिकर्मणामपि परशिवब्रह्मलोकप्राप्ति-फलमुपपद्येत । तथाचेत्तत्तत्कर्मफलविधायकशास्त्रवैरुध्यं दुर्वारमित्याशङ्कायामाह—

## ॥ १८७ ॥ न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ७ ॥

**कर्मकाण्ड**प्रकरणपठितबिजातीयोपासनानां ऐक्यं नास्त्येव । कुतः ? **प्रकरणभेदात्** कर्म-ब्रह्मकाण्डयोः प्रकरणयोः परस्परभिन्नत्वात् । '**ज्योतिष्टोमेन स्वर्गकामो यजेत**' इत्यादिश्रुतीनां अभ्युदयफलप्राप्त्युपदेशात् '**ब्रह्म वेद, ब्रह्मैव भवति**' इत्यादिश्रुतिषु ब्रह्मोपासनानां अपुनरावृत्तिनिःश्रेयसफलव्यवस्थापनात् **दहर-शाण्डिल्य-उपकोसलादि**विद्यानामिव विद्यैक्यस्यासम्भवात् भेद एवोपदिश्यते । तत्र दृष्टान्तमाह— ॥ **परो वरीयस्त्वादिवत्** ॥ यथा **अग्निहोत्र-दर्शपूर्णमास-ज्योतिष्टोम-वाजपेया**नां धर्मप्रकरणपठितानां पूर्वपूर्वापेक्षया तदुत्तरोत्तरमुत्कृष्टानां भेदावगमात् धर्मप्रकरणपठित-ब्रह्मप्रकरणपठितमलिनवासना-शुद्धवासनाकृत-कर्मणां भिन्नत्वे किं वक्तव्यम् । '**अथ यदतः परो दिवो ज्योतिर्दीप्यते**', '**अथ एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते**', '**अथ यदिदमस्मिन् ब्रह्मपुरे दहरपुण्डरीकं वेश्म**' इत्यादिषु ब्रह्मप्रकरणभेदद्योतकैः अथशब्दादिभिः परशिवब्रह्मोपासनानां अन्योन्यनिरपेक्षतया प्रत्येकं ब्रह्मप्राप्तिसाधनत्वावगमेऽपि तद्वद्भिन्नत्वं नोपपद्यते फलैक्यात् ; यथा **दर्शपूर्णमास-ज्योतिष्टोम-वाजपेय-पौण्डरीका**दिकर्मणां स्वातन्त्र्येऽपि स्वर्गलोकप्राप्ति-फलैकत्वादभेदसिद्धिः तद्वत्सर्वदा ब्रह्मप्रकरणपठितानामेव साक्षात् ब्रह्मप्राप्तिहेतुत्वम् । '**सर्वे वेदा यत्पदमामनन्ति**' इति श्रुतिसत्त्वेऽपि निष्कामनया परमेश्वरार्पितज्योतिष्टोमादि-कर्मणां चित्तशुद्धिद्वारा परम्परया ब्रह्मप्राप्तिहेतुत्वं निश्चीयते ।

किञ्च— **ओमित्येतदक्षरमुद्गीथमुपासीत**' इति प्रकृतमुद्गीथावयवं प्रणवं प्रस्तुत्य '**एतस्य वा अक्षरस्योपव्याख्यानं भवति । देवासुरा ह वै यत्र संयेतिरे**'

इत्यारभ्य '**अथ ह य एवायं मुख्यप्राणस्तमुद्गीथमुपासाञ्चक्रिरे**' इत्युद्गीथावयवभूतप्रणवविषयमुपासनं **छन्दोगा** अधीयते। **वाजिनस्तु** तादृशप्राचीनप्रकरणाभावात् '**हन्तासुरान्यज्ञ उद्गीथेनात्ययाम**' इति कृत्यमुद्गीथं प्रस्तुत्य '**अथ ह इमामासन्यं प्राणमूचुस्त्वं न उद्गाय**' इत्यादिकृत्योद्गीथविषयमधीयते। अतः प्रकरणभेदेन विधेयभेदः; विधेयभेदे च रूपभेद इति न विद्यैक्यम्। '**अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे**' इति पूर्वप्रकृतउद्गीथावयवभूतः प्रणव एवाध्यस्तप्राणभावः छन्दोगानामुपास्यः। वाजिनां तु '**कृत्स्नस्योद्गीथस्य कर्तोद्गाता प्राणदृष्टयोपास्यः**' इति। '**अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति. तथेति तेभ्य एष प्राण उदगायत्**' इत्युद्गातरि प्राणाध्यासं निर्दिश्य '**य एवं वेद**' इत्युद्गातैवाध्यस्तप्राणभाव उपास्यो विधीयते। अतश्च रूपभेदः। **न चोद्गातुरुपास्ये विहिते** '**उद्गीथेन अत्ययाम**' **इत्याख्यायिकोपक्रमविरोधश्शङ्कनीयः**; उद्गातुरुपासने उद्गीथस्योद्गानकर्मभूतस्य अवश्यापेक्षितत्वात् तस्यापि परपरिभवाख्यफलं प्रति हेतुत्वात्। अतो रूपभेदाद्विद्याभेद इति चोदनाद्यविशेषेऽपि न विद्यैक्यम्। यदेकस्यामपि शाखायां उद्गीथावयवभूते प्रणवे परात्मदृष्टिविधानसाम्येऽपि हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमर्थान्तरभूतम्। तस्मात् **विद्यैक्यमुपपन्नमिति** चेत्— उच्यते।

'**सर्वे वेदा यत्पदमामनन्ति**', '[1]**वेदैरनेकैरहमेव वेद्यः वेदान्तकृद्वेदविदेव चाहम्**', '**तं त्वौपनिषदं पुरुषं पृच्छामि**' इत्यादिषु सर्वेषु वेदान्तेषु उपास्योपासकादिभेदेन संसारदशायां भेदसाधनत्वेऽपि षड्विधतात्पर्यलिङ्गैः **षट्स्थलपरशिवब्रह्मण्येव** समन्वयसम्भवात् **दहर-शाण्डिल्यादिविद्यानां** जीवभावनिवृत्तिपूर्वकशिवत्वप्राप्तिरूपपरमपुरुषार्थफलैक्यात् विद्यैक्यमनिवार्यम्।

### निष्कामनया शिवार्पितधिया कृतानां ज्योतिष्टोमादीनां परम्परया ब्रह्मप्राप्तिः दहराद्युपासनानां तु साक्षात् ब्रह्मप्राप्तिहेतुत्वम्

ननु धर्मप्रकरणपठितपुरुषनिष्कामकृतज्योतिष्टोमादिपुण्यकर्मणां चित्तशुद्धिद्वारा श्रुतिस्मृत्यादिषु परम्परया मोक्षहेतुत्वव्यपदेशात् दहराद्युपासनानां ज्योतिष्टोमाद्युपासनानाञ्च मोक्षफलैकत्वादभिन्नत्वं कथमनुपपन्नमित्याशङ्कायामाह—

---

[1] वेदैश्च सर्वैरहमेव वेद्यो (ज)·

## ॥ १८८ ॥ संज्ञातश्चेत्तदुक्तम्, अस्ति तु तदपि ॥ ८ ॥

**संज्ञातः** भिन्नभिन्नसंज्ञावलात् **'विद्यां चाविद्यां च यस्तद्वेदोभयँ सः'**, **'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते'** इत्यादिश्रुतिषु,

'वर्णाश्रमोचितो धर्मः अविद्येति निरूप्यते ।
तया प्राचीनकर्माणि हित्वा ज्ञानं समश्नुते ॥

ज्ञानेन मुक्तिमाप्नोऽन्ते तस्मात्कर्म समभ्यसेत् ।
इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ॥

ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ।
स्वजातिविहितं धर्मं कुर्याद्वेदोदितं नरः ॥

स्वजातिविहितात् धर्मात् वेदस्मृत्युदितात्कृतात् ।
पुंसः पापनिवृत्तिस्स्यात्तया शुद्धिस्तु चेतसः ॥

चित्तशुध्या तु विश्वासः श्रुतिस्मृतिषु जायते ।
तस्माद्भक्तिर्भवेत्पुंसां शिवे परमकारणे ॥

भक्त्या जायेत सततं संसृतेर्दोषदर्शनम् ।
तस्मादिह परत्रापि भोगेषु विरतिर्भवेत् ॥

तया वेदान्तवाक्यार्थे शिवरूपप्रकाशनम् ।
सम्यक् ज्ञानं भवेत्तेन मुक्तिः पुंसो भवेत् ध्रुवम् ॥

तस्मान्माहेश्वरो विप्रः श्रुतिस्मृत्यागमोदितम् ।
वर्णाश्रमोचितं धर्मं प्राणत्यागेऽपि न त्यजेत् ॥'

इत्यादिस्मृतिपुराणादिष्वपि धर्मस्य ब्रह्मज्ञानपूर्ववृत्तत्वोपदेशात् दहर-शाण्डिल्याद्युपासनवत् ज्योतिष्टोमाद्युपासनानामपि तदुक्तं विद्यैक्यमुक्तमिति चेत्तदप्यस्ति तु। 'सत्यं ज्ञानमनन्तं ब्रह्म', 'यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह ॥

'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।
परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ॥

वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयश्शुद्धसत्त्वाः ।
ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥'

इत्यादिश्रुतिषु दहर-शाण्डिल्यादिविद्यानामिव ज्योतिष्टोमादीनां साक्षाद्ब्रह्मप्राप्तिव्यपदेशाऽदर्शनात् बहुजन्मकृतपुण्यफलेन चित्तशुद्धिद्वारा भक्ति-वैराग्य-शम-दमादिपरम्परया दहराद्युपासनाहेतुभूतत्वेऽपि दहराद्युपासनानामिव साक्षाद्ब्रह्मप्राप्तिहेतुत्वाऽसम्भवात् 'विद्यां चाविद्यां च' इति श्रुतौ नाममात्रेण घटपटवत्परस्परवैलक्षण्योपदेशात्सर्वदा विद्यारूपदहराद्युपासनानां अविद्यात्मकज्योतिष्टोमादिकर्मणां च अभेदः सर्वथा अनुपपन्नः ।

## पुण्यकर्मणामावश्यकत्वम्

ननु सन्ध्यावन्दन-ज्योतिष्टोमादिकर्मणां ब्रह्मप्राप्तिरूपफलायोगात्, दहरादिविद्यानां तत्फलहेतुत्वदर्शनात् विदुषामविदुषामपि सन्ध्यावन्दनादिकर्मणामप्रसक्तिः दोषप्रसक्तिश्च प्रसज्येतेत्याशङ्क्य तत्राह—

## ॥ १८९ ॥ व्याप्तेश्च समञ्जसम् ॥ ९ ॥

॥ व्याप्तेश्चेति ॥ 'धर्मेण पापमपनुदति' इत्यादिश्रुतिस्मृत्यादिषु निष्कामतया शिवार्पणकृतसन्ध्यावन्दनादिपुण्यकर्मणां पापनिवृत्तिद्वारा परम्परया स्वाभाविकजीवत्वनिवृत्तिपूर्वकशिवत्वप्राप्तिरूप-मोक्षफले व्यापकत्वाच्च समञ्जसं अविदुषां चित्तशुद्धिद्वारा मायापाशनिवृत्तिपूर्वकनित्यानन्दात्मकसालोक्यादिमोक्षसिद्ध्यर्थं विदुषां लोकदूषणनिवृत्तिपूर्वकमूढतारणार्थञ्च

सन्ध्यावन्दनादिनित्यनैमित्तिकादिपुण्यकर्माचरणं श्रुतिस्मृतिपुराणागमेषु संस्थापनात् समञ्जसम्। एवं 'विद्वानग्निहोत्रं जुहुयात्' इत्यादिश्रुतिषु 'नित्यनैमित्तिकान्येव कुर्वतो दुरितक्षयः'।

'सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्याद्विद्वांस्तथाऽसक्तः चिकीर्षुर्लोकसंग्रहम्॥

आचारहीनः पुरुषो लोके भवति निन्दितः।
तस्मादाचारवान् ज्ञानी भवेदादेहपातनात्॥'

इति श्रुतिस्मृतिपुराणागमादिषु बहुधा प्रपञ्चितत्वात् सर्वेषां सन्ध्यावन्दनादिपुण्यकर्मणां आवश्यकत्वं सिद्धम्।

---

## सर्वाभेदाधिकरणम् ॥ ३ ॥

### न चात्र विद्याभेदः शिवाधिष्ठानत्वात् सर्वत्रः

पूर्वं मुमुक्षूणां निरुपम-नित्यकल्याण-निरतिशयानन्दकन्द-निर्वाणरूपपरमपुरुषार्थफलसिध्यर्थं उमापतेः परब्रह्मणः शिवस्य दहरोपासनं प्रणवार्थानुसन्धानसामरस्योद्गीथाद्युपासनञ्च प्रसाध्य तत्र सर्वेषां दहराद्युपासनानां गुणधर्मप्रकरणभेदात् भिन्नभिन्नत्वेन प्रतीयमानत्वेऽपि तत्प्राप्ति-रूपफलैक्यादेकत्वस्य धर्मप्रकरणपठितसन्ध्यावन्दादीनां सर्वेषां धर्माणां परम्परया तत्प्राप्ति-हेतुत्वस्य च व्यवस्थापने प्राणोपासनस्य सर्वाधिक्येन प्रतीयमानत्वात्तस्य नानाशाखासु भिन्नभिन्नत्वेन द्योतनाच्च कथं ब्रह्मणि समन्वय इत्याशङ्कायां अधिकरणान्तरमाह—

## ॥ १९० ॥ सर्वाभेदादन्यत्रेमे ॥१० ॥

"छान्दोग्य-वाजसनेयकयोः प्राणविद्या प्रस्तूयते । **'यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद, ज्येष्ठश्च श्रेष्ठश्च भवति', 'प्राणो ह वै ज्येष्ठश्च श्रेष्ठश्च'** इत्यादि । तत्र ज्यैष्ठ्यश्रैष्ठ्यगुणकं प्राणमुपास्यं प्रतिपाद्य, वाक्चक्षुःश्रोत्रमनस्सु वशिष्ठत्व-प्रतिष्ठात्व-सम्पत्त्वाय तनत्वाख्यान् गुणान् प्रतिपाद्य, वागादीनां देहस्य च प्राणायत्तस्थितित्वेन तदायत्त तत्तत्कार्यत्वेन च प्राणस्य श्रैष्ठ्यं प्रतिपाद्य वागादिसम्बन्धितया श्रुतान् वसिष्ठत्वादीन् गुणांश्च प्राणसम्बन्धितया प्रतिपादयति । एवं छान्दोग्य-वाजसनेयकयोर्ज्यैष्ठ्यश्रैष्ठ्यगुणको-वसिष्ठत्वादिगुणकश्च प्राण उपास्यः [1]प्रतीयते । कौषीतकिनान्तु प्राणविद्यायां तथैव ज्यैष्ठ्यश्रैष्ठ्यगुणकः प्राण उपास्यः प्रतिपादितः, न पुनर्वसिष्ठत्वादयो वागादिसम्बन्धिनो गुणाः प्राणसम्बन्धितया प्रतिपादिताः । तत्र **संशयः**— किमत्र विद्या भिद्यते ; उत न इति ।

---

[1] प्रतिपाद्यते (ग A).

किं युक्तम्? भिद्यत इति। कुतः? रूपभेदात्। यद्यप्युभयत्र प्राण एव ज्यैष्ठ्य-श्रैष्ठ्यगुणक उपास्यः; तथाप्येकत्र वसिष्ठत्वादिभिरपि गुणैर्युक्तः प्राण उपास्यः प्रतीयते; इतरत्र तु तद्विधुर इत्युपास्यरूपभेदात् विद्याभेदः। इति प्राप्ते प्रचक्ष्महे—

॥ **सर्वाभेदादन्यत्रेमे** ॥ नात्र विद्याभेदः, अन्यत्र— **कौषीतकिनां** प्राणविद्यायामपि इमे वसिष्ठत्वादयो गुणाः उपास्याः सन्ति। कुतः? **सर्वाभेदात्**— प्रतिज्ञातप्राणज्यैष्ठ्यश्रैष्ठ्योपपादनप्रकारस्य सर्वस्य तत्राप्यभेदात्। तथा हि— **छन्दोग-वाजसनेयिनां** प्राणविद्यायां **'एता ह वै देवताः, अहं श्रेयसि व्यूदिरे'** **'अहं श्रेयसे विवदमानाः'** इति चोपक्रम्य वागाद्येकैकापक्रमणे [1]सर्वेषां सप्राणाना-मिन्द्रियाणां शरीरस्य च स्थितिं तत्तत्कार्यं चाविकलं प्रतिपाद्य, प्राणोत्क्रमणे सर्वेषां विशरणमकार्यकरत्वं चाभिधाय, सर्वेषां प्राणाधीनस्थितित्व-तदधीनकार्यत्वाभ्यां प्राणस्य [2]ज्यैष्ठ्यमुपपादितम्। एवमुपपादितं वागादिकार्यस्य **'प्राणाधीनत्वम्'**, **'अथ हैनं वागुवाच यदहं वसिष्ठाऽस्मि[3] त्वं तद्वसिष्ठोऽसि'** इत्यादिभिरनूद्यते। **कौषीतकिनां** प्राणविद्यायामपि प्राणज्यैष्ठ्यश्रैष्ठ्यप्रतिपादनाय वागादिषु वसिष्ठात्वादयः प्रतिपादिताः। **'अथ हेमा देवताः प्रजापतिं पितरमेत्याब्रुवन् को वै नः श्रेष्ठः?'** इत्यादिना वागादिगता गुणाः वागादयश्च देहश्च प्राणाधीना इति प्राणस्य ज्यैष्ठ्यमुपपादितम्। वागादिभिः स्वस्वगुणानां वसिष्ठत्वादीनां प्राणाधीनत्वानुवादमात्रन्तु न कृतम्। नैतावता रूपभेदः; वागादीनां वसिष्ठत्वादिगुणान्वितानां प्राणाधीनकार्यत्वोपपादनेनैव प्राणस्य वागादि-वसिष्ठत्वादिगुणहेतुत्वस्य सिद्धत्वात्। तदेव हि प्राणस्य वसिष्ठत्वादिगुणयोगित्वम्। अतोऽत्रापि वसिष्ठत्वादिगुणयोगात् प्राणो ज्येष्ठः प्रतिपन्न इति नास्ति विद्याभेदः।"

---

[1] सर्वेषा (ग A). [2] श्रैष्ठ्य (ग A). [3] वसिष्ठोऽस्मि

## आनन्दाद्यधिकरणम् ॥ ४ ॥

### परमशिवस्य ब्रह्मणः अनन्तकल्याणगुणविशिष्टत्वप्रतिपादनम्

'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः', 'स एव विष्णुस्स प्राणः स कालोऽग्निः स चन्द्रमाः', 'तत्प्राणेष्वन्तर्मनसो लिङ्गमाहुः', 'प्राणो ब्रह्म........ प्राण एव प्रज्ञात्मा' इत्यादिश्रुतिषु 'असावादित्यो ब्रह्म' इतिवत् शिवाधिष्ठानत्वेन शिवात्मकत्वेन प्राणोपासनोपन्यासात् प्राणात्मकत्वेन तदुपासनाविधीयताम्। तथापि प्राणात्मकत्वेन व्यपदेशस्य सर्वदेवताप्रधानस्य शिवस्य परब्रह्मणः गुणायोगे तदुपासनायोगात् किमनन्यसाधारणगुणास्सन्तीत्याशङ्कायां अधिकरणान्तरेण तस्यानन्तकल्याणगुणप्रपञ्चं दर्शयति–

## ॥ १९१ ॥ आनन्दादयः प्रधानस्य ॥ ११ ॥

पूर्वे "प्राणविद्याङ्गविषयमन्यदपि निरूपणमनन्तरमेव करिष्यते। यथा प्राणस्य वसिष्ठत्वाद्यनुसन्धानेन विना ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानानुपपत्तेरनुक्तानामपि वसिष्ठत्वादीनां कौषीतकिप्राणविद्यायां प्राप्तिः, तथा परशिवब्रह्मस्वरूपानुसन्धानं यैर्गुणैर्विना नोपपद्यते ते ब्रह्मविद्यासु सर्वास्वप्यनुसन्धेया इत्ययमर्थः प्रतिपाद्यते।"

'आनन्दो ब्रह्मेति व्यजानात्', 'ऋतं सत्यं परं ब्रह्म' इत्याद्येकैकशाखायां श्रूयमाणाः गुणाः **आनन्दादयः** आनन्दत्व-सत्यत्व-कृष्णपिङ्गळत्व-नित्यमुक्तत्व-शुद्धत्व-बुद्धत्वादयः सर्वासु शाखासु मूर्ताऽमूर्तात्मकैकब्रह्मविद्यायां उपसंहर्तव्याः। कुतः? ॥ **प्रधानस्य** ॥ 'यो देवानां प्रथमं पुरुपस्ताद्विश्वाधिको रुद्रो महर्षिः' इत्यादिश्रुतिसिद्धसर्वदेवताप्रधानस्य शिवस्य परब्रह्मणः सर्वास्वपि शाखासु मूर्ताऽमूर्तात्मकत्वेन

भेदव्यपदेशोऽपि तद्वदभेदोपदेशात् गुणैकत्वं न विरुध्यते। **'द्वेवाव ब्रह्मणो रूपे'** इत्यादिश्रुतिषु मूर्ताऽमूर्तगतधर्माणामेव अस्यैव शिवस्य निर्दिष्टत्वात् सर्वशाखागतानां मूर्ताऽमूर्तब्रह्मविषयाणां गुणानां तस्मिन्नेकस्मिन्नेव समन्वयो द्रष्टव्य इति सूत्रसूचित सूक्ष्मार्थः।

अभेदादिति शेषः। **'आनन्दो ह्यजरो ह्यमृत्युः'**, **'आनन्दमयो ह्यानन्दभुक्'** इत्यादिश्रुतिषु आनन्दादयो गुणाः परविद्यासु प्रधानस्य ब्रह्मणः श्रूयन्ते। तस्मादत्र ब्रह्मस्वरूपगुणानां सर्वासु परविद्यासूपसंहारोऽस्ति वा न वा? इति विचार्यते। अप्रकरणाधीतानां उपसंहारे प्रमाणाभावात् प्रकरणश्रुतानामेवोपसंहारः कर्तव्यः। ब्रह्मण-शिवस्यैकस्य आनन्दाद्यनेकगुणवैशिष्ट्ये नानात्वप्रसङ्गात् विशेषणानां विशेष्यबोधकत्वात् अथवा तत्रतत्रोक्तगुणमात्रेणतदुपासनसम्भवात् इति प्राप्तेऽभिधीयते।

**आनन्दादयः प्रधानस्य** अभेदात् प्रधानस्य गुणिनो ब्रह्मणः सर्वेषु उपासनेषु अभेदात् गुण्यपृथग्भावात् गुणानां सर्वत्रानन्दादयस्तद्गुणाः उपसंहर्तव्याः।

एवं तर्हि गुण्यपृथग्भावादेवानन्दादिवत् प्रियशिरस्त्वादयोऽपि **'तस्य प्रियमेव शिरः'** इत्यादौ ब्रह्मगुणत्वेन श्रुतास्सर्वत्र प्रसज्येरन् इत्याह–

## ॥ १९२ ॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

"परशिवब्रह्मस्वरूपगुणानां प्राप्तौ उच्यमानायां प्रियशिरस्त्वादीनामप्राप्तिः तेषां अब्रह्मगुणत्वात्। ब्रह्मणः पुरुषविधत्वरूपणमात्रान्तर्गतत्वात् प्रियशिरस्त्वादीनाम्। अन्यथा शिरःपक्षपुच्छाद्यवयवभेदे सति, ब्रह्मणोऽप्युपचयापचयौ प्रसज्येयाताम्। तथा च सति **'सत्यं ज्ञानमनन्तं ब्रह्म'** इत्युपक्रमवाक्यं विरुध्यते।"

**'तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः।**
**प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्मपुच्छं प्रतिष्ठा॥'**

इति तैत्तिरीयशाखायां प्रियशिरस्त्वादिगुणानां असन्दिग्धतया व्यपदेशात् गुणानामुपचयो बाहुल्यम्; गुणानामपचयो ह्यल्पत्वम्। एवं विधौ गुणोपचयापचयौ **हि** भेदे ह्युपास्ये

सगुणे ब्रह्मण्येव सम्भवतः। निर्गुणे निर्विशेषे ब्रह्मणि गुणबाहुल्यस्य सुतरामसम्भवात् सगुणब्रह्मण्येवोपास्योपासकत्वस्य प्रतिपाद्य-प्रतिपादकभावस्य च सम्भावात् सविशेषब्रह्मवादो युक्तः।

नन्वेवमेव ब्रह्मसम्बन्धिनां ऐश्वर्य-गाम्भीर्य-औदार्य-कारुण्यादीनां गुणानामनन्तानां गुण्यपृथक्स्थितत्वमात्रेण तत्र श्रुतीनामप्युपसंहारे सर्वे सर्वत्र प्रसज्येरन्; आनन्त्यादुपसंहार-शक्तिश्च स्यात्। तत्राह–

## ॥ १९३ ॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥

तुशब्दश्चोद्यं व्यावर्तयति। **इतरे तु** आनन्दादयः **अर्थसामान्यात्** सर्वत्रानुवर्तन्ते येत्वर्थसमानाः अर्थस्वरूपनिरूपणधर्मत्वेन अर्थप्रतीत्यनुबन्धिनः, तेऽर्थस्वरूपवत् सर्वत्रानुवर्तन्ते। ते च गुणाः सत्यज्ञानानन्दामलत्वानन्तत्वानि। '**यतो वा इमानि**' इत्यादिना जगत्कारणतयोपलक्षितं ब्रह्म '**सत्यं ज्ञानं**', '**आनन्दो ब्रह्म**' इत्यानन्दादिभिर्हि स्वरूपतो निरूप्यते। अतः उपास्यब्रह्मणशिवस्य स्वरूपावगमाय सर्वासु विद्यासु आनन्दा-दयोऽनुवर्तन्ते। ये तु निरूपितस्वरूपस्य ब्रह्मणः कारुण्यादयो गुणाः प्रतिपन्नाः, तेषां गुण्यपृथक्-स्थितत्वेऽपि प्रतीत्यनुबन्धित्वाभावात् ये यत्र श्रुतास्ते तत्रोपसंहर्तव्या इति निरवद्यम्।

बद्युपचयापचयप्रसङ्गात् प्रियशिरस्त्वादयो ब्रह्मणशिवस्य पुरुषविधत्वनिरूपणमात्रार्थाः न तु ब्रह्मगुणाः; तर्ह्ययथारूपस्य ब्रह्मणशिवस्य तथात्वेन निरूपणं किमर्थं क्रियते? अतथाभूतस्य हि तथात्वनिरूपणे केनचित्प्रयोजनेन भवितव्यम्। यथा '**आत्मानं रथिनं[1] विद्धि**' इत्यादिनोपासकस्य तदुपकरणानाञ्च रथिरथादित्वनिरूपणं उपासनोपकरणभूत-शरीरेन्द्रियादिवशीकरणार्थं क्रियत इत्युक्तम्। न चेह तथाविधं किञ्चित्प्रयोजनं दृश्यत इति बलाद्ब्रह्मगुणत्वं प्रियशिरस्त्वादीनामभ्युपेयम्। तत्राह–"

## ॥ १९४ ॥ आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

---

[1] रथिनां (ग A).

"**प्रयोजनान्तराभावात् आध्यानाय** अयं रूपगुणोपदेशः क्रियते। आध्यानं अनुचिन्तनं उपासनमुच्यते।" '**ध्याननिर्मथनाभ्यासात् पाशं दहति पण्डितः**', '**श्रद्धा भक्ति-ध्यानयोगादवेहि**' इत्यत्रोपदिष्टाध्यानरूपवेदनसिद्धये ह्यानन्दमयब्रह्मप्रतिपत्त्यर्थमानन्दमयंब्रह्मप्रियमोदादिरूपेण विभज्य शिरःपक्षादित्वेन निरूपयित्वोपदिश्यते। यथा '**अन्नमयः पुरुषः**', '**अयं देहः........तस्येदमेव शिरः**' इत्यादिना शिरःपक्षादिभिः बुद्धौ आरोप्यते, यथा च प्राणमय-मनोमय-विज्ञानमयाः '**तस्य प्राण एव शिरः**' इत्यादिना प्राणाद्यवयवैर्बुद्धौ आरोप्यन्ते। एवमेभ्योऽर्थान्तरभूतस्तदन्तरात्मा आनन्दमयोऽपि प्रियमोदादिभिरेकदेशैः शिरःप्रभृतित्वेन रूपितैः आध्यानाय बुद्धौ आरोप्यते। एवमानन्दमयोपलक्षणत्वात् प्रियशिरस्त्वादीनां, न सर्वदा आनन्दमयप्रतीतौ अनुवर्तन्ते।"

'**अन्नं ब्रह्म**' इत्यादावानन्दस्य ब्रह्मोपदेशादेकप्रकरणपठितस्यानन्दमयस्यैव कथं परब्रह्मत्वमुपपन्नमित्याशङ्कायामाह—

## ॥ १९५ ॥ आत्मशब्दाच्च ॥ १५ ॥

**तैत्तिरीये**— '**तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः**' इत्यादौ आत्मनः जगदेककारणत्वोपदेशात्; **माण्डूक्ये**— '**प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा**' इत्यत्र शिवस्य परब्रह्मणः प्रपञ्चहेतुभूतस्यात्मशब्दप्रयोगात्। **अथर्वशिखायां**— '**ध्यायीतेशानं प्रध्मायितव्यम्**' इत्यारभ्य '**शिव एको ध्येयः शिवङ्करः**' इत्यन्तेन चरमशरीरिणां मुमुक्षूणां परशिवब्रह्मेतरध्याननिषेधावगमाच्च। तस्मात् नित्य-निरुपद्रव-निखिलमङ्गळालय-परमानन्दस्वभावं जगदुभयकारणं परब्रह्मैव शिवशब्देन निर्णीयते। अतः '**ऋतं सत्यं**' इत्यत्र कृष्णपिङ्गळ-विरूपाक्ष इत्यादिना ब्रह्मतत्त्वानुसन्धानोपास्तिरुपदिष्टा। तथा च **स्मृतिः**—

'शिवं भजन्ति ये नराश्शिवं व्रजन्ति ते नराः।
शिवेतरं भजन्ति ये शिवेतरं व्रजन्ति ते॥'

इति श्रवणात् शिवेतरनिष्ठानुष्ठानशीलानां अशिवत्वफलम्। अत एवानन्दमयो नेतरः। '**अन्योन्तर आत्मा आनन्दमयः**' इति निरतिशयशिरस्कत्वेनान्नमयादिभ्यो भिन्नत्वोपदेशात् आनन्दमयश्शिव एक एवानुसन्धेय इति स्पष्टमुपदिष्टम्।

किञ्च– '**अन्योन्तर आत्माऽऽनन्दमयः**' इत्यात्मशब्देन निर्दिष्टस्य परमात्मन-शिवस्य शिरः-पक्ष-पुच्छसद्भावात् प्रियशिरस्त्वादयस्तस्य सुखप्रतिपत्त्यर्थं निरूपणमात्रमित्युपदिश्यते ।

'**इन्द्रियेभ्यः पराह्यर्थाः अर्थेभ्यश्च परं मनः ।**
**मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ॥**
**महतः परमव्यक्तं अव्यक्तात्पुरुषः परः ।**
**पुरुषान्नपरं किञ्चित् सा काष्ठा सा परा गतिः ॥**'

इति श्रुतौ अर्थमनोबुद्ध्यात्मादिभ्यः पुरुषस्य सर्वाधिकत्वोऽपदेशात्, '**अन्योन्तर आत्मा प्राणमयः । अन्योन्तर आत्मा मनोमयः । अन्योन्तर आत्मा विज्ञानमयः**' इत्यात्मशब्दस्य अनात्मस्वपि पूर्वप्रयुक्तत्वात् '**अन्योन्तर आत्माऽऽनन्दमयः**' इत्यात्मशब्दस्यात्मविषयत्वं कथं निर्धीयते ? तत्राह–

## ॥ १९६ ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

"**अन्योन्तर आत्माऽऽनन्दमयः**' इत्यत्राऽऽत्मशब्देन परमात्मन एव ग्रहणम् । ॥ **इतरवत्** ॥ यथा इतरत्र '**आत्मा वा इदमेक एवाग्र आसीत्**', '**स ईक्षत लोकान्नुसृज**' इत्यादिष्वात्मशब्देन परमात्मन एव ग्रहणम् । तत् कुत एतत् ? ॥ **उत्तरात्** ॥ '**सोऽकामयत बहु स्यां प्रजायेय**' इत्यानन्दमयविषयात् **उत्तरात्** वाक्यात् ।"

अस्मिन्नर्थे हेत्वन्तरमाह–

## ॥ १९७ ॥ अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥

"पूर्वत्र प्राणमयादिष्वनात्मस्वात्मशब्दान्वयदर्शनात् नोत्तरादुत्तरवाक्यान्निश्चेतुं शक्यत इति चेत् ॥ **स्यादवधारणात्** ॥ स्यादेव निश्चयः । कुतः ? **अवधारणात्** । पूर्वत्रापि.

'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति परमात्मन एव बुध्याऽवधारितत्वात्। अन्नमयादन्तरे प्राणमये प्रथमं परमात्मबुद्धिरवतीर्णा ; तदनन्तरञ्च प्राणमयादन्तरे मनोमये ततो विज्ञानमये। तत आनन्दमये, प्रक्रान्ता परमात्मबुद्धिः तदन्तराभावात् तदुत्तराच्च, 'सोऽकामयत' इति वाक्यात् प्रतिष्ठितेति उपक्रमेऽप्यपरमात्मनि परमात्मबुध्या आत्मशब्दादन्वय इति निरवद्यम्।"

## सर्वेषां मुमुक्षूणां शिवोपासनस्यैव कर्तव्यतानिर्णयः

किञ्च– तदुपक्रमे 'ब्रह्मविदाप्नोति परं' इति, अन्यत्र च 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति', 'तस्याभिध्यानात्......निवृत्तिः', 'उमासहायं.......प्रशान्तम्' इत्यारभ्य,

'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
सम्पश्यन् ब्रह्मपरमं याति नान्येन हेतुना॥'

इत्यन्तेन शिवध्यान-ज्ञानावलम्बिनामेव पुनरावृत्तिरहित-निःश्रेयसफलप्राप्त्युपदेशात् सर्वेषः मुमुक्षूणां शिवोपासनं कर्तव्यमिति फलितार्थो निश्चीयते। 'ऋतं सत्यं' इति [1]सत्यादि लक्षणलक्षितपरशिवोपासनेन भ्रमरकीटन्यायवत् शिवतादात्म्यसिद्धेः स्वशाखान्यशाखास्वपि स्पष्टमुपदिष्टत्वात् तत्परमपुरुषार्थसिध्यर्थं श्रवण-मननादिना तद्विचारो निरन्तरं कर्तव्य-इत्युपदिश्यते।

---

[1] 'अत्र ऐतदात्म्यमिदं' इति 'ग A' कोशेऽधिकः पाठो दृश्यते।

## कार्याख्यानाधिकरणम् ॥ ५ ॥

### सगुणोपासनानां सर्वेषां निर्गुणब्रह्मप्राप्त्युपायसाधनपरत्वनिष्कर्षः

**उपकोसलविद्याप्रकरणे** विद्यमानमाहवनीय-गार्हपत्य-दक्षिणाग्निविषयकमुपासनात्रयं, हिरण्यगर्भोपासनमित्युपासनचतुष्टयञ्च, एवं **प्रतर्दनविद्याप्रकरणे** विद्यमानं च जीवमुख्यप्राणलिङ्ग-विषयमुपासनद्वयं, एवं सर्वास्वप्युपनिषत्सु सगुणब्रह्मोपासनसन्निधौ विद्यमानानि ब्रह्मव्यतिरिक्त-पदार्थविषयकाणि प्राणाद्युपासनानि, एवं **भूमविद्याप्रकरणे** प्रदर्शितानि भूमाद्युपासनानि, एवं **वैश्वानरविद्याप्रकरणे** विद्यमानानि वैश्वानरस्यैकैकस्यावयवविशेषोपासनानि वैश्वानरोपास-नाङ्गानि वा न वा? एवं तत्तदुपासनाप्रकरणेषु विद्यमानानि ब्रह्मव्यतिरिक्तपदार्थविषयका-न्युपासनानि चित्तशुद्धिद्वारा मूर्तब्रह्मोपासनाङ्गानि वा? स्वातन्त्र्येण फलान्तरसाधनानि वा स्युः? '**यदुद्दिश्य यद्विधीयते तस्य तदेव फलम्**' इति न्यायेन '**नास्त्य-कृतः कृतेन**' इति श्रुतौ कृतकर्मणां अकृतमोक्षफलनिषेधात सर्वेषां कर्मरूपोपसनानां निर्गुणब्रह्मत्माकत्वहेतुत्वायोगात् . **पुण्यचितो लोकः क्षीयते**' इतिवत्सकामज्योतिष्टोमादिवत् अनित्यफलत्वमेवेत्याशङ्कायां अधिकरणान्तरेणाह—

## ॥ १९८ ॥ कार्याख्यानादपूर्वम् ॥ १८ ॥

"पूर्वप्रस्तुतप्राणविद्याशेषभूतमिदानीं चिन्त्यते।" तत्तत्सगुणमूर्तब्रह्मोपासनासन्निधौ विहितानि अग्नित्रय-**जीवमुख्यप्राणा**नामादिविषयकाणि उपासनानि **प्रकरणबलात्** तत्तत्सगुणमूर्त-ब्रह्मोपासनाङ्गान्येव, न तु स्वातन्त्र्येण फलान्तरसाधनानि। तथा च **कार्याख्यानात् कार्याणां** कर्तव्यानां **जीवमुख्यप्राणलिङ्गा**दिविषयकाणां अङ्गोपासनानां **आख्यानात्** अनुष्ठानादेव साक्षात्सगुणमूर्तब्रह्मोपासनात् **अपूर्वं** अदृष्टं उत्पद्यते। तेन निरवयव-निरतिशयानन्दपरिपूर्णापरिच्छिन्न-परशिवब्रह्मप्राप्तिः सम्भवति; न तु अस्वातन्त्र्येण फलान्तर-

मनुपपन्नम् । तस्मात्साङ्गोपासनादेव सगुणब्रह्मोपसनम् । सगुणमूर्तब्रह्मोपासनाङ्गत्वेन अनुष्ठितप्राणाद्युपासनात् क्षुद्रफलमप्यर्थादुत्पद्यते । **'यदेव ज्ञानफलं तदेव कर्मफलं'** इत्यादिश्रुतिषु **'यादृशी भावना यत्र सिद्धिर्भवति तादृशी'** इति स्मृतिष्वपि दर्शनाच्च । **'ब्रह्मणः सायुज्यं सलोकतामाप्नोऽति'** इत्यादिश्रुतिषु अङ्गोपासनासन्निधिविद्यमानानां फलश्रुतीनां परशिवब्रह्मलोकप्राप्तावेव तात्पर्यावगमात् क्षुद्रफलेष्ववान्तरतात्पर्यमित्युपदिश्यते । **'उमासहायं परमेश्वरं प्रभुं........'** इत्यादिश्रुतिषु सगुणमूर्तब्रह्मोपासनादेव निरवयवसाक्षिरूपपरशिवप्राप्तेः व्यवस्थापनात् सगुणोपासनानि सर्वाणि निर्गुणब्रह्मप्राप्त्युपायसाधनानि इति सूत्रसूचितसूक्ष्मार्थः ।

**छान्दोग्य-वाजसनेययोः– 'ज्येष्ठं च श्रेष्ठं च',** इत्यादिना प्राणाद्युपासनान सर्वेषां ब्रह्मप्राप्तिसाधनत्वेनोपदेशात् सर्वेषां तेषां स्वातन्त्र्येण अभ्युदयफलहेतुत्वं? उत सगुणमूर्तब्रह्मोपासनाङ्गत्वेन तल्लोकप्राचुर्यकल्याणविभूतिसाधनत्वम्! अपि च सगुणमूर्तसदाशिवब्रह्मोपासनाङ्गत्वेन अमूर्त 'स्वयम्प्रकाशपरंज्योतिरात्मकनिखिलसाक्षिक-निरवयव-नित्यानन्द स्वभाव-कैवल्यविभूत्यात्मक-शिवतत्त्वप्राप्तिकारणं वेति सन्दिह्यते ।[1]

**'सर्वे एते पुण्यलोका भवन्ति'** इति श्रुतौ स्वेच्छानुसारेण सर्वेषां उपासकानां तत्तल्लोकप्राप्त्युपदेशात्, **'कर्म चितो लोकः क्षीयते'** इत्यादिश्रुतिषु कर्मफलानामनित्यत्वव्यपदेशात् बाह्याभ्यन्तरभेदेऽपि प्राणाद्युपासनानां अन्तरङ्गत्वेऽपि ज्योतिष्टोमादिपुण्यकर्मणामिव गुणत्रयप्रकृतिकत्वेन निःश्रेयसफलकत्वमनुपपन्नम् । **'यदेव ज्ञानफलँ तदेव कर्मफलं', 'यस्यैतेऽष्टाचत्वारिंशत्संस्काराः'** इत्यारभ्य **'ब्रह्मणस्सायुज्यं सालोक्यं च गच्छति'** इत्यन्तेन निष्कामकृत-परमेश्वरार्पित-गर्भाधानादिकर्मणां तदनुग्रहत्वेन निःश्रेयसफलप्राप्त्यवगमात् पुण्यलोकाभिसन्धिपूर्वककर्मणां स्वातन्त्र्येण तत्तल्लोकविधायकत्वमिति चेत्– तथाप्युपासनायाः गुणविषयत्वात् कर्मणामनित्यत्वस्वभावाच्च सगुण-सावयव-नित्य-सदाशिव ब्रह्मलोकप्राप्तिमात्रमेवेति प्राप्ते प्रचक्ष्महे–

'कर्मचितो लोकः क्षीयते' इत्यादिश्रुतिषु प्राकृतकर्मजन्यपुण्यापुण्यलोकविषयत्वम् । **'स्थिरेभिरङ्गैः पुरुरूप उग्रः'** इत्यादिषु सावयवसदाशिवब्रह्माङ्गस्य नित्यत्वव्यवस्थापनात्

[1] स्वयम्प्रकाशपरञ्ज्योतिस्स्वरूपनिखिल (ग A).

तल्लोकस्यापि प्राकृतगुणधर्मवैलक्षण्यत्वात् **'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि'** इति सच्चित्सुखात्मकत्रिपाद्विभूतिनामकसदाशिवलोकस्य नित्यत्वावगमात् तस्य तल्लोकस्य च नित्यत्वमनिवार्यम्। **'एष सम्प्रसादोऽस्मात् शरीरात् समुत्थाय परं ज्योतिरूपमुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते', 'ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे'** इति **तैत्तिरीय-कैवल्ययोश्च** सर्वेषां सावयव-सदाशिवब्रह्मोपासकानां निष्कामभक्तानां तदनुग्रहद्वारा तत्र कल्याणविभूत्यात्मकनित्यैश्वर्यविधायक**सालोक्य-सामीप्य-सारूप्यात्मक**-परमानन्दकर-तल्लोकभोगमनुभूय पुनस्तदनुग्रहेण निरतिशय-निरावरण-निरञ्जन-निरुपमान-निर्देह-शिवत्त्व-कैवल्यविभूतिप्राप्तिं तल्लोकादेव प्राप्नोतीति निश्चीयते। तस्मात् **'गतिसामान्य'न्यायेन** सर्वेषामुपासकानां ब्रह्मप्राप्तिफलमर्थात्सिद्धम्। किञ्च—

**'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥'**

**इत्यादिश्रुतिषु** सर्वकामविनिर्मुक्तानां दहरादिविद्योपासकानां **अयस्कान्तसूचीन्यायेन** निरन्तरावच्छिन्नज्ञाननिष्ठागरिष्ठानुष्ठानवशिष्टानां चरमशरीरिणां सर्वदा सर्वशिवैक्यभावापन्नानां इहलोके तु निरूपमान-निरञ्जन-निर्विकार-परशिवज्यो**तिर्लिङ्गैक्यमुपदिष्टम्**। मुक्तदशायामपि तद्भिन्नत्वेन व्यवस्थित इति चेत्। **'तदनन्यत्वमारम्भणशब्दादिभ्यः', 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं'** इत्यादि द्वैताऽद्वैतविधायक वैयासिकसूत्र-श्रुतिविरोधो दुर्निवारः। **'वाचारम्भणं विकारो नामधेयं'** इत्यत्र विकारो नामधेयं च वाचारम्भणं, वाचा यः अभिलषितार्थक्रियारूपव्यवहारस्य निष्पादको भवति। मृद्द्रव्यस्यैव घटावस्था। घटादिनामधेयं च विकारः। घटो वाचारम्भणं घटोऽयमिति वागारम्भणविषयमात्रम्। मृदन्य एव व्यवहारसिध्यर्थं जायमानमवस्थान्तरं न तु मृदो द्रव्यान्तरम्। मृत्तिकेत्येव नामधेयं सत्यम्। घटादिकं मृत्तिकेति कृत्वैव तत्र सर्वं मृद्घटादिनामधेयं सत्यम्। सति प्रमाणिकार्थे साधनन्तु द्रव्यान्तरमिति कृत्वा यतो घटो मृदेवेत्यतः कारणादनन्यदेव कार्यम्। अर्थक्रियादिव्यवहारभेदस्तु मृद्घटयोर्व्यवस्थाभेदाद्भवत्येव। ततो मृद्घटयोरिव ब्रह्मप्रपञ्चयोरपि व्याप्यव्यापकभावादनन्यत्वम्। तथा च **स्मृतिः—**

'शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम्।
तेनैकेन च तद्व्याप्तं मृदा घटादिकं यथा॥' इति दर्शनात्।

इति दर्शनात् जीव-प्रपञ्च-ब्रह्मणां सदा भेद इति नैयायिकादि दुर्वादो निरस्तः। यथा 'मृदयं घटः' इत्यत्र मृद्व्याप्तिर्घटे दृश्यते तथा 'ब्रह्मेदं जगत्' इति ब्रह्मव्याप्तिर्न दृश्यत इति चेत् 'घटस्सन् पटस्सन्' इति सर्वत्र दृश्यत एव। सद्रूपेण ब्रह्मणो व्याप्तिः, सद्रूपेण शिवेन यदि न व्याप्तं जगत् तदा सत्तास्फूर्तिभ्यां विनाकृतं कथं वा अस्ति स्फुरति इति दृश्यते। अतश्चेतनाचेतनप्रपञ्च-ब्रह्मणोः भेदाऽभेद एव घण्टाघोषः।

---

## समानाधिकरणम् ॥ ६ ॥

### ब्रह्मसाक्षात्कारैकफलकशाण्डिल्यादिसर्वविद्यानां विद्यैक्यत्वसमर्थनम्

**अग्निरहस्ये बृहदारण्यके** च शाण्डिल्यविद्या आम्नायते । एकत्र **'आत्मानमुपासीत' 'मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशमात्मानं'** इति । इतरत्र **'मनोऽमयोऽयं पुरुषो भात्यस्मिन्नन्तर्हृदये', 'व्रीहिर्वा यवो वा', 'स एष सर्वस्येशानस्सर्वस्याधिपतिस्सर्वमिदं प्रशास्ति'** इत्यादीनां शाण्डिल्यादिसर्वविद्यानां स्वातन्त्र्येण ब्रह्मप्राप्तिः ; उत विद्यानां सर्वासां **निःश्रेणीन्यायेन** परम्परया मोक्षहेतुत्वं वेति शङ्कायां अधिकरणान्तरेणाह—

## ॥ १९९ ॥ समान एवं चाभेदात् ॥ १९ ॥

"**वाजसनेयके अग्निरहस्ये** शाण्डिल्यविद्या आम्नाता । **'सत्यं ब्रह्मेत्युपासीत । अथ खलु क्रतुमयोऽयं पुरुषः'** इत्यारभ्य, **'स आत्मानमुपासीत मनोऽमयं प्राणशरीरं भारूपमाकाशात्मानं........सत्यसङ्कल्पम्'** इति" इत्यादिषु **शाण्डिल्य-दहर-उपकोसल-भूमादिविद्यानां** परस्परधर्मवैलक्षण्यविध्यवगमात् परस्परभिन्नत्वमभिन्नत्वं वेति सन्दिह्यते ।

'सर्वासां विद्यानां अन्योन्यभेददर्शनात्, **बृहदारण्यके** पुनरपि शाण्डिल्यविद्या आम्नायते **'मनोमयोऽयं पुरुषो भाः सत्यः । तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एषः सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिरसर्वमिदं प्रशास्ति'** इति । अन्यत्र च **'एषोऽस्मि देवः [1]प्रबिशोऽनु सर्वाः पूर्वोऽनुजातोऽस्म्यहमेव गर्भे', 'अयं हि जातश्च जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतो मुखः'** । **'विश्वतश्चक्षुरुत**

---

[1] प्रविशोऽनुसर्वा, एष हि देवः प्रबिशोनु सर्वो (ज).

विश्वतो मुखो विश्वतो हस्त उत विश्वतः स्यात् । सं बाहुभ्यां नमति संपतत्रैर्द्याव भूमी जनयन् देव एकः "।

वालाग्रशतमात्रं हृदयस्य मध्ये विश्वं देवं जातवेदसं वरेण्यम् ।
तमात्मानं येऽनुपश्यन्ति धीरास्तेषां शान्तिश्शाश्वती नेतरेषां ॥'

'अहं योनिं योनिमभितिष्ठाम्येको मयेदं पूर्णं पञ्चविधं च सर्वम् ।
मामीशानं पुरुषं देवमीडयं निचाय्य मां शान्तिमत्यन्तमेति ॥'

'प्राणेष्वन्तर्मनसो लिङ्गमाहुर्यस्मिन् क्रोधो या च तृष्णा क्षमा च ।
तृष्णां छित्वा हेतुजालस्य मूलं बुद्ध्या चित्तं स्थापयित्वाथ रुद्रे ॥
एवं ये मां ध्यायमाना भजन्ते तेषां शान्तिः शाश्वती नेतरेषाम् ॥'

'यतो वाचो निवर्तन्ते; अप्राप्य मनसा सह', 'आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चन' इति ।

'अणोरणीयान्महतो महीयान् आत्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥'

'आधारे दहरे वापि भ्रूमध्ये वा निरन्तरम् ।
ज्योतिर्लिङ्गानुसन्धानं तदन्तर्धारणं विदुः ॥'

'आधारे कनकप्रख्यं हृदये विद्रुमप्रभम् ।
भ्रूमध्ये स्फटिकच्छायं लिङ्गं योगी विभावयेत् ॥
ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः ॥ '

'आत्मानमात्मना साक्षात् ब्रह्मबुध्या सुनिश्चितम् ।
देहजात्यादिसम्बन्धान् वर्णाश्रमसमन्वितान् ॥

वेदशास्त्रपुराणानि पदपांसुमिव त्यजेत् ।'

'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ॥
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।

द्रष्टु-दर्शन-दृश्यानां विरामो यत्र वा भवेत् ।
दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकने ॥'
आत्मानमरणिं कृत्वा......पाशं दहति पण्डितः ॥'

इत्यादिश्रुतिशतेषु नानाधर्मत्वोपदेशात् दहर-शाण्डिल्यादिसर्वविद्यानां ऊर्ध्वाधस्सोपानभेदेन ब्रह्मणि समन्वयो युक्त इति प्राप्ते प्रचक्ष्महे । ॥ समा एवञ्चाभेदात् ॥

यथाग्निरहस्ये मनोमय-प्राणशरीर-भारूप-सत्यसङ्कल्पगुणगणः श्रुतः; एवं बृहदारण्यके मनोमयत्वादिके समाने सत्यादिकस्य वशित्वादेश्च सत्यसङ्कल्पत्वगुणभेदान्न रूपभेदः; तस्माद्विद्यैक्यम्; अन्यत्रापि स्थानभेदगुणभेदत्वेन भेददर्शनेऽपि चित्तैकाग्रतया ब्रह्मसाक्षात्कार-फलस्यैकत्वेन विद्यैक्यं न विरुध्यते ।

---

## सम्बन्धाधिकरणम् ॥ ७ ॥

### परस्पराङ्गाङ्गिसम्बद्धसगुणनिर्गुणोपासनैक्याद्विद्यैक्यत्वनिर्णयः

शाण्डिल्यादिविद्यासु विद्यैक्यत्वसिद्धावपि वैश्वानरविद्यायां अन्योन्यवैलक्षण्यावगमात् कथं विद्यैक्यमित्याशङ्कायां अधिकरणान्तरेणाह–

### ॥ २०० ॥ सम्बन्धादेवमन्यत्रापि ॥ २० ॥

अन्यत्र प्रतर्दन-वैश्वानर-भूमविद्यादिष्वप्येवं जीवमुख्यप्राणलिङ्गवैश्वानरैकावयवनामादि-विषयकाङ्गोपासनसहकृतात् सगुणपरशिवोपासनात् अदृष्टोत्पत्तिर्न तु केवलसगुणपरशिवो-पासनात्। कुतः ? ॥ सम्बन्धात् ॥ सगुण-निर्गुणयोरुपासनयोरङ्गाङ्गित्वेन परस्परसम्बन्धादिति विद्यैक्यं सम्भवतीति सूत्रसूचितसूक्ष्मार्थः।

"बृहदारण्यके श्रूयते– '**तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्**' इत्युपक्रम्य '***तस्योपनिषदहरिति**' अधिदैवतम्।' '**तस्योपनिषदहमिति**' **अध्यात्मम्**" आदित्यमण्डले अक्षिणि च सत्यस्य ब्रह्मणः व्याहृति-शरीरत्वेनोपास्यत्वमुक्त्वा द्वे उपनिषदौ रहस्यनामनी उपासना विशेषतयाऽऽम्नायेते ; ते किं यथाश्रुतस्थानविशेषनियतत्वेन व्यवस्थिते ? उत उभयत्र उभे अनियमेन ? इति संशये–

सत्यस्य व्याहृतिशरीरस्यैवोपास्यस्य ब्रह्मणो द्वयोः स्थानयोः सम्बन्धादुपास्यैक्येन रूपभेदात् संयोगाद्यभेदाच्च विद्यैक्यादनियमेनेति प्राप्तम्।

---

* एतच्चिह्नान्तर्गतो भागः (ग A) कोशमात्रे वर्तते।

तत्रोच्यते– ॥ सम्बन्धादेवमन्यत्रापि इति ॥ यथा मनोमयत्वादिगुणविशिष्ट-स्यैकत्वादुपास्यैक्येन रूपाभेदाद्विद्यैक्यात् गुणोपसंहारः, एवं अन्यत्राक्ष्यादित्यसम्बन्धिनः परशिवब्रह्मणः सत्यस्यैकत्वेन उभयोरुभयत्रोपसंहारः।"

किञ्च– अक्षि-सूर्यमण्डलादिस्थानभेदेनोपासनभेदव्यपदेशोऽपि उपास्यस्य शिवस्यैकत्वेन विद्यैक्यमुपपद्यते। आदित्याक्षिस्थानाद्युपासनेषु स्थानभेदादुपासनभेदाद्विद्यासु विशेषभेदो दृश्यते। तस्मात्कथं विद्यैक्यमित्याशङ्कायां आह–

## ॥ २०१ ॥ न वा विशेषात् ॥ २१ ॥

न वै तदस्ति विद्याभेदः कुतः? "विशेषात् उपास्यरूपविशेषात्। परशिवब्रह्मणः एकत्वेऽप्येकत्रादित्यमण्डलस्थतया उपास्यत्वं, इतरत्राक्ष्याधारतयोपास्यत्वं इति स्थानसम्बन्धित्व-भेदेन रूपभेदात् विधाभेदः।" तथापि मोक्षफलैकविशेषात् विद्यैक्यमभिहितम्। शाण्डिल्यविद्यायां उपास्यस्थानभेददर्शनेऽप्युभयत्र हृदयाधारत्वेनोपास्यत्वादुपासनैक्यम्। तद्वदत्रापि।

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह–

## ॥ २०२ ॥ दर्शयति च ॥ २२ ॥

तैत्तिरीये– 'तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' इति परमेश्वरोपासनस्थानं दहरपुण्डरीकमित्युपदिश्य तत्रोपास्यः परमात्मा कः? इत्याशङ्कायां 'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः .... .... .... .... महेश्वरः' इति महेश्वरस्यैव तत्रोपास्यत्वं प्रदर्शितम्। कैवल्ये– 'हृत्पुण्डरीकं विरजं विशुद्धं' इत्यादिना परमेश्वरस्योपासनस्थानं [1]हृदयकमलं प्रदर्श्य तत्र परमात्मा केन रूपेणोपास्य इत्याकाङ्क्षायां– 'उमासहायं परमेश्वरं प्रभुं' इत्यादिनोमासहायत्वादिधर्मावच्छिन्न-मूर्तब्रह्मणशिवस्योपास्यत्वं निर्दिष्टम्। एवं तैत्तिरीय-कैवल्ययोः एकत्र दहरशब्दे

[1] हृदयपुण्डरीकं (ज).

महेश्वरशब्दश्च। एकत्र हृदयशब्द उमासहायशब्दश्चेति परस्परभिन्नत्वव्यपदेशोऽपि यदा वस्त्वैक्यावगमात् उपासनैकत्वं तद्वदक्षि-भानुमण्डलयोः स्थानादिधर्मवैलक्षण्येऽपि उपास्यफलयोरेकत्वेन विद्यैक्यमनिवार्यमिति **दर्शयति**। चकारो निश्चयार्थः।

ननु तैत्तिरीय-छान्दोग्य-कैवल्यादिषु एकत्र **'एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते…………एष सुवर्णः'** इत्यादि श्रूयते। अन्यत्र **'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः'** इति मण्डलान्तर्वर्तितया हिरण्मयं पुरुषं प्रस्तुत्य तत्रोपसंहारे **'सर्वो वै रुद्रः'** इत्यारभ्य **'नमो हिरण्यबाहवे……..नमः'** इत्यन्तेन सर्वात्मकत्वं हिरण्यबाहुत्वं **उमापतित्वञ्चाम्नायते**। तत्रैकत्र सर्वाङ्गसुवर्णत्वं, अन्यत्र बहुसुवर्णत्वं इति रूपभेदः। एकत्र **'सर्वो वै रुद्रः'** इति सर्वात्मकत्वं, अन्यत्र **'सर्वेषां लोकानां ईष्टे'** इति सर्वाधिपत्यमिति धर्मभेदः। तस्मान्न विद्यैक्यमिति चेन्न। **'अन्तरादित्यं'** इति स्थानैक्यमेव विद्यैक्यं दर्शयति। तैत्तिरीये— **'हिरण्मयः पुरुषः'** इत्युपक्रमेण बाहुग्रहणस्योपलक्षणत्वादुपसंहारेऽपि **सर्वाङ्गसुवर्णमयत्वमेव** विवक्षितम्। विश्वाधिकस्य परशिवस्य शक्त्या जगदुभयकारणत्वात् तदनुप्रवेशाच्च तादात्म्यं युक्तम्। अतस्तदुभयत्रैकस्य प्रतिपादितत्वाद्विद्यैक्यमप्रतिहतम्।

---

## सम्भृत्यधिकरणम् ॥ ८ ॥

### सकलगुणविशिष्टब्रह्मोपासनस्य परशिवब्रह्मलोकप्राप्तिसाधनत्वसमर्थनम्

'ब्रह्मज्येष्टा वीर्यासम्भृतानि' इति श्रुतौ भिन्नप्रकरणस्थत्वात् व्यवहितत्वाच्चां सम्भृतिद्युव्याप्त्यादिगुणविशिष्टपरशिवब्रह्मोपासनमपि स्वातन्त्र्येण तल्लोकप्राप्तिसाधनं कथमित्याशङ्कायामधिकरणान्तरमाह–

## ॥ २०३ ॥ सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

"तैत्तिरीयके राणायणीयानां खिलेषु च 'ब्रह्मज्येष्ठा वीर्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान । ब्रह्मभूतानां प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः' इति ब्रह्मणि ज्येष्ठानां वीर्याणां सम्भृतिः"।

यानि लोके त्रिपुरसंहार-कालकूटभक्षण-मन्मथ-यमान्तकादिनिरतिशयानि ज्येष्ठानि चन्द्रधारणत्व-ब्रह्मकपालमालिकाभृतत्व-विष्णुवल्लभत्व-शेषाङ्गुलीयत्वादीनि चानन्यधर्मसम्भृतानि परं ब्रह्म आततान सम्पादितवान्; ज्येष्ठं हरि-हर-हिरण्यगर्भादिभ्योप्युत्कृष्टं 'प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यते स आत्मा स विज्ञेयः' इत्यादिश्रुतिसिद्धं ब्रह्मेत्यग्रे तेषामपि स्पष्टं; 'ध्यायीतेशानं प्रध्यायितव्यं............सम्प्रग्रह्यन्ते' इत्यादिश्रुतिषु स्पष्टमुपदिष्टम्; प्राग्दिवं परमाकाशपदमाततान व्याप्त्या अभ्यास्तेति तेषां महतां वीर्याणां आसमन्तात् सम्भृतिद्युव्याप्तिश्च सर्वासु परविद्यासु उपसंहारो नवेति सन्दिह्यते ।

'अथ य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते', 'अथ यदन्तः परो दिवो ज्योर्दीप्यते', 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरपुण्डरीकं वेश्मम्'

इत्यादिश्रुतिषु अथशब्द एव प्रकरणभेदं सूचयति । तथा च तत्तदुपासनाप्रकरणे भेदविहितान्यङ्गोपासनानि सन्निहितसगुणब्रह्मोपासनाप्रत्यङ्गानि तल्लोकप्राप्तिविधायकमात्राणि । **'ब्रह्मज्येष्ठा वीर्यासम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान'** इत्यस्यां खिलसंहितायां वीर्यसंभृतिद्युलोकव्यापकसर्वभूतकारणत्वादयो बहवो गुणाः प्रतिपादिताः । तथापि **'उपासीत'** इति विधिवाक्यं फलं च न श्रुतम् । तस्मात् खिलसंहिताप्रतिपादितानां सर्वेषां गुणानां **दहर-शाण्डिल्यादि**विद्याविधायक-सगुण-परशिवब्रह्मोपासनेषूपसंहारो नाङ्गीकर्तव्य इति प्राप्ते वदामः—

**'सम्भृतिद्युव्याप्तीति'** समाहारद्वन्द्वादेकवद्भावः । सम्भृत्यादिकमनारभ्याधीतमपि अत एव- स्थानभेदाद्व्यवस्थाप्यं न सर्वत्रोपसंहर्तव्यम् । कथमनारभ्याधीतानां स्थानविशेषनियतत्वम् ? स्वसामर्थ्यादिति ब्रूमः । द्युव्याप्तिस्तावत् हृदयाद्यल्पस्थानगोचरासु विद्यासु नोपहर्तुं शक्या । सम्भृतत्वादयोऽपि तत्सहचारिणस्तत्तुल्यदेशा इत्यल्पस्थानविषयासु विद्यासु अनुपसंहार्याः । **शाण्डिल्य-दहरादि**विद्यास्वल्पस्थानविषयासु **'ज्यायान्पृथिव्याः यावान्वा अयमाकाशस्तावानेषोन्तर्हृदय आकाशः'** इत्यादयस्तत्र तत्र शक्योपसंहाराः मनोमयत्वापहतपाप्मत्वादि विशिष्टस्योपास्यस्य माहात्म्यप्रतिपादनपराः ।"

किञ्च- **'देवा ह वै स्वर्गं लोकमगमन् ते देवा रुद्रमपृच्छन्, को भवानिति'**। परमानन्दस्वभावतया स्वर्गशब्दवाच्यं हिरण्यगर्भादिपदेभ्यो महत्तरं महास्थानं हि श्रूयते । ततः स्वल्पस्थानव्यतिरेकेषु **वैश्वानराद्युपासनेषु द्युव्याप्तिरुपसंहार्येति** तत्सहचारात् महावीर्यसम्भृतिरपि तत्रैवोपसंहर्तव्या ; उत खिलसंहितायां विधिफलयोरदर्शनेऽपि **'उपासीत'** इति विधिं परशिवब्रह्मलोकप्राप्तिरूपं फलं चाध्याहृत्य दहराद्युपासनादिवत् **खिलसंहितासु** गतसकलगुणविशिष्टब्रह्मोपासनस्य परशिवब्रह्मलोकप्राप्तिसाधनत्वाङ्गीकारेऽप्यदोषः ।

---

## पुरुषविद्याधिकरणम् ॥ ९ ॥

**मानस-क्रियामय-ज्योतिष्टोमयोः चित्तशुद्धिद्वारा परम्परया मोक्षहेतुत्वनिर्णयः**

**'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी'** इत्यादिश्रुतौ उपासकस्य करचरणाद्यवयवेषु प्रसिद्धज्योतिष्टोमाङ्गरूपो मानसो ज्योतिष्टोमो विहितः। तत्र किं मानस-ज्योतिष्टोमस्य कर्मकाण्डस्थज्योतिष्टोमाङ्गत्वम्? उत स्वातन्त्र्येण परशिवब्रह्मलोकप्राप्तिसाधनत्वं वेत्याशङ्कायां अधिकरणान्तरेण तत्राह–

## ॥ २०४ ॥ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २४ ॥

**इतरेषां** उपासकस्य करचरणावयवेषु कल्पितानां समित्कुशपुरोडाशादीनां मानसानामङ्गानां **पुरुषविद्यायामिव** मानसज्योतिष्टोम इव कर्मकाण्डस्थक्रियामये ज्योतिष्टोमे **तदनाम्नानात्** अविहितत्वादित्यर्थः। तथा च मानसज्योतिष्टोम-क्रियामयज्योतिष्टोमयोः परस्परविलक्षणाङ्ग-विशिष्टत्वात् मनःकल्पिताङ्गविशिष्टमानसज्योतिष्टोमस्य [1]वास्तवाङ्गविशिष्टक्रियामयज्योतिष्टोमाङ्ग-त्वमनुपपन्नम्। किन्तु स्वातन्त्र्येण परशिवब्रह्मलोकसाधनत्वमिति सूत्रसूचितसूक्ष्मार्थः।

"**तैत्तिरीयके** पुरुषविद्या आम्नायते– **'तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः'** इत्यादिका। **छान्दोग्येऽपि** पुरुषविद्या आम्नायते **'पुरुषोवाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि'** इत्यादिका। तत्र संशयः– किमत्र विद्या भिद्यते, उत नेति?

पुरुषविद्येति नामैक्यात् पुरुषावयवेषु यज्ञावयवकल्पनासाम्येन रूपैक्यात् तैत्तिरीयके फलसंयोगाश्रवणात् 'प्राह षोडशं वर्षशतं जीवति' इति छान्दोग्ये श्रुतस्यैव पुरुष विद्याफलत्वात् फलसंयोगस्याप्यविशेषात् विद्यैक्यमिति प्राप्ते उच्यते–

---

[1] ष्ट (ग A)

उभयत्राऽऽम्नातयोर्विद्ययोः पुरुषविद्यात्वेऽपि विद्याभेदोऽस्त्येव; कुतः? ॥इतरेषामनाम्नानात्॥ एकस्यां शाखायां आम्नातानां गुणानां अन्यत्र अनाम्नानात्। तथा हि– 'यत्सायम्प्रातर्मध्यन्दिनञ्च तानि सवनानि' इत्यादयः तैत्तिरीयके आम्नाताः। छान्दोग्ये सवनत्वेन नाम्नायन्ते। त्रेधा विभक्तं पुरुषायुषं छान्दोग्ये सवनत्वेन कल्प्यते। छान्दोग्ये श्रुतानां आशिषादीनां दीक्षादित्वकल्पनं तैत्तिरीयके न कृतम्। यजमानपत्न्यादिपरिकल्पनं चान्यथा। अतो रूपमुभयत्र भिद्यते; तथा फलसंयोगोऽपि भिद्यते। तैत्तिरीयके हि पूर्वानुवाके 'ब्रह्मणे त्वामहं स ओमित्यात्मानं युञ्जीत' इति ब्रह्मविद्यामभिधाय तत्फलत्वेन 'ब्रह्मणो महिमानमाप्नोती'त्युक्त्वा। 'तस्यैवं विदुषः' इत्यादिना आम्नाता पुरुषविद्या। अस्यैव ब्रह्मविदुषो यज्ञत्वकल्पनमिति गम्यते। अतो ब्रह्मविद्याङ्गत्वात् ब्रह्मप्राप्तिरेवात्र फलम् 'फलवत्सन्निधावफलं तदङ्गं' इति न्यायात् तैत्तिरीयकाम्नाता पुरुषविद्या ब्रह्मविद्याङ्गमिति गम्यते। छान्दोग्ये त्वायुःप्राप्तिफला पुरुषविद्येत्युक्ता। अतो रूपसंयोगयोर्भेदात् विद्याभेद इत्येकत्राम्नातानां गुणानामितरत्रानुपसंहारः।"

तथापि निष्कामनया परमेश्वरार्पितबाह्यज्योतिष्टोमादिवत् छान्दोग्यपुरुषविद्यायाः निष्कामस्य चित्तशुद्धिद्वारा परम्परया मोक्षहेतुत्वं सिध्यति।

---

## वेधाद्यधिकरणम् ॥ १० ॥

### 'शं नो मित्रः' 'शुक्रं प्रविध्य' इत्यादिमन्त्रद्वयपारायणप्राप्यशिवलोक-काम्यफलावाप्त्योर्निर्णयः

ननु छान्दोग्य-तैत्तिरीय-बृहदारण्यकादिशाखादिपठितविद्यानां ज्योतिष्टोमादीनाञ्च कासाञ्चित्साकाङ्क्षत्वात् कासाञ्चित् परम्परया परशिवब्रह्मलोकप्राप्तिहेतुत्वमुक्तम् । तथा हि तैत्तिरीयकानां उपनिषदारम्भे '**शन्नो मित्रश्शं वरुणः**,' '**सहनाववतु**' इत्यादिमन्त्राणां पठितत्वेन तेषामपि ब्रह्मविद्याङ्गत्वं स्यात् ; '**शुक्रं प्रविध्य हृदयं प्रविध्य मनः प्रविध्य शिभिः प्रवृज्य त्रेधा विवृत्तं**' इत्यादीनां आथर्वणिकानां उपनिषत्प्रारम्भपठितहृदय-वेधादिप्रकाशनरूपलिङ्गाभिचारकर्मशेषाङ्गमन्त्राणामपि विद्याङ्गत्वेन परशिवब्रह्मलोकप्राप्तिसाधनत्वं किं न स्यादित्याशङ्कायां अधिकरणान्तरेणाह—

## ॥ २०५ ॥ वेधाद्यर्थभेदात् ॥ २५ ॥

वेधादीना शत्रुपीडादीनां अर्थानां फलानां भेदात् सगुणसावयवपरशिवब्रह्मोपासनाऽसंबन्धादेतेषां मन्त्राणां तद्ब्रह्मोपासनाङ्गत्वमस्तीत्यर्थः । '**सर्वं खल्विदं ब्रह्म तज्जलानि शान्त उपासीत**' इति श्रुतौ शान्तस्यैव परशिवब्रह्मोपासनायां अधिकारस्य प्रतिपादितत्वेन शत्रुमरणकामस्य मन्त्रस्य ब्रह्मोपासनाङ्गत्वासम्भवात् कर्मकाण्डस्थत्वेन यागाङ्गवत्काम्यफलमेवेति सूत्रसूचितसूक्ष्मार्थः ।

" **आथर्वणिका** उपनिषदारम्भे '**शुक्रं प्रविध्य हृदयं**' इत्यादीन् मन्त्रानधीयते । **सामगाश्च रहस्यब्राह्मणारम्भे** '**देव सवितः प्रसुव**' इत्याद्यामनन्ति ; **काठकास्तैत्तिरीयाश्च** '**शं नो मित्रः शं वरुणः**' इत्यादिकम् ; [1]**शाठ्यायनिनश्च**, '**श्वेतोऽश्वो हरिनीलोऽसि**'

---
[1] काण्वा (ग A).

इत्यादिकम्; ऐतरेयिणस्तु महाव्रतब्राह्मणमधीयते। 'इन्द्रो ह वै वृत्रं हत्वा महानभवत्' इत्यादि; कौषीतकिनोऽपि महाव्रतब्राह्मणमेव; 'प्रजापतिर्वै संवत्सर स्तस्यैष आत्मा यन्महाव्रतम्' इति; वाजसनेयिनस्तु प्रवर्ग्यब्राह्मणम्, 'देवा ह वै सत्रं निषेदुः' इत्यादि। तत्र संशयः– किमुपनिषदामारम्भेष्वधीताः 'शुक्रं प्रविध्य,' 'शनो मित्रः' इत्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्याङ्गम्? उत नेति? किं युक्तम्? विद्याङ्गमिति। कुतः? सन्निधिसमाम्नानात् विद्याङ्गत्वप्रतीतेः।

यद्यपि 'शुक्रं प्रविध्य' इत्यादीनां मन्त्राणां प्रवर्ग्यादेश्च कर्मणः श्रुति-लिङ्ग-वाक्यैर्बलवद्भिर्यथायथं कर्मसु विनियोगोऽवगम्यते। तथापि 'शन्नो मित्रः' 'सहनाववतु' इत्यादेर्मन्त्रस्य अन्यत्र विनियोगाभावात् विद्याधिकाराच्च विद्याङ्गत्वमवर्जनीयमिति सर्वासु विद्यासु इमे मन्त्राः उपसंहर्तव्या इत्येवं प्राप्ते ब्रूमः। ॥ **वेधाद्यर्थभेदात्** ॥

'शुक्रं प्रविध्य, हृदयं प्रविध्य,' 'ऋतं वदिष्यामि सत्यं वदिष्यामि' 'ऋतमवादिषं सत्यमवादिषं' 'तेजस्विनावधीतमस्तु मा विद्विषावहै' इत्यादिभिर्लिङ्गैः अभिचाराध्ययनादिष्वेषां विनियोगावगमान्न विद्याङ्गत्वम्। एतदुक्तं भवति– यथा 'हृदयं प्रविध्य' इत्यादिमन्त्रसामर्थ्यात् "शुक्रं प्रविध्य" इत्यादीनां अभिचारादिशेषत्वमवगम्यते; एवमेव 'ऋतं वदिष्यामि,' 'तेजस्विनावधीतमस्तु' इत्यादिमन्त्रसामर्थ्यादेव स्वाध्यायशेषत्वं 'शन्नो मित्रः' इत्यादिमन्त्राणामवगम्यते। अतो न तेषां विद्याङ्गत्वम्। 'शुक्रं प्रविध्य' इत्यादीनां प्रवर्ग्यादिब्राह्मणानां चेह पाठो दिवाकीर्त्यत्वारण्येऽनुवाक्यत्वकृतः।"

तस्मात्– 'शन्नो मित्रः' इत्यादिमन्त्रपाठकानां सन्ध्यावन्दनकारिणामिव चित्तशुद्धिद्वारा परम्परया शिवलोकसाधनत्वम्। 'शुक्रं प्रविध्य' इत्यादिमन्त्रपाठकानान्तु काम्यफलकत्वं ह्युपदिष्टम्।

---

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. ............ 002

## हान्यधिकरणम् ॥ ११ ॥

### सगुणपरशिवब्रह्मोपासमालभ्योत्कृष्टफलनिर्णयः

अमन्दमाहियुक्तगाढविरागिणां शिवैकनिष्ठानां शिवत्वप्राप्तिफलमस्तु ; मन्दविरागिणां तदुपासकानान्तु का गतिरित्याशङ्कायां अवान्तरफलोपसंहारविधिरस्तीत्यधिकरणान्तरेणाह—

**॥२०३॥ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥**

**'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि'** इति सामश्रुतौ सगुणपरशिवब्रह्मोपासकानां मरणानन्तरं सुकृतदुष्कृतत्यागमात्रमुक्तम् **'तत्सुकृतदुष्कृते विधूनुते तस्य पुत्रा दायमुपयन्ति,' 'सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यां'** इति ।

शाखान्तरीयश्रुतौ तु उपासकानां सुकृतदुष्कृतत्यागानन्तरं उपासकमित्राणां उपासकद्वेषिणाञ्च सुकृतदुष्कृतस्वीकार उक्तः । एवं स्थिते सति **हानौ** सुकृतदुष्कृतत्यागात्मकहाननमात्रप्रतिपादकश्रुतौ उपासकसुहृदां उपासकद्वेषिणाञ्च सुकृतदुष्कृतस्वीकारात्मकमुपासनं उपसंहर्तव्यम् । कुतः ? **॥उपायनशब्दशेषत्वात्॥** 'तत्सुकृतदुष्कृते विधूनुते' इति श्रुतौ हननप्रतिपादकस्य विधूननशब्दस्य उपायनप्रतिपादकशब्दसाहचर्यादित्यर्थः । तत्र दृष्टान्तमाह— **॥कुशाच्छन्दस्तुत्युपगानवत्॥** यथैकस्यां शाखायां सह पठितानां कर्माङ्गानां कुशाच्छन्दस्तुत्युपगानानां मध्ये अन्यतरस्यां[1] शाखायां एकैकाङ्गस्य श्रवणे सत्यन्येषामङ्गानामुपसंहारः तद्वदित्यर्थः । तदुक्तम्— एकैकाङ्गश्रवणे सत्यन्येषां अङ्गानामुपसंहरणं **पूर्वमीमांसान्यायेनात्र** युक्तमिति सूत्रसूचितसूक्ष्मार्थः ।

---

[1] अन्यस्यां (гA).

"छन्दोगा आमनन्ति— 'अश्व इव रोमाणि' इति। आथर्वणिकाश्च 'तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'; इति। [1]शाट्यायनिनस्तु 'तस्य पुत्रा दायमुपयन्ति'; 'सुहृदः— साधुकृत्यम् द्विषन्तः पापकृत्याम्' इत्यादि। कौषीतकिनस्तु 'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृतम्' इति। एवं क्वचित् पुण्यपापयोर्हानिः, क्वचित् प्रियाऽप्रियेषु तत्प्राप्तिः, क्वचिदुभयञ्च श्रुतम्। तदुभयमेकैकविद्यायां श्रुतमपि सर्वविद्याङ्गमास्थेयम्; सर्वब्रह्मविद्यानिष्ठस्यापि ब्रह्म प्राप्नुवतः पुण्यपापप्रहाणस्यावश्यम्भावित्वात् [2]प्रहीणविषयत्वाच्चोपायनस्य। तच्चिन्तनञ्च विधीयमानं सर्वविद्याङ्गं भवितुमर्हति। तत्रेदं विचार्यते—

हानिचिन्तनमुपायनचिन्तनमुभयचिन्तनञ्च विकल्प्येरन् उपसंह्रियेरन् वा। किं युक्तम्? विकल्प्येरन्निति। कुतः? पृथगाम्नानसामर्थ्यात्। समुच्चये हि सर्वत्रोभयानुसंधानं स्यात्। तच्च कौषीतकिवाक्येनैव सिद्धमिति अन्यत्राम्नानमनर्थकमेव स्यात्। अतो नैकत्राम्नातस्य विकल्प एव प्रयोजनम्। न चाध्येतृभेदेन परिहर्तुं शक्यमनेकत्राम्नानम्। अविशेषतः पुनःश्रवणं ह्यध्येतृभेदपरिहार्यम्; अत्र तु हानिरेव द्वयोश्शाखयोः, उपायनमेव चैकस्याम्। न च विद्याभेदेनैव व्यवस्थापयितुं शक्यं; सर्वशेषभूतमिदमनुसन्धानमित्युक्तत्वात्।

अत्रेदमुच्यते— ॥ हानौ तूपायनशब्दशेषत्वादिति ॥ तुशब्दः पक्षं व्यावर्तयति; हानाविति प्रदर्शनार्थम्। केवलायां हानौ केवले चोपायने श्रूयमाणे तयोरितरेतरसमुच्चयोऽवश्यम्भावी। कुतः? उपायनवाक्यस्य हानिवाक्यशेषत्वात्। उपायनवाक्यस्य हि हानिवाक्यशेषत्वमेवोचितम्; विदुषा त्यक्तयोः पुण्यपापयोः प्रवेशस्थानवाचित्वात् उपायनवाक्यस्य। प्रदेशान्तराम्नातस्य वाक्यस्य प्रदेशान्तराम्नातवाक्यशेषत्वे दृष्टान्ता उपन्यस्यन्ते— कुशाच्छन्दः स्तुत्युपगानवत्— इति। कालापिनः, 'कुशा वानस्पत्याः' इत्यामनन्ति; [3]शाट्यायनिनस्तु 'औदुम्बर्यः कुशाः' इति वाक्यं सामान्येन वानस्पत्यत्वेनावगताः कुशाः औदुम्बर्य— इति विशिंषत् तद्वाक्यशेषतामापद्यते। तथा 'देवासुराणां छन्दोभिः' इत्यादिना अविशेषेण देवासुराणां छन्दसां प्रसङ्गे, 'देवच्छन्दांसि

---

[1] कात्यायनिनस्तु (ग A)　　[2] पुण्यपापहीन (ग A).　　[3] कात्यायनिनः (ग A).

**पूर्वम्**' इति वचनं क्रमविशेषं प्रतिपादयन् तद्वाक्यशेषतां गच्छति। तथा '**हिरण्येन षोडशिनः स्तोत्रमुपाकरोति**' इत्यविशेषेण प्राप्ते '**समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति**' इति विशे विषयं वाक्यं तद्वाक्यशेषतां भजते। तथा '**ऋत्विज उपगायन्ति**' इत्यविशेषप्राप्तस्य '**नाध्वर्युरुपगायेत्**' इति वाक्यमनध्वर्यु-विषयतामवगमयत् तद्वाक्यशेषत्वमृच्छति; एवं सामान्येनावगतमर्थं विशेषे व्यवस्थापयितुं क्षमस्य वाक्यस्य तच्छेषत्वमनभ्युपगच्छद्भिः तयोरर्थयोर्विकल्पः समाश्रयितव्यः। स च सम्भवन्त्यां गतौ न युज्यते; तदुक्तं पूर्वस्मिन् काण्डे— '**अपि तु वाक्यशेषत्वा-दन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात्**' इति। तदेवं केवलहानोपायनवाक्य-योरेकवाक्यत्वात् केवलस्य हानस्य केवलस्य चोपायनस्याभावात् विकल्पो नोपपद्यते। **कौषीतकिनामुभयाम्नानमविशेषपुनश्श्रवणत्वेन** प्रतिपत्तृभेदादविरुद्धम्।"

ननु **कथमर्थवादः** प्रदेशान्तरस्थार्थवादसापेक्ष इति चेत् नामोपास्तिस्तावकत्वेन श्रुतस्यैकविंशा वा इतो द्व वा इत्यर्थवादस्यैकविंशत्वनिर्णयाय **तैत्तिरीय**गतसत्वप्रकरण स्थानार्थवादसापेक्षत्वदर्शनात् '**द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः** इति। तत्र संख्यानिर्वाहमुक्त्वा ततोऽर्थवादत्वेऽप्युपायनमुपसंहार्यम्। हानोपायन-योरेकत्राप्यवगतिरस्ति। **कौषीतकश्रुतौ** '**तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृतम्**' इति व्यपदेशात् तस्मात्तयोरसामञ्जस्यम्।

---

## साम्परायाधिकरणम् ॥ १२ ॥

### वीरशैवदीक्षाकाले शिवदीक्षापूर्वकालिकपुण्यापुण्यकर्मविनाशः, प्राणोत्क्रमणानन्तरं दीक्षानन्तरकालिकस्वाभाविकसुकृत-दुष्कृतविनाशविचारः

ननु मन्दविरागिणामपि सर्वविद्यासु परशिवोपासनात् पुण्यापुण्यवियोगपूर्वकं 'तत्तल्लोकानुभूतिरुपदिष्टा[1]। तथापि तच्छरीरजीवितकाले वियोगकाले वा किं सम्भवतीत्याशङ्कायां अधिकरणान्तरेण कालनिर्णयं दर्शयति—

## ॥ २०७ ॥ साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ २७ ॥

साम्पराये परशिवब्रह्मलोकप्राप्तिहेतुभूतदेवयानमार्गे विरजानद्यतिक्रमणानन्तरं शैवदीक्षावच्छिन्नदिव्योपासकानां सुकृत-दुष्कृतक्षयो भवति। कुतः? तर्तव्यस्य नद्यन्तरस्याभावादित्यर्थः। 'विरजातरणानन्तरं सुकुत-दुष्कृतक्षयं प्रतिपादयन्ति श्रुतयः' इत्यत्र प्रमाणमाह— ॥ तथाह्यन्ये ॥ अन्ये शाखिनः 'स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृत-दुष्कृते विधूनुते।' इति श्रुतौ विरजानदीतरणानन्तरं सुकृत-दुष्कृतक्षयं प्रतिपादयन्ति। तथापि विरजानदीतरणानुगतशैवदीक्षाकाले तत्पूर्वभाविकृतपुण्यापुण्यकर्मवियोगात् दीक्षानन्तरकृतदुष्कृतकदम्बं उपासकानां प्राणोत्क्रमणकाले विनश्यतीति सूत्रसूचितसूक्ष्मार्थः।

"सुकृत-दुष्कृतयोर्हानमुपायनञ्च सर्वासु विद्यासु चिन्तनीयमित्युक्तम्। तच्च हानं किं देहवियोगकाले देहाद्युत्क्रान्तस्याध्वनि च; उत देहवियोगकाल एवेति विशये उभयत्रेति युक्तम्। उभयथा च श्रुतत्वात्। एवं हि कौषीतकिनः समामनन्ति। 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति' इत्युपक्रम्य 'स आगच्छति विरजां

[1] तत्तल्लोकशरीरानुभूति ( ग 'A').

नदीम् । तां मनसाऽत्येति । तत्सुकृत-दुष्कृते धूनुते' इति। अत्र वाक्ये अध्वनि सुकृतदुष्कृतहानिः प्रतीयते । ताण्डिनस्तु– 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि' इति । अत्र तु, देहवियोगकाल इति प्रतीयते । [1]शाठ्यायनकोऽपि– 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकत्याम् ।' इति पुत्रेषु दायसंक्रान्ति-समकालं सुकृत-दुष्कृतसंक्रमणं श्रूयमाणं देहवियोगकाल इति गम्यते । अतः सुकृत-दुष्कृतयो-रेकदेशो देहवियोगकाले हीयते । शेषस्त्वध्वनि इति प्राप्ते--

उच्यते-- ॥ साम्पराये इति ॥ साम्पराये-- [2]देहादपक्रमणकाले एव विदुषः सुकृत-दुष्कृते निरवशेषं हीयेते । कुतः ? ॥ तर्तव्याभावात् ॥ विदुषो देहवियोगात्पश्चात् सुकृत-दुष्कृताभ्यां तरितव्यभोगाभावात् । विद्याफलभूतब्रह्मप्राप्तिव्यतिरेकेण हि सुकृत-दुष्कृताभ्यां भोक्तव्ये सुख-दुःखे न विद्येते । तथा ह्यन्ये देहवियोगादूर्ध्वं ब्रह्मप्राप्ति-व्यतिरिक्तसुख-दुःखोपभोगाभावमधीयते, 'अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः ।' 'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते', 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' 'इत्यादिश्रुतिषु लोकान्तर-प्राप्तिं विनैव साक्षात् ब्रह्मप्राप्तिदर्शनात् सर्वं शास्त्रं समञ्जसम् ।'

'अश्व इव रोमाणि विधूय पापं' इति श्रुतौ [2]'विरजाविपाप्मा' इति श्रुतौ च पापक्षयस्यैव उपदेशात् न तु पुण्यस्येत्याशङ्कायामाह––

## ॥ २०८ ॥ छन्दत उभयाविरोधात् ॥ २८ ॥

॥ छन्दतः ॥ इच्छातः विपक्षबलादित्यर्थः । अजहल्लक्षणया पापशब्देन पुण्यमपि प्रतिपाद्यते । कुतः ? ॥ उभयाविरोधात् ॥

---

[1] कात्यायनकोऽपि (गA) [2] देहादपक्रमणकाले अन्नमयं प्राणमयं........शुध्यतो विरजाविपाप्म इति श्रुतौ शैवदीक्षाङ्गविरजामध्यभागकृतसर्वपापक्षयो निर्दिष्टः एव विदुषः (गA)

**'यदा (था) पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।**
**तदा (था) विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥**

इत्यादिपुण्य-पापोभयविनाशविधायकश्रुत्यन्तरदर्शनात् ।

**किञ्च–** विरजानदीतारणत्वेन शिवलोकप्राप्तिविधायकश्रुतिस्मृतिपुराणानां इहैव देहावसाने परंज्योतिर्मयपरशिवलिङ्गप्राप्तिप्रतिपादकानाञ्च परस्परविरोधो दृश्यत इति चेन्न विरक्ताविरक्तपरमेश्वरैकनिष्ठफलविधायकमिति वेदितव्यम् । **छन्दसो यथेष्टं पदानामन्वयो वर्णनीय इति न्यायात्** श्रुतेरर्थस्य भावस्य विचारो युक्तः । शरीरत्यागकाले पुण्यापुण्यमोचनश्रुतेः तदूर्ध्वं परशिवब्रह्मलोकप्राप्तिश्रुतेरुभयश्रुत्यविरोधाय **कौषीतकवाक्ये 'तत्सुकृत-दुष्कृते विधूनुत'** इति श्रुतिखण्डः छन्दतो नेतव्यः। **'तद्देवयानं पन्थानमापद्य'** इति वाक्यखण्डात् प्रागुपनेतव्य इति सिद्धम् ।

ननु इहैव परञ्ज्योतिर्मयलिङ्गविलीनानां पुण्यपापक्षयविधिर्युक्ता । तद्भिन्नानां मन्दविरागिणां देहावसान-विरजानदीतरणानन्तरमेव पुण्य-पापक्षयाङ्गीकारे हेतोरभावात् परशिवलोकसकलैश्वर्यभोगानुभवविरोधो दुर्निवार इत्याशङ्कायामाह—

## ॥ २०९ ॥ गतेरर्थवत्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥

**उभयथा** उभयोः पुण्यपापयोः विनाशाङ्गीकारे सति गतेरर्चिरादिमार्गेण ब्रह्मलोकगमनस्यार्थवत्वं सफलत्वं भवति । **अन्यथा** पुण्यकर्मक्षयानङ्गीकारे परशिवब्रह्मलोके किञ्चित्कालं उपासनाफलभोगानन्तरं पुण्यफलभोगार्थं स्वर्गलोकं प्रति पुनरावृत्तेरवश्यमङ्गीकर्तव्यत्वात् विरोधः स्यात् । **'न स पुनरावर्तत'** इति श्रुतिविरोधश्च स्यात् । एतेन प्रतिपाद्यमानाया **'इमं मानवमावर्तं नावर्तन्त'** इति श्रुतेरप्रामाण्यं स्यात् ।

किञ्च-- **श्रुतिस्मृत्यागमेषु** नित्यनैमित्तिककाम्यकर्मणामेव कर्मेति व्यवहारव्यवस्थापनात् बहुजन्मकृतनिष्कामकृतशिवार्पितनित्यनैमित्तिकादिकर्मद्वारा तत्प्रसादोद्भूतभक्तेः करणत्वव्यवहारायोगात् । तद्भक्त्या तल्लोके सर्वैश्वर्यसम्पन्ननिरतिशयानन्दकन्दकल्याणविभूतिर्विरुद्धा स्यात् । तथा **शिवगीतासु** च स्पष्टमुपदिष्टम्–

कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते ।
इष्टापूर्तादिकर्माणि येनाचरति मानवः ॥
शिवार्पणधिया कामान् परित्यज्य यथाविधि ।

इत्यादिना भक्तिमहिमाप्रपञ्चं प्रसाध्य तत्रैव

धर्मार्थकाममोक्षाणां पारं यास्यथ येन वै ।
शुनयस्तत्प्रवक्ष्यामि व्रतं पाशुपताभिधम् ॥

कृत्वा तु विरजादीक्षां भूतिरुद्राक्षधारिणः ।
जपन्तो वेदसाराख्यं शिवनामसहस्रकम् ॥

सन्त्यज्य तेन मर्त्यत्वं शैवं तनुमवाप्स्यथ ।
ततः प्रसन्नो भगवान् शङ्करो लोकशङ्करः ॥
भवतां दृश्यतामेत्य कैवल्यं वः प्रदास्यति ॥

रामाय दण्डकारण्ये यत्प्राह कुम्भसम्भवः ।
तत्सर्वं वः प्रवक्ष्यामि शृणुध्वं भक्तियोगिनः ॥

अतस्त्वां दीक्षयिष्यामि विरजामार्गमाश्रितः ।
तेन मार्गेण मर्त्यत्वं हित्वा तेजोमयो भवेत् ॥

इदं व्रतं पाशुपतं करिष्यामि समासतः ।
अथ रामगिरौ रामः पुण्ये गोदावरीतटे ॥

शिवलिङ्गं प्रतिष्ठाप्य कृत्वा दीक्षां यथाविधि ॥
भूतिभूषितसर्वाङ्गो रुद्राक्षाभरणैर्युतः ॥

इत्यादिना कुम्भसम्भवेन श्रीरामस्य विरजापरपर्यायवाचकशिवदीक्षाविध्युपदेशात् ।

ननु देहत्यागवतां भक्तानां विरजानदीतरणकाले कर्मक्षये सत्येव देवयानगतेः प्रयोजकत्वं अन्यथा देहवियोगकाल एव सर्वकर्मक्षये तदनन्तरमेवासौ मुक्त इति चेन्न—

[1] विरजा (ग A).

देवयानगतेः निष्प्रयोजनत्वात् । 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति देवयानेन ब्रह्मप्राप्त्यनन्तरमेव तदाकाराकारितत्वश्रवणस्य विरोधः स्यात् ।

एवञ्च यद्यपि विद्यासामर्थ्यादेव देवयानगतिस्तत्तद्देशविहारचन्द्रसंवादादिकं अग्निमविहारात् एवमुपपद्यते; तथापि यावद्ब्रह्मप्राप्ति धीसङ्कोचरूपसंसारानुवृत्तिः विद्यासामर्थ्यान्नोपपद्यत इति तन्मूलभूतकर्मलेशानुवृत्तिरवश्यमेष्टव्या । न च परमेश्वरसङ्कल्पविशेषादेव तदनुवृत्तिस्स्यादिति वाच्यम् । तस्यैव अस्माभिः कर्ममूलतयोच्यमानत्वात् । न ह्यस्मिन्मते विहितनिषिद्धाचरणप्रयुक्तः परमेश्वरसङ्कल्पः कश्चिदस्ति । तत्सङ्कल्पमनपेक्ष्यैव पुण्यपापे स्तः ।

**शिवैकनिष्ठानां पुण्यनिराकारणपूर्वकशिवलोकप्राप्तिः शिवत्वप्राप्तिश्च**

ननु ब्रह्मप्राप्त्यनन्तरं विकासादिवृत्तिरहिततत्स्वरूपप्राप्तिः शिवलोकगमनेच्छापुरुषाणां धीविकासादिदिव्यमङ्गळविग्रहाविर्भावश्च युक्त इति चेत् तावत्पर्यन्तं तद्धीसङ्कोचहेतुकर्मवृत्त्या भाव्यम् । तथा विरजानदीतरणानन्तरमेव कर्मक्षय उच्यते । प्राकृतप्रपञ्चसीमावधि-अतिक्रमणमेव परमाकाशरूपपरमशिवपदप्राप्तिरिति । सैव परञ्ज्योतिरुपसम्पद्यतेत्यनेन ब्रह्मप्राप्तिर्विवक्षिता । विष्णुपदसम्बन्धिनी न विरजानदी । प्राक्प्राकृतप्रपञ्चसीमावधिः तदनुप्रवेशः । प्रक्षीणसर्वकर्मलेशयोगिनो विष्णुपदादूर्ध्वमप्राकृतं शिवपदं परमानन्दमयं अनुप्रविशन्ति । तथा हि श्रुतिः— 'सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम्' इति । स्मृतिश्च—

"परात्परतरं ब्रह्मा तत्परात्परतो हरिः ।
तत्परात्परतो हीशः इति वेदान्तचोदनात् ॥

यश्शिवं परमात्मानं उमापतिमहर्निशम् ।
ध्यायते विश्वकर्तारं पुण्यापुण्यनिराकृतात् ॥

विरजाख्यां नदीं तीर्त्वा विष्णुलोकात्परं पदम् ।
नित्यैश्वर्यसमायुक्तं मनोवाचामगोचरम् ॥
स तु कैलासमाप्नोति शिवानुग्रहवैभवात् ॥

इति दर्शनात् शिवैकनिष्ठानां पुण्यापुण्यनिराकरणपूर्वकशिवलोकप्राप्तिः शिवत्वप्राप्तिश्च वज्रलेपायते ।

ननु देहवियोगकाले विरजानदीतरणानन्तरं वा सर्वकर्मक्षयाङ्गीकारे सूक्ष्मशरीर-नाशप्रसङ्गः स्यात्। तथा सति केवलस्यात्मनो गमनं नोपपद्यते। तस्मात् उत्क्रान्ति-समये विदुषो निःशेषकर्मक्षयो नोपपन्न इत्याशङ्कायामाह–

## ॥ २१० ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

"**उपपन्न** एव उत्क्रान्तिकाले सर्वकर्मक्षयः। कथम्? 'तल्लक्षणार्थोपलब्धेः'– क्षीणकर्मणोप्याविर्भूतस्वरूपस्य देहसम्बन्धलक्षणार्थोपलब्धेः। **'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते।' 'स तत्र पर्येति जक्षत् क्रीडन् रममाणः', 'सः स्वराड् भवति। तस्य सर्वेषु लोकेषु कामचारो भवति।' 'स एकधा भवति त्रिधा भवति'** इत्यादिषु देहसम्बन्धाख्योऽर्थो ह्युपलभ्यते। अतः क्षीणकर्मणोऽपि सूक्ष्मशरीरयुक्तस्य देवयानेन गमनमुपपद्यते। कथं सूक्ष्मशरीरमप्यारम्भककर्मविनाशेऽवति-ष्ठत इति चेत्– विद्यामाहात्म्यादिति ब्रूमः। विद्या हि स्वयं सूक्ष्मशरीरस्यानारम्भि-काऽपि प्राकृतसुखदुःखोपभोगसाधनस्थूलशरीरस्य सर्वकर्मणाञ्च निरवशेषक्षयेऽपि, स्वफलभूत-परशिवब्रह्मप्राप्तिप्रदानाय देवयानेन पथैनं गमयितुं सूक्ष्मशरीरं स्थापयति– **'लोक-वत्'** यथा लोके सस्यादिसमृध्यर्थमारब्धे तटाकादिके तद्धेतुषु तदिच्छादिषु विन-ष्टेष्वपि तदेव तटाकादिकर्मशिथिलं कुर्वन्तः तत्र पानीयपानादि कुर्वन्ति। तद्वदिति सिद्धम्।"

"अथ स्यात्– ज्ञानिनां साक्षात्कृतपरशिवतत्त्वानां देहपातसमये कर्मणो निरव-शेषक्षयात् देहपातादूर्ध्वं सूक्ष्मशरीरमात्रं गत्यर्थमनुवर्तते; तथापि सुखदुःखानुभवो न विद्यत इति यदुक्तं– तन्नोपपद्यते। **वसिष्ठ-वामदेव-अगस्त्य-दधीचि-मार्कण्डेय-उपमन्यु-**प्रभृतीनां साक्षात्कृतशिवतत्त्वानां देहपातादूर्ध्वं देहान्तरसङ्गमः पुत्रजन्मविपत्यादिनिमित्त-सुखदुःखानुभवश्च दृश्यत" इत्याशङ्कायामाह–

## ॥ २११ ॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३१ ॥

"नास्माभिः सर्वेषां ज्ञानिनां देहपातसमये सुकृत-दुष्कृयोर्विनाश उक्तः; अपि तु येषां ज्ञानिनां देहपातानन्तरं अर्चिरादिका गतिः प्राप्ता; तेषां देहपातसमये सुकृत-

दुस्कृतहानिरुक्ता ; वसिष्ठादीनान्तु आधिकारिकाणां न देहपातानन्तरं अर्चिरादिगतिप्राप्तिः, प्रारब्धस्याधिकारस्यासमाप्तत्वात् । तेषां कर्मविशेषेणाधिकारविशेषं प्राप्तानां यावदधिकारसमाप्ति तदारम्भकं कर्म न क्षीयते । प्रारब्धस्य हि कर्मणो भोगादेव क्षयः । अतः आधिकारिकाणां तदारम्भकं कर्म यावदधिकारमवतिष्ठते । अतस्तेषां न देहपातादनन्तरं अर्चिरादिगतिप्राप्तिः ।"

---

## अनियमाधिकरणम् ॥ १३ ॥

### मूर्तामूर्ताकृतदिव्यरूपपरशिवब्रह्मोपासकप्राप्यचिद्विलासनन्दानुभवविचारः

"ननु उपकोसलादिविद्योपासकानां ब्रह्मप्राप्तिरुत तद्भिन्नानां सर्वेषां ब्रह्मोपासकाना-मेव ब्रह्मप्राप्तिस्सम्भवति इत्याशङ्कायामधिकरणान्तरेणाह—

## ॥ २११ ॥ अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

"उपकोसलादिषु येषूपासनेषु अर्चिरादिगतिः श्रूयते; किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिः ? उत सर्वेषां दहर-शाण्डिल्य-पाशुपतादिविद्यासिद्धब्रह्मोपासकानाम् ? इति संशये— इतरेष्वाम्नानात्। '**ये चेमे अरण्ये श्रद्धा तप इत्युपासते**', '**श्रद्धां सत्य-मुपासते**' इतीतरसकलब्रह्मविद्योपासकत्वे प्रमाणाभावाच्च तन्निष्ठानामेवेति प्राप्तेऽभिधीयते' **अनियम इति**। **सर्वेषां**— सर्वोपासननिष्ठानां तयैव गन्तव्यत्वात् तन्निष्ठानामेवेति नियमो नास्ति। सर्वेषां तयैव गमने हि सति शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यां **अविरोधः**। अन्यथा विरोध एवेत्यर्थः।"

श्रुतिस्तावत्— **तैत्तिरीय-छन्दोग्य-वाजसनेय-आथर्वणशिखा-श्वेताश्वतर-बृहज्जाबालादिषु** '**शिक्षां व्याख्यास्यामः**' इत्युपक्रम्य '**यश्छन्दसामृषभो विश्वरूपः; छन्दोऽभ्योऽध्य-मृतात्सम्बभूव; स मेन्द्रो मेधया स्पृणोतु**', '**अमृतस्य देवधारणो भूयासम्**' '**एतत्सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्**' इति तैत्तिरीयके, पाशुपतविद्याङ्गशिवलिङ्गबाह्याभ्यन्तर-ध्यानधारणाद्युपासकानां अमृतत्वमभिधीयते '**य एवमेत-द्विदुर्ये चेमे अरण्ये श्रद्धां सत्यमुपासते।**' '**तेऽर्चिषमभिसम्भवन्ति**' इति छान्दोग्ये, पञ्चाग्निविद्यायां अर्चिरादिमार्गेण दहर-पाशुपतादिसर्वब्रह्मविद्याङ्गध्यान-धारणाद्युपासननिष्ठानां गमन-मुपदिश्यते। **वाजसनेयके**— '**तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तप इत्युपासते**'

**सते**' इति । '**य इत्थं विदुः**' इति पञ्चाग्निविद्यानिष्ठान् '**ये चेमे**' इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासिनश्चोद्दिश्य अर्चिरादिका गतिरुपदिश्यते ; '**ऋतं सत्यं परं ब्रह्म**' '**सत्यं ज्ञानमनन्तं ब्रह्म**,' '**सत्यं त्वेव विजिज्ञासितव्यम्**' इति सत्यशब्दस्य परशिवब्रह्मणि प्रसिद्धेः । तपश्शब्दस्यापि तेनैकार्थ्यात् सत्य-तपश्शब्दाभ्यां ब्रह्मैवाभिधीयते— श्रद्धापूर्वकं ब्रह्मोपासनं अन्यत्र श्रुतं '**श्रद्धाभक्तिध्यानयोगादवेहि**' इति, '**सत्यं त्वेव विजिज्ञासितव्यम्**' इत्युपक्रम्य '**श्रद्धा त्वेव विजिज्ञासितव्या**' इति, '**व्रतमेतत्पाशुपतं तत्समाचरेन्मुमुक्षुर्न पुनर्भवाय**' इत्यादिना च **अथर्वणशिखाश्वेताश्वतर**-बृहज्जाबालादिषु पाशुपतविद्यानिष्ठानां पुनरावृत्तिरहितपरशिवब्रह्मप्राप्तिरुपदिश्यते । **स्मृतिरपि**—

**'अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥'** इति

**लिङ्गाङ्गसङ्गिनां वत्स पुनर्जन्म न विद्यते ।**
**युगपद्ज्ञानसिद्धिः स्यात् ततो मोक्षमवाप्नुयात् ॥'**

इति दर्शनाच्च सर्वेषां ब्रह्मविद्योपासकानां अर्चिरादिमार्गेणैवेति नियमो दृश्यते । एवं विजातीयकाः श्रुतिस्मृतयो बहवस्सन्ति । एवं सर्वविद्यासाधारणीया गतिः प्राप्तैवोपकोसलविद्यादौ अनूद्यते ।

ननु **आदित्यचन्द्रादिग्रहाणां अश्विन्यादिनक्षत्राणां इन्द्रादिदिक्पालप्रभृति**-देवानाञ्च अनेनैव शरीरेण मुक्तिरुपपद्यते ; अतः मनुष्याणामिव स्थूलसूक्ष्मशरीर-वियोगपूर्वकशिवतत्त्वप्राप्तिर्न सम्भवतीति चेन्न—

**'गताः कलाः पञ्चदश प्रतिष्ठाः देवाश्च सर्वे प्रतिदेवतासु ।**
**कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥'**

इति श्रुतिदर्शनात् भक्तानां जीवन्मुक्तानां सूर्यचन्द्रनक्षत्रादीनां इन्द्रादिदेवानाञ्च स्वाधिकार-दशावियोगानन्तरं स्थूलसूक्ष्मशरीरपरित्यागपूर्वकं परशिवब्रह्मण्येकीभावरूपं **विदेहकैवल्यमेव** व्यपदिश्यते ।

---

## अक्षरध्यधिकरणम् ॥ १४ ॥

### निरवयवपरशिवब्रह्मसाक्षात्कारवतां विदेहकैवल्यप्राप्तिनिर्णयः

ननु मूर्तब्रह्मोपासकानां दहरादिविद्यानिष्ठानां अप्राकृतदिव्यमङ्गळविग्रहविशिष्टत्वेन सर्वैश्वर्यसम्पन्नमहाकैलासे सालोक्यादिनित्यमङ्गळवैभवचिद्विलासानन्दानुभवोऽस्तु ; 'द्वे वाव ब्रह्मणो रूपे मूर्तश्चामूर्तमेवच' इति श्रुतौ परशिवब्रह्मणः रूपद्वयावगमात् अमूर्तब्रह्मोपासकानां का गतिरित्याशङ्कायां अधिकरणान्तरेणाह—

## ॥२१३॥ अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॥ ३३ ॥

'अनियमस्सर्वेषां' इति सूत्रे मूर्तपरशिवब्रह्मोपासकानां सर्वेषामपि परशिवब्रह्मलोक प्राप्तिरित्युक्तम् । अक्षरधियां निरवयवपरशिवब्रह्मसाक्षात्कारवतां तु अवरोधः परलोकगमनप्रतिबन्धः परलोकगमनाभाव एवाङ्गीकर्तव्यः ; कुतः ? सामान्यतद्भावाभ्याम् । अमूर्तब्रह्मसाक्षात्कारवतां सर्वेषामपि लिङ्गशरीरनाशस्य समानत्वात् तद्भावात् ब्रह्मण्येकभावात् तादात्म्यात् इत्यर्थः । औपसदवत्— यथा औपसदानां यज्ञादिकर्मकर्तॄणां सर्वेषां स्वर्गलोकप्राप्तिः तद्वत् । पूर्वोक्तमौथन्यायेन मूर्ताऽमूर्तब्रह्मसाक्षात्कारवतां सर्वेषामपि लिङ्गशरीरेण सह ब्रह्मण्येकीभावस्य च तुल्यत्वात् ।

तत्र प्रमाणमाह ॥ तदुक्तं ॥ "न तस्य प्राणा उत्क्रामन्ते' 'तत्रैव समवलीयन्ते' 'परेऽव्यये सर्व एकीभवन्ति' इत्यादिश्रुतिषु परशिवब्रह्मसाक्षात्कारवतां भक्तानां लिङ्गशरीरेण सह परशिवब्रह्मैक्यं प्रतिपादितमिति सूत्रसूचितसूक्ष्मार्थः ।

---

[1] 'गताः कलाः' 'कर्माणि विज्ञानमयश्च' 'यथानद्यः' (अ, ग ..).

एतेन मुक्तानामपि लिङ्गशरीरप्रधानसाधकद्वैत-विशिष्टाद्वैतमतद्वयं जडाजडयोरेकत्वासम्भवात्, रज्जुसर्पवज्जीवस्य मिथ्यात्वव्यवस्थापक-शून्याद्वैत-मिथ्याद्वैत-मतद्वयञ्च सर्वश्रुतिसमप्रामाण्यद्वैताद्वैताभिधानमुख्यवैदिकमतेन बौद्धादिवत् श्रुत्येकदेशप्रामाण्यात् निरस्तम्। गार्गिब्राह्मणे– बृहदारण्यके श्रूयते– 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलं अनण्वह्रस्वं अदीर्घं अलोहितं अस्नेहं अच्छायं अत अवाय्वनाकाशं असङ्गं अरसं अगन्धं अचक्षुष्कं अश्रोत्रं अवाङ्मनसं अतेजस्कं अप्राणं अमुखं अमात्रं अनन्तरं अबाह्यं न तदश्नाति किञ्चन'। 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः॥' तथा आथर्वणे– 'अथ परा यया तदक्षरमधिगम्यते', 'यत्तददेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम्', 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं भूतयोनिं परिपश्यन्ति धीराः', 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यां ओषधयः सम्भवन्ति। यथा सतः पुरुषात्केशलोमानि तथा क्षरात्सम्भवतीह विश्वम्' इति। तत्र 'संशयः– किमिमे अक्षरशब्दनिर्दिष्टब्रह्मसंबन्धितया श्रुताः अस्थूलत्वादयः प्रपञ्चप्रत्यनीकतास्वरूपाः सर्वासु ब्रह्मविद्यास्वनुसन्धेयाः? उत यत्र श्रूयन्ते तत्रैवेति। किं युक्तम्? यत्र श्रुतास्तत्रैवेति कुतः? विद्यान्तरस्वरूपभूतानां गुणानां विद्यान्तरस्वरूपत्वे प्रामाणाभावात् प्रतिषेधरूपाणामेषां आनन्दादिवत्स्वरूपावगमोपायत्वाभावाच्च आनन्दादिभिरवगतस्वरूपे हि ब्रह्मणि स्थूलत्वादयः प्रपञ्चधर्माः प्रतिषिध्यन्ते; निरालम्बनप्रतिषेधायोगात्। एवं प्राप्ते प्रचक्ष्महे–

'अक्षरधियां त्ववरोधः' इत्यादिना अक्षरब्रह्मसम्बन्धिनां अस्थूलत्वादिधियां सर्वब्रह्मविद्यास्वविरोधः संगतमित्यर्थः। अतः अक्षरपरशिवब्रह्मसाक्षात्कारधियां भक्तानां लोकान्तरप्राप्तिविरोधो वा स्यात्; कुतः? सामान्यतद्भावाभ्यां। सर्वेषूपासनेषु उपास्याक्षरस्य परशिवस्य ब्रह्मणस्समानत्वादेकत्वात्, तद्भावात् 'नाशः कारणलयः' इति न्यायेन लिङ्गशरीरविलयपूर्वकशिवत्वप्राप्तिसद्भावाच्च।

"असाधारणाकारेण ग्रहणं हि वस्तुनो ग्रहणम्। न च केवलमानन्दादिर्ब्रह्मणोऽसाधारणमाकारमुपस्थापयति; प्रत्यगात्मन्यप्यानन्दादेर्विद्यमानत्वात् हेयप्रत्यनीको ह्यानन्दादिः ब्रह्मणोऽसाधारणं रूपम्। प्रत्यगात्मनस्तु स्वतो हेयविरहिणोऽपि हेयसम्बन्धयोग्यताऽस्ति। हेयप्रत्यनीकत्वञ्च चिदचिदात्मकप्रपञ्चधर्मभूतस्थूलत्वादिविपरीतरूपम्। अतः असाधारणाकारेण

ब्रह्मानुसन्दधता । अस्थूलत्वादिविशेषितज्ञानानन्दाद्याकारं ब्रह्मानुसन्धेयमिति अस्थूलत्वादीनामानन्दादिवद्ब्रह्मस्वरूपप्रतीत्यन्तर्भावात्, सर्वासु ब्रह्मविद्यासु तथैव ब्रह्मानुसन्धेयमिति ।

गुणानां प्रधानानुवर्तित्वे दृष्टान्तमाह– ॥ औपसदवदिति ॥

यथा जामदग्न्यचतूरात्रपुरोडाश्युपसद्गुणभूतः सामवेदपठितः– **'अग्निर्वै होत्रम्'** इत्यादिमन्त्रप्रधानानुवर्तितया याजुर्वेदिकेनोपांशुत्वेन प्रयुज्यते । तदुक्तं प्रथमे काण्डे– **'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः'** इत्युच्यते ।"

अक्षरपदवाच्यस्य ब्रह्मणः केवलनिर्गुणत्वनिर्विशेषत्वाङ्गीकारे तदुपासनविरोधः । किञ्च– **'अथ परा यया तदक्षरमधिगम्यते'** इत्यादिना ब्रह्मणो वर्णगात्रश्रोत्रादिनिराकरणपूर्वकत्वेन निरवयवत्वं प्रसाध्य, **'अक्षरात्सम्भवतीह विश्वम्'** इत्युपसंहारे लूतवत् जगदुभयकारणत्वस्यैव अक्षरपुरुषस्यैव व्यवस्थापनात् सविशेषत्वं सगुणत्वञ्च बालानामपि विज्ञायते । बृहदारण्यकेऽपि **'एतद्वै तदक्षरं गार्गि'** इत्यादिना तदक्षरपुरुषस्य प्राकृतसर्वधर्मनिषेधपूर्वक-निरवयवत्वं प्रसाध्य तदुपसंहारे **'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः'** इति तस्यैव प्रशासकत्वादिधर्मव्यपदेशात् सगुणत्वं सविशेषत्वञ्चार्थात्सिद्धम् ।

"नन्वेवं सर्वासु ब्रह्मविद्यासु ब्रह्मण एव गुणित्वात् गुणानाञ्च प्रधानानुवर्तित्वात् **'सर्वकर्म-सर्वगन्ध-सर्वरस'** इत्यादेर्गुणजातस्य प्रतिविद्यं व्यवस्थितस्याप्यव्यवस्था स्यात्" इत्याशङ्क्य तत्राह–

## ॥ २१४ ॥ इयदामननात् ॥ ३४ ॥

"आमननं– आभिमुख्येन मननं– अनुचिन्तनम् । आमननात् हेतोः इयत् एव गुणजातं सर्वत्रानुसन्धेयत्वेन प्राप्तम् । यदस्थूलत्वादिविशेषितमानन्दादिकं येन गुणजातेन विना ब्रह्मस्वरूपस्येतरव्यावृत्तस्यानुसन्धानं न सम्भवति; तदेव सर्वत्रानुवर्तनीयम् । तच्च इयदेवेत्यर्थः । इतरे तु सर्वकर्मेत्यादयः प्रधानानुवर्तिनोऽपि चिन्तनीयत्वेन प्रतिविद्यं व्यवस्थिताः ।"

"अत्र परे तु सामान्यतद्भावाभ्यां प्रतिषेधमुखेन प्रतिपादनपरस्य समानत्वादक्षरस्य ब्रह्माभिन्नतया प्रत्यभिज्ञानाच्चेति योजयन्ति। ततोऽपि वरं उक्तार्थपरत्वम्। निदर्शनानुगुण्यात् अङ्गानां प्रधानानुवर्तित्वे हि तादृशोऽपन्यासः। भावाभावरूपधर्मविषयत्वात् आनन्दादय इत्यनेन न पौनरुक्त्यमित्याहुः। तदयुक्तम्— सत्यादिवाक्यानां अतद्व्यावृत्तिपरत्वाभ्युपगमात् तत्रापि स्वरूपातिरिक्त[1]व्यावृत्तिरूपधर्मानभ्युपगमात् सकलेतरव्यावृत्तस्वरूपस्य सत्यादिवाक्यप्रतिपन्नस्य व्यवच्छेद्यविशेषव्यावृत्तिप्रतिपत्तौ प्रयोजनाभावाच्च। न हि पांसुराशेर्विविक्तस्य रत्नस्य पुनःपुनः प्रत्येकपांसुव्यतिरेचने किञ्चित्प्रयोजनम्। 'ऋतं पिबन्तौ', 'द्वासुपर्णा' इति वाक्ययोर्विद्याभेदाभेदविषयं इयदामननादिति सूत्रं अधिकरणान्तरमाहुः। उभयोर्भोक्तृत्वं एकत्र, एकस्य भोक्तृत्वमन्यस्य चाभोक्तृत्वमन्यत्र इति विद्याभेदमुक्त्वा छत्रिन्यायेनाविरोधाज्जीवोपादानस्य ताद्दात्म्यप्रतिपादनार्थत्वाच्च रूपाभेदाद्विद्यैक्यमित्युक्तम्। तदयुक्तम्— छत्रिन्यायादिभिरर्थैकत्वस्य 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इत्यत्र सिद्धत्वात्, सूत्राक्षराणां तदसाधारणत्वाभावाच्च। इयच्छब्दोऽपि देशकालस्वरूपसङ्ख्येयतासाधारणः।

किञ्च— यदा पैङ्गीश्रुत्यनुसारेण सत्त्वद्वितीयप्रत्यगात्मपरत्वं 'द्वासुपर्णा' इति वाक्यस्याभिमतं, तदा द्वयोऽरपि जीवसद्वितीयपरमात्मपरत्वं व्याहतम्। जीवसद्वितीयपरमात्मपरत्वेऽपि पौनरुक्त्यमुक्तम्।

ननु न पौनरुक्त्यं— तत्प्रपञ्चनार्थो ह्ययमारम्भ इति चेन्न; अधिकरणान्तरनिरूप्यार्थानामिहाप्रपञ्चनात्, अस्य तेभ्यो वैषम्याभावाच्च। किञ्च— इयदिति सौत्रं पदं न द्वित्वसङ्ख्याव्यवच्छेदमेकान्ततोऽवगमयति। ततश्च 'विश्वमेवेदं पुरुषः', 'महान् प्रभुर्वै पुरुषः' इत्यादिषु जगदाकारव्यवच्छेदेन विद्यैक्यपरं सूत्रं किं न स्यात्। यदि सङ्ख्याव्यवच्छेदकत्वमेवाभिहितं तर्हि 'त्रिविधं ब्रह्ममेतत्' 'चतुष्पात् ब्रह्म' इत्यादिसङ्ख्यन्तरावच्छिन्नब्रह्मपरवाक्यविषयं किं न स्यात्; सर्वत्र भेदाभेदहेतवश्च उत्प्रेक्षितुं शक्याः, अतो यथाकथञ्चित् निर्वहणादपेक्षितार्थः सिध्यति।"

---

1. सकलेतरव्यावृत्त (ग A)

## अन्तरत्वाधिकरणम् ॥ १५ ॥

### परशिवस्य ब्रह्मण एव सर्वान्तरुपास्यत्वनिर्णयः

'अयमात्मा ब्रह्म', इत्यादिश्रुतिषु 'क्षरास्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' इत्यादिस्मृतिषु च ब्रह्मत्वस्याक्षरशब्दवाच्यत्वस्य च जीवे द्योतनात् तस्यैव स्वज्ञानाय स्वस्योपासनमेव युक्तमित्याशङ्कायामधिकरणान्तरेणाह—

## ॥ २१६ ॥ अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३५ ॥

स्वात्मनो जीवस्य **अन्तरा** हृदयकमलमध्ये अवस्थितः परमात्मा शिवो व्यवस्थितः; कुतः ? **भूतग्रामवत्** भूतग्रामवाक्यवदित्यर्थः। **'एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा'** इत्यादिश्रुतिषु,

**'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥'**

इत्यादिस्मृतिषु च सकलभूतहृदयान्तर्वर्तित्वस्य शिवे परब्रह्मणि व्यपदेशात्तदनुसारेण यत्साक्षादपरोक्षाद्ब्रह्मेति प्रश्नद्वयोऽपि **उपास्योपासकयोरन्त्ये ऐक्यन्यायात्** जीवात्म-परमात्मानोरंशांशिभावेन परमात्मनस्सकलभूतान्तर्यामित्वमुच्यते ।

ननु जीवहृदयान्तर्वर्तित्वं जीवस्यैव समुचितम् । **'अयमात्मा ब्रह्म'** इत्यादिषु जीवाभिन्नत्वेन ब्रह्मोपदिश्यत इति **चेन्न—** स्वान्तर्यामित्वस्य स्वस्मिन्नसम्भवात् । तथा चेत् **'एकोदेवस्सर्वभूतेषु गूढः'** इत्यादिश्रुतिस्मृतिषु सर्वजीवान्तर्यामित्वव्यपदेशकपरमात्म-विषयकवाक्यानां अप्रमाणत्वप्रसङ्गो दुर्निवारः । ब्रह्मसाक्षात्कारवतां उषस्ति-कहोळादीना-

मृषीणां सर्वलोकोपकारार्थं खलु प्रश्नः। तथाचैकेनैव प्रश्नेन सर्वलोकोपकारस्य सिद्धत्वात् प्रश्नद्वयं व्यर्थमिति प्रासङ्गिकशङ्कायामाह– **॥ अन्यथा भेदानुपपत्तिरिति ॥**

**अन्यथा** द्रष्टव्यभेदं विना **भेदानुपपत्तिः** प्रश्नभेदानुपपत्तिर्लोके दृष्टा। तथा च प्रकृतेऽप्युपासकस्य द्रष्टुः जीवस्य, द्रष्टव्यस्योपास्यस्य शिवस्य जीवभेदस्य च प्रश्नद्वयेऽपि भेदाभेदत्वव्यवस्थापनात् प्रश्नद्वयं व्यर्थमिति चेत्– **॥ उपदेशवदुपपत्तिः ॥**

यथा **श्वेतकेतुना 'भूय एव मा भगवान्विज्ञापयतु'** इति नववारं प्रश्ने कृते श्वेतकेतुं प्रति **उद्दालकेन 'तत्त्वमसि'** इति नववारं भेदाभेदात्मकसिद्धान्त-दृढीकरणार्थमुत्तरं दत्तम्। एवमत्राप्युषस्ति-**कहोळाभ्यां** प्रश्नद्वये कृते **शाकल्येनोत्तरद्वयं** दत्तमित्यतो न विरोधः। **'द्वासुपर्णा'** इत्यादिमन्त्रेषु शिव-जीवयोः घटपटवत्परस्पर-वैलक्षण्यावगमात्। **'अयमात्मा ब्रह्म'** इत्यादिश्रुतिषु जीवाभिन्नत्वेन ब्रह्मव्यपदेशात् सर्ववेदान्तविचारे परस्परात्यन्ताप्रामाण्यशङ्काद्योतनात् **उपास्योपासकयोर्भेदाभेदस्सम्भवेदिति न्यायेन** सर्ववेदान्तसिद्धद्वैताद्वैतसिद्धान्तसन्धानसामरस्यविज्ञानस्य दुर्विज्ञेयत्वाच्च तज्ज्ञानदार्ढ्यार्थं बहुप्रश्नानां बहुप्रतिवचनानाञ्च सफलत्वमिति सूत्रसूचितसूक्ष्मार्थः।

**बृहदारण्यके** उषस्तिप्रश्ने एवमाम्नायते– **'यत्साक्षादपरोक्षं ब्रह्म', 'य आत्मा-सर्वान्तरः तन्मे व्याचक्ष्व'** इति। तस्य प्रतिवचनं **'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेन अपानिति स त आत्मा'** इत्यादि। अतुष्टेन तेन पुनः पृष्ट आह– **'न दृष्टेर्द्रष्टारं पश्येः; न श्रुतेः श्रोतारं शृणुयाः; न मतेर्मन्तारं मन्वीथाः; न विज्ञाते विज्ञातारं विजानीथाः। एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तम्'** इति। तथा तदनन्तरं **कहोळप्रश्ने** चैवमाम्नायते– **'यदेव साक्षादपरोक्षात् ब्रह्म' 'य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व'** इति। प्रतिवचनञ्च– **'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति एवं हैतमात्मानं विदित्वा ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च'** इत्यादि अतोऽन्यदार्तमित्यन्तम्।

तत्र संशय्यते किमनयोर्विद्याभेदोऽस्ति नेति। किं युक्तम् भेद इति। कुतः? रूपभेदात्। प्रतिवचनभेदाद्रूपं भिद्यते। प्रश्नस्यैकरूप्येऽपि प्रतिवचनप्रकारो हि भेदेनोपलभ्यते।

पूर्वत्र प्राणादीनां कर्ता सर्वान्तरात्मत्वेनोच्यते ; परत्र अशनाया पिपासादिरहितः । अतः पूर्वत्र प्राणितदेहेन्द्रियमनःप्राणव्यतिरिक्तः प्रत्यगात्मोच्यते । परत्र– तदतिरिक्तोऽशनाया पिपासादिरहितः परमात्मा । अतो रूपं भिद्यते भूतग्रामवतश्च प्रत्यगात्मनस्तस्य भूतग्रामस्य सर्वस्यान्तरात्मत्वेन सर्वान्तरत्वमप्युपपन्नम् ।

यद्यपि प्रत्यगात्मनः सर्वान्तरत्वं भूतग्राममात्रापेक्षत्वेनापेक्षितम् ; तथापि तदेव ग्राह्यम् । अन्यथा मुख्यान्तरात्मपरिग्रहलोभात् परमात्मस्वीकारे प्रतिवचनभेदो नोपपद्यते । प्रतिवचनं हि सर्वत्र प्रत्यगात्मविषयं ; परमात्मनः प्राणितृत्वाऽप्राणितृत्वाद्यसम्भवात् । परश्च परमात्मविषयम् ; अशनायाद्यतीतत्वात् तदिदमाशङ्क्यते– **अन्तराभूतग्रामवदिति** । **अन्तरा** सर्वान्तरत्वेन प्रथमप्रतिवचनं **भूतग्रामवत्** स्वात्मनः भूतग्राभवान् तदन्तरः स्वात्मा प्रत्यगात्मा सर्वान्तर इत्युच्यते । अन्यथा **'यः प्राणेन प्राणिति'**, **'योऽशनाया पिपासाद्यतीतः'** इति प्रतिवचनभेदानुपपत्तिरिति चेदत्रोत्तरं **नेति**– न विद्याभेद इत्यर्थः ; उभयत्र-परविषयत्वात् प्रश्नप्रतिवचनयोः । तथा हि– **यत्साक्षादपरोक्षात् ब्रह्म'**, **'य आत्मा सर्वान्तरः'** इति प्रश्नस्तावत् परमात्मविषय एव । ब्रह्मशब्दस्य परमात्मसाधारणत्वेऽपि प्रत्यगात्मन्यपि कदाचिदुपचरितप्रयोगदर्शनात् तद्व्यावृत्त्या परमात्मप्रतिपत्त्यर्थं यत्साक्षात् ब्रह्मेति विशेषणं क्रियते ।

अपरोक्षत्वमपि सर्वदेह(श?) सर्वकालसम्बन्धित्वम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनन्तत्वेनावगतस्य परमात्मन एवोपपद्यते । सर्वान्तरत्वमपि **'यो रुद्रोऽग्नौ यो अप्सु य ओषधीषु यो रुद्रो'** इति **तैत्तिरीये** । तथा **अथर्वशिरसि– 'अहमेकः प्रथममासं वर्तामि च भविष्यामि च । नान्यः कश्चिन्मत्तो व्यतिरिक्तः । सोऽन्तरादन्तरं प्राविशत्'** इति ।

**काण्वशाखायां 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः'** इत्यारभ्य– **'य आत्मनि तिष्ठन् आत्मनोऽन्तरः'** इति सर्वान्तर्यामिणः परशिवस्यैव सम्भवति । प्रतिवचनमपि तथैव परमात्मविषयम् । **'यः प्राणेन प्राणिति'** इति निरुपाधिकं प्राणनस्य कर्तृत्वं **परमात्मन एव** ; प्रत्यगात्मनः सुषुप्तौ प्राणनं प्रति कर्तृत्वाभावात् । एवमजानतोषस्तिना प्राणनकर्तृत्वमात्रमुक्तं इति मन्वानेन प्रत्यगात्मनस्साधारण्यं प्रतिवचनस्य

मत्वा अतुष्टेन पुनः पृष्टस्तं प्रति प्रत्यगात्मनो व्यावृत्तं निरुपाधिकत्वेन प्राणनस्य कर्तारं परमात्मानमाह— **'न दृष्टेर्द्रष्टारं पश्येः'** इत्यादिना।

इन्द्रियाधीनानां दर्शन-श्रवण-मनन-विज्ञानानां कर्तारं प्रत्यगात्मानं प्राणनस्य कर्तृत्वेनोक्तमिति न मन्वीथाः। तस्य सुषुप्तिमूर्छादौ प्राणनादेरकर्तृत्वात्। **'को ह्येवान्यात्कः प्राण्यात्- य एष आकाश आनन्दो न स्यात्'** इति सर्वप्राणनहेतुत्वं हि परमात्मन एव अन्यत्र श्रुतम्— अतः पूर्वप्रश्नप्रतिबचने परमात्मविषये; एवमुत्तरे अपि अशनायाद्यतीतत्वस्य परमात्मासाधारणत्वात् उभयत्र **'अतोऽन्यदार्तं'**मित्युपसंहारश्चैकरूपः। प्रश्नप्रतिवचनावृत्तिस्तु कृत्स्नप्राणिप्राणनहेतोश्शिवस्य परब्रह्मणः अशनायाद्यतीतत्वप्रतिपादनाय। तत्र दृष्टान्तमाह— ॥ **उपदेशवदिति** ॥ यथा सद्विद्यायां **'उत तमादेशमप्राक्षीः'** इति प्रक्रान्ते सदुपदेशे **'भगवांस्त्वेवमेतद्ब्रवीतु'** इति, **'भूय एव मा भगवान्विज्ञापयतु'** इति प्रश्नस्य **'स एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा-तत्त्वमसि श्वेतकेतो'** इति प्रतिबचनस्य च भूयो भूयः आवृत्तिस्सतो ब्रह्मणस्तत्माहात्म्यविशेषप्रतिपादनाय शिष्यस्य सर्ववेदान्तसिद्धद्वैताऽद्वैतविज्ञानदृढीकरणाय च श्रूयते। तद्वदत्र एकस्यैव सर्वभूतान्तरस्य शिवस्य परब्रह्मणः सर्वप्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वव्यवस्थापनेन स्वरूपैक्याद्विद्यैक्यम्।

अथ स्याद्यद्यप्युभे प्रश्नप्रतिबचने परशिवब्रह्मविषये; तथापि विद्याभेदो युक्तः; एकत्र सर्वप्राणिप्राणनहेतुत्वेनोपास्यत्वमितरत्र अनशनाद्यतीतत्वेन उपास्यगुणभेदेन रूपभेदात् प्रष्टृभेदाच्च। पूर्वत्र उषस्तिः प्रष्टा; उत्तरत्र कहोळ इत्याशङ्क्य तत्राह—

## ॥ २१६ ॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३६ ॥

"नात्र विद्याभेदः; प्रश्नप्रतिवचनाभ्यां एकरूपार्थविषयाभ्यां एकेन च विधिपदेन एकवाक्यत्वप्रतीतेः। प्रश्नद्वयं तावत् सर्वान्तरात्मत्वविशिष्टपरशिवब्रह्मविषयम्। द्वितीयप्रश्ने **'यदेव साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः'** इत्येवाकारश्च पूर्वत्रोषस्तेन पृष्टगुणविशिष्टब्रह्मविषयत्वं कहोळप्रश्नस्यावधारयति। प्रतिवचनश्चोभयत्र **'स त आत्मा सर्वान्तरः'** इति सर्वान्तरात्मत्वविशिष्टपरशिवब्रह्मविषयमेकरूपमेव। विधिप्रत्ययश्चोत्तरत्रैव दृश्यते। **'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्'** इति।

एवं सर्वान्तरात्मत्वविशिष्टपरशिवब्रह्मैक्यविषयत्वे द्वयोरवधृते सति एकस्मिन्नेव सर्वान्तरात्मत्वविशिष्टे परशिवब्रह्मणि उपास्ये **उषस्ति–कहोळयोः** इतरेतरबुद्धिव्यतिहारः कर्तव्यः। **उषस्तस्य** या सर्वान्तरात्मनो ब्रह्मणः सर्वप्राणिप्राणनहेतुत्वविषया बुद्धिः ; सा **कहोळेनापि** प्रष्ट्रा कार्या। या च **कहोळस्य** तस्यैव ब्रह्मणोऽशनायाद्यतीतत्वविषया बुद्धिः, सा उषस्तिनापि कार्या। एवं व्यतिहारे कृते उभाभ्यां सर्वान्तरस्य परशिव-ब्रह्मणो जीवव्यावृत्तिरवगता भवति। एवं सर्वान्तरात्मानं प्रत्यगात्मनो व्यावृत्तमवगमयितुं सर्वप्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वप्रतिपादनेन **विशिंषन्ति** हि याज्ञवल्क्यस्य प्रति-वचनानि। अतः परशिवब्रह्मणस्सर्वान्तरात्मत्वमेवोपास्यगुणः। प्राणनहेतुत्वादयस्तु तस्योप-पादकाः नोपास्याः।

ननु उपास्यगुणः सर्वान्तरात्मत्वमेव चेत्, प्राणनहेतुत्वस्य अशनायाद्यतीतत्वस्य च प्रष्ट्रोः व्यतिहृत्यानुसन्धानं किमर्थं तदुच्यते– 'सर्वप्राणिप्राणनहेतुत्वेन सर्वान्तरात्मनि जीवाद्व्यावृत्ते ब्रह्मणि **उषस्तिनावधृते** सति, **कहोळेन** जीवस्य सर्वात्मना असम्भावितेन स्वभावविशेषेण सर्वान्तरात्मा जीवव्यावृत्तोऽनुसन्धेयः' इति कृत्वा पुनः प्रश्नः कृतः। **याज्ञवल्क्योऽपि** तदभिप्रायमभिज्ञाय प्रत्यगात्मनोऽसम्भावितमशनायादिप्रत्यनीकत्वमुक्तवान्। अतश्चोपास्यस्य व्यावृत्तिप्रतीतिसिध्यर्थं उभाभ्यां परस्परबुद्धिव्यतिहारः कर्तव्यः। **इतरवत्**-यथेतरत्र सद्विद्यायां भूयो भूयः प्रश्नैः प्रतिवचनैश्च तदेव सद्ब्रह्म व्यवच्छिद्यते, न पुनः पूर्वप्रतिपन्नात् गुणात् गुणान्तरविशिष्टतयोपास्यं प्रतिपाद्यते तद्वत्।"

तत्रापि प्रश्नप्रतिवचनभेदे सति कथमैक्यं अवगम्यत इति चेत्तत्राह–

## ॥ २१७ ॥ सैव हि सत्यादयः ॥ ३७ ॥

" ॥ **सैव हि** ॥ सच्छब्दाभिहिता परमकारणभूता परा देवतैव '**सेयं देवतैक्षत**', '**तेजः परस्यां देवतायां**' इति प्रकृता, '**यथा सौम्य मधु मधुकृतो निस्तिष्ठन्ति**' इत्यादिषु पर्यायेषु सर्वेषूपपाद्यते– यतः "**ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा**' इति प्रथमपर्यायोदिताः सत्यादयस्सर्वेषु पर्यायेषूपपाद्योपसंह्रियन्ते।

केचित्तु– 'व्यतिहारो विशिंषन्ति हीतरवत्', 'सैव हि सत्यादयः' इति सूत्रद्वयं अधिकरणद्वयमिति वर्णयन्ति ।

तत्र पूर्वेण, 'त्वं वा अहमस्मि भगवो देवते, अहं वै त्वमसि भगवो देवते', 'तद्योऽहं सोऽसौ, योऽसौ सोऽहम्" इति वाक्ये जीवपरमयोर्व्यतिहारानुसन्धानं प्रतिपाद्यत इत्युच्यते– इत्याहुः । तत्, 'सर्वं खल्विदं ब्रह्म', 'एतदात्म्यमिदं सर्वम्', 'तत्त्वमसि' इत्यवगतसर्वात्मभावविषयत्वादस्य वाक्यस्य नात्र प्रतिपादनीयमपूर्वमस्तीत्यनादरणीयम् । तत्तु वक्ष्यते ; 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति । न च सर्वात्मत्वानुसन्धानातिरेकेण परस्मिन् ब्रह्मणि जीवत्वानुसन्धानं, जीवे च परब्रह्मानुसन्धानं तथ्यं सम्भवति ।

उत्तरेण च सूत्रेण, 'स यो हैतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' इत्यादिवाक्यप्रतिपादितस्य सत्योपासनस्य, 'तद्यत् सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्' इत्यादिवाक्यप्रतिपादितोपासनस्य चैक्यं प्रतिपाद्यत इति ।

तदप्ययुक्तम् । उत्तरवाक्ये अक्ष्यादित्यस्थानभेदेन विद्याभेदस्य पूर्वमेव, 'न वा विशेषात्' इत्यनेन प्रतिपादितत्वात् । न च द्वयोरनयोर्व्याहृत्यादिशरीरकत्वेन रूपवतोः, 'हन्ति पाप्मानं जहाति च य एवं वेद' इति पृथक् संयोगचोदनावतोर्द्वयोरुपासनयोः 'स यो हैतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति', 'जयतीमांल्लोकान्' इति संयोगरूपादिमत्तया निरपेक्षेण पूर्वेणैकेनोपासनेनाभेदः सम्भवति । न च 'हन्ति पाप्मानं जहाति' इति गुणफलाधिकारत्वम् ; प्रमाणाभावात् । पूर्वेणैकविद्यात्वं प्रमाणमिति चेत्– न, इतरेतराश्रयत्वात् । एकविद्यात्वे निश्चिते सति पूर्वफलस्यैव प्रधानफलत्वेनोत्तरयोः फलयोर्गुणफलत्वं, तयोर्गुणफलत्वे निश्चिते सति संयोगभेदाभावात् पूर्वेण विद्यैक्यमितीतरेतराश्रयत्वमिति । एवमादिभिर्यथोक्तप्रकारमेव सूत्रद्वयमिति" निश्चीयते ।

---

## कामाद्यधिकरणम् ॥ १६ ॥

### परमशिवस्यैव प्रणवायतनत्वादिसमर्थनम्

ननु 'ओमित्येतदक्षरमिदं सर्वम्' इत्यादिना माण्डूक्ये प्रणवस्यैवाक्षरत्वं सर्वात्मकत्वं सर्वातीतत्वं ; तथा तैत्तिरीये 'दहरं विपाप्मं' इत्यारभ्य दहरविद्यां प्रपञ्चयित्वा 'यो वेदादौ स्वरः प्रोक्तः' इत्यादिना प्रणवोपास्यत्वं, प्रदेशान्तरेऽपि 'ओमित्येकाक्षरं ब्रह्म', 'ओं तद्ब्रह्म', 'ओं तद्वायुः' इत्यादिना प्रणवस्यैव परत्व-व्यवस्थापनात् वेदवेदान्तोपक्रमोपसंहारे 'हरिः ओं' इति प्रयोगदर्शनाच्च नारायणस्यैव प्रणवात्मकत्वं अर्थासिद्धम् । अतो दहर शाण्डिल्यादिसर्वविद्योपास्यत्वं तस्यैव समुचित-मित्याशङ्कायां अधिकरणान्तरेणाह–

## ॥ २१८ ॥ कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३८ ॥

माण्डूक्ये श्रूयते– 'ओमित्येकाक्षरं ब्रह्म', तस्योपव्याख्यानम् । 'भूतं भव्यं भविष्यदिति सर्वमोङ्कार एव' 'यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव', 'सर्वं ह्येतद्ब्रह्म', 'अयमात्मा ब्रह्म', 'सोऽयमात्मा', 'चतुष्पाज्जागरितस्थानो बहिः प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुक् वैश्वानरः प्रथमः पादः । स्वप्नावस्थानोऽन्तः-प्रज्ञः प्रविविक्तभुक् तैजसो द्वितीयः पादः । सुषुप्तिस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ।'' "........एष सर्वेश्वर एष सर्वज्ञः एषोऽन्तर्याम्येष योनिः, सर्वस्य प्रभवाप्ययौ हि भूतानां', । 'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः', 'ओं तद्ब्रह्म' इत्यादि तैत्तिरीयके च श्रूयते ।

तत्र संशयः– किमोङ्कारविद्यायामुपास्यः ओङ्कारो वा? तदधिष्ठानपरशिवो वा? तदात्मकनारायणो वा? इति । किं युक्तम्? विद्याभेद इति । कुतः? रूपभेदात्

'ओमित्येतदक्षरमिदं सर्वम्' इत्युपक्रम्य प्रणवस्यैव 'अयमात्मा ब्रह्म', 'सोऽयमात्मा' इत्यादिना सर्वात्मकत्वस्य अपरोक्षब्रह्मत्वस्य च व्यवस्थापनात्। अन्यत्र च 'ओमित्येकाक्षरं ब्रह्म', 'ओं तद्ब्रह्म, ओं तद्वायुः, 'ओं तदात्मा, ओं तत्सत्यं ओं तत्सर्वं' इत्यादिना तैत्तिरीये तस्यैतद्दर्शनात्, 'ओं ब्रह्म देवानां प्रथमं सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता, स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' इति मुण्डके, 'ओं अथ हैनं पिप्पलाद आङ्गीरसः सनत्कुमारश्चाथर्वणमुवाच– भगवन् किमादौ प्रयुक्तं ध्यानं ध्यायेत्? चत्वारो वेदाश्च? तप्यं किं तद्ध्यानम्? को वा ध्याता? कश्च ध्येयः' इति। स एभ्योऽथर्वणः प्रत्युवाच– 'ओमित्येतदक्षरमादौ प्रयुक्तम्। ध्यानं ध्यातव्यमित्येतदक्षरं परं ब्रह्म। अस्य पादाश्चतुष्पादिकमक्षरं परं ब्रह्म।' इति। अथर्वणशिखोपनिषदि च तथा तस्यैव सर्वाधिकत्वनिर्देशाच्च नादरूप प्रणवध्यानधारणाद्युपासनम्? उत, 'हरिः ओम्' इति दर्शनात् प्रणवात्मकविष्णुध्यानं वा मुमुक्षूणां विधेयम्? इति प्राप्ते प्रचक्ष्महे– ॥ कामादितरत्रेति ॥

इतरत्र– तैत्तिरीयादिषु श्रूयमाणानां दहरादिविद्याविधायकानां परमेश्वरधर्माणां एकत्वेन विधैक्यमुपपन्नम्। कुतः? ॥ आयतनादिभ्यः ॥ प्रणवायतनस्य उपास्यस्य परमशिवस्य सर्वमयत्व-हृत्पुण्डरीकस्थानत्वाद्यनन्यसाधारणलिङ्गानां सर्वासु शाखासु तुल्यत्वादित्यर्थः। तथा च 'सत्यकामस्सत्यसङ्कल्पस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः' इत्याद्येकैकशाखायां श्रूयमाणानां गुणानां सत्यकामत्वादीनां सर्वासु शाखास्वप्युपसंहारः कर्तव्यः।

तत्रैव माण्डूक्ये 'नान्तः प्रज्ञं न बहिःप्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञं', 'अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते। स आत्मा स विज्ञेय', 'सोऽयमात्माऽध्यक्षरमोंकारोऽधिमात्रम्', 'पादा मात्रा मात्राश्च पादाः अकार-उकार-मकारश्चेति' 'जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा। 'आप्तेरादिमत्वा-

दाप्नोतीह वै सर्वान् कामान् आदिश्च भवति य एवं वेद' 'स्वप्नस्थानस्तैजस-उकारो द्वितीया मात्रा। उत्कर्षादुभयत्वात्। 'या उत्कर्षतीह वै ज्ञानसन्ततिं समानश्च भवति नास्या ब्रह्मवित्कुले भवति य एवं वेद', सुषुप्तिस्थानः प्राज्ञो मकारस्तृतीया मात्रा। 'मितेरपीतेर्वा मिनोति ह वा इदं सर्वमपीतिश्च भवति 'य एवं वेद', 'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमश्शिवोऽद्वैत एवमोङ्कार संविशत्यात्मनाआत्मैवत्मानं य एवं वेद' इत्यन्तेन प्रणवात्मकत्वस्य शिवस्यैव निर्दिशात् सर्वात्मकत्वादिसर्वेषां धर्माणां नेतरस्योपपत्तिः। तथेतरत्र च तैत्तिरीये– 'ईशानः सर्वविद्यानां ............... शिवोम्' इत्यनेन प्रणवात्मकत्वं शिवस्यैव प्रदर्शितम्। 'दहरं विपापं ............ तदुपासितव्यम्' इति दहरविद्यां निरूप्य तत्रोपास्यः कः? इत्याकाङ्क्षायां, 'यो वेदादौ स्वरः प्रोक्तः ..... .... यः परस्स महेश्वरः'। इत्यादि-प्रणवप्रकृतिकमूर्तित्रयातीतमहेश्वरशब्दवाच्यकृष्णपिङ्गलत्वविरूपाक्षत्वादिधर्मावच्छिन्नशिवतत्त्वोपा-सनमेवोपदिष्टम्।

अथर्वणशिखोपसंहारे 'ब्रह्मविष्णुरुद्रेन्द्रास्ते ........ कारणन्तु ध्येयः', 'सर्वैश्वर्यश्शम्भुराकाशमध्ये ध्रुवं तस्यादिकं क्षणमेकक्रतुशतस्यापि चतुस्सप्तत्या यत्फलं तदाप्नोति कृत्यमोङ्कारगतिं च सर्वज्ञानयोगज्ञानानां यत्फलमोङ्कारो वेद', 'पर ईशो वा', 'शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य' इत्यन्तेन प्रणवात्मकत्वं शिवस्यैव निर्दिश्य मुमुक्षूणां शिवेतरध्याननिराकरणमुक्तम्। 'हरिः ओं' इत्यत्र विष्णोः प्रणवात्मकत्वमिति यत् तन्न; तद्विधायकप्रात्यक्षिकश्रुत्यदर्शनात्।

### शक्ति-शिवयोः विष्णु-ईश्वरयोः तादात्म्य-सामरस्यप्रतिपादनम्

किञ्च– 'पुरुषो वै रुद्रः', 'तत्पुरुषाय विद्महे' इत्यादिश्रुतिषु शिवस्य पुरुषत्वं; 'वासुदेवः परा प्रकृतिः' इति कृष्णगीतायां विष्णोः प्रकृतित्वं प्रसिद्धम् 'प्रकृतिस्त्वं पुमान् रुद्रः' इति ईश्वरगीतायां तथा स्पष्टमुपदिष्टम्। 'शङ्करश्शूल-पाणिश्च खट्वाङ्गी विष्णुवल्लभः' इति 'शिवकेशवसम्भूतं कलये कालभैरवं' इति स्कान्द-लैङ्ग-कूर्मादिपुराणेषु तथा निर्दिष्टम्।

'शिवस्य शक्तिर्विनियोगकाले
चतुर्विधाभूच्छिवसत्प्रसादात् ।
भोगे भवानी पुरुषेषु विष्णुः
क्रोधे च काली समरे च दुर्गा ॥'

इति सामशाखायामपि दर्शितम् । तस्मात् 'हरिः ओं' इत्यत्र हरिरूपमायाशक्तिविशिष्टत्वमोङ्कारात्मकशिवस्य व्यपदिशति । 'शक्ति-शक्त्योर्भेदे सत्यभेदः' इति न्यायेन शक्तिशक्तयोर्विष्ण्वीश्वरयोः 'हरिः ओम्' इति तादात्म्यसामरस्यमुक्तम् । अतः 'नमो रुद्राय विष्णवे मृत्युर्मे पाहि' इत्यादिश्रुतिषु 'शिवाय विष्णुरूपाय शिवरूपाय विष्णवे' इत्यादिस्मृतिषु च चन्द्र-चन्द्रिकावदविनाभावित्वमवगम्यते ।

उत छान्दोग्ये 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म । दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इत्यादिना, वाजसनेयके च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः । प्राणेषु य एषोन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः' इत्यादिना, कैवल्ये च–

'हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्यमध्ये विशदं विशोकम् ।
अचिन्त्यमव्यक्तमनन्तबोधं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥
तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ।
उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥'

इत्यादिना सत्यकामत्वादीनां आत्मधर्मत्वेन, नीलकण्ठत्वादीनां देहधर्मत्वेन च भेदावगमेऽपि उपास्यवस्त्वेकत्वेन विद्यैक्यम् । छान्दोग्यगताः अपहतपाप्मत्वादयः वाजसनेयशाखागताः वशित्वादयः कैवल्यगतास्सच्चिदानन्दादयश्च सर्वे गुणाः परशिवब्रह्मण्येवावगम्यन्ते । अतस्तदुपासकानां 'अभयं वै ब्रह्म भवति' इति 'परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यादिश्रुतिषु परशिवब्रह्मप्राप्तिरूपफलैकत्वेन च विद्यैक्यमनिवार्यम् ।

अथ स्यात्– यदुक्तं वाजसनेयके– वशित्वादिभिस्सह सत्यकामत्वादिसद्भावोऽवगम्यत इति तन्नोपपद्यते; वशित्वादीनामेव परमार्थतस्तत्र सद्भावाभावात्। तदभावाच्च 'मनसैवानुद्रष्टव्यं', 'नेह नानास्ति किञ्चन', 'मृत्योस्समृत्युमाप्नोति य इह नानेव पश्यति। एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्' इति प्रकृतेन वाक्येन 'स वा एष नेति नेत्यात्मा' इत्युत्तरेण चोपास्यस्य ब्रह्मणो निर्विशेषत्वप्रतीतिरवगम्यते। अतो वशित्वादयोऽपि स्थूलत्वाणुत्ववत् निषेध्या इति प्रतीयन्ते। अत एव छान्दोग्योऽपि सत्यकामत्वादयो न ब्रह्मणः पारमर्थिकगुणा उच्यन्ते। अतोऽपारमार्थिकत्वादेवंजातीयकानां गुणानां मोक्षार्थेषूपासनेषु लोप इत्याशङ्क्य तत्राह–

## ॥ २१९ ॥ आदरादलोपः ॥ ३९ ॥

"ब्रह्मगुणत्वेन प्रमाणान्तराप्राप्तानां गुणानामेषां सत्यकामत्वादीनां 'तस्मिन् यदन्तः....', 'एषआत्मा....', 'एष सर्वेश्वर एष भूताधिपतिरेषभूतपाल एष सेतुर्विधरणः", शान्तं 'शिवमद्वैतं', 'त्रिलोचनं नीलकण्ठं प्रशान्तं' इत्यादिभिः, 'नमो हिरण्यबाहवे हिरण्यवर्णाय', 'नमो नीलग्रीवाय च शितिकण्ठाय च' इति तैत्तिरीये च परब्रह्मणश्शिवस्य परमसत्त्वप्रधानत्वोमापतित्व-नीलकण्ठत्वादीनां वेद-वेदान्तेष्वभ्यासादलोप एव। तस्मात् 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिना स्वाभाविकत्वेन अलुप्तशक्तिमत्वमभिहितम्। छान्दोग्ये तावत् "तद्यइहाऽऽत्मानमनुविद्यव्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामाचारो भवति' इति सत्यकामत्वादिगुणविशिष्टस्य ब्रह्मणो वेदनमभिधाय, 'अथ य इह आत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेष्वकामचारो भवति' इति अवेदननिन्दा क्रियमाणा गुणविद्वेदनस्य आदरं दर्शयति। तथा वाजसनेयके– 'सर्वस्य वशी सर्वस्येशानः एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः' इति भूयोभूयश्शिवस्य परब्रह्मण ऐश्वर्योपदेशात् गुणेष्वादरः प्रतीयते। एवमन्यत्रापि। न च मातापितृसहस्रेभ्योऽपि वत्सलतरं शास्त्रं प्रतारकवदपारमार्थिकान् निरसनीयान् गुणान् प्रमाणान्तराप्रतिपन्नात् आदरेणोपदिश्य संसारचक्रपरिवर्तनेन पूर्वमेव बम्भ्रम्यमाणान् मुमुक्षून् भूयोऽपि भ्रमयितुमलम्। 'नेह नानास्ति किञ्चन', 'एकधैवानुद्रष्टव्यम्' इति

तु सर्वस्य ब्रह्मकार्यत्वेन तदात्मकत्वादेव तथानुसन्दर्शनं विधाय साब्रह्मकत्वेन पूर्वसिद्ध-नानात्वदर्शनं निषेधति। अयमर्थः प्रागेव प्रपञ्चितः।

'स वा एष नेति नेत्यात्मा' इत्यत्र च इतिशब्देन प्रमाणान्तरप्रतिपन्नं प्रपञ्चाकारं परामृश्य न तथाविधं ब्रह्म इति सर्वात्मभूतस्य परब्रह्मणः शिवस्य प्रपञ्चविलक्षणत्वं प्रतिपाद्यते।

'यो देवानां प्रथमश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः।
हिरण्यगर्भं जनयामास पूर्वं स नो बुध्या शुभया संयुनक्तु॥'

इति श्वेताश्वतरे, 'विश्वाधिको रुद्रो महर्षिः' इति तैत्तिरीयके च विश्वाधिकत्वं शिवस्यासाधारणं लक्षणं; तदेव चानन्तरमुपपादयति। 'अग्राह्यो न गृह्यते, अशीर्यो न हि शीर्यते, असङ्गो न हि सज्जते; अव्यथितो न व्यथते नरिष्यति' इति प्रमाणान्तरग्राह्यविजातीयत्वात् प्रमाणान्तरेण न गृह्यते। विशरणीयविसजातीय-त्वान्न विशीर्यते। एवमुत्तरत्रानुसन्धेयम्।

छान्दोग्येऽपि 'नास्य जरयैतज्जीर्यते, न वधेनास्य हन्यते, एतत्सत्यं ब्रह्म-पुरमस्मिन् कामास्समाहिताः' इति सर्वविजातीयत्व ब्रह्मणः प्रतिपाद्य तस्मिन् सत्य-कामत्वादयो विधीयन्ते।

नन्वेषमपि 'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्', 'स यदि पितृलोककामो भवति' इत्यादिना सत्यकामादिगुणविशिष्टवेदनस्य सांसारिकफल-सम्बन्धश्रवणान्मुमुक्षोः ब्रह्मप्रेप्सोर्न सगुणं ब्रह्मोपास्यं परविद्याफलञ्च। 'परं ज्योति-रुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इतीदमेव। अतस्सत्यकामादयो ब्रह्मप्रेप्सोर्नोप-संहार्या इत्याशङ्क्य तत्राह—

### सामरस्यमुक्ति-सारूप्यमुक्तिविवेकः

## ॥ २२० ॥ उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥

"उपस्थितिः– उपस्थानम्; ब्रह्मोपसम्पत्तिः। उपस्थिते– ब्रह्मोपसम्पन्ने सर्वविद्याविनिर्मुक्तेस्त्वेन रूपेणाभिनिष्पन्ने प्रत्यगात्मनि अत एव उपसम्पत्तेरेव हेतोः" सायुज्यमुक्तौ तदात्मकत्वम्, सारूप्यमुक्तौ शिवः सर्वेषु लोकेषु कामचार उच्यते। 'यथा नद्यः', 'एष सम्प्रसादः', "स उत्तमः पुरुषः', 'स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा................ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं' 'स स्वराड् भवति' 'तस्य सर्वेषु लोकेषु कामचारो भवति' इति। तदेतच्चतुर्थे निपुणतरमुपपादयिष्यते। अतः सालोक्यादिमुक्तिषु "सर्वेषु लोकेषु कामचारस्य मुक्तोपभोग्यफलत्वात् मुमुक्षोस्सत्यकामत्वादयो गुणा उपसंहार्याः" 'यस्सर्वज्ञस्सर्ववित्' इत्यादिबहुश्रुतिदर्शनात्। 'निष्कलं निष्क्रियं शान्तं' इत्यादिश्रुतीनां सत्यज्ञानानन्दादिस्वरूपगुणधर्मनिषेधो न व्यवह्रियते, किन्तु जीववत् प्राकृतधर्मवैलक्षण्यगुणसम्पत्तिरुपपाद्यते।

किञ्च– केचित् श्रुतीनां सृष्टिकालपरत्वं, केचित् स्थितिविधायकत्वं, केचिन्महिमाप्रकाशकत्वं, केचित्संहारपरत्वं, केचित्परिशेषपरत्वञ्च वर्णयन्ति।

### परिशेषशब्दार्थः

परिशेषो नाम ब्रह्मणस्संहारानन्तरं पुनस्सृष्टिपर्यन्तं स्वशक्तिसंकोचत्वेन स्थितत्वात् तदवस्था परिशेष इत्युच्यते। तस्मान्निर्गुणश्रुतीनां सर्वासां तत्कालपरत्वमिति वेदितव्यम्। अत एव 'लोकवत्तु लीलाकैवल्यं' इति सूत्रे परब्रह्मणश्शिवस्य स्वशक्तिप्राचुर्यतया सृष्ट्युन्मुखे लीलाश्रयत्वं, संहारानन्तरं पुनः सृष्टिपर्यन्तं स्वेच्छया शक्तिसंकोचत्वेन केवलत्वमुपदिष्टम्। अतस्सर्ववेदान्तमुख्यार्थवेदिभिः रेवणसिद्ध-मरुलसिद्ध-उद्भटाराध्य वेमाराध्यादिभिः सगुणश्रुतीनां सर्वासां शक्तिविकासपरत्वं, निर्गुणश्रुतीनां शक्तिसंकोचविषयपरत्वमिति व्यवस्था निर्णीता। 'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन' इत्यादिश्रुतौ प्राणाग्निहोत्रात्मकवैश्वानरोपासनमभिधाय 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं' इति भोजनार्थ-

पक्वान्नस्य प्राणाग्निहोत्रमात्रसाधकविध्युपदेशात्, अतो तद्विद्यायाः परशिवप्राप्तिसाधकत्वं न सम्भवतीति चेन्न। 'अङ्गुष्ठमात्रः पुरुषो अङ्गुष्ठश्च समाश्रितः' 'ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्', 'अहमन्नमहमन्नमहमन्नं ............ मन्नादः ॥' 'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः' इत्यादिश्रुतिषु जाठराग्न्यवच्छिन्नतया शिवस्येहान्नभोक्तृत्वनिर्देशात् एतद्धर्ममभिधाय जठरावच्छिन्नप्राणलिङ्गस्य विध्युक्तेन मार्गेण तत्क्रियावतां पुंसां परम्परया शिवप्राप्तिसाधनमुपदिश्यते। तस्माद्विद्यैक्यं युक्तम्।

## तन्निर्धारणानियमाधिकरणम् ॥ १७ ॥

### परशिवे भययुक्तमुक्तित्रयविलक्षणसायुज्यमुक्तिप्रार्थनाविधिः

ननु 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्यत्र विपश्चिता सर्वज्ञेन ब्रह्मणा सह सर्वानपि कामान् मुक्तः सह प्राप्नोति । सहशब्दो ब्रह्मानन्दभोगस्य च यौगपद्याभिप्रायः । तस्मात् मुक्तानां सारूप्यमुक्तिरेव फलमिति निश्चीयते, 'ब्रह्मणस्सायुज्यँ सलोकतामाप्नोति' इत्युत्तरत्र दर्शनात् । एवं शिवजीवैक्यविधायकतत्त्वमस्यादि श्रुतीनां सर्वासां तात्पर्यम् । अतो लिङ्गशरीरविलयपूर्वकनिरवयवशिवत्वप्राप्तिर्न घटत इत्याशङ्कायामधिकरणान्तरेणाह—

## ॥२२१॥ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥४१॥

॥ **तन्निर्धारणानियमः** ॥ तन्निर्धारणा दहरशाण्डिल्यादिविद्योपासकानां भक्तानां सालोक्यादित्रिविधमुक्तिरेवेति व्यवस्था, तदनियमः श्रुति-स्मृत्यादिषु तन्नियमाभावो दृश्यते । कुतः ? ॥ **तद्दृष्टेः** ॥

**गताः कलाः पञ्चदश प्रतिष्ठा**
**देवाश्च सर्वे प्रतिदेवतासु ।**
**कर्माणि विज्ञानमयश्च आत्मा**
**परेऽव्यये सर्व एकीभवन्ति ॥'**

इत्यादिश्रुतिनिष्ठलिङ्गशरीरविलयपूर्वकशिवतत्त्वप्राप्तिविधायकदृष्टेः **पृथग्घ्यप्रतिबन्धः फलम्** । पृथक्सूक्ष्मशरीरावच्छिन्न सालोक्य-सामीप्य-सारूप्यात्मकमुक्तित्रयभागात् पृथग्भिन्नत्वेन अप्रतिबन्धः, राजाज्ञावत् भयप्रतिबन्धाभावः त्रिविधमुक्तिमुक्तिवत् शिवाज्ञाभयराहित्यं फलं । जीवभावनिवृत्तिपूर्वकशिवत्वप्राप्तिरूपनिरतिशयानन्दकैवल्यमुक्तिः फलं शिवैकनिष्ठानां जीवन्मुक्तानां सिध्यति ।

त्रिविधमुक्तिविशिष्टानां **रेणुक-दारुक-नन्दीश्वरादीनां** जय-विजय शिवशर्मादीनाञ्च शैव-वैष्णवपुराणेषु कदाचिद्धेतुतया मर्त्यलोकभवत्वमभिधीयते । **'अभयं वै जनक प्राप्तोऽसि', 'न बिभेति कुतश्चन'** इत्यादिश्रुतिषु **परमभक्ति**वरमज्ञानविशिष्टानां कैवल्यपदकाङ्क्षिजीवन्मुक्तानां **निर्भय**त्वमाचक्ष्यते । तस्माद्भयमयुक्तमुक्तित्रयविलक्षणसायुज्य-मुक्तिरेव शिवं प्रति प्रार्थनीयेति सूत्रसूचितसूक्ष्मार्थः । **तैत्तिरीयके श्रूयते 'ब्रह्मविदाप्नोति परं'** इत्यादिना । तत्र **'ब्रह्मविदाप्नोऽति'** इत्युपक्रमे ब्रह्मणो वेद्यत्वस्य प्राप्यत्वस्य च, जीवस्य वेदितृत्वस्य प्राप्तृत्वस्य च उक्तत्वेन जीवब्रह्मणोरत्र भेदोऽभेदो भेदाऽभेद इति सन्दिह्यते ।

**'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा'** इत्यत्र सहपदं अभेदं न सहते । न हि **'देवदत्तो यज्ञदत्तेन सह भुङ्क्ते'** इत्यत्र अद्वैतं प्रतीयत इति । न च **ब्रह्मणा ब्रह्मस्वरूपेण सह** युगपदित्यर्थ इति वाच्यम् । **सहेति** युगपदित्यर्थ **इत्यस्य कुत्राप्यप्रसिद्धत्वात्** , **स्कान्द-लैङ्गादिषु** जीवब्रह्मणोस्स्वाभाविकभेदनिवृत्तिपूर्वकशिवतत्त्वप्राप्तेः प्रसिद्धत्वादिति चेन्न ; तद्वचनानां प्रक्षिप्तत्वात् सर्वैरादिभिः प्रमाणत्वेनाभ्युपगतत्वाच्च । **'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्मानन्दमयः'** इत्यत्रापि द्वैतमेव द्योतितम् । **'योऽयं विज्ञानमयः प्राणेष्वन्तर्ज्योतिः पुरुषः'** इत्यादिश्रुतिषु विज्ञान-मयो जीव इत्यद्वैतवादिभिरपि व्याख्यातत्वात् **'आनन्दमयोऽभ्यासात्'** इति सूत्रेणा-नन्दमयो ब्रह्मेति व्यवस्थादर्शनाच्च **'रसँ ह्येवायं लब्ध्वानन्दी भवति'** इत्यादिषु घण्टाघोषो **भेदवादः** ।

**'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते'** अथ **'तस्य भयं भवति'** इत्यत्र तु (!) शब्दो वाक्यालङ्कारे । **'किमिव हि मधुराणां मण्डनं नाकृतीनां'** इत्यादिकाव्येष्वप्यव्ययानां वाक्यालङ्कारत्वदर्शनात् **'दरमल्पं' 'दहर-सोदर-दलित-नीलोत्पल-दृशा सखी'** इत्यादि प्रयोगेषु **दहरशब्दस्याल्पार्थकत्वात्** । **एष जीव अस्मिन् ब्रह्मणि** विषये यदा दरमल्पं अन्तरं भेदं परमात्मनो जीवस्य च अल्पभेदं किंचिद्भेदं यदि कुरुते तदा तस्य भयं भवति । परमात्मा स्वामी, जीवस्तु भृत्य इति सदा महाभेदं यः कुरुते तस्य न भयं भवतीति दर्शितम् ।

'एतमानन्दमयमात्मानमुपसङ्क्रामति' इत्युपसंहारेऽपि ब्रह्म-जीवयोः प्राप्य-प्रापकत्वेन भिदा निर्दिष्टा । प्रज्ञानं ब्रह्म एतेन प्रज्ञानात्मना अस्माल्लोकादुत्क्रम्य अमुष्मिन् स्वर्गे

लोके सर्वान् कामानाप्त्वा अमृतस्समभवत्' इत्यादिनिगमान्तगिरापि 'सोऽश्नुते सर्वान्' इत्यादिवाक्येन च भेद एव प्रचक्ष्यते। 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति सामवेदान्ते भेद एव घोष्यते। जहल्लक्षणया जीव-ब्रह्मणोः 'भो मन्त्रिन् राजा त्वम्' इत्यत्र राजपदेन राजप्रियत्वमिव तत्त्वमसीत्यत्र तत्पदेन परमशिवप्रियत्वं तूच्यत इत्यस्यैव न्याय्यत्वात् 'द्वा सुपर्णा' इत्यादितुर्यवेदशिरोगिरापि भेदः स्पष्टं प्रतिपादितः।

ननु 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति। सत्यम्, 'अनश्नन्नन्यो अभिचाकशीति', 'तदेतत्सत्यं येन स्वप्नान् पश्यति योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्स ह वा एवं विद्वि किञ्चन रज आध्वंसत' इति। पैङ्गिरहस्य ब्राह्मण-वाक्येन 'अन्तःकरणादात्मा भिन्नः' इति श्रुत्या प्रत्याख्यते।

किञ्च– जीवब्रह्मणोः पारमार्थिकभेदमङ्गीकृत्य तद्वदभेदस्वीकारे सति अभेदस्य निवृत्त्यसम्भवात् भेद एव स सर्ववेदान्ततात्पर्यमिति प्राप्ते प्रचक्ष्महे–

'द्वा सुपर्णा' इति भेदश्रुतिप्राधान्येन तत्त्वमस्यादि भेदाऽभेदप्रतिपादकश्रुतीनां जहल्लक्षणानुसारेण प्रभुमन्त्रिन्यायवत् तत्तुल्यत्वमात्रस्वीकारे श्रुतेः क्लिष्टार्थाऽसहिष्णुत्वात् मुख्यार्थव्यतिरेके मानाभावात्, 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिशतेषु लिङ्गशरीरपरित्यागेन नदीसमुद्रवत् जीवब्रह्मणोरेकत्वस्यैव स्पष्टमुपदिष्टत्वात्, श्रुत्येकदेशः मुख्यप्रामाण्ये वैदिकेतरत्वप्रसङ्गाच्च, अत्र 'ब्रह्मविदाप्नोति' इत्युपक्रमे ब्रह्मज्ञानिनः ब्रह्मप्राप्त्युपदेशात्, नदी-समुद्रवज्जीव-ब्रह्मणोरेकत्वमन्ते निष्प्रत्यूहम्।

'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति वाक्यं जीवन्मुक्तविषयम्। 'सत्यज्ञानानन्दात्मकं ब्रह्म' यः भक्तः शिवयोगमार्गेण गुहायां दहरपुण्डरीके निहितं(स्थितं) वेद स भक्तः 'परमे व्योमन्' तद्दहरपुण्डरीकावच्छिन्नचिदाकाशे ब्रह्मणा सह परञ्ज्योतिर्मयशिवेन सह प्रारब्धप्रतिभासनाशपर्यन्तं इहैव सर्वान् कामान् अश्नुते; अनन्तरं विदेहमुक्तौ लिङ्गशरीरेण सह तस्मिन् परमशिवे विलीनो भवतीति निश्चितार्थः। नो चेत्– 'यावन्न विमोक्ष्ये अथ सम्पत्स्ये', 'न तस्य प्राणा उत्क्रामन्ते तत्रैव समवलीयन्ते।'

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥'

इत्यादिविदेहमुक्तिविधायकसर्वश्रुतिविरोधो दुर्निवारः[1] ॥

[2]विशिष्टाद्वैतमतन्तु– 'मुक्तोपसृप्यव्यपदेशात्', 'अस्मिन्नस्य च तद्योगं शास्ति' इत्यादिषु बहुधा निरस्तत्वादत्र सङ्क्षिप्तम् । अतो विद्यैक्यनविरोधश्च ।

---

[1] विवरणं चात्र विषये ग्रन्थस्यास्य प्रथमसम्पुटे २३७ पुटे द्रष्टव्यम् ।

[2] विशिष्टाद्वैतमतखण्डनविचारश्च ग्रन्थस्यास्य प्रथमसम्पुटे १३७ तमे पृष्ठे विस्तरशो विवृतः ।

## प्रदानाधिकरणम् ॥ १८ ॥

### परशिवे ब्रह्मणि ईषणात्रयत्यागपूर्वक-सर्वसमर्पणयुक्त-शरीरेन्द्रियगतप्रारब्धानुभवभोगविचारनिर्णयः

'ब्रह्मविदाप्नोति परं' इति वाक्यस्य सायुज्यमुक्तिविषयत्वं. 'सोऽश्नुते सर्वान् कामान् सह' इति वाक्यस्य जीवन्मुक्तिविधायकत्वं त्रिविधमुक्तिपरत्वं वा स्यात्; तथापि केषां सायुज्यं? केषां सालोक्यादित्रिविधमुक्तिः' इत्याशङ्क्य तत्र अधिकरणान्तरमाह–

## ॥ २२२ ॥ प्रदानवदेव तदुक्तम् ॥ ४२ ॥

'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः। ............ परिमुच्यन्ति सर्वे ॥' इति तैत्तिरीयशाखायां श्रूयते। कामासक्तब्रह्मविद्योपासकानां जीवभावनिवृत्तिपूर्वकशिवसायुज्यफलं, उत, निष्कामानामेवेत्यत्र विषयः। दहरविद्यायां 'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सर्वान् कामान्' इत्यादिषु ब्रह्मज्ञानिनामपि कामव्यपदेशात्, कामाभावे ब्रह्मविद्यायाः प्रयोजनाभावात्, इहलोकभोगस्याऽपि कामस्यैव प्रधानत्वात्, 'यदेव ज्ञानफलं तदेव कर्मफलम्' इत्यादिश्रुतिषु, 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इत्यादिस्मृतिषु च बुद्धेरेव सर्वफलमूलत्वावगमात्, उदासीनस्य अभ्युदयश्रेयःफलादर्शनाच्च कामयुक्तानामेव चतुर्विधमुक्तिः सम्भवतीति प्राप्तेऽभिधीयते– ॥ प्रदानवदेव तदुक्तम् ॥ इति।

प्रकर्षेण दानं त्यागः प्रदानं, तद्वत् शरीरेन्द्रियादिविशिष्टस्सन् तदभिमानत्यागवत् शरीरेन्द्रियादिकं तदङ्गभूत दारादीषणात्रयञ्च परिहृत्य स्वाभिमाननिवर्तकत्वेन शिवोत्पन्नमेतत्सर्वं शिवे समर्प्य निराभारभावेन पारतन्त्र्यबुध्या शरीरेन्द्रियगतप्रारब्धानुभवो भोक्तव्यः। एवं तदुक्तम्–

'यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् ।
जिह्वया यद्रसं ह्यत्ति तत्तदात्मेति भावयेत् ॥

लभते नासया यद्वत् तत्तदात्मेति भावयेत् ।
त्वचा यद्यत्स्पृशेद्योगी तत्तदात्मेति भावयेत् ॥

यद्यच्छृणोति श्रोत्राभ्यां तत्तदात्मेति भावयेत् ।
दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् ॥

द्रष्टृ-दर्शन-दृश्यानां विरामो यत्र वा भवेत् ।
दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकने ॥
यस्य स्त्री तस्य भोगेच्छा निस्त्रीकस्य क्व भोगभूः ॥

स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ।
चित्तं करणमर्थानां तस्मिन् सति जगत्त्रयम् ॥

तस्मिन् क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः ।
सुप्तेरुत्थाय सुप्त्यन्तं ब्रह्मैकं प्रविचिन्त्यताम् ॥

गच्छंस्तिष्ठन्नुपविशन् शयानोऽप्यन्यथापि वा ।
यथेच्छया वसेद्विद्वान् स्वात्मारामो महामुनिः ॥'

ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः ।
आत्मानमात्मना साक्षात् ब्रह्मबुध्या सुनिश्चलम् ॥

देहजात्यादिसम्बन्धान् वर्णाश्रमसमन्वितान् ।
वेदशास्त्रपुराणानि पदपांसुमिव त्यजेत् ॥

'एकाकी निस्पृहस्तिष्ठेन्न हि केन सहालपेत् ।
यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ॥

अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुभिः ।
चित्तमेव हि संसारः तत्प्रयत्नेन शोधयेत् ॥
दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत् ।'

इत्यादिश्रुतिभिः,

देहेन्द्रियादिकं सर्वं शिवाय परमात्मने ।
दत्वा निरभिमानेन तत्प्रसादैकचेतनः ॥
विषयाणि च सर्वाणि भोक्तव्यं शिवयोगिना ।
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ॥
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।
त्यजेद्धर्ममधर्मञ्च स्तुतिनिन्दा समस्थितिः ॥
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥"

इत्यादिस्मृतिभिश्च देहेन्द्रियाद्यभिमाननिराकरणपूर्वकेषणात्रयपरित्यागलक्षणलक्षितशिवज्ञाननिष्ठागरिष्ठा इह शरीर एव ज्योतिर्मयपरशिवभावं व्रजन्ति ।

किञ्च– '**शिव एको ध्येयः शिवङ्करस्सर्वमन्यत्परित्यज्य**', '**न कर्मणा न प्रजया**' इत्यत्र शिवैकध्याननिष्ठाया ईषणात्रयस्य प्रतिबन्धकत्वात् '**शिव एको ध्येयः**' इति शिवध्यानमुक्त्वा तदन्यं सर्वं धनधान्यपुत्रगेहारामादिकं परित्यजेति विधिरुपदिश्यते ।

## प्राज्ञाधिकारिलक्षणम्

'**न कर्मणा**' इत्यत्र कर्मशब्देनाग्निहोत्रादिकमुक्तं भवति । तन्निराकरणेन भार्यात्यागः समुपदिष्टः । '**न प्रजया**' इत्यत्र सन्तानासक्तिभ्रमो निरस्तः । '**धनेन**' इत्यनेन वित्तभ्रमो निराकृतः । एतेन दारेषण-पुत्रेषण-धनेषणत्यागपूर्वकं शरीरेन्द्रियादिकं सर्वं शिवनिवेदनं कर्तव्यमिति तात्पर्यार्थो निश्चीयते । एवमीषणात्रयं निरस्य, **एकेन त्यागेन** शरीरेन्द्रियादिषु सर्वेषु ममत्वभ्रान्तित्यागेन **अमृतत्वं** शिवसायुज्यं **आनशुः**– भक्ताः प्राप्नुवन्तीत्यर्थः । एतदुपदेशेन अहं– ममत्व-भ्रान्ति-लक्षणविच्छेदः अर्थादुपदिश्यते । ईषणात्रयानिर्मुक्ताः कुत्र परशिवं प्राप्नुवन्तीत्याशङ्कायां **परेण** शिवज्ञानेन **गुहायां** दहर-

पुण्डरीके **विभ्राजत्** स्वप्रकाशमानं **नाकं** परमानन्दस्वरूपं, **एतत्**— स्थितं शिवं **यतयः** शिवतत्त्वप्राप्तिप्रयत्नशीलाः प्राप्नुवन्तीति भावः ।

## मन्दप्रज्ञाधिकारिलक्षणम्

एवं तत्र प्राज्ञाधिकारिलक्षणमुक्त्वा तद्वन्मन्दप्रज्ञाधिकारिलक्षणमाह— '**वेदान्तविज्ञानसुनिश्चितार्थाः**', '**आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः**' इत्यादिश्रुतिविहितयावद्वेदान्तषड्विधतात्पर्यलिङ्गैः श्रवण-मनन-निदिध्यासेन **सुनिश्चितार्थाः** पति-पशु पाशात्मकतत्त्वत्रयार्थज्ञाननिष्ठास्सन्तः **सन्यासयोगात्** , सम्यक् न्यासः— संन्यासः दहराक्षि-पुरुषविद्याविधायकत्वेन तैलधारावदविच्छिन्नतया चित्तं शिवैकसन्धानात्मना **योगात्** तदभ्यासयोगात् **यतयः** मोक्षप्रयत्नशीलाः **शुद्धसत्वाः** रागद्वेषादिमलत्रयनिर्मुक्तनिर्मलान्तःकरणाः ते भक्ताः ब्रह्मलोके ब्रह्मापरपर्यायशिवलोके स्थित्वा, तत्र स्वेच्छानुसारेण सर्वैश्वर्ययोगमनुभूय, ततः **परान्तकाले** तच्छिवलोकवासनाक्षयावसाने **परामृतात् कैलासात् सर्वे** मुच्यन्ति । लिङ्गशरीरं विहाय परिपूर्णपरशिवसायुज्यं तत्रैव प्राप्नुवन्तीत्यर्थः ।

तथान्यत्र दहरविद्यायां श्रूयते— '**तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सर्वान् कामान्**' इति जगद्वासनासक्तपरशिवोपासकानां सर्वकामावाप्तिर्दर्शिता । तस्मान्निष्कामशिवोपासकानां **इहैव** शिवतत्त्वप्राप्तिः । जगद्वासनायुक्तभक्तास्तावत् कामवासनया शिवलोकमनुप्रविश्य तत्र सर्वान् कामाननुभूय तल्लोकादेव शिवसायुज्यं प्राप्नुवन्तीति निश्चीयते । अतः सकामनिष्कामानां भक्तानां फलभेदव्यपदेशेऽपि **चरमसायुज्यफलस्यैकत्वात्** विद्यैक्यमुपदिश्यते ।

## ऋजु-कुटिलेनवामार्गेण सर्वासां विद्यानां ब्रह्मप्राप्तिपरत्वम्

ननु '**ओमित्येतदक्षरमुद्गीथमुपासीत**' इत्यादीनि कर्माश्रयाण्युपासनानि कर्माङ्गत्वेन प्रतीयन्ते । किञ्च— यथा '**यस्य पर्णमयी जुहूर्भवति**' इति कर्माङ्गभूतोद्गीथादिमुखेन जुह्वादिमुखेन पर्णतादिवत् तत्तत्कर्माङ्गत्वेन निरूढानुष्ठानादुद्गीथाद्युपासनसम्बन्धो निर्दिष्टः तथा '**य एवं विद्वानुद्गायति य एवं विद्वान् सामगायति**' इत्यादिना तदुपासनस्य क्रतुसम्बन्धित्वमवगम्यते । अतः तानि '**यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति ।**' इति वर्तमाननिर्देशेन पर्णतादिसम्बन्धव्यपापश्लोक-

श्रवणवत् पृथक्फलत्वकल्पनायोगात् क्रतुषु नियमेनोपसंहार्याणि। कर्मप्रकरणपठितत्वेन ब्रह्मप्राप्त्यङ्गत्वाभावव्यवस्थापनेन '**सर्वे वेदा यत्पदमामनन्ति**' इत्यादिश्रुतिविरोधो दुर्निवार इति चेदुच्यते—

'**तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद**' इत्यविदुषोऽप्यनुष्ठानवचनात् न चाङ्गत्वे सत्युपासनस्य अनुष्ठानाऽनियम उपपद्यते। एवमुपासनाङ्गत्वे निश्चिते सति उपासनविधेः फलाकाङ्क्षायां **रात्रिसत्रन्यायेन** वीर्यवत्तरत्वं कर्मफलात् पृथग्भूतमेव फलमित्यवगम्यते। किमिदं वीर्यवत्तरत्वं कर्मफलस्यैवाप्रतिबन्धः; बध्यते हि कर्मफलं प्रबलकर्मान्तरफलेन। तावन्तं कालं तदभावः प्रतिबन्धः। कर्मफलात् स्वर्गादिलक्षणात् पृथग्भूतमेव फलं तदिदमुच्यते। परमेश्वरार्पितफलस्य चित्तशुद्धिद्वारा मोक्षैकफलत्वमवगम्यते। '**यदेव ज्ञानफलं तदेव कर्मफलम्**' इति श्रुतेः।

तस्मात् शुद्धान्तःकरणस्य काम्यवासनानिर्मुक्तस्य शिवैकनिष्ठस्य कर्माणि शिवानुग्रहद्वारा शिवप्राप्तिकराणि। मलिनान्तःकरणकृतपरमेश्वरार्पितकर्मणां दुरितनिवृत्तिद्वारा परम्परया ब्रह्मप्राप्तिकरत्वं इति निश्चीयते। अतः ऋजुकुटिलमार्गेण सर्वासां विद्यानां ब्रह्मप्राप्तिकरत्वमविरोधम्।

---

## लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥

### लिङ्गधर्मप्रचुरपरशिवब्रह्मणः सर्वविद्योपास्यत्वसमर्थनम्

ननु सर्वेषामुपासनानां घटपटवदन्योन्यभेदावगमात् फलभेदोपदेशाच्च परस्मिन् ब्रह्मणि समन्वयः कथमुपपन्नः इत्याशङ्कायामधिकरणान्तरेणाह—

## ॥ २२३ । लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥

तैत्तिरीये श्रूयते— 'निधनपतये नमः; निधनपतान्तिकाय नमः; ऊर्ध्वाय नमः; ऊर्ध्वलिङ्गाय नमः; हिरण्याय नमः; हिरण्यलिङ्गाय नमः; दिव्याय नमः; दिव्यलिङ्गाय नमः; भवाय नमः; भवलिङ्गाय नमः; शर्वाय नमः; शर्वलिङ्गाय नमः; ज्वलाय नमः; ज्वललिङ्गाय नमः; आत्माय नमः; आत्मलिङ्गाय नमः; परमाय नमः; परमलिङ्गाय नमः; एतत्सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्' इत्यादिना परब्रह्मणः शिवस्य लिङ्गात्मकत्वं तल्लिङ्गस्य सर्वात्मकत्वञ्चोपदिष्टम्। तत्रैव दहरविद्यानन्तरं—

'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्।
विश्वं नारायणं देवमक्षरं परमं पदम्॥'

इत्यारभ्य 'सोऽक्षरः परमः स्वराट्' इत्यन्तं शिववत् केशवस्यापि परमात्मत्वोपदेशात् शिवकेशवयोरुभयोरपि परत्वाङ्गीकारे व्यवस्थोच्छेदप्रसङ्गात् अत्र दहरादिसर्वविद्योपास्यत्वं शिवस्य उत तदन्यस्यैव इति सन्दिह्यते।

दहरादिसर्वविद्योपास्यत्वं नारायणस्यैवोपपद्यते तत्प्रकरणत्वात् । अस्मिंश्चानुवाके— '**पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्**' इत्यादिना हृदयपुण्डरीकाभिधानस्य नारायणानुवाकस्य दहरविद्योपास्यनिर्धारणत्वमुपोद्बलयति ।

किञ्च—

**'नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।**
**नारायणं परोज्योतिरात्मा नारायणः परः ॥'**

**'नारायणपरं ब्रह्म तत्त्वं नारायणः परः ।**
**नारायणपरो ध्याता ध्यानं नारायणः परः ॥'**

**'यच्च किञ्चित् जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।**
**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥'**

**इत्यादौ** नारायणस्यैव सर्वात्मकत्व-सर्वव्यापकत्व-सर्वप्रकाशकत्व-सर्वोपास्यत्वादिपरब्रह्मधर्माणां असङ्कुचितत्वेन द्योतनात् अस्थूलमनण्वादिसर्वासां श्रुतीनां तत्रैव तात्पर्यम् । अतस्सर्वस्मात्परो नारायण एव सर्वविद्यासूपास्य इति प्राप्ते प्रचक्ष्महे—

**'नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।**
**नारायणपरञ्ज्योतिरात्मा नारायणः परः ॥'**

**इत्यादिना** शक्ति-शक्त्योरुपास्योपासकयोः शिव-नारायणयोः '**तत्त्वमसि**' इत्यादाविव अभेदत्वेन परमशिवासाधारणधर्मेषु नारायणे प्रतिपादितेष्वपि परमशिवे लिङ्गभूयस्त्वात् '**ऊर्ध्वाय नमः ; ऊर्ध्वलिङ्गाय नमः**' इत्यादिपरशिवलिङ्गधर्मप्राचुर्यात् बलीयः । अतः शिव एव **तत्रान्यत्र** प्रतिपादितदहरादिसर्वविद्यासूपास्य इति राद्धान्तः ।

**सर्वत्रप्रसिद्धोपदेशाधिकरणे** षड्विधतात्पर्यलिङ्गैः एतन्नारायणानुवाकतात्पर्यस्य स्पष्टमुपदिष्टत्वात् अत्र सङ्क्षेपत उक्तम् । '**सर्वो वै रुद्रः**', '**पुरुषो वै रुद्रः**', '**कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे वोचेम शन्तमग्ं हृदे सर्वो ह्येष रुद्रः**' **इत्यादिना** परमशिवलिङ्गभूयस्त्वात् सर्वविद्योपास्यत्वं तस्यैवोपपन्नम् । तद्यथा—

'सर्वो वै रुद्रः', इति वाक्ये 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति 'छान्दोग्य-शाण्डिल्य-विद्योपास्यलिङ्गं, 'पुरुषो वै रुद्रः' इति वाक्ये पुरुषसूक्तोपकोसल-विद्योपास्यलिङ्गं, 'सन्महो नमो नमः' इत्यत्र 'सदेव सौम्य' इति सद्विद्योपास्यलिङ्गं, 'मह' इत्यत्र 'मह इति तद्ब्रह्म स आत्मा अङ्गान्यन्या देवता' इति महद्विद्योपास्यलिङ्गं, 'शान्तमग्ँ हृदि' इति हृदयद्योतनात् दहरविद्योपास्य-लिङ्गं, 'नमो हिरण्यबाहवे हिरण्यवर्णाय' इत्यादिना तस्य हिरण्मयत्वप्रदर्शनेन सवितृ-मण्डलोपास्यलिङ्गं, तत्रोमापतय इति सर्वविद्योपास्यलिङ्गं संसारद्रावकत्वात् रुद्र इत्युच्यते परमात्मा शिव एव।

उमापतेः परशिवब्रह्मणः परविद्योपास्यत्वं वाक्यैरवगम्यते। तदपि लिङ्गं बलीयः; प्रकरणापेक्षया बलवत्तरं खलु। 'लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यं अर्थविप्रकर्षात्' इति पूर्वमीमांसान्यायेन वाक्यं हि प्रकरणाद्बलीय इति दर्शनात् उमासहितं संसारदुःखद्रावकं शिवाभिधं परब्रह्म सर्वविद्योपास्यमिति निश्चीयते।

---

## पूर्वविकल्पाधिकरणम् ॥ २० ॥

### सालोक्यादिचतुर्विधमुक्तीनां एककाले परशिवोपासकप्राप्यत्वसमर्थनम्

ननु पूर्वत्र परशिवब्रह्ममूर्ताऽमूर्तोपासकेषु प्राज्ञानां 'न कर्मणा न प्रजया' इत्यादिना वैराग्यभाग्यान्वितानां निर्जगद्वासनायुक्तानां लोकान्तरनिरपेक्षितत्वेन इहैव शरीरे शिवत्वप्राप्तिः, तद्भिन्नानां मन्दप्रज्ञानां क्रममुक्तेरुपदिष्टत्वेन ब्रह्मविद्यायाः विकल्पत्वं, तन्महिम-भङ्गप्रसङ्गस्य सिद्धत्वात् सर्वेषामुपासकानां एका गतिरुपपन्नेत्याशङ्कायामधिकरणान्तरमाह—

॥२२४॥ पूर्वविकल्पः प्रकरणात्स्यात् क्रियामानसवत् ॥ ४४ ॥

क्रियाज्योतिष्टोम-मानसज्योतिष्टोमवत् प्रकरणात् विराग सराग-प्रकरणात् पूर्वविकल्पः पूर्वे लोकालोकवासनयुक्तानां, विकल्पः क्रममुक्ति-सद्योमुक्तिविकल्पः समुचितः। तथा तयोर्विराग-सरागयोः मुक्तिविकल्पः स्यादिति सूत्रसूचितार्थः।

तैत्तिरीये श्रूयते— 'कः कं तत्सत्यमक्षमृतो जीवो विश्वः कवमः स्वयम्भूः ब्रह्मैतदमृत एष पुरुष एष भूतानामधिपतिः ब्रह्मणस्सायुज्यँ सलोकता-माप्नोति इत्येतासामेव देवतानां सायुज्यं सारूप्यतां सालोक्यतामाप्नोति' इत्यादिना परमेश्वरोपासकानां सर्वेषामेककाले तदुपासनामाहात्म्येन सालोक्यादिपदप्राप्तिः उत भिन्नकाले? किञ्च— अधिकारतारतम्येन वा? इति सन्दिह्यते?

परमेश्वरोपासनमहिम्ना देवादिवदेककाले सालोक्यादिसर्वपदप्राप्तिः।

सर्वत्र पर्येति जक्षत् क्रीडन् रममाणः।
तस्य सर्वेषु लोकेषु कामचारो भवति॥'

इति श्रुत्यन्तरे मुक्तजीवानां कामचारत्वश्रवणात् 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा' इत्यत्रापि विदुषां ब्रह्मणा सह सर्वकामावाप्तिदर्शनाच्च विदुषामेककाले सालोक्यादिसर्वपदप्राप्तिस्सम्भवतीति प्राप्ते वदामः। 'पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत्' इति।

'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'भूतिकामो वायव्यं श्वेतमालभेत' इत्यादिश्रुतिनिर्दिष्ट क्रियामयज्योतिष्टोम-वाजसनेय-पौण्डरीक-अतिरात्र-अश्वमेधादीनामभ्युदय-साधकानां तत्तत्कर्मतारतम्येन पृथक् पृथक् फलानि निर्दिश्यन्ते- 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्निदर्यावाध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चरत्युप-विशत्युत्तिष्ठते च प्रवर्ग्यो यन्मुखं तदाहवनीयो यद्याहुतीराहुती यदस्य विज्ञानं तज्जुहोति यत्सायंप्रतरत्ति तत्समिधो यत्सायम् प्रातर्माध्यन्दिनं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानिय ऋतवस्ते पशुबन्धा ये संवत्सराश्च....तेऽहर्गणास्सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथः एतद्वै जरामर्यमग्निहोत्रं सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वादित्यस्य....दक्षिणे प्रमीयते ते पितृणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति। एतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वान-भिजयति। तस्मात् ब्रह्मणो महिमानमाप्नोति' इति।

तत्रैव प्रदेशान्तरे- 'चित्तिः स्रुक्, चित्तमाज्यं, वाग्वेदिः, अधीतं बर्हिः; चेतो-अग्निः,' इति। वाजसनेयके- अग्निरहस्य ब्राह्मणे- मनश्चितो वाक्चितः, प्राणश्चितः चक्षुश्चितः श्रोत्रश्चितः कर्मचितोऽग्निश्चितः' इत्यादिश्रुतिषु मानसयागीये तत्तत्कर्मानु-सारेण पृतक्फलत्वं प्रचक्ष्यते; तद्वत् 'न कर्मणा' इति विरक्तप्रकरण-पठितब्रह्मविद्यायाः क्रममुक्तिहेतुत्वम्। पूर्वविकल्पः तीव्रप्रज्ञ-मन्दप्रज्ञाभेदेन पूर्वविकल्पो निर्दिष्टः।

तद्वत्प्रकरणात्। 'परं मृत्यो अनु परे हि पन्थां यस्ते स्व इतरो देवयानात्' इति प्रकरणभेदेन स्वाधिकारतारतम्येन परमेश्वरोपासकानां फलभेदः स्यात्। अतो नानादेशवासिनां उपासकानां एककाले देवागमनवत् परशिवोपासकानां एककाले सालोक्यादिचतुर्विधमुक्तिर्न सम्भवतीति निश्चीयते।

ननु नराणामल्पज्ञानत्वात् अल्पायुष्यत्वाच्च चिरकालोपासनाभावेन एककाले चतुर्विधमुक्तिर्न भवेत्। हिरण्यगर्भादिदेवानां दिव्यशरीरत्वेन महिमातिशयत्वेन चिरकालोपासनया ज्ञानदार्ढ्येन च एककाले तत्सम्भवतीत्याशङ्कायामाह–

## ॥ २२५ ॥ अतिदेशाच्च ॥ ४५ ॥

'परीत्य लोकान् परीत्य भूतानि। परीत्य सर्वाः प्रदिशो दिशश्च. 'प्रजापतिः प्रथमजा ऋतस्यात्मनात्मानमभिसम्बभूव' इति श्रुतौ चतुर्मुखस्यापि 'न कर्मणा' इत्यादिश्रुतिनिर्दिष्टविरक्तपुरुषवत् सर्ववासनात्यागेन परशिवब्रह्मप्राप्तेरतिदेशादुपदिष्टत्वाच्च देवमनुष्याणामपि शरीरभेद-लोकभेद-महिमाभेददर्शनेऽपि भक्तिप्राधान्ये सर्वेषां मुक्तिस्समानैवेति सिद्धम्।

ननु वाजसनेयाग्निरहस्यब्राह्मणे– 'मनश्चितो वाक्चितः प्राणश्चितः' इत्यादिना ब्रह्मविद्याङ्गभूतयागप्रकरणप्रदर्शनेऽपि 'असद्वा इदमग्र आसीत्' इत्यादिना पूर्वत्र प्रकृतेष्टकचिताग्निशेषीभूतक्रियामयक्रत्वनुप्रवेशः स्यात्। ततश्च तेषां अग्नीनां इष्टकचिताग्निविकल्पभावो युक्तः। यथा द्वादशाहदशमेऽहन्यविवाक्ये विद्यारूपाणामपि क्रियामयक्रत्वनुप्रवेशेन क्रियारूपत्वं युज्यते। किञ्च– तेषामेकैक एव तर्हि यावानसौ पूर्व इत्यत्र पूर्वस्येष्टकचितस्याग्नेर्वीर्यं मनश्चितादिष्वतिदिश्यते। तेन तुल्यकार्यत्वात् विकल्पः। ततश्चेष्टकचितवत् क्रतुनिर्वर्तनेन तदङ्गभूता मनश्चितादयः क्रियामयक्रत्वनुप्रवेशेन नेतरफलत्वमेवेत्याशङ्कायामाह–

## ॥ २२६ ॥ विद्यैव तु निर्धारणात्दर्शनाच्च ॥ ४६ ॥

तुशब्दोऽत्रनिश्चयार्थः । "यदुक्तं मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपा एवेति– नैतदस्ति । विद्यारूपा एवैते । विद्यारूपक्रत्वन्वयिन इत्यर्थः । कुतः ? ॥ निर्धारणाद्दर्शनाच्च ॥ निर्धारणं तावत् 'ते हैं ते विद्याचित एव । विद्यया हैवैत एवंविदश्चिता भवन्ति' इति । वाङ्मनश्चक्षुरादिव्यापाराणां इष्टकादिवच्चयनानुपपत्तेर्मनसा सम्पादिताग्नित्वेन विद्यारूपत्वे सिद्धेऽपि; 'विद्याचित एव' 'विद्यया हैवैते' इति चावधारणं विद्यामयक्रत्वन्वयेन विद्यारूपत्वज्ञानार्थमिति निश्चीयते । दृश्यते चात्रैवैषां शेषी विद्यारूपः क्रतुः । 'तेमनसैवाधीयन्त मनसैवाचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसास्तुवन्त मनसाऽशंसन् । यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञीयं कर्म मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयमक्रियत' इति । इष्टकचितेष्वग्निषु यत्किमामयं यज्ञीयं कर्म क्रियते तत् मनोनिर्वर्त्येषु मनश्चिदग्निषु मनोमयमेवाक्रियतेति वचनात क्रतुरपि विद्यामय" एव ।

"नन्वत्र विधिपदाश्रवणात् फलसम्बन्धाप्रतीतेश्चेष्टकचिताग्न्युपस्थापितक्रियामयक्रतुप्रकरणात् विद्यामयक्रत्वन्वयेन विद्यारूपतैषां बोध्येत, नेत्याह–

## ॥ २२७ ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥

"श्रुतिलिङ्गवाक्यानां प्रकरणाद्बलीयस्त्वेन श्रुत्याद्यवगतः क्रतुरेषां तदन्वयश्च दुर्बलेन प्रकरणेन बाधितुं न शक्यते । श्रुतिस्तावत् 'ते हैं ते विद्याचित एव' इति । तां विवृणोति, 'विद्यया हैं वै त एवं विदश्चिता भवन्ति' इति । विद्यया विद्यामयेन क्रतुना सम्बद्धा मनश्चिदादयः चिता भवन्तीत्यर्थः । 'तान् हैं तानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति लिङ्गम् । वाक्यं च– 'एवं विदे चिन्वन्ति' इति । समभिव्याहारो वाक्यम् । एवंविदे– विद्यामयक्रतुमते सर्वदा सर्वाणि भूतानि चिन्वन्तीत्यर्थः । सर्वभूतकर्तृकं सर्वकालव्यापि चयनं मनसा सम्पादितं परिमितकर्तृकालक्रियायेष्टकचितकार्यद्वारेण क्रत्वनुप्रवेशसम्भवमलभमानं विद्यामयक्रत्वनुप्रवेशे लिङ्गं भवति ।"

"यच्चेदमुक्तं विधिप्रत्ययाश्रवणात् फलसम्बन्धाप्रतीतेश्च क्रियामयात् क्रतोरन्यऽत्र विद्यामयः क्रतुर्न सम्भवतीति तत्राह–"

## २२८ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥४८॥

" इष्टकचितान्वयिनः क्रियामयात्क्रतोः विद्यामयोऽयं क्रतुः **पृथक्त्वेन अनुबन्धादिभ्यः** पृथक्त्वहेतुभ्योऽवगम्यते । अनुबन्धाः यज्ञानुबन्धिनो ग्रहस्तोत्रशस्त्रादयः, **'मनसैषु ग्रहा अगृह्णन्त मनसाऽस्तुवन्त मनसाऽशंसन्'** इत्यादिना प्रतिपादिताः । आदिशब्देन श्रुत्यादयः पूर्वोक्ता गृह्यन्ते । श्रुति-लिङ्गादिभिः सानुबन्धैर्विद्यामयः क्रतुः पृथगवगम्यत इत्यर्थः । **प्रज्ञान्तरपृथक्त्ववत्** यथा प्रज्ञान्तरं दहरविद्यादिक्रियामयात् क्रतोः पृथग्भूतं श्रुत्यादिभिरवगम्यते; एवमयमपि । एवञ्चानुबन्धादिभिः पृथग्भूते विद्यामये यज्ञेऽवगते सति विधिः परिकल्प्यते । **दृष्टश्च** अनुवादसरूपेषु कल्प्यमानो विधिः । **तदुक्तम्**– **'वचनानि त्वपूर्वत्वात्'** इति । फलञ्च– **'तेषामेकैक एव तावान् यावानसौ पूर्वः'** इत्यतिदेशात् स्वक्रतुद्वारेणेष्टकचितस्याग्नेर्यत्फलम्, तदेव मनश्चिदादीनामपि स्वक्रतुद्वारेण फलमित्यवगम्यते ।"

### मानसस्वाप्याग्निचयनस्य स्वातन्त्र्येण परशिवब्रह्मलोकप्राप्तिसाधनत्वविचारः

यत्पुनरतिदेशेन तुल्यकार्यत्वावगमात् क्रियामयक्रत्वनुप्रवेशोऽवगम्यत इत्युक्तम्: तत्राह-

## ॥ २२९॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥

" नावश्यमतिदेशादवान्तरव्यापारस्यापि तुल्यतया भवितव्यम्, येन क्रियामयक्रत्वनुप्रवेश एषां स्यात् । यस्मात् कस्माच्चित् सामान्यमात्रादतिदेशोपलब्धेः । उपलभ्यते हि, **'स एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः'** इत्यादिषु संहर्तृत्वादिसामान्यमात्रादतिदेशः । न हि तत्र मण्डलपुरुषस्य मृत्युवत् तल्लोकापत्तिः– तद्देशप्राप्तिरपि भवति । एवमिहापि मनश्चिदादीनामिष्टकचिताग्निवद्भावातिदेशमात्रेणेष्टकचिताग्निदेशरूपक्रियामयक्रत्वनुप्रवेशेनापि न भवितव्यम् । अत इष्टकचिताग्नेः स्वक्रतुद्वारेण यत्फलं, तदेव मनश्चिदादीनामपि विद्यामयक्रतुद्वारेण फलमित्यतिदेशादवगम्यते "।

ननु यदि मानसाग्निचयनं स्वातन्त्र्येण ब्रह्मलोकप्राप्तिसाधनं स्वतन्त्रोपासनभूतं मानसाग्निचयनं मानसज्योतिष्टोमवत् उपनिषत्स्वेव पठितव्यम् । तथा च कर्मकाण्डे इष्टकाग्निचयनसन्निधौ पठितत्वमसङ्गतमित्याशङ्क्याह–

## ॥२३०॥ परेण (च) शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥५०॥

"परेण च ब्राह्मणेन अस्यापि मनश्चिदाद्यभिधायिनः **शब्दस्य ताद्विध्यं** तद्विधत्वं, विद्यामय क्रतौ प्रतिपादितत्वमवगम्यते। परेण हि **ब्राह्मणेन** 'अयं वावलोक एषोऽग्निः चितः। तस्याप एव परिश्रितः' इत्यादिना 'स यो हैतदेवं वेद लोकम्पृणानमेवम्भूतमेतत्सर्वमभिसम्पद्यते' इति। पृथक्फला विद्यैव विधीयते। अतोऽग्निरहस्यस्य क्रियैकविषयत्वं नास्ति"।

एवंतर्हि विद्यामया मनश्चिदादयो बृहदारण्यकेऽनुबद्धव्याः किमर्थमिहानुबध्यन्ते। तत्रोच्यते– ॥ **भूयस्त्वात्त्वनुबन्धः इति** ॥ मनश्चिदादिषु सम्पादनीयानामग्न्यङ्गानां भूयस्त्वात् तत्सन्निधाविहानुबन्धः कृतः।" तस्मात् 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी' इत्यादिश्रुतिप्रतिपादितस्य साङ्गस्य मानसज्योतिष्टोमस्य यथा पृथक्त्वं स्वातन्त्र्येण परशिवब्रह्मलोकप्राप्तिसाधनत्वं तद्वन्मानसस्याग्निचयनस्यापि स्वातन्त्र्येण परशिवब्रह्मलोकप्राप्ति-साधनत्वं उपपन्नमित्यर्थः।

---

## एक-आत्माधिकरणम्[1] ॥ २१ ॥

### पारमार्थिकभेदाभेदवज्जीव-ब्रह्मणोर्मध्ये जीवस्य ब्रह्मोपासनायुक्ततानिराकरणम्

ननु उपास्योपासकत्वेन जीव-ब्रह्मणोः पूर्वावस्थायां परस्परपारमर्थिकभेदः, परशिवोपासनाप्रभावेन तद्रूपपारमार्थिकाभेदश्च सिध्यति इति यदुक्तं तन्न– '**ऐतदात्म्यमिदं सर्वं**', '**आत्मैवेदं सर्वं**' '**अयमात्मा ब्रह्म**' इत्यादिषु जीवातिरिक्तेश्वरसद्भावादर्शनात्, '**स्वयं स्वमेव ध्यायते मह्यमेव नमो नमः**' इत्यादिपूर्वाचार्यवचनेषु च स्वस्य स्वोपासनस्यैव व्यवस्थापनात् तदेव युक्तमित्याशङ्कायामधिकरणान्तरेण निराकरोति–

## ॥ २३१ ॥ एक आत्मनः शरीरे भावात् ॥ ५१ ॥

आत्मानः जीवात् एकधा परमात्मा शिवः **शरीरे** शरीरस्थितदहराकाशे **भावात्** जीवनियामकत्वेन सद्भावात् '**गुहाप्रतिष्ठे परमे परार्धे** इत्यादिश्रुतिषु जीवातिरिक्तत्वेन ब्रह्मत्वोपदेशात् जीवस्यैव स्वस्योपासनं अयुक्तम्। सर्वासु परविद्यासु उपास्योपासकस्वरूपवत् उपासकस्वरूपस्यापि ज्ञातव्यत्वमुपदिष्टम्। '**ब्रह्मणामेव चैवमुपन्यासः प्रश्नश्चेति**' '**भृगुर्वै वारुणिः वरुणं पितरमुपससार; अधीहि भगवो ब्रह्मेति; 'तस्मा एतत्प्रोवाच; अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति तँ होवाच**', '**यतो वा इमानि भूतानि**' इत्यारभ्य '**सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता**' इत्यादिना **तैत्तिरीये** श्रूयते। अत्रानन्दमयत्वेनोपास्यः परमात्मा उत जीवो वेति सन्दिह्यते।

'अयमात्मा ब्रह्म' इत्यादिश्रुतिषु जीवस्यैव ब्रह्मत्वोपदेशात् '**योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मि**' इति, '**न स वेद यथा पशुः मृत्योस्स मृत्यु-**

[1] अत्र 'शरीरे भावाधिकरणम्.' 'एकाधिकरणम् इति' पाठान्तरौ (झ-कोशे)

माप्नोति' इत्यादिषु स्वातिरिक्तदेवतोपासनाऽदर्शनात्, 'अहमस्मि ब्रह्माहमस्मि अहमेवाहं' इत्यादिषु तथावगमाच्च स्वस्य स्वोपासनमेव सर्ववेदान्तसिद्धमिति प्राप्ते प्रचक्ष्महे– ॥ एक आत्मनश्शरीरे भावात् ॥ इति ।

एकः परमात्मा प्रधानक्षेत्रज्ञपतिर्महेश्वरः । आत्मनः स्थावरजङ्गमात्मकजीवात् भिन्नः शरीरे 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे' इत्यादिश्रुतिषु शरीरान्तस्थितदहरपुण्डरीके जीवेश्वरयोः स्थितेर्भावात् सर्ववेदान्तेषु सद्भावात् इत्यर्थः । 'भृगुर्वै वारुणिः' इत्यारभ्य प्रश्न-प्रतिवचनाभ्यां ब्रह्मधर्मोपदेशात् विज्ञानमयाज्जीवात् आनन्दमयस्य भेदव्यपदेशात् जीवब्रह्मणोर्वैलक्षण्यमनिवार्यम् ।

किञ्च उपसंहारे– 'स यश्चायं पुरुषे, यश्चासावादित्ये, स एकः; स य एवं वित्' इत्यारभ्य 'अहमन्नमहमन्नमदन्तमद्मि', 'अहं विश्वं भुवनमभ्यभवां' 'सुवर्णज्योतिः य एवं वेद' इत्यन्तेन 'सर्वो वै रुद्रः', 'सर्वं खल्विदं ब्रह्म' 'ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः', 'हिरण्मयोऽहं शिवरूपमस्मि', 'नमो हिरण्यबाहवे' इत्यादिश्रुतिसिद्धसर्वात्मकत्व-हिरण्यत्वादिपरशिवधर्मबाहुल्यात् नेतरपरत्वम् ।

'यो विज्ञाने तिष्ठन् यस्य विज्ञानं शरीरम्....', 'हिरण्मये परे कोशे विरजं ब्रह्मनिष्कलं', 'तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः', 'आत्मावाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः', 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिस्वपरशाखासु सर्वासु विद्यासु शिवस्य परब्रह्मणः उपास्यत्वं जीवस्योपासकत्वं, तस्य ब्रह्मोपासकत्वेनैव ब्रह्मात्मकत्वस्य स्पष्टमुपदिष्टत्वात् 'अन्नं ब्रह्म' इत्युपासनादिवत् विज्ञानात्मकजीवब्रह्मोपासनायामपि परमेश्वरस्य सर्वान्तरत्वव्यपदेशार्थं तदनुक्रमसोपानमार्गसूचनार्थं चोपदिष्टम्; केवलजीवस्य ब्रह्मत्वे 'अनीशया शोचति मुह्यमानः तरति शोकमात्मवित्' इत्यादिबहुश्रुतिविरोधात्; तत् भृगुवल्ल्युपक्रमोपसंहारतात्पर्यभङ्गप्रसङ्गात् । 'अहं ब्रह्मास्मि' इत्यादीनां 'तत्त्वमसि' इत्यादिवत् उपास्योपासकयोरेकत्वफलसूचनार्थञ्च अनादिमलसंसारबद्धबहुशरीरप्रवेशनिर्गमनव्यापारतापत्रयानलदन्दह्यमानस्वभावस्य न स्वतो ब्रह्मत्वं सम्भवतीति सिद्धम् ।

**मुमुक्ष्वनुष्ठेयनैरन्तर्यानन्यभावयुक्तपरशिवब्रह्मोपासनस्य सर्वविद्याभिप्रेतत्वनिर्णयः**

अस्मिन्नर्थे हेत्वन्तरमाह—

## ॥ २३२ ॥ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥

'**सर्वमित्याकाशे तत्प्रतिष्ठेत्युपासीत**' इत्यारभ्य '**तद्ब्रह्मेत्युपासीत ब्रह्मवान् भवति**' इत्यत्र ब्रह्मोपासकानां फलस्य ब्रह्मात्मकत्वोपदेशात्; नत्वेतदस्ति ज्ञातृत्वाद्याकार एवानुसन्धेय' इति। अस्यात्मनः संसारदशायाः मोक्षदशायाश्च यो **व्यतिरेकः** (भेदः) संसारदशायां स्वकृतकर्मफलेन देवतिर्यङ्मनुष्यादिनानाविधप्रवेशनिर्गमनं, मोक्षदशायाञ्च सालोक्यादित्रिविधमुक्तौ परमानन्दप्राचुर्यकल्याणविभूतिः सायुज्यमुक्त्यभिधानकैवल्यविभूतौ अहंममत्वादिविकल्पशून्यत्वेन परमशिवाकाराकारितनिःश्रेयसफलञ्च निर्दिश्यते।

किंच— "अस्य मोक्षदशायां यादृशं रूपं तादृग्रूप एवोपासनवेलायामात्माऽनुसन्धेय इत्यर्थः। कुतः? **तद्भावभावित्वात्** तद्रूपापत्तेः। '**यथा क्रतुरस्मिन् लोके पुरुषो भवति**', '**तथेतः प्रेत्य भवति, तं तथा यथोपासते तथैव भवति**' इति। यथोपासनमेव हि प्राप्तिः श्रूयते। न च परस्वरूपमात्रविषयमेवेदमिति वक्तुं शक्यते; प्रत्यगात्मनोऽप्युपास्यभूत परब्रह्मवैलक्षण्योपदेशात्। अतः श्रुत्यन्तरे,"

> '**गताः कलाः पञ्चदश प्रतिष्ठाः देवाश्च सर्वे प्रतिदेवतासु।**
> **कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति॥**'

इत्यादिषु प्राणेन्द्रियप्रत्यगात्मादीनां परमेश्वरप्राप्यत्वव्यपदेशात् सदा परमात्मानुसन्धानं मुमुक्षूणां कर्तव्यमित्युपदिश्यते। **उपलब्धिवत्** '**यथा नद्यः**' इत्यत्र नदीसमुद्रोपलब्धिवत् जीव-ब्रह्मणोरेकत्वोपदेशो विधीयते। तस्मात् मुमुक्षूणां निरन्तरमनन्यभावेन नित्यनिरुपमपरशिवब्रह्मोपासनं सर्वविद्याभिप्रेतमिति वेदितव्यम्।

---

## अङ्गावबद्धाधिकरणम् ॥ २२ ॥

### सर्वेषामुपासकानां सर्वविद्याधिकारयुक्ततानिर्णयः

ननु 'स्वाध्यायोऽध्येतव्यः' इत्यत्र स्वशाखाध्ययनविद्यावश्यकत्ववत् ब्रह्मविद्यायामपि स्वशाखाविहितब्रह्मविद्योपासनमेव मुख्यमित्याशङ्कायामधिकरणान्तरेणाह–

## ॥ २२३ ॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥

पूर्वत्र अहं ब्रह्मोपासननिराकरणपूर्वकपरशिवब्रह्मोपासनं सर्वेषां प्रसाध्य, अत्र सर्वशाखागतब्रह्मोपासनं सर्वेषां मुमुक्षूणां आवश्यकं इति दर्शयति– 'ओमित्येतदक्षरमुद्गीथमुपासीत', 'लोकेषु पञ्चविधं सामोपासीत', 'सर्वं खल्विदं ब्रह्म', अर्चत प्रार्चत प्रियमेधासो अर्चत। अर्चन्त पुत्रकाः', 'अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत्। तस्माद्व्रतं पाशुपतं पशुपाशविमोक्षाय तिस्रो रेखाः प्रकुर्वीत' इति छान्दोग्यादिषु सर्वशाखासु सर्वविद्योपासनानां मोक्षफलत्वश्रवणात्। मोक्षाङ्गविधायकसर्वशाखागतदहर-शाण्डिल्यादिसर्वासु विद्यासु मुमुक्षूणां स्वशाखाविद्योपासनं प्रधानं उत सर्वशाखाविद्योपासनं वेति सन्दिह्यते।

सर्ववेदान्तप्रत्ययत्वे स्थितेऽपि प्रतिवेदं स्वरभेदात् उद्गीथादयो भिद्यन्त इति तत्र व्यवतिष्ठेरन्निति शङ्का। किमिदं युक्तम्? व्यवतिष्ठेरन्निति, कुतः? 'उद्गीथमुपासीत' इति। सामान्येन उद्गीथसम्बन्धितया श्रुतायास्तस्यामेव शाखायां स्वरविशेषयुक्तस्य उद्गीथविशेषस्य सन्निधानात्तस्मिन्नेव विशेषपर्यवसानं युक्तमिति। एवमाद्यास्तास्वेव शाखासु व्यवतिष्ठेरन्नित्येवं प्राप्ते प्रचक्ष्महे ॥ अङ्गावबद्धास्त्विति ॥

"तु शब्दः पक्षं व्यावर्तयति। न ह्युद्गीथाद्यङ्गावबद्धा उपासनास्तास्वेव शाखासु व्यवतिष्ठेरन्; अपि तु प्रतिवेदं सर्वासु शाखासु सम्बध्येरन्। हि शब्दो हेतौ।

यस्मात् श्रुत्यैव उद्गीथाद्यङ्गमात्रावबद्धाः तस्माद्यत्रोद्गीथादयः, तत्र सर्वत्र सम्बध्येरन्। यद्यपि स्वरभेदेन उद्गीथव्यक्तयो भिद्यन्ते तथाऽपि सामान्येन उद्गीथश्रुत्या 'सर्वा व्यक्तयः सन्निहिताः' इति न क्वचिद्व्यवस्थायां प्रमाणमस्ति। सर्वशाखाप्रत्ययन्यायेन च सर्वासु शाखासु क्रतुरेकः। अतः सर्वासु शाखास्वेकस्य क्रतोस्सन्निधानात् क्रत्वङ्गभूतोद्गीथादयोऽपि सन्निहिता इति नैकस्य सन्निधिविशेषोऽस्तीति न व्यवस्था।" तस्मात् सर्वेषां उपासनानां सर्वविद्यास्वधिकारो युक्तः।

## सर्वेषां ब्रह्मोपासकानां सर्वशाखागतब्रह्मविद्योपासनाधिकारौचित्यविवरणम्

ननु धर्मकाण्डे सर्वेषां स्वशाखानुष्ठानधर्मावश्यकत्वव्यपदेशात् ब्रह्मकाण्डे समानभावेन सर्वेषां सर्वासु विद्यासूपासनाधिकारः कथमुपपद्यते? इत्यत्राह—

## ॥ २३४ ॥ मन्त्रादिवद्वा विरोधः ॥ ५४ ॥

"वाशब्दश्चार्थे। आदिशब्देन जाति गुण-सङ्ख्यासादृश्यक्रमद्रव्यकर्माणि गृह्यन्ते। यथा मन्त्रादीनां एकैकशाखासु आम्नातानामपि शेषिणः क्रतोः सर्वशाखास्वेकत्वेन यथायथं श्रुत्यादिभिः सर्वासु शाखासु विनियोगो न विरुध्यते;" किञ्च— स्मार्तकर्मस्वपि ऋग्वेदगतपुण्याहवाचनमन्त्राणि यजुस्सामशाखिभिरादृतानि तद्वद्यजुश्शाखागतशतरुद्रीयादिमन्त्राणि ऋक्सामगैरङ्गीकृतानि, यथा शाखान्तर्गतसमित्कुशप्रभृतिमन्त्राणि सर्वशाखागतैः स्वीकृतानि तद्वत्सर्वशाखागतब्रह्मविद्यासु 'सर्वे वेदा यत्पदमामनन्ति' इति वेदान्तविध्यवगमात् सर्वेषां ब्रह्मोपासकानां सर्वशाखागतब्रह्मविद्योपासनाधिकारस्समुचित इति निश्चीयते।

---

## भूम्नक्रतुवज्ज्यायस्त्वाधिकरणम् ॥ २३ ॥

समस्तोपासनस्यैव न्याय्यता, भूमाख्यब्रह्मोपासनाधिक्य विचारः

छान्दोग्ये– 'नाम ब्रह्मेत्युपासीत', 'वाचं ब्रह्मेत्युपासीत', 'मनो ब्रह्मेत्युपासीत' इत्यादि बहूनि प्रतीकोपसनानि विधाया तदनन्तरं 'भूमात्वेव विजिज्ञासितव्यः'। 'यत्र नान्यत्पश्यति नान्यत् शृणोति नान्यद्विजानाति' स भूमा। अथ यत्रान्यत्पश्यति अन्यत् शृणोति अन्यद्विजानाति तदल्पम्' इति श्रुतौ भूमाख्यब्रह्मोपासनस्य हि सर्वोपासनाधिक्यव्यवस्थापनात् तदेव मुमुक्षूणां आवश्यकमित्याशङ्कायामधिकरणान्तरमाह–

## ॥ २३५ ॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५५ ॥

"'प्राचीनशाल औपमन्यवः' इत्यारभ्य वैश्वानरविद्या आम्नाता। तत्र वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्यः श्रुतः स्वर्लोकादित्यवाय्वाकाशाप्पृथिव्यवयवः। तत्र च द्यौर्मूर्धा, आदित्यश्चक्षुर्वायुः प्राणः आकाशः सन्देहः– मध्यकाय इत्यर्थः। आपो बस्तिः, पृथिवी पादौ, इत्यवयवविशेषाः"

"तत्र संशयः किमस्य त्रैलोक्यशरीरस्य व्यस्तस्योपासनं कर्तव्यं, उत व्यवस्तस्य समस्तस्य चेति? अथ समस्तस्यैवेति। किं युक्तम्? व्यस्त येति; कुतः? उपक्रमे व्यस्तोपासनोपदेशात्। तथा ह्युपदिश्यते। औपमन्यवादयः किल उद्दालकपृष्टाः केकयमश्वपतिमुपसद्य, 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' इति पप्रच्छुः। स च तेभ्यः प्रत्येकं स्वोपास्यान् द्युप्रभृतीन् उक्त्वाद्युपो मूर्धादिषु व्यस्तेषूपासनं तत्र तत्र फलं

चोक्तवान्, **'अत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते, मूर्धा त्वेष आत्मनः'** इति। **'एष वै सुतेजा आत्मा वैश्वानरः'** इत्यादिना तेषु तेषूपासनेषु उपास्यस्य वैश्वानरत्वञ्चाह। अतो व्यस्तस्यैवोपासनं कर्तव्यम्। परत्र **'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते'** इति **'द्युप्रभृतिप्रदेशावच्छिन्नमात्रे वैश्वानरे उक्तस्य मूर्धाद्युपासनस्य समासेनोपसंहार'** इत्यवगन्तव्यम्। अपर आह– एवमेव समस्तस्याप्युपासनं कार्यमिति। पृथक् फलनिर्देशात्, **'यस्त्वेतमेवं ............... वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति'** इति चैतावता वाक्यभेदः। यथा– भूमविद्योपक्रमे नामाद्युपासनं तत्फलञ्चाभिधाय, **'एष तु वा अतिवदति यः सत्येनातिवदति'** इत्यादिना भूमविद्यामुपदिश्य, **'स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति'** इति तत्फलञ्च व्यपदिशति; तत्र– भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्यवान्तरोपासनं तत्फलञ्चाङ्गीक्रियते। तथेहापीति।

एवम्प्राप्ते अभिधीयते– ॥ **भूमज्यायस्त्वमिति** ॥ **भूम्नः** विपुलस्य समस्तस्यैव **ज्यायस्त्वं** प्रामाणिकत्वमित्यर्थः एकवाक्यत्वावगतेः। तथाहि, **'प्राचीनशाल औपमन्यवः'** इत्युपक्रम्य **'उद्दालको ह वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम'** इति। वैश्वानरात्मबुभुत्सया औपमन्यवादयः पञ्च महर्षयः तमुद्दालकमुपेत्य तत्र वैश्वानरात्मवेदित्वं अलभमानाः तेन च सहाश्वपतिं कैकेयं वैश्वानरात्मवेदिनं उपसंगम्य, **'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि; तमेव नो ब्रूहि'** इति पृष्ट्वा तस्माकाशात् परमात्मानं वैश्वानरं स्वर्लोकादिपृथिव्यन्तशरीरमुपास्यमवगम्य तत्फलञ्च सर्वलोकसर्वभूतसर्वात्मगतान्नभूतब्रह्मानुभवमवगतवन्तः इत्युपसंहारतो वाक्यस्यैकत्वमवगम्यते। एवमेकवाक्यत्वेऽवगते सति अवयवविशेषोपास्तिवचनं फलनिर्देशश्च समस्तोपासनैकदेशानुवादमात्रमिति निश्चीयते।

**क्रतुवत्**– यथा **'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते'** इति विहितस्यैव क्रतोरेकदेशाः, **'यदष्टाकपालो भवति'** इत्यादिभिरनूद्यन्ते। तथा समस्तोपासनमेव न्याय्यम्; न व्यस्तोपासनम्। तथा हि **दर्शयतीयं** श्रुतिः व्यस्तोपासनेऽनर्थं ब्रुवती **'मूर्धा ते व्यपतिष्यत् यन्मां नागमिष्यः'** इति; **'अन्धोऽभविष्यो यन्मां**

नागशिष्यः' इत्यादिका। अत इदमप्यपास्तम्– यत् नामाद्युपासनसाम्यमुक्तम्। तत्र हि नामाद्युपासनेष्वनर्थो न श्रुतः। नामाद्युपासनेभ्यो भूमोपासनस्यातिशयिनफलत्वं श्रुतम्। **'एष तु वा अतिवदति यस्सत्येनातिवदति'** इति। तत एव तत्र भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्युपासनानां सफलानां विवक्षितत्वम्; अन्यथातिशयितफलत्वनिमित्तातिवादेन भूमविद्यास्तुत्यनुपपत्तेः। अतः समस्तोपासनमेव न्याय्यम्।"

---

## [1]नानाशब्दादिभेदाधिकरणम् ॥ २४ ॥

### मोक्षफलैकगम्यसर्वोपासनानां सर्वविद्यासमन्वयसमर्थनम्

ननु सामाद्युपासनानां वाक्यानां न चावान्तरतात्पर्यं '**नामब्रह्मेत्युपासीत**' इत्यादि-वाक्यानां **स्थूलारुन्धतीन्यायेन** ब्रह्मोपासने तात्पर्यावगमात्। तथा च नामाद्युपासनानां सर्वेषां स्वातन्त्र्येण परशिवब्रह्मोपासनं कथं भवतीत्याशङ्कायामधिकरणान्तरेण प्रतिपादयति-

## ॥ २३६ ॥ नानाशब्दादिभेदात् ॥ ५६ ॥

नानाविधान्यनेकानि **शिव-नारायण-ब्रह्म-इन्द्र-आदित्यादि** नामाद्युपासनान्यपि अङ्गीकर्तव्यानि। कुतः? **शब्दादिभेदात्**। '**नाम ब्रह्मेत्युपासीत**', '**वाचं ब्रह्मेत्युपासीत**', '**नारायण परं ब्रह्म**', '**ध्यायीतेशानं**', '**उमासहायं**', '**असावादित्यो ब्रह्म**' इत्यादि-श्रुतिशतेषु उपास्तिशब्दानां बहूनां अधिकारिभेदेन **समक्षप्रवाहन्यायेन** श्रूयमाणत्वात् परस्परभिन्नत्वं सिद्धम्। तथापि क्रमक्रमानुसारेण सोपानारोहणत्वात् '**बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते**' इति वाक्यदर्शनात्, सर्वेषामुपासनानां मोक्षैकफलश्रवणात् सर्वविद्या-समन्वयत्वं समञ्जसमिति **सूत्रसूचितसूक्ष्मार्थः**।

### विद्याप्रभेदाः

इह ब्रह्मविद्याः सर्वाः ब्रह्मप्राप्तिरूपमोक्षैकफलाः **सद्विद्या, भूमविद्या, दहरविद्या, उपकोसलविद्या, शाण्डिल्यविद्या, वैश्वानरविद्या, आनन्दमयविद्या, अक्षरविद्या, प्रतर्दनविद्या, उद्गीथविद्या, अक्षिपुरुषविद्या, पाशुपतविद्या** इत्याद्याः अन्याश्च प्राणा-द्यैकविषयफलाश्च। किमत्र विद्यैक्यं उत विद्याभेद इति संशीय्यते।

---

[1] शब्दादिभेदाधिकरणम्, नानाशब्दाधिकरणम् इति पाठभेदः (झ कोशे)

अत्रैव आसां परस्परभेदे समर्थिते सत्यैकस्याः दहरविद्यादिकायाः **सर्ववेदान्तप्रत्ययन्यायः** किं युक्तं विद्यैक्यमिति । कुतः ? वेद्यस्य ब्रह्मणः एकत्वात् । वेद्यं हि विद्याया रूपम् । अतो रूपैक्यात् विद्यैक्यमिति । एवं प्राप्तेऽभिधीयते— ॥ **नानेति** ॥

नानाभूता विद्याः । कुतः ? ॥ **शब्दादिभेदात्** ॥ आदिशब्देन अभ्यास-सङ्ख्या-गुण-प्रक्रियानामधेयानि गृह्यन्ते । शब्दान्तरादिभिरत्र विधेयभेदहेतवोऽनुबद्धभेदा दृश्यन्ते । यद्यपि, '**वेद**', '**उपासीत**' इत्यादयः शब्दाः प्रत्यया वृत्त्यभिधायिनः । प्रत्ययाश्च ब्रह्मैकविषयाः ; तथापि तत्प्रकरणोदितजगदेककारणत्वापहतपाप्मत्वादिविशेषण-विशिष्टब्रह्मविषयप्रत्ययावृत्त्यवबोधिनः । प्रत्ययावृत्तिरूपाः विद्याः भिन्दन्ति । ब्रह्मप्राप्ति-रूपफलसम्बन्ध्युपासनविशेषाभिधायीनि च निराकाङ्क्षाणि वाक्यानि प्रतिप्रकरणं विलक्षण-विद्याभिधायीनीति निश्चीयन्ते । अस्मिन्नर्थे शब्दान्तरे कर्मभेद इत्यादिभिः पूर्वमीमांसादिकैः सूत्रैः सिद्धेऽपि पुनरिह प्रतिपादनं वेदान्तवाक्यानि अविधेयज्ञानपराणीति कुदृष्टिनिरसनाय । अतो विद्याभेद इति शुद्धम् । फलभेदेन विद्यानां परशिवब्रह्मप्राप्त्यात्मकमोक्षैकफल-व्यपदेशात् न विद्याविरोध इति निश्चीयते ।

---

## विकल्पाधिकरणम् ॥ २५ ॥

**दहराद्युपासनासु मध्ये स्वेष्टानुसारेणैकैकपुरुषस्यैकैकोपासनमविच्छेदेनोपासनत्वकर्तव्य निर्णयः**

ननु– '**वाचं ब्रह्मेत्युपासीत**' इत्याद्युपासनानां सर्वासां दहराद्युत्तमविद्यावैशिष्ट्येन परशिवप्राप्तिफलकत्वं उत स्वातन्त्र्येणेत्याशङ्कायां अधिकरणान्तरेण निरूप्यते–

## ॥ २३७ ॥ विकल्पोऽविशिष्टफलत्वात् ॥ ५७ ॥

दहरादीनां परशिवब्रह्मलोकप्राप्तिफलकानां अहंग्रहोपासनानां **विकल्पः**– अनुष्ठान-विकल्पः एकैकस्य पुरुषस्य बहुविद्याभ्यासे स्मार्तानामिव चित्तविकल्पः सम्भवति। अतस्समुच्चयो नाङ्गीकर्तव्यः। कुतः? ॥ **अविशिष्टफलत्वात्** ॥ दहराक्षिपुरुषाद्यहंग्रहो-पासनानां सर्वासु विद्यास्वपि परशिवब्रह्मसालोक्यादिक्रमेण परशिवप्राप्तिफलकत्वात् एता-सूपासनासु मध्ये स्वेष्टानुसारेण एकैकपुरुषस्य एकैकोपासनमविच्छेदेन मरणपर्यन्तं भय-भक्ति-श्रद्धा-वैराग्य-भूतदया-शम-दम-सदाचारादिवैशिष्ट्येन कर्तव्यमिति सूत्रसूचितसूक्ष्मार्थः।

ब्रह्मप्राप्तिफलानां सद्विद्या-दहरविद्यादीनां नानात्वमुक्तं, इदानीमासां विद्यानां एकैकस्मिन् पुरुषे प्रयोजनसत्वेन समुच्चयोऽपि सम्भवति, उत प्रयोजनाभावात् विकल्पो संशयोवेति। किं युक्तम्? समुच्चयोऽपि सम्भवतीति। कुतः? एकफलानां भिन्नशास्त्रार्थी-नामपि समुच्चयदर्शनात् दृश्यते ह्येकस्यैव स्वर्गादेस्साधनानां अग्निहोत्र-दर्शपूर्णमासादीनां तस्यैव स्वर्गभूयस्त्वापेक्षयैकत्र पुरुषे समुच्चयः। एवं हि इहापि ब्रह्मानुभवभूयस्त्वापेक्षया समुच्चयोऽपि सम्भवतीति। कुतः? **अविशिष्टफलत्वात्**।

सर्वासां विद्यानां अनवधिकातिशयानन्दब्रह्मानुभवः फलं विशिष्टं श्रूयते। '**ब्रह्म वेद ब्रह्मैव भवति**' इत्यादिश्रुतिभ्यः निरतिशयानन्दपरशिवब्रह्मणः सालोक्यादिचतुर्विध-

मुक्तिः सम्भवति । स्वर्गादेर्हि देशतः कालतः स्वरूपतश्च परिमितत्वेन तत्र देशाद्यपेक्ष भूयस्त्वसम्भवात् तदर्थिनः समुच्चयः सम्भवति । इह तु तद्विपरीतस्वरूपे ब्रह्मणि न सम्भवतीति सर्वाश्च विद्याः ब्रह्मानुभवविरोध्यनादिकर्माविद्यानिरसनमुखेन ब्रह्मप्राप्तिफ इत्यविशिष्टफलत्वात् सर्वासां विकल्प एव ।

ब्रह्मप्राप्तिव्यतिरिक्तफलास्तु विद्याः स्वर्गादिफलकर्मवद्यथेष्टं विकल्पेरन् समुच्चीयेरन् तासां परिमितफलत्वेन भूयस्त्वापेक्षासम्भवात् तत्राह—

## ॥ २३८ ॥ काम्यास्तु यथा कामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ५८ ॥

परशिवब्रह्मसाक्षात्कारानुभवव्यतिरिक्तकाम्याः आदित्यमण्डलादिप्रभृतिषु जडपदार्थे परशिवब्रह्मदृष्टिरूपाः ऐश्वर्यादिभिन्नभिन्नसाधनभूताः प्रतीकोपासनाः यथाकालं यथे समुच्चीयेरन्न हि एतासां प्रतीकोपासनानां समुच्चयो वा विकल्पो वेत्यनियम एवाङ्ग कर्तव्यः । कुतः ? पूर्वोक्तहेत्वभावात् । पूर्वोक्तस्य तुल्यफलकत्वरूपस्य हेतोरत्राभाव इत्युपदिश्यते । '**देवो भूत्वा देवानप्येति**' अतो जीवत एव भावनाप्रकर्षवशाद्दे भावसाक्षात्प्राप्तिरवगम्यते । परविद्यासु अहङ्ग्रहोपासनेषु न तथा नामब्रह्माद्युपासन काम्यासु साक्षात्कारफलत्वे किञ्चिन्मानमस्ति । तत्तत्फलत्वाभावे च तत्र तत्र भोगभू स्त्वापेक्षया समुच्चय एव युक्तः— ब्रह्मवदेकत्वाभावात् '**तत एकं वा बहु समाश्रित्य अनुष्ठेयम्**' इति निर्णयः । तद्वदपरिमितफलत्वाभावादिति सिद्धम् ।

---

## अङ्गेषु यथाश्रयभावाधिकरणम्[1] ॥ २६ ॥

**ब्रह्मप्राप्त्यङ्गभूतान्नमयाद्युपासनेषु पुरुषाणां ज्योतिष्टोमादिवत् परम्परया मुक्तिहेतुत्व-निर्णयः**

ननु दहर-शाण्डिल्य-अक्षि-पुरुषोपकोसल-उद्गीथाद्युपासनानामिव **'अन्नं ब्रह्म'** इत्याद्यङ्गावबद्धोपासनानां साक्षान्मोक्षहेतुत्वं किं न स्यादित्याशङ्कायां अधिकरणान्तरेणाह—

## ॥ २३९ ॥ अंगेषु यथाश्रयभावः ॥ ५९ ॥

अङ्गेषु— **'अन्नं ब्रह्म', 'प्राणो ब्रह्म', 'मनो ब्रह्म', 'नाम ब्रह्म',** इत्यादिमोक्षोपासनाङ्गोपासनेषु **यथाश्रयभावः।** **'आनन्दो ब्रह्मेति व्यजानात्'** इत्यादि सर्वातिशयपरमानन्दात्मकस्य परशिवब्रह्मणः प्राप्तिसाधनोपासनसाधनतया दहर-भूमाद्युपासनानामिव साक्षान्मोक्षहेतुत्वमसङ्गतम्— **'ब्रह्मविदाप्नोति परं', 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा'** इत्यादिवाक्यानां परस्परभेदावगमात्। **तैत्तिरीये** श्रूयते— तत्र **'अन्नं ब्रह्मेति व्यजानात्', 'प्राणो ब्रह्मेति व्यजानात्' 'मनो ब्रह्मेति व्यजानात्', 'सत्यं ज्ञानमनन्तं ब्रह्म'** इति वाक्यानां परस्परभेदावगमात् अन्नमयादीनामपि जगज्जन्मादि-कारणत्वेन ब्रह्मत्वव्यवस्थापनात् अन्नमयादीनां वा उत आनन्दमयस्य वा ब्रह्मत्वम्? दहराद्युपासनानां वा उत अन्नमयादीनामङ्गोपासनानां वा साक्षान्मोक्षहेतुत्वम्? इति सन्दिह्यते

**'आनन्दो ब्रह्मेति व्यजानात्',** इतिवत् जगज्जन्मादिकारणत्वेन **'अन्नं ब्रह्मेति व्यजानात्'** इत्यादीनां तुल्यत्वोपदेशात् समानप्रकरणपठितत्वाच्च न वैषम्यसिद्धिः। शाखान्तरेष्वपि, **'मनो ब्रह्मेत्युपासीत', 'वाचं ब्रह्मेत्युपासीत', 'नाम ब्रह्मेत्युपासीत'** इत्यादिवाक्यैः सर्वेषां समानत्वेन ब्रह्मत्वव्यपदेशात् **दहर-शाण्डिल्य-अक्षि-पुरुषादिविद्यानां**

---

[1] 'अङ्गेषु यथाऽऽश्रयभावः' (ङ)

न वैशिष्ट्यम् । अतः सर्वेषामुपासनानां समानत्वेन साक्षान्मोक्षहेतुत्वं सम्भवतीति प्राप्ते वदामः—

'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यत्र निरतिशयशिरस्कत्वेन आनन्दमयस्य ब्रह्मत्वव्यवस्थापनात्, '**यो वेद निहितं गुहायां परमे व्योमन्**' इत्यत्र गुहात्मक-दहराकाशे परमात्मोपासनानां साक्षान्मोक्षहेतुत्वकथनात्, '**हृत्पुण्डरीकं विरजं विशुद्धं**' इत्यारभ्य '**उमासहायं परमेश्वरं प्रभुं**······**ध्यात्वा मुनिर्गच्छति भूतयोनिं**' इति शाखा-न्तरेष्वपि दहरपुण्डरीके परमेश्वरोपासनानां अविलम्बेन शिवसायुज्यमुक्त्युपदेशात्, तथा स्वशाखापरशाखास्वपि अन्नमयादीनां आत्मोपासनानामपि साक्षान्मुक्त्यदर्शनात् ब्रह्मप्राप्त्यङ्ग-भूतान्नमयाद्युपासनेषु पुरुषाणां परमेश्वरार्पितज्योतिष्टोमादिवत् परम्परया मुक्तिहेतुत्वमिति निर्धार्यते ।

नन्वानन्दमयस्य सर्वाधिकपरब्रह्मत्वे किं मानमित्याशङ्कायामाह—

## ॥ २४० ॥ शिष्टेश्च ॥ ६० ॥

शिष्टिः शासनं विधानमित्यर्थः । '**भीषास्माद्वातः पवते. भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥**' इत्यत्र सर्वशासकत्वेन सर्वभयहेतुत्वस्य सर्वाधिके आनन्दमये शिवे एव व्यपदेशात् अन्नमयादितुल्यत्वमेकप्रकरणपठितत्वेऽपि तस्य न सम्भवतीति निर्णीयते । तत्रैव प्रदेशान्तरे '**अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा**' इति श्रुतौ तथा श्रूयते ।

---

समाहाराधिकरणम् ॥ २७ ॥

**दृढचित्तानां मुमुक्षूणामेव शिवयोगेन शिवसाक्षात्कारसमर्थनम्**

ननु चित्तस्य बहुसङ्कल्पयुक्तत्वात् चित्तनिरोधाभावे दहरादिसर्वविद्योपासनासिध्य-सम्भवात् केन मार्गेण शिवसाक्षात्कारानुभवहेतुभूतचित्तस्थैर्यं सम्भवेदित्याशङ्कायां अधिकरणान्तरं दर्शयति--

## ॥ २४१ ॥ समाहारात् ॥ ६१ ॥

श्वेताश्वतरादिवेदान्तेषु शिवसाक्षात्कारानुभवस्य शिवयोगाख्यानेन जीवमुख्याङ्गभूत-दृङ्मनःप्राणसन्धानरूपसमाहारात् मेळनात् मुमुक्षूणां चित्तचलननिवृत्तिपूर्वकशिवसाक्षात्कारानुभवसिद्धिः सम्भवति । **'ओं ब्रह्मवादिनो वदन्ति– किं कारणं ब्रह्म, कुतःस्म जाताः ? जीवामः केन ? क्व च सम्प्रतिष्ठा ? अधिष्ठिताः, केन सुखेतरेण वर्तामहे ब्रह्म ब्रह्मविदो व्यवस्थां'** इत्यारभ्य–

**'ते ध्यानयोगानुगता अपश्यन्**
**देवात्मशक्तिं स्वगुणैर्निगूढाम् ।**
**सर्वा जीवे सर्वसंस्थे बृहन्ते**
**तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे ॥**

**'पृथगात्मानं प्रेरितारं च मत्वा**
**जुष्टस्ततस्तेनामृतत्वमेति ।'**

इति वेदान्तरत्न **श्वेताश्वतरोपनिषत्सु** श्रूयते । पाशुपतविद्याङ्गभूतयोगेन दहराद्युपासनानां शिवसाक्षात्कारानुभूतिः उत तद्विना सम्भवति इति सन्दिह्यते । **तैत्तिरीये– 'दहरं विपापं', 'उमासहायं'**

'ब्रह्मवेदब्रह्मैव भवति' 'ब्रह्मविदाप्नोति परं' इत्यादिषु ज्ञानेनैव ब्रह्मसाक्षात्कार-व्यपदेशात् योगविद्यायां न किञ्चित् प्रयोजनमिति प्राप्ते वदामः।

'तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवलं आप्तकामः' इत्यारभ्य 'अग्निर्यत्राभिमथ्यते, वायुर्यत्राभिमथ्यते, सोमो यत्रातिरिच्यते तत्र संजायते मनः',

'त्रिरुन्नतं प्राप्य समं शरीरं
हृदीन्द्रियाणि मनसा सन्निवेश्य।
ब्रह्मोडुपेन प्रतरेत विद्वान्
स्रोतांसि सर्वाणि भयावहानि ॥'

प्राणान् प्रपीड्येह स युक्तचेष्टः
क्षीणे प्राणे नासिकयोच्छ्वसीत।
दुष्टाश्वयुक्तमिव वाहनमेन
विद्वन् मनो धारयेति प्रमत्तः ॥'

इत्यारभ्य,

'पृथिव्यप्तेजोऽनिलजीवे समुत्थिते
पञ्चात्मके पञ्चगुणे प्रवृत्ते।
न तस्य रोगो न जरा न मृत्युः
प्राप्तस्य योगाग्निमयं शरीरम् ॥'

लघुत्वमारोग्यमलोलुपत्वं
वर्णप्रसादं स्वरसौष्ठवं च।
गन्धश्शुभो मूत्रपुरीषमल्पं
योगप्रवृत्तिं प्रथमां वदन्ति ॥

यथैव विम्बं मृदयोपलिप्तं
तेजोमयं भ्राजते तत्सुधान्तम् ।
तथात्मतत्त्वं प्रसमीक्ष्य देही
एकः कृतार्थो भवते वीतशोकः ॥

इति श्वेताश्वतरे योगयुक्तस्यैव परशिवब्रह्मसाक्षात्कारावगमात् । अन्यत्र–

'वेदान्तश्रवणं कुर्वन् योगं समारभेत् ।
आकुञ्चनेन कुण्डलिन्या कवाटमुद्घाट्य मोक्षद्वारं विच्छेदयेत् ।
यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेद्ज्ञानमात्मनि ।

'आत्मानञ्चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥

तमेवं धर्मं विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायन् बहून् शब्दान् वाचो विग्लपनं हि तत् ॥

यमैश्च नियमैश्चैव ह्यासनैश्च सुसंयुतः ।
नाडीशुद्धिञ्च कृत्वादौ प्राणायामं समाचरेत् ॥

सर्वचिन्तां परित्यज्य सावधानेन चेतसा ।
निर्विकल्पः प्रसन्नात्मा प्राणायामं समभ्यसेत् ॥

मरुदभ्यसनं नित्यं मनोयुक्तं समभ्यसेत् ।
इतरत्र न कर्तव्या मनोर्युक्तिर्मनीषिणा ॥'

इत्यादिना बाह्याभ्यन्तररूपसर्वोपासनेषु योगविद्याप्राधान्यकथनाच्च । तैत्तिरीये– 'दहरं विपापं' इत्यारभ्य 'तस्मिन्यदन्तस्तदुपासितव्यं' इत्यादिना यत्र यत्रोपासनविधिरुपदिष्टा तत्र तत्र योगानुगुण्यमर्थात्सिद्धम् ; साधनं विना साध्यानिष्पत्तेरिति न्यायेन योगं

विना चित्तस्थैर्याभावात्, तदभावे ब्रह्मसाक्षात्कारभावाच्च । तस्मान्मुमुक्षूणां दृङ्-मनःप्राण-सन्धानात्मकशिवयोगविद्यावश्यकत्वं निर्दिश्यते ।

तथा कैवल्ये दहरोपासनायामपि 'हृत्पुण्डरीकं' इत्यारभ्य 'ध्यात्वा मुनिर्गच्छति भूतयोनिं' इत्यन्तेन ध्यानयोगयुक्तस्यैव शिवब्रह्मावगतिदर्शनात्, 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिषु वेदशब्देन ध्यानधारणयोगानुगुण्यमुपदिश्यते न वैद्यशास्त्रादिव-द्वाक्यार्थज्ञानम् । तस्मात् सर्वशास्त्रसमन्वय एव युक्तः ।

अस्मिन्नर्थे हेत्वन्तरमाह—

## ॥ २४२ ॥ गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥

'ततः परं(दं) ब्रह्म परं बृहन्तं
　　यथा निकायं सर्वभूतेषु गूढम् ।
विश्वस्यैकं वेष्टितारं तमीशं
　　ज्ञात्वा अमृता भवन्ति ॥'

'प्रधान क्षेत्रज्ञ', 'सर्वानन शिरोग्रीवः'

'सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
सर्वस्य प्रभुमव्यक्तं सर्वस्य शरणं सुहृत् ॥

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति ॥

तत्कर्म कृत्वा विनिवर्त्य भूयः तत्त्वस्य तत्त्वेन समेत्य योगम् ।
एकेन द्वाभ्यां त्रिभिरष्टभिर्वा भावेन चैवात्मगुणैश्च सूक्ष्मैः ॥

आरभ्य कर्माणि गुणान्वितानि भावांश्च सर्वान्विनियुञ्जयेद्यः ।
तेषामभावे कृतकर्मनाशः कर्मक्षये यान्ति स तत्त्वतोन्यः ॥

तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम् ।
पतिं पतीनां प्रथमं पुरस्तात् विदाम देवं भुवनेशमीडयम् ॥
न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाप्यधिकश्च दृश्यते ॥ "

इत्यादिषु शिवस्य परब्रह्मणः गुणासाधारण्यश्रुतेश्च अन्यसाधारणगुणश्रवणात् तत्साक्षात्कारानुभवकांक्षिणां योगयुक्तमेवोपासनं विधीयते ।

---

## न वा तत्सहभावाधिकरणम् ॥ २८ ॥

अङ्गावबद्धोपासनानामपि दहरादिप्रतीकोपासनानामिव समुच्चयस्य अनुपपन्नतानिर्णयः

ननु श्वेताश्वतरे-

'उद्गीथमेतत्परमं तु ब्रह्म
तस्मिंस्त्रयं स्वप्रतिष्ठाक्षरश्च ।
'अत्रान्तरं वेदविदो विदित्वा
लीना ब्रह्मणि तत्परा योनिमुक्ताः ॥' इति ;

छान्दोग्ये- 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यारभ्य 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इत्यादिना प्रणवस्यैव परमात्मत्वप्रसाधनादुद्गीथविद्यायाः क्रत्वर्थतया क्रतुषु नियमेनोपादेयत्वात् परशिवब्रह्मपरत्वमसङ्गतम् । तस्मादुद्गीथाद्यङ्गावबद्धोपासनानां दहरादिविद्याभिस्सह समुच्चयः अनुपपन्नः इत्याशङ्कायामधिकरणान्तरमाह-

## ॥ २४३ ॥ न वा तत्सहभावाश्रुतेः ॥ ६३ ॥

न वा उद्गीथाद्यङ्गावबद्धोपासनानामपि समुच्चयनियमोऽस्ति । कुतः ? ॥ तत्सहभावाश्रुतेः ॥ तासामङ्गावबद्धोपासनानां उद्गीथादीनां दहरादिविद्याभिस्सहभावस्य समुच्चयस्य अश्रुतेः अश्रवणात् । 'यदेव विद्यया करोति' इत्यङ्गावबद्धोपासनानां कर्माङ्गत्वं प्रतिपाद्यते- 'तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलं' इति सूत्रे कर्माङ्गत्वस्य निरस्तत्वात्, किन्त्वङ्गावबद्धोपासनापूर्वककर्मानुष्ठाने कृते सति स्वर्गादिलोकोत्पत्तिबन्धकपापानां निवृत्त्या शीघ्रमेव फलोत्पत्तिर्भवतीत्येतावन्मात्रमेव 'यदेव विद्यया करोति' इति श्रुत्या प्रतिपाद्यते । तथा च अङ्गावबद्धोपासनानामपि दहरादिप्रतीकोपासनानामिव समुच्चयः अनुपपन्नः । 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिकाः

विद्याः किमुद्गीथादिवत् क्रत्वर्थतया क्रतुषु नियमेनोपादेयाः उत गोदोहनादिवत्पुरुषार्थतया यथाकाममिति सन्दिह्यते। नियमेनोपादेया इति उक्तम्।

ननु चासां पुरुषार्थत्वेन अनियमः प्रतिपादितः। तन्निर्धारणनियमस्तद्दृष्टेःपृथग्ध्यप्रतिबन्धः फलं इत्यत्र सत्यं तदेव द्रढयितुं कैश्चिल्लिङ्गदर्शनैर्युक्त्या आक्षिप्यते। तत्र हि तेनोभौ कुरुत इत्यनियमदर्शनात् पृथक्फलत्वमुक्तम्। उपासनाश्रयभूतोग्दीथादिवदुपासनानामप्यङ्गतया उपादानानियमे बहवो हेतवः उपलभ्यन्ते। **'उद्गीथमुपासीत'** इत्युद्गीथादिसम्बन्धितयैवोपासनं प्रतिपाद्यते। **'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं'** इति वर्तमानोपदेशरूपवाक्यान्तराद्धि फलसम्बन्धो जायते। स्ववाक्येनैव अव्यभिचरितक्रतुसंबन्धयुद्गीथादिसंम्बन्धेन निर्ज्ञातक्रत्वङ्गभावस्य वाक्यान्तरस्थवर्तमानफलसंबन्धनिर्देशोऽर्थवादमात्रं स्यात्। अपापश्लोकश्रवणात् ततो यदोद्गीथादय उपासनाश्रयाः क्रत्वङ्गतया प्रयोग विधिना नियमेनोपादीयन्ते, **'उद्गीथमुपासीत'** इत्युद्गीथाङ्गतया उपासनविधानाच्चोपादाननियमः तदा **'गोदोहनेन पशुकामः प्रणयेत्'** इत्यादिवत् विधिवाक्ये अधिकारान्तराश्रवणात् उद्गीथाद्यङ्गभाव एव हि विधेय इति गम्यते। होतृपदनाद्धैवापि दुरुद्गीथमनुसमाहरेतीत्युपासनस्य समुच्चयनियमो दृश्यते।

किञ्चोपासनगुणस्योपासनाश्रयस्य प्रणवस्योपासनस्य तेनेयं त्रयी विद्या वर्तते। **'ओमित्याश्रावयति ओमिति शंसन्ति, ओमित्युद्गीथयति'** इति श्रुतेश्च उपासनासमुच्चयो गम्यते। तेनेति प्रकृतपरामर्शात्सोपासन एव प्रणवस्सर्वत्र सञ्चरति। अत उपासनस्य प्रणवसहभावनियमदर्शनाच्च उद्गीथाद्युपासनानां उद्गीथादिवन्नियमेनोपादानमिति प्राप्ते ब्रूमः ॥ **न वा तत्सहभावाश्रुतेः** ॥

पूर्वमेव प्रणवात्मकत्वं प्रणवातीतत्वं शिवस्य परब्रह्मण एव स्पष्टमुपदिष्टम्। न चैतदस्ति "यदुद्गीथाद्युपासनानां क्रतुषूद्गीथादिवदुपासननियम इति। कुतः? **तत्सहभावाश्रुतेः** उद्गीथाङ्गभावाश्रुतेरित्यर्थः। अङ्गभावे हि सहभावनियमो भवति। यद्यपि **'उद्गीथमुपासीत'** इत्यस्मिन् पदसमुदाये अधिकारान्तरं न प्रतीयते। तथापि तदनन्तरमेव **'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति'** इति विद्यायाः क्रतुवीर्यवत्तरत्वं प्रति साधनभावः प्रतिपाद्यते। तेन क्रतुफलात् पृथग्भूतफलसाधनतया अवगतस्योपासनस्य क्रत्वङ्गभूतोद्गीथाङ्गतया विनियोगो नोपपद्यते। अतः उपन्यासाश्रयापेक्षायां सन्निहित उद्गीथ आश्रयमात्रं भवति। उद्गीथश्च क्रत्वङ्गभूत इति क्रतुप्रयुक्तोग्दीथाद्याश्रये उपासने क्रत्वधिकारिण एव क्रतोर्वीर्यवत्तरत्वेच्छानिमित्तमिदं अधि-

कारान्तरमिति न क्रतुषु तदुपासननियमः। वीर्यवत्तरत्वञ्च क्रतुफलस्य प्रबलकर्मान्तरफलेन अप्रतिबन्धः इत्युक्तम्। क्रतोरविलम्बितफलत्वमित्यर्थः। पर्णतादीनां तु **'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति'** इति विद्यायाः फलसाधनत्ववदपापश्लोकश्रवणादिफलं प्रति साक्षात्साधनभावो न श्रुत इति प्रत्यङ्गभूतजुह्वाद्यङ्गतया विनियोगात् तदङ्गभूतानां फलान्तरसाधनभावकल्पनानुपपत्तेस्तत्र फलश्रुतिरर्थवादमात्रं स्यादिति" निर्धीयते।

अस्मिन्नर्थे हेत्वन्तरमाह–

## ॥ २४४ ॥ दर्शनाच्च ॥ ६४ ॥

"दर्शयति च श्रुतिरुपासनोपादानानियमम्। **'एवं विद्ध वै ब्रह्मा यज्ञं यजमानं** सर्वांश्चर्त्विजोऽभिरक्षति' इति ब्रह्मणो वेदनेन सर्वेषां लक्षणं ब्रवीति। उद्गातृप्रभृतीनां वेदनस्यानियमे सत्येतदुपपद्यते। अनेन लिङ्गेन पूर्वोक्तानां समुच्चयादिधर्माणां प्रायिकत्वमवगम्यते। तस्मादनियम एवेति स्थितम्।"

किञ्च– पूर्वसूत्रे पूर्वपक्षयुक्तिर्निराकृता। अत्र लिङ्गानि प्रतिवक्ष्यन्ते। अनियमस्य प्रदर्शनत्वं उद्गीथे दृष्टम्। यजमानं सर्वांश्चर्त्विजो रक्षतीत्यत्र यजमानसंरक्षणं क्रतुफलाप्रतिबन्धकारणादिभिरिति मन्तव्यम्। उद्गातृप्रभृतिवेदनफलं हि क्रतुफलाप्रतिबन्धादि। तस्य ब्रह्माख्यर्त्विग्वेदनेन सिद्धौ सत्यां हि उद्गातृप्रभृतिवेदनानियमसिद्धिरर्थादवगम्यते। न च अङ्गावबद्धोपासनानां कर्माङ्गत्वाभावे फलप्रतिबन्धकपापरहितानां पुरुषाणां अङ्गावबद्धोपासनानुष्ठानवैयर्थ्यं स्यादिति वाच्यम्। अङ्गावबद्धोपासनासहकृतकर्मानुष्ठानवतां बहुकालस्वर्गभोगस्य प्रधानवदेव तदुक्तमिति राद्धान्तः।

इति श्रीमद्यतिराजपरिबृढ-श्रीपतिपण्डितभगवत्पादाचार्यस्वामिकृत-भेदाभेदात्मक-विशेषाद्वैत-सिद्धान्तव्यवस्थापक-वैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

### श्रीकरभाष्ये

साधनाध्यायसंज्ञिकस्य तृतीयाध्यायस्य सर्ववेदान्तप्रत्ययाधिकरणावच्छिन्न-सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादित्यादिचतुष्षष्टिसूत्रात्मकः

### तृतीयाध्यायस्य तृतीयः पादः समाप्तः

---

## अथ श्रीकरभाष्ये तृतीयाध्यायस्य चतुर्थः पादः

### पुरुषार्थाधिकरणम् ॥ १ ॥

### ब्रह्मचर्याद्याश्रमचतुष्टयधर्मनिरुपणम्

पूर्वत्र कासा[1]ञ्चिदुपासनानां परम्परया मुक्तिहेतुत्वम्; कासञ्चित्[2] साक्षान्मुक्तिहेतुत्व-मुक्तम्। इह तु कालान्तरभाविपारलौकिकस्वर्गादिफलभोगयोग्यस्य शरीरेन्द्रियादि-विशिष्टस्य जीवस्य तन्नियामकशिवज्ञानं विनैव लोकान्तरकालान्तरभाविस्वर्गादिफलभोगसाधनेषु वहुवित्तव्ययसाध्येषु कर्मसु प्रेक्षावतां प्रवृत्त्यसम्भवात् शिवज्ञानस्य ज्योतिष्टोमादि-सर्वकर्मानुष्ठाना[3]ङ्गकत्वं वक्तव्यम्। तथा च अङ्गाङ्गिनोरेकफलसाधनत्वात् अङ्गानां कर्मणां यत्फलं स्वर्गादिकं [4]तदेवाङ्गिनः चिदचित्प्रपञ्चविलक्षणशिवज्ञानस्येति स्वातन्त्र्येण मोक्षैकलक्षणफलान्तरसाधनत्वासम्भवात् सर्ववेदान्तविचारम्भो व्यर्थ इति पूर्वमीमांसाशङ्कामा-शङ्क्य तन्निराकरणार्थमिद[5]मधिकरणान्तरमाह—

### ब्रह्मविद्यायाः कर्माङ्गत्वानुपपत्तिः

## ॥ २४५ ॥ पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ १ ॥

अतः योगानुगुण्यदहराद्युपासनापूर्वकसदाशिवब्रह्मसाक्षात्कारात् पुरुषार्थः पुनरावृत्ति-रहितनित्यनिरतिशयस्वाभाविकजीवत्वनिवृत्तिपूर्वकशिवत्वप्राप्तिलक्षणलक्षितमुक्तिरस्ति इति बाद-रायणो मन्यते। कुतः? ॥ शब्दात् ॥ 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' 'ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मविदाप्नोति परं'

---

[1] कासाम्मु (ग). कासां (ग). [3] ङ्गत्वं (ग). [4] तदेवाङ्गस्य (ग). [5] मधिकरणमाह (ग).

आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासात् पाशं दहति पण्डितः ॥'

'श्रद्धाभक्तिध्यानयोगादवेहि' इत्यादिश्रुतिदर्शनात् मुमुक्षूणां निखिलकर्मवासनापङ्ककळङ्क-शून्यतया निरन्तरं परशिवब्रह्मानु[1]सन्धानं कर्तव्यमिति सूत्रसूचितसूक्ष्मार्थः ।

'शिक्षां व्याख्यास्यामः, वर्णः स्वरः, मात्रा बलं, सामसन्तानः, इत्युक्तश्शीक्षा-ध्यायः ।' 'सह नौ यशः, सह नौ ब्रह्मवर्चसम्, अथातस्सँहिताया उपनिषदं व्याख्यास्यामः' इत्यादिना तैत्तिरीये श्रूयते । 'यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिश्रुतिषु यज्ञादिकर्मणां मोक्षाङ्गत्वश्रवणात् 'परिक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥' इत्यादौ कर्मणो मोक्षाङ्गत्वनिषेधात्, तैत्तिरीये कर्मज्ञानोभयतुल्य-प्राचुर्यावगमात् कर्मणः स्वातन्त्र्येण पुनरावृत्तिरहितपरमपुरुषार्थफलसाधनत्वं उत ज्ञानाङ्ग-त्वेनेति संशयः ।

जीवातिरिक्तेश्वरसद्भावे मानाभावात्, 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'अहरहस्सन्ध्यामुपासीत' इत्यत्र शरीरस्यैव कर्तृत्वावगमात् 'यस्य पर्णमयी जुहूर्भवति' 'वायुर्वै क्षेपिष्ठा देवता यत्प्रयाजानुयाजौ युज्येते' इत्यादिवत् 'प्रज्ञानं ब्रह्म' 'अहं ब्रह्मास्मि' 'तत्त्वमसि' इत्यादिवेदान्तानां स्तुतिपरत्वम् ।

किञ्च– 'यदेव विद्यया करोति[2] तदेव वीर्यावत्तरं भवति' इत्यादि-वेदान्तेष्वपि विद्यायाः कर्मसु विनियोगदर्शनात् कर्माङ्गत्वमनिवार्यम् । 'तं विद्या-कर्मणी[3] समारभेते' इति विद्याकर्मणोरेकस्मिन् पुरुषे साहित्यं दृश्यते । 'आचार्य-कुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाऽभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्' इत्यादौ अर्थज्ञानपर्यन्ताध्ययनवतः[4], स्वाध्यायो अध्येतव्यः[5] । कर्माणि विदधत् अर्थावबोधपर्यन्ताध्ययनवत एव विदधाति । अर्थाव-बोधपर्यन्तमध्ययनविधिरेवेति स्थापितम् । 'कुर्वन्नेवेह कर्माणि जिजीविषेत् शतँ

---

[1] सन्धानं सूत्र (ग). [2] श्रद्धयोपनिषदा तदेव (ग). [3] समन्वारभेते (ग). [4] विधिर्विधीयते स्वाध्ययो (ग). [5] इत्यादिना वेदाध्ययनवतः कर्माणि (ग).

**समाः**' इत्यात्मविदः पुरुषात्पुरुषस्सर्वस्य कर्मसु नियमविधित्वेन विनियोगात् करण एव फलमित्यवगम्यते । तस्मात् ब्रह्मविद्यायाः कर्माङ्गत्वमप्रतिहतमिति प्राप्ते प्रचक्ष्महे–
॥ **पुरुषार्थस्येति** ॥

*'**अमृतस्य देवधारणो भूयासम्**', '**तमेवं विद्वान् अमृत इह भवति**' इत्यादिश्रुतिशतेषु परशिवब्रह्मणः ध्यानधारणज्ञानविधानादेव मोक्षोपदेशात् कर्मणः यत्र कुत्रापि स्वातन्त्र्येण युक्त्यदर्शनात् '**एष एव साधु कर्म कारयति**' इत्यादिश्रुतिषु, '**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया**' इत्यादिस्मृतिषु च कर्मकर्तुर्जीवस्यापि शिवाधीनत्वं, शिवस्यैव जीवकृतसर्वपापमोचकत्वं चोक्तम् ।

किञ्च– '**न कर्मणा**' '**यावदुत्पद्यते ज्ञानं तावदनुष्ठेयानि कर्माणि**'

**त्यजेद्धर्ममधर्मं च उभे सत्यानृते त्यजेत् ।**
**उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥**

इत्यादिश्रुतिषु ब्रह्मज्ञानेच्छावतां कर्मनिषेधावगमात् ब्रह्मविद्यायाः कर्माङ्गत्वमनुपपन्नमतश्चतुर्थ्यन्तदेवताप्राधान्यजैमिनिमतमविचारितरमणीयमिति सिद्धम् ।

ननु वेदचतुष्टयविज्ञाननिदानभूतजैमिन्याचार्येणापि कर्मणः प्राधान्यस्य ज्ञानोपसर्जनत्वस्य च व्यवस्थापनात् कथं ब्रह्मविद्यायाः वरिष्ठत्वमित्याशङ्कायामाह–

## ॥ २४६ ॥ शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥

'**यद्धि मनसा मनुते तद्वाचा वदति तत्कर्मणा करोति**', '**यदेव ज्ञानफलं तदेव कर्मफलम्**' इत्यादिश्रुतिषु जीवस्य शेषित्वस्य कर्मणः शेषत्वस्य चावगमात् **पुरुषार्थवादः** पुरुषस्य जीवस्य अर्थस्य प्रयोजनस्य वादः वाक्योपन्यासादिकं कर्मशेषत्वात् जीवजन्यत्वेन तदंशात् ॥ **यथाऽन्येष्विति जैमिनिः** ॥

---

*अत्र 'ब्रह्मविदाप्नोति' इत्यादीनि प्रमाणश्रुतिवचनानि अनेकानि नानास्थलेषु पुनःपुनरावृत्तानि अत्रापि 'ग, ङ' प्रत्योः दृश्येते ।

'यदा तमस्तन्न दिवा न रात्रिः
न सन्न चासच्छिव एव केवलः ।
तदक्षरं तत्सवितुर्वरेण्यं
प्रज्ञा च तस्मात् प्रसृता पुराणी ॥'

'तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि····प्रचोदयात्' इत्यादिश्रुतिषु शिवस्य परब्रह्मणो बुद्धिप्रेरकत्वं यथा दर्शितं तथा जीवस्यापि कर्मप्रेरकत्वमिति कर्मकाण्डे जैमिनिर्मन्यते। तस्मात्तन्मतेऽपि ज्ञानप्राधान्यस्यार्थात्सिद्धत्वात् ब्रह्मकाण्डे मोक्षफलं प्रति ज्ञानप्राधान्यं किं वक्तव्यमिति बादरायणाचार्यो मन्यते ।

किञ्च– 'सत्यं वद' धर्मं चर' इत्यादिवेदान्तसिद्धधर्माणामपि मोक्षहेतुत्वेन जैमिन्याचार्यैरपि स्वीकृतत्वात् 'कर्मचितो लोकः क्षीयते' इत्यादिश्रुतिषु कर्मफलानामनित्यत्वस्य 'ब्रह्म वेद ब्रह्मैव भवति', 'न स पुनरावर्तते' इत्यादिषु ब्रह्मज्ञानफलस्य नित्यत्वस्य चावगमात् 'अहरहस्सन्ध्यामुपासीत' इत्यादिवत् 'आत्मा वाऽरे द्रष्टव्यः' 'वेदान्तश्रवणं कुर्वन् योगं समारभेत' 'आकुञ्चनेन कुण्डलिन्या कवाटमुद्घाटय मोक्षद्वारं विच्छेदयेत्' 'अमृतस्य देवधारणो भूयासं' इत्यादिषु विधिदर्शनाच्च तत्त्वमस्यादिवेदान्तानां अर्थवादत्वमयुक्तम् । वसिष्ठ-अगस्त्य-भरद्वाजादिवेदविद्भिरपि मोक्षाङ्गत्वेन कर्माङ्गीकारात् 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' इति श्रुतौ केकयं प्रति कर्मनिष्ठब्राह्मणानां मोक्षार्थं वेदान्तविद्याप्रार्थनावगमात् पुराणेष्वपि क्षत्रियं जनकं प्रति शुकात्रेयादिब्राह्मणवरिष्ठानां ब्रह्मज्ञानप्रार्थनद्योतनाच्च ब्रह्मविद्यायाः सर्वाधिकृत्वं गम्यते ।

अस्मिन्नर्थे हेत्वन्तरमाह–

## ॥ २४८ ॥ आचारदर्शनात् ॥ ३ ॥

'आकाशशरीरं ब्रह्म, सत्यात्मप्राणारामं मन आनन्दम् ।' 'शान्तिसमृद्धममृतं, इति प्राचीनयोग्योपास्व' इत्यत्र कर्मनिरपेक्षतया मुमुक्षूणां[1] ब्रह्मविद्यायाः व्यवस्थापनात् तस्याः कर्माङ्गत्वमयुक्तम् ।

---

[1] ब्रह्मोपास्यत्वव्यवस्थापनात् (ग).

किञ्च– कर्मसु कर्तुर्जीवादन्यो मुमुक्षुभिः प्राप्यतया वेदान्तेषु वेद्यतया चोपदिश्यत इति प्रागेवोपपादितम् । '**नेतरोऽनुपपत्तेः**' '**भेदव्यपदेशाच्च**' '**अनुपपत्तेस्तु न शारीरः**' '**इतरपरामर्शात्स इति चेन्नासम्भवात्**' इत्येवमादिभिस्सूत्रैः '**तदेव ब्रह्म,' तत्त्वमसि**' इति महावाक्येषु जीवप्राप्यत्वेन, शिवस्य जीवातिरिक्तत्वमुपदिष्टम् । '**अधिकं तु भेदनिर्देशात्**' इत्येवमादिभिः जीवब्रह्मवादो निरस्तः । '**ऐतदात्म्यमिदं सर्वं**' '**सर्वो वै रुद्रः**' '**विश्वरूपाय वै नमो नमः**' इत्यादिभिः शिवोपादानत्वेन प्रपञ्चस्य शिवात्मकत्वमुक्तम् । '**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः**' '**उत्क्रमिष्यत एवं भावादित्यौडुलोमिः**' इति सूत्रद्वयेन श्रुत्यैकदेशभेदमतमभेदमतं च निराकृत्य '**अवस्थितेरिति काशकृत्स्नः**' इत्यादिभिः सर्ववेदान्तसिद्धद्वैताद्वैतमतमेव मुमुक्षुभिः प्रार्थनीयमित्युपपादितम् । तस्मात्तदर्थं कर्मसु कर्तुरात्मनो याथात्म्योपदेशपरा वेदान्तशब्दाः सम्पद्यन्त इति विद्यायाः कर्माङ्गत्वं प्रतिपाद्यते ।

पुनर्हेत्वन्तरमाह–

## ॥ २४८ ॥ तच्छ्रुतेः ॥ ४ ॥

श्रुतिरेव हि ब्रह्मण उपासनमेव मुमुक्षूणां मोक्षाङ्गमाह– '**य एषोऽन्तर्हृदय आकाशः तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः । यत्राऽसौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले । भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ । सुवरित्यादित्ये । मह इति ब्रह्मणि ॥**' इति ।

किञ्च– ब्रह्मोपासनया सर्वकामावाप्तिः श्रुत्योपदिष्टा– '**यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान्– सह ब्रह्मणा ॥**' इति ।

प्रदेशान्तरेऽपि ब्रह्मविद्यायाः सर्वकर्मावाप्तिफलमुपदिश्यते–

**'शुचीनां श्रीमतां गेहे योगभ्रष्टो हि जायते ।**
**अथवा योगिनामेव कुले भवति धीमताम् ॥'**

SCANNED



इति स्मृतौ ब्रह्मोपासनरूपयोगभ्रष्टानां कामवासनया जन्मान्तरेऽपि मर्त्यलोके सदाचारावच्छिन्नधनिकगेहे जननं अकामुकानां पुनर्ब्रह्मोपासनात्मकयोगिनां गृहे भवनं च दृश्यते। अतो ब्रह्मविद्यायाः सर्वाधिकत्वमनवद्यम् ।

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह—

## ॥ २४९ ॥ समन्वारम्भणात् ॥ ५ ॥

ब्रह्मविद्याङ्गत्वेन सत्कर्मारम्भकत्वस्य श्रुतिषु व्यवस्थापनात् ब्रह्मविद्यायाः कर्माङ्गत्वमयुक्तम् । 'वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । *भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् ।' इत्यत्र तथा स्पष्टमुपदिष्टम् ।

पुनर्हेत्वन्तरमाह—

## ॥ २५० ॥ तद्व्रतो विधानात् ॥ ६ ॥

'मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि तानि सेवितव्यानि । नो इतराणि । यान्यस्माकँ सुचरितानि तानि त्वयोपास्यानि । नो इतराणि ' इत्यादिना तद्व्रतः ब्रह्मविद्याङ्गत्वेन मातापित्रादिभक्तिविधानावगमात् न ब्रह्मविद्यायाः कर्माङ्गत्वम् ॥

पुनर्हेत्वन्तरमाह—

## ॥ २५१ ॥ नियमात् ॥ ७ ॥

'ये के चास्मच्छ्रेयाँसो ब्राह्मणाः । तेषां त्वयासने न प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धयाऽदेयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् ।'

---

* 'भूत्यै ' इत्यारभ्य ' इत्यत्र ' इत्यन्तं (ग) कोशे नास्ति ।

इत्यादिना तथा नियमविधित्वेन सर्वेषां कर्मणां ब्रह्मविद्याङ्गत्वप्रतिपादनात् नानार्थो युक्तः ।

एवं तैत्तिरीयश्रुत्या कर्मणः विद्याङ्गत्वं प्रसाध्य तदेव सत्यमिति स्वमतं दर्शयति—

## ॥ २५२ ॥ अधिकोपदेशात्तु बादारायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तुशब्दोऽत्र निश्चयार्थः । विद्यात एव पुरुषार्थः, कुत ? ॥ **अधिकोपदेशात्** ॥ कर्मसु कर्तुर्जीवात् हेयप्रत्यनीकानवधिकातिशयासंख्येयकल्याणगुणाकरत्वेन अधिकस्यार्थान्तरभूतस्य शिवस्य परब्रह्मणो वेद्यतयोपदेशात् भगवतो बादरायणस्य विद्यातपःफलमित्येवमेव मतम् लिङ्गानि तिष्ठन्तु । वेद्यतयोपदेशस्तु तावत्कर्तुः प्रत्यगात्मनोऽधिकस्यैव । कथम् ? ॥ **तद्दर्शनात्** ॥ प्रत्यगात्मन्यशुद्धे शुद्धेऽप्यसम्भावनीयानन्तगुणाकरस्य महनीयस्य वेद्यस्य निरस्तनिखिलहेयगन्धस्य स्वसङ्कल्पकृतजगदुदयविभवलयलीलस्य सर्वज्ञस्य सर्वशक्तेर्वाङ्मनसापरिच्छेद्यानन्दस्य जीवाधिकस्य कृत्स्नस्य प्रशासितुश्शिवस्य ब्रह्मणो वेदनोपदेशवाक्येषु दर्शनात् । **'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः' 'तदैक्षत बहुस्यां प्रजायेय' 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' 'एष सर्वेश्वरः एष भूताधिपतिरेष भूतपालः एष सेतुर्विधरणः सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः एतस्य वा अक्षरस्य प्रशासने गार्गि' 'सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' 'एतस्य वा अक्षरस्य प्रशासने गार्गि........' 'भीषास्मात् वातः पवते........'** इत्यादिषु वेदनोपदेशशब्देषु कर्तुः प्रत्यगात्मनः खद्योतकल्पनस्य अविद्यादिहेयसम्बन्धयोग्यस्य गन्धोऽपि नास्तीति परमपुरुषशिवविषयायाः विद्यायाः तत्प्राप्तिरूपममृतत्वं तत्र तत्र श्रूयमाणं फलमिति विद्यातः पुरुषार्थ इत्ययुक्तम् ।''

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह—

## ॥ २५३ ॥ तुल्यन्तु दर्शनात् ॥ ९ ॥

"यदुक्तं ब्रह्मविदां कर्मानुष्ठानदर्शनात् विद्यायाः कर्माङ्गत्वमिति, तन्न, विद्यायाः अनङ्गत्वेऽपि तुल्यं दर्शनम्' ब्रह्मविदां कर्मानुष्ठानदर्शनं अनैकान्तिकमित्यर्थः; अननुष्ठानस्यापि

दर्शनात्। दृश्यते हि ब्रह्मविदां कर्मत्यागः– 'ऋषयः कावषेयाः, किमर्था[1] वयमध्येष्यामहे? किमर्थं वयं यक्ष्यामहे? किं प्रजया करिष्यामः?' इत्यादौ। अतो ब्रह्मविदां कर्मत्यागदर्शनात् न विद्या कर्माङ्गम्। कथमिदमुपपद्यते? ब्रह्मविदां कर्मानुष्ठानमननुष्ठानञ्च? फलाभिसन्धिरहितस्य [2]यज्ञादिकर्मणो ब्रह्मविद्याङ्गत्वात् अतथाविधस्य कर्मणो.... मोक्षैकफलब्रह्मविद्याविरोधित्वात् तस्याननुष्ठानदर्शनं उपपन्नतरम्।"

विद्यायाः कर्माङ्गत्वे कर्मत्यागः कथमपि नोपपद्यते। '**यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति**' इति श्रुतिः विद्यायाः कर्माङ्गत्वमवगमयतीति आशङ्कायामाह–

## ॥ २५४। असार्वत्रिकी ॥ १० ॥

न **दहर-शाण्डिल्य-वैश्वानर-उपकोसल-भूमादिसर्वविषयेयं**[3] श्रुतिः अपितु उद्गीथविद्याविषयैव। '**यदेव विद्यया करोति**' इति यच्छब्दस्य अनिर्धारितविशेषस्य '**उद्गीथमुपासीत**' इति प्रस्तुतोद्गीथविशेषनिष्ठत्वात्। न हि यत्करोति तद्विद्ययेति सम्बध्यते। विद्यया क्रियमाणं यच्छब्देन निर्दिश्य तस्य हि वीर्यवत्तरत्वमुच्यते।"

यच्चोक्तं '**तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च**' इति श्रुतौ आत्मज्ञानकर्मणोः अङ्गाङ्गिभावेन मिळितयोः स्वर्गलोकप्राप्तिसाधनत्वकथनात् ब्रह्मज्ञानस्य स्वातन्त्र्येण मोक्षसाधनत्वमयुक्तमित्याशङ्क्याह–

## ॥ २५५ ॥ विभागः शतवत् ॥ ११ ॥

"**तं विद्याकर्मणी समन्वारभेते**' इत्यत्रोक्तेन **न्यायेन** विद्याकर्मणोर्भिन्नफलत्वात् विद्या स्वस्मै फलाय समन्वारभते, कर्म च स्वस्मै फलायेति विभागो द्रष्टव्यः।"

---

[1] किमर्था वयं (ग). [2] अनुष्ठानदर्शनं उपपद्यते। वक्ष्यति च सर्वापेक्षया च यज्ञादिश्रुतेरिति फलार्थस्य तस्यैव यज्ञादि' (ग). [3] विद्याविषयेयं (ग).

किञ्च– विद्याशब्देनाऽमूर्तपरशिवज्ञानं मूर्तपरशिवज्ञानं वा प्रोच्यते । निरवयव[1]तत्त्वज्ञानिनां [2]'......कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' इति इहैव सूक्ष्मशरीरविलयपूर्वकं अत्रैव परशिवब्रह्मैकत्वस्य प्रतिपादितत्वात् परलोकगमनप्रसक्त्यसम्भवेन विद्याशब्देन मूर्तपरशिवब्रह्मोपासनैव गीयते । एवं स्थिते सति 'तं विद्याकर्मणी समन्वारभेते' इति श्रुतौ बिभागो निश्चीयते । तं देवयानमार्गेण परशिवब्रह्मलोकं गच्छन्तं मूर्तब्रह्मोपासकं विद्यामूर्तशिवोपासना समन्वारभते– अनुसृत्य गच्छति । तं धूमादिमार्गेण स्वर्गलोकं गच्छन्त कर्मिणं ज्योतिष्टोमादिरूपं कर्म च समन्वारभते अनुसृत्य गच्छति इत्येवं[3]कथं विभागोऽवगम्यते ? शतवत् । यथा क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते क्षेत्रार्थं शतं, रत्नार्थं शतं इति विभागः प्रतीयते ; तद्वदिहापि वेदियव्यम् ।

उत– शतवदित्यत्र द्वयोर्ब्राह्मणयोः शतं पर्णा इति वाक्ये एकस्य ब्राह्मणस्य पञ्चाशत्पर्णा दातव्याः, अन्यस्य ब्राह्मणस्य पञ्चाशत्पर्णा दातव्याः इति विभागो यथा निश्चीयते तद्वदमूर्तपरशिवब्रह्मोपासनाकर्मणोः स्वातन्त्र्येण प्रत्येकं मूर्तपरशिवब्रह्मलोक-स्वर्गलोकप्राप्तिसाधनत्व[4]उक्तत्वात् उभयोर्मिळित्वा परशिवब्रह्मलोकप्राप्तिं प्रति वा साधनत्वमिति संशये ज्योतिष्टोमादिकर्मोपासकानां स्वर्गलोकानुभवः मूर्तपरशिवब्रह्मोपासकानां निरतिशयानन्दस्वभावनित्यनिरुपमाद्वितीयपरशिवलोककल्याणविभूत्यात्मकसालोक्यादिमुक्तित्रयवैभवानन्दसामरस्य – प्राप्तिश्चेति विभागोप्युपदिश्यते ।

ननु 'तं विद्याकर्मणी समन्वारभेते' 'तं स्वर्गलोकं गच्छन्तं कर्मिणं विद्याकर्मणी' इति वाक्ये विद्याशब्देन कर्माङ्गभूतशरीरेन्द्रियमनःप्राणाद्यतिरिक्तजीवज्ञानं पशु-पाशनियामकशिवज्ञानञ्चोच्यते । कर्मशब्देन तदङ्गमग्निहोत्रादिकमुच्यते । अनुसृत्य गच्छतीतिवाक्ये कर्मज्ञानयोरुभयोरेकत्वावगमात् न वैलक्षण्यमिति चेदुच्यते– शरीरेन्द्रियाद्यतिरिक्तजीवज्ञानस्य शिवोपासनाङ्गभूतत्वात् जीव-ब्रह्मभेदोपासनाज्ञानस्य शिवत्वप्राप्तिहेतुत्वाच्च तदुभयं विधेयम् । देहेन्द्रियमनःप्राणजीवैक्यज्ञानानुसरणेन ज्योतिष्टोमादिकर्माचरणस्य स्वर्गलोक प्राप्तिफलमुच्यते । तस्मात् शरीरेन्द्रियाद्यभिमानिजीवज्ञानस्यैव कर्माङ्गत्वमिति निश्चीयते ।

---

[1] शिवज्ञानिनां (ग). [2] गताः कलाः कर्मणि (ग). [3] अत्र 'कथं' पदं (ग) प्रतौ नास्ति ।
[4] क्लृप्तत्वात् (ग)

यच्चोक्तं– 'य एवं विद्वान् यजते' इति श्रुतौ शिवज्ञानिनामपि कर्माधिकारश्रवणात् शिवज्ञानमपि कर्मानुष्ठानाङ्गमेवेति पुनः शङ्कायां परिहरणार्थमाह–

## ॥ २५६ ॥ अध्ययनमात्रवतः ॥ १२ ॥

"यदुक्तं विद्याकर्मवतः कर्मविधानाद्विद्याकर्माङ्गत्वमिति ; नैतद्युक्तम्– '**वेदमधीत्य**' इत्यध्ययनमात्रवतो विधानात्। न चाध्ययनविधिरेवार्थबोधे प्रवर्तयति ; आधानवदध्ययनस्याक्षरराशिग्रहणमात्रे पर्यवसानात् गृहीतस्य च स्वाध्यायस्य फलवत्कर्मावबोधित्वदर्शनात् तन्निर्णयफले तदर्थविचारे पुरुषः स्वयमेव प्रवर्तते। ततः कर्मार्थी कर्मज्ञाने प्रवर्तते। मोक्षार्थी च ब्रह्मज्ञाने इति न विद्या कर्माङ्गम्।

यद्यप्यध्ययनविधिरेवार्थावबोधे प्रवर्तयति– तथाऽपि न विद्या कर्माङ्गं, अर्थज्ञानादर्थान्तरत्वाद्विद्यायाः। यथा ज्योतिष्टोमादिकर्मस्वरूपविज्ञानात्फलसाधनभूतं तत्तत्कर्मानुष्ठानमर्थान्तरं ; तथार्थज्ञानरूपाद्ब्रह्मस्वरूपविज्ञानादर्थान्तरमेव ध्यान-धारणोपासनादिशब्दवाच्यपुरुषार्थसाधनभूता विद्येति न तस्याः कर्मसम्बन्धगन्धो विद्यते।"

'**य एवं विद्वान् यजते**', '**विद्वानग्निहोत्रं जुहुयात्**' इत्यादिश्रुतिनिष्ठविद्वच्छब्देन कर्मकाण्डप्रकरणपठितवेदार्थज्ञानिपुरुषविषयत्वम्। न तु ब्रह्मज्ञानिपुरुषपरत्वम्। तस्मात् वेदाध्ययनवतः पाणिनेय-कणादधर्मशास्त्रविज्ञानवतश्च कर्मानुष्ठानमात्रे अधिकारः। परमेश्वरार्पितबहुजन्मकृतकर्मानुष्ठानं तु परम्परया मोक्षहेतुरिति विधीयते।

'**कुर्वन्नेवेह कर्माणि**' इति श्रुतौ शिवज्ञानितदज्ञानिपुरुषाणां सर्वेषां शरीरपातपर्यन्तं कर्मानुष्ठानस्यावश्यकत्वकथनात् न परशिवब्रह्मज्ञानस्य स्वातन्त्र्येण मोक्षहेतुत्वमित्याशङ्कय तत्परिहारमाह–

## ॥ २५७ ॥ नाविशेषात् ॥ १३ ॥

"यच्चोक्तं **कुर्वन्नेवेह कर्माणि**' इत्यात्मविदं ज्ञानात् व्यावर्त्य यावज्जीवं कर्मानुष्ठाने नियमयति ; इति तन्नोपपद्यते– [1]अविशेषात् न ह्ययं नियमः फलसाधन-

---

[1] विशेषात् (ग).

भूतस्वतन्त्रकर्मविषय इति विशेषहेतुरस्ति ; विद्याङ्गभूतकर्मविषयतयाप्युपपत्तेः । **'कर्मणैव हि संसिद्धिं आस्थिता जनकादयः"** इत्यत्र कर्मणा जनकादीनां मोक्षप्रथमाङ्गभूतां चित्तशुद्धिं विन्दन्तीत्यवगम्यते ।

**लिङ्गाङ्गिनां निष्कामकर्माणि विहितानिः**

**'श्रुतिस्मृत्युदितं धर्मं नित्यनैमित्तिकाश्रयम् ।**
**कुर्याल्लिङ्गाङ्गसम्बन्धी द्विजन्मा कामवर्जितः ॥**

**विध्युक्तकर्मानुष्ठानात् चित्तशुद्धिर्भवेद् ध्रुवम् ।**
**चित्तशुध्या भवेद्भक्तिः [1]सापि चाव्यभिचारिणी ॥**

**तया सञ्जायते ज्ञानं [2]न चाऽस्त्यज्ञानमात्मनः ।**
**तस्मान्मोक्षस्ततः कर्म विध्युक्तं सम्यगाचरेत् ॥'**

इति शङ्करसंहितायां कर्मणां मोक्षस्य प्रथमाङ्गत्वं निरूपितम् ।

एवमर्थस्वभावेन चोद्यं परिहृत्य **'कुर्वन्नेवेह कर्माणि'** इति वाक्यस्य अर्थमाह–

## ॥ २५८ ॥ स्तुतयेऽनुमतिर्वा ॥ १४ ॥

"वाशब्दोऽवधारणार्थः । **'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यचिद्धनम् ॥'** इति विद्याप्रकरणात् विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम् । विद्यामाहात्म्यात् सर्वदा कर्म कुर्वन्नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति । वाक्यशेषश्चैवमेव दर्शयति । एवं त्वयि नान्यथतोऽस्ति न कर्म लिप्यते नरे" इति ।

**'शिवभावनया सर्वं नित्यनैमित्तिकादिकम् ।**
**कुर्वन्नपि महायोगी गुणदोषैर्न बध्यते ॥**

इति **सिद्धान्तागमे** श्रूयते । अतो न कर्माङ्गं विद्या ।

---

[1] भक्तिरव्यभिचारिती (ग)  [2] सत्यन्यदज्ञानमात्मनः (ग)

ननु

'सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथा सक्तः चिकीर्षुर्लोकसङ्ग्रहम् ॥

ज्ञाने सिद्धेऽपि विदुषां कर्मापि विनियुज्यते ।
फलाभिसन्धिरहितं तस्मात्कर्म न सन्त्यजेत् ॥'

इत्यादिबहुस्मृतिषु विदुषामपि नित्यनैमित्तिकादिनिखिलकर्मानुष्ठानावश्यकत्वकथनात् कर्मानुष्ठानस्य विद्यास्तुतिपरत्वं कथमित्याशङ्कायामाह–

## ॥ २५९ ॥ कामचारेण चैके ॥ १५ ॥

"अपि चैवं एके शाखिनः कामचारेण ब्रह्मविद्यानिष्ठस्य गार्हस्थ्यत्यागमर्थयते । 'किं प्रजया करिष्यामः येषां नोऽयमात्मायं लोकः' इति विदुषो विरक्तस्य कामचारेण गार्हस्थ्यकर्मत्यागं ब्रुवदिदं वचनं ब्रह्मविद्यायाः कर्माङ्गत्वं दर्शयति ।" 'न कर्मणा' इत्यादिश्रुतिषु ।

अनेकजन्मशुद्धानां श्रौतस्मार्तानुवर्तिनाम् ।
विरक्तानां प्रबुद्धानां प्रसीदति महेश्वरः ॥

प्रसन्ने सति मुक्तोऽभून्मुक्तशिवसमो भवेत् ।
अल्पभावोऽपि यो मर्त्यः तस्य जन्मत्रयात्परम् ॥'

इत्यादिष्वपि यज्ञादिकर्माङ्गत्वे हि विद्यानिष्ठस्य कामचारेण गार्हस्थ्यत्यागो न सम्भवति । अतो न विद्यायाः कर्माङ्गत्वम् ।

जीवब्रह्मभेदज्ञानस्य कर्मानुष्ठानाङ्गभावात् चतुर्विधमोक्षाङ्गत्वं साधितम् । इदानीं जीवब्रह्मज्ञानविषयकसाक्षात्कारस्य सर्वकर्मनाशकत्वादपि जीवब्रह्मभेदविषयकं परोक्षज्ञानं कथं न कर्माङ्गमित्याशङ्कायामाह–

## ॥ २६० ॥ उपमर्दं च ॥ १६ ॥

बहुशरीरप्रवेश-निर्गमन-प्रवेशव्यापारसांसारिकदुःखमूलपुण्य-पापकर्मणोः ब्रह्मविद्यया **उपमर्दं च** प्रतिवेदान्तमर्थ्यते ।

'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

चित्ताकाशं चिदाकाशं आकाशं च तृतीयकम् ।
द्वाभ्यां शून्यतरं विद्धि चिदाकाशं महामुने ॥

ध्यायतो हृदयाकाशे चितिचिच्चक्रधारया ।
मनो मारय निश्शङ्कं त्वां प्रबध्नन्ति [1]नारयः ॥

भोगैकवासनां त्यक्त्वा त्यज त्वं भेदवासनाम् ।
भावाभावौ ततस्त्यक्त्वा निर्विकल्पः स्थिरो भव ॥

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥

आत्मन्यतीते सर्वस्मात्मस्वरूपेऽथवातते ।
को बन्धः कश्च वा मोक्षः निर्मूलं मननं कुरु ॥

आदिमध्यावसानेषु दुःखं सर्वमिदं यतः ।
तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवानघ ॥

निद्राया लोकवार्ताया शब्दादेरात्मविस्मृतः ।
क्वचिन्नावसरं दत्वा चिन्तयात्मानमात्मनि ॥

---

[1] कारवः (ग)

आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया।
दद्यान्नावसरं किञ्चित् कामादीनां मनागपि॥
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत्।'

इत्यादिश्रुतिषु 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इत्यादिस्मृतिषु च विद्यायाः कर्माङ्गत्वेन सर्वोत्कृष्टत्व सर्वदःमोक्षहेतुत्वावगमात् तदेव युक्तम्। न च परशिवब्रह्मसाक्षात्कारस्य सकलकर्मानुष्ठानाङ्गत्वाभावेऽपि श्रवणोत्तरकालीनस्य जीवब्रह्माभेदस्य परोक्षज्ञानस्य च कर्मानुष्ठानाङ्गत्वं भवतीति वाच्यम्। 'वेदान्तविज्ञानसुनिश्चितार्थाः ………… मुच्यन्ति सर्वे' इत्यादिश्रुतिषु तद्ज्ञानस्यापि क्रममुक्तिहेतुत्वावगमात् न कर्माङ्गत्वं सिद्धम्।

---

ऊर्ध्वरेतस्काधिकरणम् ॥ २ ॥

शैवागमविहितशैवचतुराश्रमिलिङ्गधारणनिर्णयः

ननु– 'वीरहा वा एष देवानां योऽग्निमुद्वासयेत्' इत्यादिश्रुतिष्वग्निहोत्रादि-कर्मणां अकरणे प्रत्यवायावगमात् वसिष्ठ-जनकादिब्रह्मनिष्ठानामपि कर्मानुष्ठानदर्शनाच्च ब्रह्मविद्यायाः कर्माङ्गत्वं कथमनुपपन्नमित्याशङ्कायां तन्निराकरणार्थं अधिकरणान्तरमाह–

## ॥ २६१ ॥ ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

न्यास इति ब्रह्मणः परः 'परो हि ब्रह्मा तानि वा एतान्यवराणि तपाँसि न्यास एवात्यरेचयद्य एवं वेदेत्युपनिषत्' इति तैत्तिरीये; 'न्यास इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्म' इत्यादिषु बहुजन्मकृतपुण्यपुञ्जपरिपक्वशुद्धान्तःकरणानां ज्योतिष्टोमादिकर्मनिराकरणपूर्वकसंन्यासाश्रमोपदेशात् 'यावज्जीवमग्निहोत्रं जुहोति' 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इत्यादावकरणे प्रत्यवायपूर्वकत्वेन अग्निहोत्र-दर्शपूर्ण-मासादीनां यावज्जीवाधिकारव्यवस्थापनात् वामदेव-उपमन्यु-दधीचि-दूर्वासप्रभृतीनां अग्नि-होत्रादिकर्मनिराकरणपूर्वक'निराभार'संज्ञिकयत्याश्रमविशिष्टत्वद्योतनाच्च, लोके सर्वेषां ब्राह्मणानाञ्च चतुर्थाश्रमसंज्ञिकसन्यासः कर्तव्योऽकर्तव्यो वेति सन्दिह्यते ।

ऊर्ध्वरेतसामपि सन्यासः कर्तव्य एवेति । 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिना अग्निहोत्र-दर्शपूर्णमासादीनां यावज्जीवकर्तव्यदर्शनात्, 'त्रयो धर्मस्कन्धाः' इत्यादौ आश्रमत्रयस्यैवोपदेशात् 'ब्रह्मसंस्थोऽमृतत्वमेति' 'न्यास इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्म' इत्यादितुर्याश्रमविधायकवाक्यानां अर्थवादमात्रं अत्र क्रियते । 'ये चेमेऽरण्ये श्रद्धां तप इत्युपासते' इति च देवयानविधिपरत्वात् तत्रापि नाश्रमान्तर-विधिः सम्भवति ।

किञ्च–

'अश्वालम्भं गवालम्भं सन्यासं पलपैतृकम् ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥'

इति पाराशरस्मृतौ सन्यासनिषेधावगमात्,

'कृते तु मानवो धर्मः त्रेतायां गौतमस्मृतिः ।
द्वापरे शंखलिखितं कलौ पाराशरस्मृतिः ॥'

इति तत्रैव सर्वस्मृत्यपेक्षया पाराशरस्मृतेः बलीयस्त्वोपदेशात्,

शैवः पञ्चविवर्जयेत्

'प्रायश्चित्तं चोपवासं संन्यासं यतिवन्दनम् ।
तीर्थयात्राभिगमनं शैवः पञ्च विवर्जयेत् ॥'

इति शैवागमे तद्वदुपदेशाच्च सर्वथा वैदिकानां चतुर्थाश्रमो न कर्तव्य एवेति प्राप्ते प्रचक्ष्महे–

न विद्या कर्माङ्गम्

'ऊर्ध्वरेतस्सु आश्रमेषु ब्रह्मविद्यादर्शनात् तेष्वग्निहोत्र-दर्शपूर्णमासादिकर्माभावाच्च न विद्या कर्माङ्गम् ।' कुतः ? ॥ शब्दे हीति ॥ वैदिक एव हि शब्दे ते दृश्यन्ते । त्रयो धर्मस्कन्धाः । 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते 'एवमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति वेदानमुं लोकं, अमुं लोकममुं, परित्यज्यात्मानमन्विच्छेत्' 'त्रय एते पुण्यलोका भवन्ति ।' 'ब्रह्म संस्थो अमृतत्वमेति' 'संन्यस्य श्रवणं कुर्यात्' इत्यादौ यत्याश्रमस्थानां अग्निहोत्रादिकर्मानुष्ठानविध्यभावात् 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिश्रुतिसिद्धयावज्जीवाग्निहोत्रविधिस्त्वविरक्तविषय एवेति सिद्धम् । तथा सूतसंहितायां–

चतुर्विधास्तु विज्ञेया भिक्षवो वृत्तिभेदतः

'अथातस्संप्रवक्ष्यामि संन्यासं मुनिसत्तम ।
चतुर्विधास्तु विज्ञेया भिक्षवो वृत्तिभेदतः ॥

कुटीचको मुनिश्रेष्ठ तथैव च बहूदकः ।
हंसः परमहंसश्च तेषां वृत्तिं वदामि ते ॥

कुटीचकस्तु संन्यस्य स्वे स्वे वेश्मनि नित्यशः
भिक्षामादाय भुञ्जीत स्वबन्धूनां गृहेऽथवा ॥

शिखा यज्ञोपवीती स्यात्तिदण्डी स कमण्डलुः
सपवित्रश्च काषायी गायत्रीश्च जपेत्सदा ॥

सर्वाङ्गोद्धूलनं कुर्यात्त्रिपुण्ड्रश्च त्रिसन्धिषु ।
शिवलिङ्गार्चनं कुर्यात् श्रद्धयैव दिने दिने ॥
बहूदकस्तु संन्यस्य बन्धुपुत्रादिवर्जितः ।
सप्तागारं चरेद्भैक्षमेकान्नं परिवर्जयेत् ॥

गोवालरज्जुसम्बन्धं त्रिदण्डी शिक्यमद्भुतम् ।
पात्रं जलपवित्रश्च कौपीनश्च कमण्डलुम् ॥

आच्छादनं तथा कुर्यात्पादुकाच्छत्रमद्भुतम् ।
पवित्रमजिनं सूचिं पक्षिणीमक्षसूत्रकम् ॥

योगपट्टं बहिर्वस्त्रं मृत्खनित्रं कृपाणिकाम् ।
सर्वाङ्गोद्धूळनं तद्वत्त्रिपुण्ड्रं भस्म धारयेत् ॥

शिखायज्ञोपवीनश्च देवताराधने रतः ।
स्वाध्यायं सर्वदाभ्यासमुत्सृजेद्ध्यानतत्परः ॥

सन्ध्याकाले च सावित्रीजपकर्म समाचरेत् ।
हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च ॥

कन्था कौपीनमाच्छाद्यमङ्गवस्त्रं बहिःपटम् ।
एकन्तु वैणवं दण्डं धारयेन्नित्यमादरात् ॥

त्रिपुण्ड्रोद्धूळनं कुर्याच्छिवलिङ्गं समर्चयेत् ।
अष्टग्रासं सकृन्नित्यमश्नीयात्सशिखं वपेत् ॥

सन्ध्याकाले तु सावित्रीजपमध्यात्मचिन्तनम् ।
तीर्थसेवा तथा कृच्छ्रं तथा चान्द्रायणादिकम् ॥

कुर्वन् ग्रामैकरात्रेण न्यायेनैव समाचरेत् ।
परहंसस्त्रिदण्डश्च रज्जुं गोवालनिर्मितम् ॥

शिक्यं जलपवित्रञ्च पवित्रञ्च कमण्डलुम् ।
पक्षिणीमजिनं सूचिं मृत्खनित्रं कृपाणिकाम् ॥

शिखायज्ञोपवीतञ्च नित्यं कर्म परित्यजेत् ।
कौपीनाच्छदनं वस्त्रं कन्थां शीतनिवारिणीम् ॥

योगपट्टं बहिर्वस्त्रं पादुके छत्रमद्भुतम् ।
अक्षमालाञ्च गृह्णीयाद्वैणवं दण्डमव्रणम् ॥

अग्निरित्यादिभिर्मन्त्रैः कुर्यादुद्धूलनं मुदा ।
ओमोमिति सदा प्रोच्यन् हंसः कुर्यात्त्रिदण्डकम् ॥

मृत्पात्रं कांस्यपात्रं वा दारुपात्रञ्च वैणवम् ।
पाणिपात्रं च गृह्णीयाद्वाचम्येवं तदोदकम् ॥

बहूदकानां हंसानां पाणिपात्रं ततोदकम् ।
कांस्यपात्रं न विध्युक्तं मृत्पात्रमिति हि श्रुतिः ।

मधूकरमथैकान्नं परहंसस्समाचरेत् ।
नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ॥

तस्माद्योगानुगुण्येन भुञ्जीत परहंसकः ।
अभिशस्तं समुत्सृज्य सार्ववर्णिकमाचरेत् ॥

उत्तरोत्तरलाभे तु पूर्वं पूर्वं परित्यजेत् ।
गुरुशुश्रूषया नित्यमात्मज्ञानं समभ्यसेत् ॥

उत्तमां वृत्तिमाश्रित्य नीचां वृत्तिं समाश्रितः ।
आरूढपतितो ज्ञेयस्सर्वकर्मबहिष्कृतः ॥

प्रव्रजन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।
एषो हि मण्डलं भित्वा ब्रह्मलोकं स गच्छति ॥

दैवतं द्विविधं प्रोक्तमचरं चरमेव च ।
चरं संन्यासिनां रूपमचरं मृण्मयादिकम् ॥

यस्याश्रमरतिर्नित्यं वर्तते मुनिपुङ्गवाः ।
न तस्य दुर्लभं किञ्चित्त्रिषु लोकेषु विद्यते ॥

दुर्वृत्तो वा सुवृत्तो वा मूढो वा पण्डितोऽपि वा ।
प्रैषोच्चारणमात्रेण पूज्यस्सर्वेश्वरो यथा ॥

ब्रह्मचर्याश्रमस्थानां ब्रह्मा देवः प्रकीर्तितः ।
गृहस्थानाञ्च वैकुण्ठो वनस्थानां रविस्स्मृतः ॥
यतीनां शङ्करो ज्ञेयः सर्वेषामुत्तमोत्तमः ।

इति दर्शनात् ,

यज्ञोपवीतौ द्वौ धार्यौ श्रौतस्मार्ते च कर्मणि ।
तृतीयमुत्तरीयार्थं वस्त्राभावे चतुष्टयम् ॥

पञ्चमं सुतकामश्च धनकामस्तथैव च ।
दशाष्टौ वा गृहस्थस्य चत्वारो वनवासिनाम् ।
एकैकमुपवीतन्तु यतेश्च ब्रह्मचारिणः । ’

इति पाराशरस्मृतौ भगवता बादरायणेन यतीनामेकयज्ञोपवीतविधेः प्रपञ्चितत्वात् तदुक्त सन्यासि[1] निषेधागमवाक्यानां 'मुण्डसन्यासविषयत्व-जात्यन्तरविषयत्वमिति' वेदितव्यम्।

शैवानां चतुराश्रमिणां लिङ्गधारणोपदेशविधानम्

'ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तु वा।
यस्तु लिङ्गाङ्गसंयुक्तः स एवात्याश्रमी भवेत्॥'

इत्यादिना वातूलाद्यागमेषु शैवानां चतुराश्रमिणां लिङ्गधारणोपदेशात्।

ननु कुटीचकादिचतुर्विधसन्यासेषु वैदिकानां कलौ कस्य विधानं कस्य निषेधः इत्याशंकायां आचारान्तरं दर्शयति—

॥ २६२ ॥ परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ १८ ॥

'न कर्मणा' इति तैत्तिरीये, 'ब्रह्मचर्यं समाप्य गृही भवेत्, वनी भूत्वा प्रव्रजेत्, यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा प्रव्रजेत्। यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इत्यादिना जाबाले,

'लुप्तकेशनखश्मश्रुः पात्रदण्डसुकुम्भवान्।
विचरेन्नियतो नित्यं सर्वभूतान्यपीडयन्॥
ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्॥'

इति मनुस्मृतौ,

एकोरामशब्दार्थनिर्वचनम्

'सर्वभूतहितः शान्तः त्रिदण्डः सकमण्डलुः॥
एकोरामः परिव्रज्य भिक्षार्थं ग्राममाश्रयेत्॥'

इति विज्ञानेश्वरे,

'एकदण्डं त्रिदण्डं वा शिखां सूत्रं कमण्डलुम्।
काषायञ्च शिखां कन्थां ब्रह्मसूत्रे कमण्डलुम्।
धारयेऽछैवसंन्यासी तत्तन्मन्त्रविधानतः।'

इति गौतमस्मृतौ'

---

[1] निषेधकवाक्यानां (ग).

'श्लक्ष्णकाषायसंवीतः शिखी छत्रउपानही ॥
वामे चांसेऽवसज्याथ शुभे यष्टिकमण्डलू ।
परिव्राजकरूपेण वैदेहीमन्वपद्यत ॥'

इति **रामायणे** च ऊर्ध्वरेतस आश्रमधर्मा दृश्यन्ते; तथापि प्रात्यक्षिकश्रुतिस्मृति-सूत्र[1]-पुराणेषु '**शिखा-गायत्री-ब्रह्मसूत्र**परित्यागसंन्यासवचनानामचोदनात् विध्यभावात् गायत्री शिखा-यज्ञोपवीतत्यागानुसरणहंस-परमहंस-सन्यासपरामर्शो हि **अन्धपरम्परान्याय**प्रसिद्ध इति अपवदति **जैमिनिः**- जैमिन्याचार्यः प्रतिपादयति। तस्मात् श्रुतिस्मृत्यनुसारेण यतीनां ऊर्ध्वरेतसामासां ब्रह्मधर्मप्रधानसावित्री-शिखा-सूत्रसन्धानाविरोधसंन्यासग्रहणं युक्तम्।

**ऊर्ध्वरेतस्कानां ब्रह्मचारिणामेव सन्यासाश्रमानुष्ठेयतानिर्णयः**

एवं [2]स्वसिद्धान्तानुसारेण आचारान्तरं दर्शयित्वा तद्वत् स्वसिद्धान्तमाह–

## ॥ २६३ ॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

ब्रह्मचर्याद्याश्रमात् ऊर्ध्वरेतसां संन्यासाश्रमोऽनुष्ठेय इति भगवान् **बादरायणो** मन्यते। कुतः? ॥साम्यश्रुतेः॥ '**त्रयो धर्मस्कन्धाः एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति**' इति श्रुतेः ऊर्ध्वरेतसां ब्रह्मचर्याश्रमवत् यत्याश्रमस्यापि सर्वाधिकपरब्रह्मप्रापकत्वे हि मुख्यहेतुत्वश्रवणात्।

किञ्च- '**प्राजापत्यं ब्राह्मणानां**' इत्यारभ्य '**ब्राह्मं सन्यासिनां स्मृतम्**' इत्यन्तेन वर्णानां आश्रमाणाञ्च केवलानां ब्रह्मलोकप्राप्त्यन्तं फलमभिधाय,

'एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये।
तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः ॥'

इति तेष्वेव ब्रह्मनिष्ठानां ब्रह्मप्राप्तिमभिदधता भगवता **पाराशर्येण** स्पष्टमुक्तम्।

---

[1] पुराणागमादिषु (ग) [2] सर्वसिद्धान्ता (ग)

तत्रैव– '**एकैकमुपवीतं तु यतेश्च ब्रह्मचारिणः ।**' इति यतीनां ब्रह्मचारिवदेक-यज्ञोपवीतकथनात्, मन्वादिस्मृतिषु भारत-भागवत-रामायणादिग्रन्थेषु शिखा-सूत्रत्वांग-लक्षण-लक्षित-त्रैवर्णिकसंन्यासोपन्यासादर्शनात् दण्डकाषायादिवत् शिखा-ब्रह्मसूत्रधारणमपि यतीनां विहितम् ।

ननु रावण-धर्मराजाऽर्जुनादिसंन्यासस्तु कृत्रिमत्वेन शिखासूत्रधारणमुचितम् । अकृत्रिम-संन्यासिनां तन्नाङ्गीकर्तव्यमिति चेन्न । लोके राम-कृष्णादिप्रतिमासु तद्वेषावलम्बनपुरुषेषु च तन्निष्ठमुख्यलाञ्छनादिकस्यैव दृष्टत्वात् शिखोपवीतत्यागविशिष्टत्वस्य संन्यासलक्षणत्वे तादृश-धर्मपरित्यागः कथमुपदिश्यते ? दशमुखादर्शनपूर्वकयतीश्वरवेषावच्छिन्नैकमुखरावणे धर्मदेवता-वरप्राप्तयुधिष्ठिरादिषु शिखासूत्रादर्शनमहिमा किं न स्यात् ?

किञ्च– पूर्वोदाहृतमनु-पाराशर-याज्ञवल्क्यादिस्मृतीनां दत्ताञ्जलिः स्यात् । तथा वृद्धशातातपे– 'रुद्रश्शिखा पृथिवी योनिः' इति तैत्तिरीयदर्शनात् ।'

शिखोत्पाटनश्च लोके शिवद्रोही भवेद्ध्रुवम् ।
शिखायज्ञोपवीताभ्यां विप्रत्वं परिचक्ष्यते ॥
तयोरभावे शूद्रत्वं अत एव न संशयः ।
तस्माच्छिखा-ब्रह्मसूत्रं चतुराश्रमिणस्तथा ॥
धार्यं तच्च प्रयत्नेन वेदमार्गावलम्बिनाम् ॥

इति शङ्करसंहितायां–

## लिङ्गधारिसंन्यासि स्वरूपकथनम्

अत्याश्रमी प्राणलिङ्गसम्बन्धी भस्मघुण्टिकाम् ।
कन्थां कमण्डलुं भिक्षापात्रं दण्डञ्च धारयेत् ।
एताः पञ्चमहामुद्रा यस्मिन् यस्मिन् वसन्ति हि ॥

तं तं शरणमभ्येत्य सर्वभावेन पूजयेत् ।
पञ्चमुद्रान्वितो धर्मः यस्मिन् वत्स प्रवर्तते ॥

[1]सम्पद्य सर्वदा पूज्यः प्राणलिङ्गसमन्वितैः ।'

इति तत्रैव लिङ्गधारिसंन्यासिनाञ्च पञ्चमुद्राधारकत्वोपदेशात्, मुकुटागमे–

'दण्डं कमण्डलुं कन्थां ब्रह्मसूत्रं शिखां तथा ।
प्राणलिङ्गञ्च काषायं भिक्षापात्रमुपानही ॥
भस्मघुट्टीं तथा छत्रं अत्याश्रमपरस्सदा ।
धृत्वा जितेन्द्रियो भूत्वा शिवयोगं समभ्यसेत् ॥
शिवयोगिसमीपे वा शिवलिङ्गस्य सन्निधौ ।
शिवागमसमीपे वा निराभारं समाश्रयेत् ॥'

इत्यादिबहुस्मृति-पुराणागमेषु शिखा-ब्रह्मसूत्रवैशिष्ट्यस्य संन्यास एव बहुधा दर्शनात्, तथैव वैयासिकमुख्याभिप्रेतत्वाच्च विदुषां स एवावश्यकः ।

### मुमुक्षूणां इष्टलिङ्गधारणवत् ब्रह्मदण्डधार्यतानिर्देशः

ननु केषुचित् स्मृतिपुराणादिषु 'बहूदकः परो हंसः त्रिदण्डानितु धारयेत्' इत्यादिना बहूदकपरमहंसानां अदण्डविधेः, केषाञ्चिदेकदण्डत्वस्य च अवधारणात् ब्राह्मणानां को विधिराश्रीयते इत्याशङ्कायामाह–

## ॥ २६४ ॥ विधिर्वा धारणवत् ॥ २० ॥

वाशब्दोऽत्रावधारणार्थः । धारणवत् 'अमृतस्य देवधारणो भूयासम्' । शरीरं मे विचर्षणम्, 'नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं, धारयिता भूयासम् ।' इत्यादिषु मुमुक्षूणां परशिवलिङ्गधारणं यथाविधि तद्वत् तद्विधाने 'सखा मा गोपाय' इति मन्त्रेण ब्रह्मदण्डं धारयेत् इति श्रवणात् ऊर्ध्वरेतसां ब्राह्मणानां कुटीचकादि-चतुर्विधयत्याश्रमिणां एक दण्ड एव विधिरिति निश्चीयते ।

'वाग्दण्डो हि मनोदण्डः कर्मदण्डस्तु ते त्रयः ।
इत्येते निहिता दण्डा यस्यास्ति स यतिस्मृतः ॥'

---

[1] स वन्द्यः (ग)

इति **बोधायनस्मृतौ** दण्डत्रयविशिष्टत्वस्य यतीनां मुख्यत्वेन द्योतनात्; **भारत-रामायणादिग्रन्थेष्वपि अर्जुन-रघुमहाराजादीनां** दण्डत्रयपरिग्रहणवचनाचारदर्शनात् तदेव युक्तमिति चेत्तदयुक्तम्। तत्रैव–

**'दण्डमेकन्तु विप्राणां क्षत्रियाणां त्रिदण्डकम्।**
**वैश्यानां च तथा प्रोक्तं ससानग्रन्थिसंयुतम्।**
**सत्यमध्यात्मविज्ञानं वाग्दण्डस्तु प्रचक्ष्यते।**
**स्वकीयाश्रमकर्माणि कर्मदण्ड इतीर्यते ॥**
**शमादिकं शिवध्यानं मनोदण्डः प्रकीर्तितः।**
**वर्णत्र ब्रह्मदण्डाख्यं एकं धृत्वा चरेद्यतिः ॥'**

इति **शातातपे–**

**'शिखी जटी वा मुण्डी वा ब्राह्मणो वेदवित्तमः।**
**धारयेद्ब्रह्मदण्डैकं यतयो नैकचेतसः ॥**
**कुटीचकादियतयो वसिष्ठाद्याश्च संस्मृताः।**
**बहूदकादियतयो व्यास-श्वेतोपमन्यवः ॥**
**तेषामप्येकदण्डत्वं शिखा-यज्ञोपवीतकम्।**
**दर्शनाद्ब्राह्मणो लोके दण्डमेकन्तु धारयेत् ॥'** इति,
**'बहूदकस्तु संन्यासी दण्डमेकं कमण्डलुम् ॥**
**शिखां सूत्रं च काषायं धारयेदजिनादिकम् ॥**

इति **वृद्धशातातपे** दर्शनाच्च। **वाग्दण्डो** वाङ्नियमः, **मनोदण्डो** मनोनिग्रहः, **कर्मदण्डः** स्वाश्रमविहितकर्मनिष्ठेत्युपदेशात् वाग्दण्डादिकं वेणुरूपेण परित्यज्य **ब्रह्म-दण्डस्यैव** विधिविहितत्वात् ब्राह्मणानां ऊर्ध्वरेतसां शरीरपातपर्यन्तं धार्यमिति निश्चीयते।

किञ्च– **संन्यस्य वेदान्तश्रवणं कुर्यात्'** इत्यादिविधिदर्शनात् यतीनामेव वेदान्त-श्रवणाधिकार इति चेदुच्यते।

## गुरोरपि गृहस्थाश्रमावश्याश्रयणीयतानिर्णयः

'**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्; नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्** ॥' इत्यत्र शिष्यस्य समित्पाणित्वप्रदर्शनेन गुरोरपि गृहस्थाश्रमत्वमुपदिष्टम् । श्रोत्रियत्वोपदेशेन गुरोर्निषिद्धकर्मनिराकरणं ब्रह्मनिष्ठमित्यनेन वागद्वैतदुर्वादनिराकरणपूर्वकशिवैकनिष्ठागरिष्ठत्वं चोक्तम् । अत एव ब्रह्मचर्याद्याश्रमिणामपि वेदान्तश्रवणमननादिकमविरोधम् । तस्माद्-विद्यात्मककर्मणः ब्रह्मविद्याङ्गत्वं युक्तम् ।

---

## स्तुतिमात्राधिकरणम् ॥ ३ ॥

### कर्माङ्गब्रह्मचर्यादिवत् सन्यासाश्रमस्य विधेयता

ननु 'ब्रह्मसंस्थोऽमृतत्वमेति' इत्यादिवेदान्तवाक्यानां तावकत्वेन प्रमाणत्वाभावात् विरक्तानामपि धर्मप्रकरणपठितधर्माणामेवावश्यकत्वमित्याशङ्कायां अधिकरणान्तरं तन्निराकरणार्थं दर्शयति–

**॥ २६५ ॥ स्तुतिमात्रमुपादानादिति चेन्न पूर्ववत्[1] ॥ २१ ॥**

'**न कर्मणा**' इति **तैत्तिरीये** श्रूयते। अत्र कर्मनिषेधवाक्यानि ब्रह्मविद्यास्तुतिमात्रपराणि आहोस्वित् विधिपराणि इति सन्दिह्यते। '**यावज्जीवमग्निहोत्रं जुहोति**' इत्यादिविधेर्बलीयस्त्वात् संन्यासविधायकवाक्यानां तत्तद्विध्यदर्शनात् जनकादिविदुषामप्यग्निहोत्रादिकर्मावश्यकत्वद्योतनात् ऊर्ध्वरेतस्कानां संन्यासविधिः स्तुतिमात्रमेवेति प्राप्ते प्रचक्ष्महे–

ऊर्ध्वरेतस्कानां संन्यासविधायकश्रुतिस्मृत्यागमादीनां **स्तुतिमात्रमुपादानादिति चेन्न पूर्ववत्**; पूर्वत्र जाबालादिश्रुतिस्मृतिषु असन्दिग्धतया विधिरूपेण प्रपञ्चितत्वात्, '**ब्रह्मचर्यं समाप्य गृही भवेत्। गृहाद्वनी भूत्वा प्रव्रजेत्। यदि वेतरः ब्रह्मचर्यादेव प्रव्रजेत्**' इति जाबाले

'**आसन्ने सङ्कटे घोरे चोरव्याघ्रादिगोचरे।**
**भयं प्राप्तस्य संन्यासः कर्तव्यो मनुरब्रवीत्॥**

**आतुराणां च संन्यासे न विधिर्नैव च क्रिया।**
**प्रैषमात्रं समुच्चार्य संन्यासं तत्र पूरयेत्॥**

---

[1] 'स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्' इति शाङ्करभाष्ये दृश्यते (ज).

अहन्येकादशे प्राप्ते पार्वणन्तु विधीयते ।
न कुर्यात्पार्वणादन्यद्ब्रह्मीभूताय भिक्षवे ॥

रोगवान् ज्ञाननिष्ठो वा योगी वा दुर्बलोऽपि वा ।
पुत्रमित्रकलत्रेभ्यः स भैक्ष्यं भोक्तुमर्हति ॥'

इति शौनक-वृद्धशातातपादिस्मृतिष्वपि तद्विधानस्य असन्दिग्धतया प्रपञ्चितत्वात् कर्माङ्ग-ब्रह्मचर्यादिवत् संन्यासाश्रमः विधिबलाद्विधेय इति सिद्धम् ।

अत्र हेत्वन्तरमाह–

॥ २६६ ॥ भावशब्दाच्च ॥ २२ ॥

'वेदान् इमं लोकममुञ्च लोकं परित्यज्यात्मानमन्विच्छेत्' इत्यादिश्रुतिषु, हारितस्मृतौ–

'कश्यपोऽत्रिभरद्वाजवसिष्ठभृगुगौतमाः ।
कपिलोऽमण्डपालश्च कुटीचकपथाश्रयाः ॥

श्वेतोपमन्युदुर्वासा व्यासनारदशौनकाः ।
मार्कण्डेयो दधीचिश्च बहूदकपथाः स्मृताः ॥

शाण्डिल्यः पुलिहोऽनतो गार्ग्यो मुण्डकस्तथा ।
हंससंन्यासिनः प्रोक्ताः योगध्यानपरायणाः ॥

याज्ञवल्क्यश्च जाबालकण्वमैत्रेयसंज्ञिकाः ।
परहंसा इति प्रोक्ताः जटावल्कलधारिणः ॥'

इत्यादिना कुटीचकादिचतुर्विधसंन्यासभावशब्दाचारदर्शनाच्च कलावप्यूर्ध्वरेतस्कानां संन्यासो विधेयः । तथापि–

'उपवीतं वटोरेकं द्वे तथेतरयोर्मते ।
एकमेव यतीनां स्यादिति शास्त्रविनिश्चयः ॥

ब्रह्मसूत्रं बिना भुङ्क्ते विण्मूत्रं कुरुतेऽथवा ।
स पाषण्ड इति ज्ञेयः सर्वकर्मबहिष्कृतः ॥

ब्रह्मक्षत्रियवैश्यानां श्रौतसन्यास इष्यते ।
शूद्र-स्त्री-सङ्कराणाञ्च न्यासमश्रौतसंज्ञिकम् ॥

शिखासूत्रैकसंयुक्त दण्डकाषायलाञ्छनम् ।
श्रौतसन्यास इत्युक्तं व्यासस्य वचनं यथा ॥

श्रौताश्रौतविभेदेन सन्यासो द्विविधः स्मृतः ।
कन्थाकाषायदण्डकशिखासूत्रादिसंयुतः ॥

श्रौतसन्यास इत्युक्तः साक्षान्मोक्षैकसाधकः ।
विप्राणां श्रौतसन्यासः कलौ व्यासेन गीयते ॥

तस्माद्वैराग्यवान्विप्रः श्रौतसन्यासमाश्रयेत् ।
तेषां तद्वद्वेदान्तपठनं परिगीयते ॥
ब्रह्मसूत्रैकसंसिद्धात् गायत्रीसमुपासनात् ।'

इत्यादिना हारीत-शातातप-शौनक-गौतम-पाराशर-दक्षादिस्मृतिषु श्रौतसन्यासाधिक्यश्रवणात् तदेव कलौ वैदिकपरिग्राह्यमिति निर्धार्यते । अत्र संन्यासस्तुतिमात्रपरत्वाभावात् 'यावज्जीवमग्निहोत्रं जुहुयात्' इति वचनानामतिरिक्तविषयत्वमिति वेदितव्यम् ।

---

## पारिप्लवर्थाधिकरणम् ॥ ४ ॥

### ब्रह्मविद्याप्रकरणपठितानां उपाख्यानानामपि ब्रह्मविद्यानुकूलत्वप्रतिपादनम्

इयता सूत्रसन्दर्भेण सन्यासस्य ब्रह्मविद्यानुकूलत्वं प्रसाध्य इदानीं उपनिषन्मध्यस्थानां **याज्ञवल्क्य-मैत्रेयीसंवाद-प्रतर्दनेन्द्रसंवादरूपाणां** उपाख्यानानामपि ब्रह्मविद्यानुकूलत्वं वक्तुं पूर्वपक्षमाशङ्क्य अधिकरणान्तरेण निराकरोति ।

## ॥ २६७ ॥ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

**पारिप्लवो** नाम अश्वमेधाङ्गभूतः कर्मविशेषः । तस्मिन् कर्मणि ज्योतिष्टोमादिसकलकर्माङ्गभूतमन्त्राः पठनीयाः । एवं स्थिते सति **याज्ञवल्क्य-मैत्रेयी** संवादादिरूपाः कथाप्रबन्धा अपि **पारिप्लवार्थाः** कर्मकाण्डस्थपारिप्लवाख्यकर्माङ्गभूता इति चेन्न ; **विशेषितत्वात्** ; कर्मकाण्डस्थसकलकर्माङ्गभूता मन्त्राः पारिप्लवे पठितव्या इति विशिष्योक्तत्वात् । तथा च ज्ञानकाण्डस्थानामुपाख्यानानां कर्मकाण्डस्थपारिप्लवकर्माङ्गत्वप्रसक्तिर्नास्तीति सूत्रार्थः ।

**'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम'**, **'श्वेतकेतुर्वारुणेय आस'** इत्येवमादीन्याख्यानानि वेदान्तेषु किं पारिप्लवप्रयोगार्थानि ? उत विद्याविशेषप्रतिपादनार्थानि ? इति संशयः ।

किं तावत्प्राप्तम् ? आख्यानानि शंसन्तीत्याख्यानानि पारिप्लवार्थानि इति । अश्वमेधयागे राजानं सकुटुम्बमुपवेश्य तत्पुरतः वैदिकाख्यानानि अध्वर्युणा वक्तव्यानि । **'तदिदं पारिप्लवाख्यं कर्म पारिप्लवमाचक्षते'** इति वाक्येन विहितं तस्सर्वाख्यानानि पारिप्लवे शंसन्तीति विनियोगात् उपनिषदारम्भगता आख्याख्यायिकास्तदर्था इति न विद्याप्राधान्यत्वं न्याय्यमिति चेदुच्यते—

॥ न विशेषितत्वात् ॥ इति न पारिप्लवार्थाः ताः । ताः 'प्रथमेऽहनि मनुर्वैवस्वतो राजा द्वितीयेऽहनि यमो वैवस्वतो राजा' इत्यादिना पारिप्लवार्थानां आख्यायिकानां विशेषितत्वात् उपनिषदाख्यानानां यदा कर्मभिरेकवाक्यता तदा विद्यादिभिः रेकवाक्यता । तस्मान्न सर्ववेदान्तेष्वाख्यानश्रुतयः पारिप्लवयोगार्थाः अपि तु विद्यार्था इति निश्चीयते ।

एतस्मिन्नर्थे हेत्वन्तरमाह—

## ॥ २६८ ॥ तथा चैकवाक्योपबन्धात् ॥ २४ ॥

'आत्मा वारे द्रष्टव्यः' इत्यादिविधिना एकवाक्यतयोपबन्धाच्च आख्यानानां, 'विद्याविध्यर्थान्येव तानि' इति गम्यते । 'सोऽरोदीत्' इत्येवमादेः कर्मविध्यर्थत्वम् । तथा सति उपाख्यानानां पारिप्लवाङ्गत्वाभावे सति एकवाक्यत्वोपबन्धात् ब्रह्मविद्याप्रकरणपठितानां उपाख्यानानां ब्रह्मप्रतिपादकवाक्यैः सह एकवाक्यतयोपबन्धात् सम्बन्धाद्ब्रह्मविद्याङ्गत्वमुक्तम् । उपाख्यापूर्वकं ब्रह्मप्रतिपादने कृत्स्ने सति मन्दबुद्धीनामपि सुलभतया ब्रह्मज्ञानमुत्पद्यत इत्युच्यते ।

---

## अग्नीन्धनाद्यधिकरणम् ॥ ५ ॥

ब्रह्मसाक्षात्कारे आधानादिकर्मणां मुख्यहेतुताया असङ्गतता।

'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्' इत्यादिना मनुस्मृतौ विरागिणामप्याधानादिकर्मावश्यकत्वद्योतनात्, 'न कर्मणा' इत्यादिश्रुतावपि पूर्वत्र आधानादिरूपकर्मसापेक्षत्वस्य अर्थात् सिद्धत्वाच्च विरागिणामप्याधानादिसापेक्षता कथं वार्यते इत्याशङ्कायामधिकरणान्तरं दर्शयति–

### ॥ २६९ ॥ अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

[illegible] दारेषण-पुत्रैषणा-धनैषणादि वासनानिर्मुक्तोर्ध्वरेतस्कानामेव मुख्यत्वेन ध्यान-धारणाद्यनुगत श्रवण-मननादिमूलब्रह्मविद्याधिकारत्वं यतः पूर्वत्र निर्दिष्टं अत एवाग्नीन्धनाद्यनपेक्षा-आधानाद्यग्निहोत्रकर्मणामनपेक्षा। तस्मात् आधानादिकर्मणां ब्रह्मसाक्षात्काराय मुख्यहेतुत्व-मसङ्गतमिति सूत्रसूक्ष्मार्थः।

पूर्वत्र ब्रह्मविद्यायां कर्मांशत्वद्योतनेऽपि ब्रह्मपरत्वं साधितम्। अत्र यत्याश्रमिणा-मूर्ध्वरेतस्कानां ब्रह्मविद्याङ्गभूतत्वेन आधानादिकर्मसापेक्षा युक्ता अयुक्ता वेति सन्दिह्यते।

'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं हि सः।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते॥'

इति श्रुतौ–

'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः।
ब्रह्मविद्यामधिष्ठाय बर्तुं मृत्युमविद्यया॥'

इति स्मृतौ च कर्मणो ब्रह्मविद्याङ्गत्वोपदेशात् विद्यावतामूर्ध्वरेतसामपि ब्रह्मविद्याङ्गत्वे-नाधानादिकर्म कर्तव्यमेवेति प्राप्ते ब्रूमः।

यतः ऊर्ध्वरेतस आश्रमिणो विद्यासम्बन्धित्वेन श्रुत्या परिगृह्यन्ते ; **ब्रह्मसंस्थोऽमृतत्वमेति', 'ये चेमेऽरण्ये श्रद्धां तप इत्युपासते', 'एत मेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति यदिच्छन्तो ब्रह्मचर्यं चरन्ति'** इत्यादिकया। अत एवोर्ध्वरेतस्सु विद्या **अग्नीन्धनाद्यनपेक्षा**। अग्नीन्धनं अग्न्याधानम्। आधानपूर्वकाग्निहोत्रदर्शपूर्णमासादिकर्मानपेक्षा। तेषु विद्या केवलस्वाश्रमविहितकर्मापेक्षेत्युच्यते। **'विद्यांचाऽविद्याञ्च'** इति श्रुतिरविरक्तविषया।

---

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. ........................ 002

सर्वापेक्षाधिकरणम् ॥ ६ ॥

**चित्तशुद्धि-वैराग्य-भक्ति-जीवकारुण्य-श्रवण-मननादिपरम्परया स्वाश्रमविहितकर्मणां परशिवब्रह्मसाक्षात्कारहेतुत्वप्रतिपादनम्**

**'यज्ञेन दानेन'** इत्यादिश्रुतौ यज्ञादीनां ब्रह्मसाक्षात्कारहेतुत्वावगमात् कथं ज्योतिष्टोमादिकर्मणां ब्रह्मविद्याङ्गत्वमनुपपन्नमित्याशङ्कायामधिकरणान्तरमाह—

## ॥ २७० ॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

**'यज्ञेन दानेन'** इति श्रुतिबलात् **सर्वापेक्षा** सर्वेषां परमेश्वरार्पितनित्य-नैमित्तिक-काम्यकर्मणां **स्थूलारुन्धतीन्यायेन** परशिवब्रह्मसाक्षात्कारं प्रत्यपेक्षा— परम्परया साधनत्वं गम्यते। **अश्ववत्** यथा अश्वस्य गमनक्रियया परम्परया ग्रामप्राप्तिहेतुत्वं तद्वदुपदिश्यते। तथा च **'तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति'** इति श्रुतेः चित्तशुद्धि-वैराग्य-भक्ति-जीवकरुणा-श्रवण-मनन-निदिध्यासनादिपरम्परया यज्ञादिकर्मणां परशिवब्रह्मसाक्षात्कार हेतुत्वादप्रामाण्यं नास्तीति सूत्रार्थः।

**पूर्वाधिकरणे** जितेन्द्रियाणां परिशुद्धान्तःकरणानां आधानादिकर्मापेक्षा न सम्भव-तीति राद्धान्तितम्। अत्र गृहिणां ब्रह्मविद्याधिकारवत्त्वं विहितं न वेति चिन्त्यते।

**'संन्यस्य वेदान्तश्रवणं कुर्यात्' 'नास्त्यकृतः कृतेन' 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः'** इत्यादौ तदुभयविधिद्योतनात्, **'न कुर्यान्निष्फलं कर्म'** इति न्यायाच्च गृहस्थानामपि ब्रह्मविद्याग्नीन्धनादिकर्मापेक्षा युक्तेति चेत् तस्याव्यभिचारेण विद्याङ्गत्वानुपपत्तेः।

यत्तु विमता विद्या, अङ्गभूतकर्मापेक्षाङ्गीकारात्; प्रयाजाद्यपेक्षदर्शपूर्णमासव-दित्यनुमानं; तत्र आधानादेः कीदृशमङ्गत्वं साध्यम्? प्रयाजादिवत्फलोपकारित्वम्? अवघातादिवत् स्वरूपोपकारित्वं वा? नाद्यः, तज्जन्यत्वे मुक्तेरनित्यत्वं स्यात्; द्वितीये-

साध्यविकलो दृष्टान्तः स्यात्। अतो न विद्याङ्गत्वं कर्मणः, तस्माद्गृहिणामपि विद्या कर्मानपेक्षेति प्राप्ते प्रचक्ष्महे—

'**तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति**' '**यज्ञेन दानेन**' इत्यादिना यज्ञादयो हि विद्याङ्गत्वेन श्रूयन्ते। यज्ञादिना विविदिषन्ति वेदितुमिच्छन्ति यज्ञादिभिर्वेदनं प्राप्तुमिच्छन्तीत्यर्थः। यज्ञानां ज्ञानसाधनत्वे [1]सत्येव यज्ञादिभिर्ज्ञानं प्राप्तुमिच्छन्तीति व्यपदेश उपपद्यते। यथा असेर्हननसाधनत्वे सत्यसिना जिघांसन्तीति व्यपदेशः। अतो यज्ञादीनां ज्ञानसाधनत्वमवगम्यते। ज्ञानञ्च वाक्यार्थज्ञानात् अर्थान्तरभूतं ध्यानोपासनादिशब्दवाच्यं, विशदतमप्रत्यक्षतापन्नश्रुतिरूपं निरतिशयप्रियं अहरहरभ्यासाधेयातिशयमाप्रयाणादनुवर्तमानं मोक्षसाधनमित्युक्तमस्माभिः पूर्वमेव। वक्ष्यति च— '**आवृत्तिरसकृदुपदेशात्**' इत्यादिना।

एवंरूपञ्च ध्यानमहरहरनुष्ठीयमानैः नित्य-नैमित्तिककर्मभिः शिवाराधनरूपैः शिवप्रसादद्वारेण जायत इति यज्ञादिना विविदिषन्तीति शास्त्रेण प्रतिपाद्यते। अतः कर्मवत्सु गृहस्थेषु यज्ञादिनित्यनैमित्तिकसर्वकर्मापेक्षा विद्या भवति। यथा गमनसाधनभूतोऽश्वः स्वपरिकरबन्धपरिकर्मापेक्षः एवं मोक्षसाधनीभूतापि विद्या नित्यनैमित्तिककर्मपरिकरापेक्षा। तदिदमाह कृष्णः स्वयमेव—

'यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा समभ्यर्च्य सिद्धिं विन्दति मानवः॥

इति दर्शनात् गृहस्थानां यज्ञादिसापेक्षा विद्या सर्वेषामाश्रमिणाञ्च स्वाश्रमविहितकर्मापेक्षेति युक्तम्

---

[1] सत्येव तदैव (ग)

## शमाद्यधिकरणम् ॥ ७ ॥

### सर्वाश्रमिणां ब्रह्मविद्याङ्गत्वेन शमदमादीनामवश्यनुष्ठेयतानिर्णयः

'तमेतं वेदानुवचनेन' इत्यादिश्रुतिदर्शनात् गृहिणां विद्याङ्गत्वेन यज्ञादिकर्मावश्यकत्वं युक्तम्। 'शान्तो दान्त उपरतः तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्' इति श्रुतौ शान्त्यादीनामेव ब्रह्मसाक्षात्कारमुख्यहेतुत्वावगमात् सर्वेषामाश्रमिणां विद्याप्राधान्यं कथमित्याशङ्कायामधिकरणान्तरमाह–

॥ २७१ ॥ शमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ २७ ॥

सर्वेषामाश्रमिणां परशिवब्रह्मसाक्षात्कारवतां अन्तरङ्गसाधनत्वेन शमाद्युपेतत्वं स्यात्–शमादिविशिष्टो भवेत्; कुतः? अन्तरङ्गतया सदाशिवब्रह्मसाक्षात्कारं प्रति साक्षात्साधनतया तद्विधेः तेषां शमदमादीनां 'शान्तो दान्तः' इति वाक्येन विहितत्वाद्धेतोः तेषां शमदमादीनां [1]परशिवसाक्षात्कारं प्रत्यन्तरङ्गसाधनानां अवश्यानुष्ठेयत्वात् सर्वेषां ब्रह्मविद्यावतां अवश्यं शमादिकं सम्पादनीयं इति सूत्रार्थः।

'शान्तो दान्तः' इति श्रुतिदर्शनात् शमादिकं सर्वाश्रमविधेयं, उत यत्याश्रमविषयं वेति सञ्चिन्त्यते–

शमादिकं न ब्रह्मचर्यादिविषयं, ब्रह्मचर्ये वेदाध्ययनादिव्यापारात्मकमनोवैकल्यात्, गृहिणां श्रौतस्मार्तोक्तकर्मायासतया शमादिकस्य निरवकाशत्वात् वनिनां कृच्छ्रचान्द्रायणादिबहुक्लेशभूयिष्ठतावगमाच्च परिशेषप्रमाणेन निराभाराणां यतीनामेव शमादिकं युक्तम्। 'शान्तो दान्तः' इत्यादीनां तत्परमेवेत्युपदिष्टम्।–

---

[1] परशिवब्रह्म (ग)

'आन्तररागद्वेषप्रशमनं **शमः**; सर्वेन्द्रियव्यापारनिवर्तनं **दमः**; निषिद्धकाम्यकर्मव्यापारोपरमः **उपरतिः**; सुख-दुःख, शत्रु-मित्र-शीतोष्णादिद्वन्द्वसहिष्णुत्वं **तितिक्षा**; गुरुवाक्य वेदान्तनिष्ठानुष्ठानतया चित्तैकाग्रत्वं **समाधानं**; निरतिशयानन्दकन्दनिगमागमनिष्ठापूर्वकदुःशास्त्र-दुर्व्यापारपराङ्मुखत्वं **श्रद्धा**; सकलेतरदेवतापराङ्मुखत्वपूर्वकमनोवाक्कायकर्मभिः श्रवण-कीर्तन-मननादिसाधनत्वेन **निरन्तरायस्कान्तसूचिन्यायवत्** वैदिकशिवपरिचर्यामयस्सदाचारो **भक्तिः**; नित्यनिरतिशयानन्दमोक्षलक्ष्मीकटाक्षवीक्षणाधारनित्यानित्यवस्तुविवेकजनितवैराग्यादि-सहकृतशिवज्ञानदृढापेक्षत्वं **मुमुक्षुत्वम्**। एतादृशधर्माः नेतरविषयत्वाद्यतीनामेव समञ्जसाः इति प्राप्ते वदामः।

शमादिकं सर्वाश्रमिणां ब्रह्मविद्याङ्गत्वेन परिग्राह्यं विद्याङ्गतया तेषां विधेः। **'तस्मादेवंवित् शान्तोदान्त उपरतस्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्येत्'** इति विद्योत्पत्तेः चित्तसमाधानरूपत्वेन दृष्टपरिकरत्वात् शमादीनामविद्यानिवृत्तये तेषामवश्यानुष्ठेयत्वम्। न च करणव्यापार-तद्विपर्ययरूपत्वेन कर्मणां शमदमादीनाञ्च परस्पर-विरोधः; भिन्नविषयत्वात्। विहितेषु करणव्यापारः; अविहितेषु प्रयोजनशून्येषु च तदुपशम इति।

न च करणव्यापाररूपकर्मसु वर्तमानस्य वासनावशात् शमादीनामुपादेयत्वासम्भवः। विहितानां कर्मणां शिवाराधनतया तत्प्रसादद्वारेण निखिलविपरीतवासनोच्छेदहेतुत्वात्। अतस्सर्वाश्रमिणां ब्रह्मविद्याङ्गत्वेन शमदमादयोऽप्यनुष्ठेयाः।

---

## सर्वान्नानुमत्यधिकरणम् ॥ ८ ॥

### ब्रह्मविदामपि प्राणसंशय एव सर्वान्नानुमतिः विहिता

ननु सर्वेषामाश्रमिणां शिवज्ञानेन शमाद्यनुष्ठानविधिरस्तु; तेषां वर्णाश्रमधर्मवर्तनं विहितं उत तज्ज्ञानमहिम्ना शिवतुल्यत्वात् स्वेच्छाधीनवर्तनं वा युक्तमित्याशङ्कायां अधिकरणान्तरं दर्शयति–

## ॥ २७२ ॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

"वाजिनां छन्दोगानां च **प्राणविद्यायां 'न ह वा अस्यानन्नं जग्धं भवति, नानन्नं परिगृहीतं भवति।' 'न ह वा एवं विदि किञ्चनानन्नं भवति'** इति प्राणविदः सर्वान्नानुमतिः- सङ्कीर्त्यते। किमियं प्राणविद्यानिष्ठस्य सर्वान्नानुमतिः सर्वदा? उत प्राणात्ययापत्तौ वा?" इति संशयः।

**'प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति'** इति श्रुतौ प्राणस्यैव प्रज्ञात्मकत्वकथनात् स्मृतिपुराणेष्वपि प्राणरक्षणे श्रेयस्करत्वस्य, प्राणशोषणे प्रत्यवायस्य च श्रवणात् सर्वथा सर्वाश्रमिणां शिवज्ञानिनां महात्मनां विधिनिषेधाभावेन प्राणरक्षणार्थं सर्वान्नभक्षणं सर्वप्रयत्नैर्युक्तमिति प्राप्ते तत्रोच्यते– ॥ **प्राणात्यये च इति** ॥

चशब्दोऽवधारणे प्राणात्ययापत्तावेवेत्यर्थः। कुतः? ॥ **तद्दर्शनात्** ॥ दृश्यतेह्यन्यत्र ब्रह्मविदामपि प्राणात्ययापत्तावेव सर्वान्नाभ्यनुज्ञा। किं पुनः प्राणविदः? उषस्तः किल चाक्रायणो ब्रह्मविदग्रेसरः मटचीहतेषु कुरुषु दुर्भिक्षदूषितेषु इभ्यग्रामे वसन् अनशनेन प्राणसंशयापन्नः ब्रह्मविद्यानिष्पत्तये प्राणानामनवसादमाकाङ्क्षमाणः इभ्यं कुल्माषान् खादन्तं भिक्षमाणः तेन च **उच्छिष्टेभ्योऽन्ये न विद्यन्ते'** इति प्रत्युक्तः पुनरपि **'एतेषां मे देहि'** इत्युक्त्वा तेन च एभ्येन उच्छिष्टेभ्य आदाय दत्तान् कुल्माषान् प्रतिगृह्य अनुपानप्रतिग्रहं

इभ्येनार्थितः 'उच्छिष्टं मे पीतं स्यात्' इति वदंश्चाक्रायणः 'किमेते कुल्माषा अनुच्छिष्टा' इति इभ्येन पर्यनुयुक्तः, 'न वा अजीविष्यामि मानखादन्, कामो म उदपानम्' इति कुल्माषाखादने स्वस्य प्राणसंशयापत्तेस्तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टोदकपानं कामकारितं निषिद्धं स्यात् इत्युक्त्वा स्वखादितशेषं जायायै दत्वा तया च रक्षितानपरेद्युर्ग्लानार्जिजीषया जिगमिषुः पुनरपि प्राणसंशयापन्नस्थाने इभ्योच्छिष्टभूतान्नान् स्वोच्छिष्टभूतान् पर्युषितांश्चखाद। अतो ब्रह्मविदामपि प्राणसंशय एव सर्वान्नानुमतिदर्शनात्; अत्र विशेषेण कीर्तितमपि प्राणविदस्सर्वान्नात्तृत्वं प्राणात्ययापत्तावेवेति निश्चीयते।

अस्मिन्नर्थे हेत्वन्तरमाह–

॥ २७३ ॥ अबाधाच्च ॥ २९ ॥

'श्रुतिस्मृतिर्ममैवाज्ञा तस्मात्तन्मार्गमाचरेत्।
आज्ञाच्छेदी मम द्रोही यस्तानुल्लङ्घ्य वर्तते॥
मनीषी वैदिकाचारं मनसापि न लङ्घयेत्।'

'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः। स्मृतिलम्भेन सर्वेषां हृदयग्रन्थिर्दार्यते।'

इति वचनेषु श्रुतिस्मृतीनां परमेश्वराज्ञोपदेशेन सर्वेषामाश्रमिणां स्वाश्रमधर्मानुष्ठानमर्थात्सिद्धम्। 'आहार शुद्धौ' इत्यादिना तद्वत् शिवज्ञानिना आहारशुद्धिविधानोपदेशेऽपि शिवयोगशिवज्ञाननिष्ठागरिष्ठानां आपद्विषय एव सर्वान्नात्तृत्वं, गम्यते न कामचारेणैकान्ते।

अस्मिन्नर्थे हेत्वन्तरमाह–

॥ २७४ ॥ अपि स्मर्यते ॥ ३० ॥

'वर्णाश्रमसदाचाराः शिवेन कथिताः पुरा।
एतानुल्लङ्घ्य वर्तन्ते शिवस्याज्ञापलापिनः॥

राजाज्ञाभङ्गकर्तृणां यथा दण्डो भवेत्तथा ।
शिवाज्ञाभङ्गकर्तृणां दण्डो हि नरकस्तथा ॥

साम्बेन शम्भुनाज्ञप्तं धर्मं त्यक्त्वार्चयेच्छिवम् ।
स तस्मै कुप्यते शम्भुः स्वाज्ञाभङ्गनिमित्ततः ॥

चोदनालक्षणं धर्मं शिवेनाज्ञप्तमर्चयन् ।
शङ्करं पूजयेद्यस्तु तस्मै साम्बः प्रसीदति ॥'

इत्यादिषु परमेश्वराज्ञापूर्वकस्ववर्णाश्रमोचितकर्ममुख्यत्वोपदेशोऽपि–

'प्राणसंशयमापन्नो योऽन्नमत्ति प्रयत्नतः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥'

इति विशेषविधिदर्शनात् । शिवज्ञानिनां सर्वाश्रमिणां आपद्विषयैव सर्वान्नास्वादनविधिरुपपद्यते ; नेतरकाल इति सिद्धम् ।

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह–

## ॥ २७५ ॥ शब्दाश्चातोऽकामकारे ॥ ३१ ॥

"यतो ब्रह्मविदामन्येषाञ्च सर्वान्नादनं आपद्विषयमेव अत एव सर्वेषां अकामकारे शब्दः कामकारस्य प्रतिषेधकः शब्दो वर्तते । अस्ति हि **कठसंहितायां** कामकारस्य प्रतिषेधकः शब्दः । **'तस्माद्ब्राह्मणः सुरां न पिबति, पाप्मना नोत्सृजेत्'** इति पाप्मना [1]संसृष्टो न भवानीति मत्वा ब्राह्मणः सुरां न पिबतीत्यर्थः ।" प्राणत्यागेऽपि वर्णचतुष्टयेषु भिक्षामात्रं विधेयम् । अन्यथा निषिद्धाचरणेन परमेश्वराज्ञाद्रोही स्यादिति निर्धार्यते ।

---

[1] रसंसृष्टो (ग)

## विहितत्वाधिकरणम् ॥ ९ ॥

### ज्ञानकर्मसमुच्चयानुष्ठानं सर्वेषामाश्रमिणां विधेयम्

सर्वेषामाश्रमिणां परशिवब्रह्मसाक्षात्कारं प्रत्यन्तरङ्गसाधनस्य शमदमपूजाध्यानधारणादिकस्य विहितत्त्वेऽपि तद्बहिरङ्गाङ्गानि कानि सन्तीत्याशङ्कायामधिकरणान्तरेण निरूपयति—

## ॥ २७६ ॥ विहितत्त्वाच्चाश्रमकर्मापि ॥ ३२ ॥

"यज्ञादिकर्माङ्गिका ब्रह्मविद्येत्युक्तम्। तानि च यज्ञादीनि कर्माणि मुमुक्षूणां केवलाश्रमिणामप्यनुष्ठेयानि' उत नेति सन्दिह्यते।"

**'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन'** इति श्रुतौ **कर्मफलानामनित्यत्वस्य, कर्मणा मोक्षाभावस्य चोक्तत्वात्** नित्यानित्यवस्तुविवेको दृष्टः। तस्मात् ज्योतिष्टोमादिकर्मणां अविद्वद्विषयत्वं युज्यते। **'ज्योतिष्टोमेन स्वर्गकामो यजेत'** इत्यादौ ज्योतिष्टोमादीनां कामकारविषयत्वावगमात् केवलाश्रमधर्मत्वं न सम्भवतीति प्राप्ते प्रचक्ष्महे—

**आश्रमकर्मापि— 'यावज्जीवमग्निहोत्रं जुहोति'** इत्यादिना विध्यवगमात् आश्रमस्य कर्मापि भवति। केवलाश्रमिणां आश्रममात्रमनुष्ठेयं, ब्रह्मविद्याङ्गत्वेन परमेश्वरार्पणबुध्या विहितत्वाच्च, जनकादिब्रह्मविदामपि विहितत्वाच्च श्रुतिस्मृतिनिष्ठस्य आश्रमकर्माणि विदुषामविदुषाञ्च कर्तव्यानीति निर्णीयते। एतेन ब्रह्मचर्यादिचतुर्विधाश्रमिणां स्वाश्रमकर्मणो विहितत्वमर्थात्सिद्धम्।

तथा च विद्याङ्गतया **'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति। यज्ञेन दानेन'** इत्यादिना विहितत्वात् विद्याशेषतयापि अनुष्ठेयानि इत्याह—

## ॥ २७७ ॥ सहकारित्वेन च ॥ ३३ ॥

'विद्याश्चाविद्याश्च यस्तद्वेदोभयं सह' इति ब्रह्मवित् पुण्यकृच्च 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण नित्यम्' इत्यादिषु धर्मब्रह्मोभयसहकारित्वेन च मोक्षावगमात् ज्ञानकर्मसमुच्चयानुष्ठानं सर्वेषामाश्रमिणां विधेयम्। तस्मादग्निहोत्रादीनामिव जीवनाधिकार-स्वर्गाधिकारवद्विनियोगपृथक्त्वेन उभयार्थत्वं न विरुध्यते।

### सदाचारनिष्ठानां सर्वाश्रमिणां बाह्याभ्यन्तरलिङ्गधारण- पूजादिकमनवद्यम्

ननु विदुषामविषामपि स्वाश्रमविहितधर्मानुष्ठानं मोक्षाङ्गमस्तु। मोक्षाङ्गत्वेन बाह्यान्तर्लिङ्गधारणं विदुषामनावश्यकमेवेत्याशङ्कायामाह—

## ॥ २७८ ॥ सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४ ॥

**सर्वथापि** सर्वश्रुतिपर्यालोचनयापि **त एव** 'धर्मेण पापमपनुदति' इत्यादिना श्रौतस्मार्तोक्तकर्मानुष्ठानेन शुद्धचित्तस्य मुमुक्षोः भक्तस्य **उभयलिङ्गात्** 'सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रं' 'अमृतस्य देवधारणो भूयासं' 'तत्प्राणेष्वन्तर्मनसो लिङ्गमाहुः' 'केसरे जाग्रदवस्था, कर्णिकायां स्वप्नः, लिङ्गे सुषुप्तिः, पत्रत्यागे तुरीया', इत्यादिश्रुतिशतेषु शिवस्य परब्रह्मणः स्वेच्छया भक्ततारणार्थं बाह्याभ्यन्तरेषु इष्ट-प्राणरूपेणोभयलिङ्गत्वावगमात् भक्तानां स्वाश्रमविहितकर्मवत्सर्वेषामाश्रमिणां तदुभयलिङ्ग-ध्यान-धारण-पूजादिकमवश्यं कर्तव्यम्। तदुक्तं शङ्करसंहितायामपि—

'वक्ष्यामि धृतलिङ्गस्य चरणश्रुतिसम्मतम्।
स्मृतितन्त्रपुराणेषु प्रसिद्धन्ते समानतः॥

'श्रुतिस्मृत्युदितं कर्म नित्यनैमित्तिकाश्रयम्।
कुर्याल्लिङ्गाङ्गसम्बन्धी द्विजन्मा कामवर्जितः॥

विध्युक्तकर्मानुष्ठानात् चित्तशुद्धिर्भवेत् ध्रुवम्।
चित्तशुध्या भवेद्भक्तिः भक्तिरव्यभिचारिणी॥

तया संजायते ज्ञानं नश्यत्यज्ञानमात्मनः ।
तस्मान्मोक्षस्ततः कर्म विध्युक्तं सम्यगाचरेत् ॥

तस्मात्सदाचारयुतो भक्त्या माहेश्वरं जनः ।
पूजयेद्गुरुणा दत्तं इष्टलिङ्गमतन्द्रितः ॥
पाणिपद्मासने नित्यं त्रिकालं शुद्धमानसः ॥

इत्यादिना तद्वदुपदेशात् सदाचारनिष्ठानां सर्वाश्रमिणां तदुभयलिङ्गध्यान-धारण-पूजादिकमनवद्यम् ।

अस्मिन्नर्थे हेत्वन्तरमाह—

## ॥ २७९ ॥ अनभिभवं च दर्शयति ॥ ३५ ॥

'या ते रुद्र शिवा तनूरघोरा अपापकाशिनी । तया नस्तनु वा शन्तमया गिरिशन्ताऽभिचाकशीहि' 'अमृतस्य देवधारणो भूयासम्' 'तस्याभिध्याना-द्योजानात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' इत्यादिश्रुतयः पापरहितशरीरेषु-शिवप्रकाशकत्वं शिवधारणेन[1] अमृतत्वं मायापाशनिवृत्तिं च दर्शयति । तस्मान्मुमुक्षूणां स्वाश्रमविहितकर्मानुष्ठानं बाह्याभ्यन्तरयोः परब्रह्मणश्शिवस्य ध्यान-धारण-पूजा-नमस्कार-श्रवण-कीर्तनादिभक्तिश्च यावज्जीवं कर्तव्यमेव ।

'ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तु वा ।
यस्तु लिङ्गाङ्गसंयुक्तः स एवात्याश्रमी भवेत् ॥

तथापि स्वाश्रमं धर्मं कृत्वा शास्त्रविधानतः ।
शिवपूजादिकं सर्वं यावज्जीवं समाचरेत् ॥'

इति स्मृतावपि दर्शनात् ।

---

[1] शिवधारणायाः (ग)

## विधुराधिकरणम्  ॥ १० ॥

### आश्रम-अनाश्रमसाधारण्येण सर्वेषां मुमुक्षूणां ब्रह्मविद्याधिकारनिर्णयः

ननु श्रुत्युक्तचतुर्विधाश्रमधर्मानुष्ठानेन तेषां ब्रह्मविद्याधिकारोऽस्तु ; विधुराणामाश्रमाभावात् ब्रह्मविद्याधिकारः कुतस्सम्भवतीत्याशङ्कायामधिकरणान्तरेणाह—

## ॥ २८० ॥ अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

दैवात् पुराकृतप्रारब्धवशेन पत्नीवियोगे सति **अन्तरा** ब्रह्मचर्य-यत्याश्रमयोर्मध्ये विद्यमानानां अनाश्रमिणां स्नातकविधुराणामपि परशिवस्य ब्रह्मणः ध्यान-धारण-पूजा नमस्कार-श्रवण-मननात्मक[1]ब्रह्मविद्यायामधिकारः सम्भवति । कुतः ? ॥ **तद्दृष्टेः** ॥ [2]मनु-शौनकादि-स्मृतिपुराणेष्वपि अनाश्रमिणां स्नातकविधुराणामपि बहूनां लोके परशिवब्रह्मसाक्षात्कारवत्त्वावगमात् तेषां तदधिकारोऽस्तीति सूत्रार्थः ।

सर्वेषामाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति उत नेति सन्दिह्यते ।

अनाश्रमिणां विधुर-स्नातकादीनां ब्रह्मविद्याधिकारो नास्त्येव ; श्रुतिस्मृतिपुराणादिषु निराश्रमिणां ब्रह्मविद्याधिकारित्वादर्शनात् । **'निराश्रमे न तिष्ठेत क्षणकालमपि द्विजः'** इत्यादिषु स्मृतिषु निराश्रमनिराकरणावगमात् सर्वेषामाश्रमिणां विद्याङ्गत्वेन चोदनाच्च चतुर्णामाश्रमिणामेव ब्रह्मविद्यायामधिकार इति प्राप्ते प्रचक्ष्महे—

॥ **अन्तरा चापि तु तद्दृष्टेः इति** ॥ अत्र तुशब्दः पक्षव्यावृत्त्यर्थः । **चशब्दो**ऽवधारणे । **अन्तरा** वर्तमानानां अनाश्रमिणामपि ब्रह्मविद्याधिकारो युक्तः । कुतः ? ॥ **तद्दृष्टेः** ॥ दृश्यते हि **रैक्व-भीष्म-संवर्तादीनां** अनाश्रमिणामपि ब्रह्मविद्यानिष्ठत्वम् । न च आश्रमधर्मैरेव विद्यानुग्रह इति वक्तुं शक्यम् । **'यज्ञेन दानेन तपसानाशकेन'** इति दानादीनां आश्रमेषु अनैकान्तिकानामप्यनुग्राहकत्वश्रवणात् । यथोर्ध्वरेतस्सु

---

[1] मननाद्यात्मक (ग)· [2] मनुशौनकगौतमादि (ग·.

विद्यानिष्ठत्वदर्शनादग्निहोत्रादिव्यतिरिक्तैरेव विद्यानुग्रहः क्रियते। तथा अनाश्रमिणामपि ब्रह्मविद्या-दर्शनात् आश्रमानियतैर्जपोपवास-देवताराधनादिभिर्विद्यानुग्रहः शक्यते कर्तुम्।

अस्मिन्नर्थे हेत्वन्तरमाह-

## ॥ २८१ ॥ अपि स्मर्यते ॥ ३७ ॥

"अपि च अनाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते।

'जप्येनापि च संसिध्येत् ब्राह्मणो नात्र संशयः।
कुर्यादन्यं न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥"

विधुरा-विधवानाञ्च स्नातकानां तथैव च।
जपोपवासपूजादिविधानात् ज्ञानमुच्यते॥'

इति स्मृतिदर्शनात् सर्वदा विधुरादिभिरपि अनन्यमनसा सदाचारसम्पत्या च जप-उपवास-तीर्थयात्रा-दान-तपः-पूजा[1]दिभिः शुद्धान्तःकरणविशिष्टतया श्रवणमननादिना परशिव-ब्रह्मविचारः कर्तव्यः इति निर्णीयते।

अनाश्रमिणां विधुरादीनां ज्ञानसाधनीभूतकर्मानुष्ठानाभावात् कथं ज्ञानोत्पत्तिरित्या-शङ्क्याह—

## ॥ २८२ ॥ विशेषानुग्रहाच्च ॥ ३८ ॥

'तपसा ब्रह्मचर्येण श्रद्धया विद्यया चात्मानमन्विष्येत्' इति श्रुतौ अनाश्रमनियतैर्धर्मविशेषैः विद्यानुग्रहश्रवणात् विधुरादीनामपि ब्रह्मविद्याधिकारवत्त्वमनिवार्य-मिति निर्णीयते।

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह—

## ॥ २८३ ॥ अतस्त्वितरज्जायो लिङ्गाच्च ॥ ३९ ॥

---

[1] दाना (ग

यतः 'अमृतस्य देवधारणो भूयासम्' 'शरीरं मे विचर्षणं' इत्यादिना इतरवत् चतुराश्रमधर्मातिरिक्ताश्रमानाश्रमसाधारणलिङ्गधारणवत् अतः आश्रमानाश्रम-साधारण्येन सर्वेषां मुमुक्षूणां ब्रह्मविद्याधिकारः ज्यायः श्रेष्ठः। कस्मात्? ॥ लिङ्गात् ॥ 'निधनपतये नमः' इत्यारभ्य लिङ्गस्य सर्वात्मकत्वमुक्त्वा 'एतत्सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्' इति श्रुतौ लिङ्गरूपस्य परब्रह्मणः पवित्रत्वकथनात् आश्रमिणामनाश्रमिणामपि ब्रह्मविद्याधिकारोऽनवद्यः।

**'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः।**
**यदि वा तिष्ठते मोहात् न स पुण्येन लिप्यते ॥'**

इति वचनं त्वविरागविषयमिति वेदितव्यम्। **'श्रद्धाभक्तिज्ञानयोगादवेहि'** इत्यादि-श्रुतिषु शिवप्राप्तेर्मुख्योपायत्वेन श्रद्धाभक्त्यादिकस्योपदिष्टत्वात्; सर्वेषु शास्त्रेषु विशेष-विद्यासामान्यशास्त्रबाधावगमाच्च।

**'आश्रमादाश्रमं गच्छेन्नान्यथा मोक्षमाप्नुयात्'** इत्यादिवाक्यानां सामान्यत्व-दुर्बलत्वं च समञ्जसम्।

---

## तद्भूताधिकरणम् ॥ ११ ॥

### कृतप्रायश्चित्तानां जैमिन्यभिमतः ब्रह्मविद्याधिकारविषयः

नन्वनाश्रमिणां स्नातकविधुरादीनां जितेन्द्रियत्व-दान-तपः-पूजादिना शुद्धान्तःकरणानां ब्रह्मविद्याधिकारोस्तु ; स्वाश्रमभ्रष्टानामूर्ध्वरेतसां ब्रह्मविद्याधिकारो युक्तो न वेति विषये तच्छङ्काशूकमोचनार्थमधिकरणान्तरं दर्शयति –

॥२८४॥ **तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ४० ॥**

**तद्भूतस्य** सन्यासाश्रमं प्राप्तस्य पुरुषस्य **अतद्भावः** संन्यासाश्रमाद्भ्रंशः शास्त्रविहितो न भवति ; प्रत्युत शास्त्रप्रतिषिद्ध एव । कुतः ? ॥ **नियमात्तद्रूपाभावेभ्यः** ॥ नियमेभ्यः संन्यासाश्रमप्राप्त्यनन्तरं मरणपर्यन्तं संन्यासाश्रमे स्थातव्यम् । पुनरनिर्वर्तितव्यमिति नियमप्रतिपादकेभ्यः मन्वादिवचनेभ्यः **अतद्रूपाभावेभ्यः** अतद्रूपाणां नियमप्रतिपादकानां वचनानां अभावेभ्यो हेतुभ्यश्च आश्रमभ्रंशः शास्त्रप्रतिषिद्ध इत्युच्यते । तस्मात् तदधिकाश्रमान्तराभावेन तत्रैव यावज्जीवं स्थातव्यं इति सूत्रार्थः ।

**'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥', 'संन्यस्य वेदान्तश्रवणं कुर्यात् ।** इत्यादिषु सर्वेषामाश्रमिणां मध्ये मुख्यत्वेन निरन्तरब्रह्मविचाराधिकारः यतीनामेव श्रूयते' तथापि विधुरादिवदाश्रमभ्रष्टानां स्वाश्रमनिष्ठानां वा ब्रह्मविद्याधिकार इति विषयः ।

'संन्यस्य वेदान्तश्रवणं कुर्यात्' इत्यादिषु संन्यासभ्रष्टानां अनधिकारित्वावगमात् 'ब्रह्मचर्यं समाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्'

इत्याश्रमारोहे यथा विधिर्दर्शितः तद्वदवरोहे विध्यदर्शनात् स्वेच्छाधीनत्वं आनुमानिकं साध्यम्। तस्माद्विधुरादिवदत्याश्रमभ्रष्टानां ब्रह्मविद्याधिकारो युक्त इति प्राप्ते तत्रोत्तरं वदामः। ॥ **तद्भूतस्य तु नातद्भाव इति** ॥ तुशब्दः पक्षव्यावृत्यर्थः। **तद्भूतस्य** नैष्ठिकाद्याश्रमनिष्ठस्य नातद्भावः। अतथाभावः अनाश्रमित्वेनावस्थानं **न** सम्भवति। कुतः? **तद्रूपाभावेभ्यः**। नियमात् तद्रूपाणि तेषां नैष्ठिकादीनां रूपाणि वेषाः धर्माः, तेषां अभावाः तद्रूपाभावाः; तेभ्यः शास्त्रे नियमात्। नैष्ठिकाद्याश्रमप्रतिष्ठान् स्वाश्रमधर्मनिवृत्तिभ्यो नियच्छन्ति हि शास्त्राणि। 'ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तामात्मानमाचार्य कुलेऽवसादयन्' इति '**अरण्यमियात्ततो न पुनरायात्**' इति। '**संन्यस्याग्निं न पुनरावर्तयेत्**' इति च। अतो विधुरादिवत् नैष्ठिकादीनामनाश्रमित्वेन अवस्थानासम्भवात् नैतानधिकरोति ब्रह्मविद्या। **जैमिनेरपी**त्यविगानं दर्शयन्नुक्तं स्वाभिमतं दृढयति।

अथ स्यात् नैष्ठिकादीनां ब्रह्मचर्यात्प्रच्युतानां प्रायश्चित्तादधिकारस्सम्भवति। अस्ति च प्रायश्चित्तमाधिकारिकलक्षणे निरूपितं अवकीर्णपशुश्च तद्वदिति। अतः प्रच्युतब्रह्मचर्यस्य प्रायश्चित्तसंभवात् कृतप्रायश्चित्तो ब्रह्मविद्यायामधिकरिष्यतीति तत्राह—

## ॥ २८५ ॥ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥

"अधिकारिलक्षणोक्तमपि प्रायश्चित्तं नैष्ठिकादीनां न तद्भ्रष्टानां न सम्भवति। कुतः? नैष्ठिकादीनां प्रच्युतानां पतनस्मृतेः तस्य प्रायश्चित्तस्यासम्भवात्।

**'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः।**
**प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा॥'** इति,

**उत्तमां वृत्तिमाश्रित्य [1]नवां वृत्तिं समाश्रितः।**
**आरूढपतितो ज्ञेयः सर्वकर्मबहिष्कृतः॥'**

इत्यादिबहुस्मृत्यवगमात् प्रायश्चित्तमितरब्रह्मचारिविषयमिति वेदितव्यम्।

---

[1] न चावृत्तिं (ग).

### यतिकृतानां मानसिकस्वाप्निकपापानां प्रायश्चित्तस्य तैरेव कृतानां आहङ्कारिकस्थूलदेहजपापानां प्रायश्चित्तविरतेश्च शास्त्रीयतानिर्णयः

अस्मिन्नर्थे हेत्वन्तरं दर्शयति—

## ॥ २८६ ॥ उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् ॥ ४२ ॥

"नैष्ठिकादीनां ब्रह्मचर्यप्रच्यवनं उपपूर्वं-उपपातकं महापातकेष्वपरिगणितत्वात् इति तत्र प्रायश्चित्तस्य भावं विद्यमानतामपि एकेन आचार्या मन्यन्ते ; अशनवत्- यथा मध्वशनादिनिषेधः तत्प्रायश्चित्तं चोपकुर्वाणस्य नैष्ठिकादीनाञ्च समानम्। तदुक्तं— स्मृतिकारैः— उत्तरेषां चैतदविरोधि इति। गुरुकुलवासिनो यदुक्तं तत्स्वाश्रमाविरोध्युत्तरेषामप्याश्रमिणां भवतीत्यर्थः। तद्वदिहापि ब्रह्मचर्यप्रच्यवने प्रायश्चित्तसम्भवात् ब्रह्मविद्या योग्यताप्यस्ति।" तथापि मानसिकपापानां स्वप्नकृतपापानाञ्च प्रायश्चित्तं चान्द्रायण-मृत्तिकास्नान-तीर्थयात्रोपवास-पञ्चाक्षरी[1]पुनश्चर्यादिना यतीनां कथ्यते। स्वाहङ्कारेण स्थूलशरीरकृतपापानां प्रायश्चित्तं न सम्भवतीति निश्चीयते। तदुक्तं शातातपे—

'सदाशिवैकनिष्ठानां यतीनां ब्रह्मवर्चसाम्।
पुरा कृतैकपापेन नारीषु च धनेषु च॥

पुत्रादिषु च सम्प्रीतिर्जातश्चेत्सुदृढो यतिः।
चान्द्रायणं चरेन्नित्यं तद्दोषैकनिवृत्तये॥

स्वप्ने कलत्रसंयोगो भवेद्यदि तदा यतिः।
शतस्नानं हि कर्तव्यं मृदा तद्दोषशान्तये॥

कामचारेण संन्यासी लोलश्चेत् स्त्रीधनादिषु।
भ्रष्टो भवति सद्यो हि प्रायश्चित्तं न विद्यते॥'

इत्यादिना बहुधा प्रपञ्चितम्।

### व्रतभ्रष्टानां यतीनां ब्रह्मविद्याधिकारनिषेधः

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह—

---

[1] पुरश्चर्यादिना (ग).

## ॥ २८७ ॥ बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

तुशब्दोत्र "निश्चयार्थकः। उपपातकत्वे महापातकत्वेऽप्येते बहिर्भूता एव; ब्रह्मविद्याधिकारिभ्यः ब्रह्मविद्यायामनधिकृता इत्यर्थः। कुतः? ॥ स्मृतेः ॥ पूर्वोक्तात् पतनस्मरणाद्यद्यपि कलुषनिर्हरणाय कैश्चिद्वचनैः प्रायश्चित्ताधिकारो विद्यते; तथापि कर्माधिकारानुगुणशुद्धिहेतुप्रायश्चित्तं न सम्भवति; 'प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा' इति स्मृतेः। ॥ आचाराच्च ॥ शिष्टा हि नैष्ठिकादीन् भ्रष्टान् कृतप्रायश्चित्तानपि वर्जयन्ति; तेभ्यो ब्रह्मविद्यादिकं नोपादिशन्ति। तस्मात्तेषां नास्ति ब्रह्मविद्यायामधिकारः।"

---

## स्वाम्यधिकरणम् ॥ १२ ॥

### शिवस्यैव कर्म-ब्रह्मोपासनाफलदातृत्वप्रतिपादनम्

ननु,

'राजाज्ञाभङ्गकृन्नृणां यथा दण्डो भवेत् ध्रुवम् ।
शिवाज्ञाभङ्गकृन्नृणां दण्डो हि नरकस्तथा ॥' (सि. शि.)

इत्यादिस्मृतिषु शिवाज्ञारूपस्वाश्रमभ्रष्टानां सर्वेषामाश्रमिणामपि यमशासनं सूचितम् । तथापि 'सर्वापेक्षा च' इति सूत्रे स्वातन्त्र्येण यज्ञादीनां ग्रामं प्रत्यश्ववत मोक्षाङ्गत्वव्यपदेशात् अत्र स्वाश्रमभ्रंशदण्डः शिवस्य परब्रह्मणः कथमुपपन्नं इत्याशङ्कायां यज्ञेश्वरत्वमपि शिवस्यैवाधिकरणान्तरेण दर्शयति–

## ॥ २८८ ॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

**'यज्ञो वै विष्णुः' 'आवो राजानमध्वरस्य रुद्रँ होतारँ सत्ययजँ रोदस्योः' 'पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम्'** इत्यादीनि तैत्तिरीये श्रूयन्ते । अत्र यज्ञाधिपतिर्नारायणो वा परब्रह्मरूपश्शिवो वेति विशयः ।

**'यज्ञो वै विष्णुः'** इत्यादिना नारायणस्यैव यज्ञात्मकत्वोपदेशात् **'तद्विष्णोरेक उत्तमः' 'एक एव नारायण आसीत् न ब्रह्मा नेशानः'** इत्यादिषु नारायणस्यैव सर्वाधिकत्वकथनात् स्मार्तकर्मसु सर्वत्र सङ्कल्पादिषु विष्णुनामस्मरणपूर्वकत्वेन कर्माराध्यत्वमर्थात्तस्यैवोपपन्नम् । अत एव यज्ञात्मकत्वं यज्ञेश्वरत्वं यज्ञफलदातृत्वञ्च तस्यैव समञ्जसमिति प्राप्ते प्रचक्ष्महे– ॥ **फलश्रुतेः** ॥

**'आयोराजानं'** इत्यत्र अध्वरस्य यज्ञस्य राजानं प्रभुं रुद्रमिति फलश्रवणात् स्वामिनश्शिवस्य परब्रह्मणः सर्वविद्योपास्यत्वमिति **आत्रेयो** मन्यते ।

किञ्च– 'त्रियम्बकं यजामहे' इत्यादिना यज्ञेश्वरत्वं तस्यैवोपदिष्टम्। 'यो वै स्वां देवतामतियजते ; प्रस्वायै देवतायै च्यवते ; न परां प्राप्नोति ; स पापीयान् भवति' इति स्वदेवतातिरिक्तदेवतान्तरयजनेन प्रत्यवायश्रवणात्। 'तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी' इत्यादिश्रुतौ सर्ववैदिककर्माधारगायत्रीमन्त्रार्थवाच्यत्वस्य शिव एव दर्शनात् नेतरस्य यज्ञादिकर्माराध्यत्वं सम्भवति।

'एको देवस्सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षस्सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥'

'यो देवानां प्रथमश्चोद्भवश्च; विश्वाधिको रुद्रो महर्षिः' 'स नो देवः शुभया बुध्या संयुनक्तु',

'यो देवानामधिपो यस्मिन् लोका अधिश्रिताः।
य ईशे अस्य द्विपदश्चतुष्पदस्तस्मै देवाय हविषा विधेम॥'

इत्यादिना श्वेताश्वतरे कर्माध्यक्षत्वस्य विश्वाधिकत्वस्य च तस्यैवोपदेशात् सर्वकर्माधिकत्वेन सर्वकर्माराधितत्वेन सर्वकर्मफलप्रदायकत्वं शिवस्यैव निश्चीयते।

अस्मिन्नर्थे हेत्वन्तरमाह–

## ॥ २८९ ॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

'इमं पशुं पशुपते तेऽद्य बध्नाम्यग्रे सुकृतस्य मध्ये अनुमन्यस्व सयजा यजाम' 'जुष्टं देवानामिदमस्तु हव्यं' इत्यत्र आर्त्विज्यं ऋक्-सम्बन्धं पशुबन्धनात्मकोपकरणकर्मणि च पशुपुरोडाशं परमशिवसमर्पणत्वेन देवतार्हत्वव्यवस्थापनात् सर्वविद्योपास्यत्वं शिवस्यैव समुचितमिति औडुलोम्याचार्यो मन्यते। कुतः? तस्मै हि परिक्रियते ; 'यो रुद्रोऽग्नौ' इत्यादिषु सर्वान्तर्यामित्वं, 'सर्वो वै रुद्रः' इति सर्वात्मकत्वं, 'विश्वाधिको रुद्रो महर्षिः' इत्यादौ विश्वाधिकत्वञ्च तस्यैवोपदेशात् इन्द्रोपेन्द्र-दिनेन्द्र-चन्द्रादिदेवतादत्तहविष्यादिकं शिवे हि परिवर्तते। तस्मात्सर्वकर्माध्यक्षत्वं नेतरस्योपपन्नम्।

किञ्च– 'ऋत्विजो वृणीते' 'ऋत्विग्भ्यो दक्षिणां ददातीति' ऋत्विक्कर्तृकत्वशास्त्रेण फलसाधनभूतं साङ्गं कर्म ऋत्विग्भिरनुष्ठेयं, इति अवगम्यते। तदन्तर्गतानि कायिकानि मानसानि च कर्माणि ऋत्विक्कर्तृकाण्येव, तथापि तत्फलं तत्स्वामिनः सम्भवति। तद्वद्यागीयप्रकरणपठितेन्द्रादिदेवदत्तस्वर्गादिफलभोगोऽपि तदन्तर्यामित्वेन तन्नियामकशिवस्यैवोपपद्यते। तस्मात् 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ ज्योतिष्टोमस्य स्वर्गफलकत्वेऽपि तत्स्वर्गस्येन्द्रदेवताप्राधान्येऽपि–

'यज्ञकर्ता च देवेन्द्रो वेदकर्ता च वाक्पतिः।
अहमेव जगत्कर्ता मम कर्ता महेश्वरः॥' इति,

विष्णुना यज्ञकर्तृत्वस्येन्द्र एव स्कान्दे प्रतिपादितत्वेऽपि पाकशासनातिरिक्तशिवस्य परब्रह्मणः यज्ञकर्तृत्वविधायकश्रुतिस्मृतिपुराणानां प्रामाण्यं न विरुध्यते। 'यज्ञो वै विष्णुः' इत्यत्र शिवशक्त्यात्मकविष्णोर्यज्ञमयत्वम्। 'आ वो राजानं अध्वरस्य रुद्रꣳ' इत्यत्र रुद्रस्य यज्ञाधिपतित्वस्यासङ्कुचितत्वेन निर्देशात् यज्ञात्मकस्य यज्ञपतित्वमयुक्तमिति सिद्धम्।

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह–

॥ २८० ॥ श्रुतेश्च ॥ ४६ ॥

'ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्' इत्यादौ सर्वविद्यासर्वजीवनियामकत्वस्य शिव एवावगमात् कर्मब्रह्मोपासनाफलप्रदातृत्वं शिवस्यैव सिद्धम्।

---

## सहकार्यन्तरविध्यधिकरणम् ॥ १३ ॥

### आश्रमधर्मवत् पाण्डित्यमौनादीनां विद्यासहकारितानिर्णयः

ननु परमेश्वरार्पितयज्ञ-दान-तपः-पूजादिना शुद्धान्तःकरणानां ब्रह्मोपासकानां शमदमादिवन्मौननिष्ठावश्यकत्वं उत पाणिनीय-काणादशास्त्रादिवद्वागाडम्बरत्वप्राधान्यं इत्याशङ्कायामधिकरणान्तरं दर्शयति—

**॥२९१॥सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विद्यादिवत् ॥४७॥**

**विद्यादिवत्**, विद्यादौ कर्मकाण्डे यथा गृहस्थाश्रमवतः साग्निहोत्रादीनि बहूनि कर्माणि स्वर्गफलोद्देशेन विहितानि, **एवं तद्वतः** ब्रह्मविद्यावतः पुरुषस्य **'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य' इति ज्ञानकाण्डश्रुतौ** सहकार्यन्तरविधिः ; शम-दमाद्यपेक्षया सहकार्यन्तराणां श्रवण-मनन-निदिध्यासनानां परशिवब्रह्मसाक्षात्कारोद्देशेन विधिरङ्गीकर्तव्यः । तत्र त्रयाणां मध्ये श्रवण-मनने सर्वेषामपि तत्साक्षात्कारकामानां बहुकालमनुष्ठातव्ये । तृतीयं निदिध्यासनन्तु पक्षेण कालपरिपाकत्वेन अनुष्ठेयम् । साधकानां **श्रवण-मनन**नानन्तरमपि **ब्राह्मण-क्षत्रियत्वादि-वर्णाभिमानः, ब्रह्मचारि-गृहस्थाश्रमत्वाद्याश्रमाभिमानः,** जाति-कुलाद्यभिमानः, **'स्थूलोऽहं कृशोऽहं कर्ताऽहं भोक्ताऽहं'** इत्येवं विधो देहाभिमानश्च दृढो वर्तते । तस्मात्तेषां प्रशमनाय निदिध्यासनं कर्तव्यम् । येषां त्वतिविशुद्धान्तःकरणानां देहाद्यभिमानः श्रवणमननाभ्यासादेव शिथिलीभूतस्तेषां स्वल्पकालनिदिध्यासनेनैव तत्साक्षात्कारसम्भवात् बहुकालनिदिध्यासनमकर्तव्यमिति सूत्रार्थः ।

**कौहलब्राह्मणे** श्रूयते— **'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्', 'बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः'** इत्यत्र बाल्यपाण्डित्यवन्मौनमपि विधीयते । उत बहूपनिषत्तात्पर्यनिर्णयरूपं पाण्डित्यं विशेषेण सम्पाद्य बाल्येन रागद्वेषादिरहितत्वात् बाल्यसदृशेनावस्थान्तरेण अवतिष्ठेत । ततः पाण्डित्यं बाल्यं च

निश्शेषं सम्पाद्य **'अथ मुनिः'** इत्यत्र पाण्डित्यबाल्यवन्मौनमपि विधीयते न वा - इति संशयः ।

मौनपाण्डित्यशब्दयोर्ज्ञानार्थकत्वात् **'पाण्डित्यं निर्विद्य'** इति विहितमेव ज्ञानं **'अथ मुनिः'** इत्यनूद्यते । विधिशब्दो न ह्यत्र श्रूयते इत्येवं प्राप्ते वदामः ।

सहकार्यन्तरविधिः तद्वतः विद्यावतः विद्यादिवत् विधीयते । यज्ञादिसर्वाश्रमधर्मः शमदमादिश्च विधिशब्देनोच्यते । आदिशब्देन श्रवणमनने गृह्येते । सहकार्यन्तर-विधिरित्यत्रापि विधीयत इति विधिः । सहकार्यन्तरं विधिश्चेति सहकार्यन्तरविधिः । एतदुक्तम्भवति– यथा **'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति'**, **'यज्ञेन दानेन'** इत्यादिना, **'शान्तो दान्तः'** इत्यादिना च सहकारी यज्ञादिः शमदमादिश्च विधीयते । यथा च **'श्रोतव्यो मन्तव्यः'** इति श्रवण-मनने च अर्थप्राप्ते विद्या-सहकारित्वेन गृह्येते तथा **'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य'** इत्यादिना **'पाण्डित्यं बाल्यं मौनम्'** इति त्रयं ब्रह्मविद्यायाः सहकार्यन्तरं विधीयत– इति मौनञ्च पण्डित्यादर्थान्तरमित्याह ॥ **पक्षेणेति** ॥ मुनिशब्दस्य पक्षेण प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनात् मौनं पण्डित्यबाल्ययोर्द्वयोस्तृतीयम् ।

यद्यपि 'अथ मुनिः' इत्यत्र विधिप्रत्ययो न श्रूयते ; तथापि मौनस्याप्राप्तत्वात् विधेयत्वमङ्गीकरणीयम् । **'अथ मुनिः स्यात्'** इति । इदञ्च मौनं श्रवण-प्रतिष्ठार्थान्मननात् अर्थान्तरभूतं, उपासनालम्बनस्य पुनःपुनः संशीलनं तद्भावनारूपम् । अयमेवात्र वाक्यार्थः–

ब्राह्मणः विद्यावान् पाण्डित्यं निर्विद्य उपास्यं ब्रह्मतत्त्वं परिशुद्धं परिपूर्णञ्च विदित्वा श्रवण-मननाभ्यां प्राप्तं वेदनं प्रतिलभ्येत्यर्थः । तच्च भगवद्भक्तिकृतसत्त्ववि‌वृद्धि-कृतम् । यथोक्तं **'नाहं वेदैः'** इत्यारभ्य **'भक्त्या त्वनन्यया शक्यः अहं एवं विधोऽर्जुन'** इति । श्रुतिश्च– **'यस्य देवे परा भक्तिः यथा देवे तथा गुरौ'** **'नाऽयमात्मा प्रवचनेन लभ्यः'** इत्यादिना । **'बाल्येन तिष्ठासेत्'** इति बाल्य-स्वरूपञ्चानन्तरमेव वक्ष्यते । **'बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिः स्यात्'** बाल्य-पाण्डित्ये यथावदुपादाय परिशुद्धे परिपूर्णे परशिवब्रह्मणि मननशीलो भवेत् । निदि-

त्यादनरूपविद्याव्यावृत्तये एवमेव त्रितयोपादानात् लब्धविद्यो भवतीत्याह– **'अमौनं मौनञ्च निर्विद्याथ ब्राह्मणः'** इति। अमौनं मौनेतरसहकारिकलापः। तच्च मौनञ्च यथावदुपाददानो विद्याकाष्ठां तदेकनिष्ठां आलम्बेत्यर्थः। **'स ब्राह्मणः केन स्याद्'** इत्युक्तादुपाया त्किमन्योऽप्युत्पादनीयोऽस्ति ? इति पृष्टे येन स्यात् तेनेदृश एवेति **'येन मौनिवर्यस्तेन ब्राह्मणः स्यात्'** इत्युक्तम्। **'तेनेदृशः स्यात् न केनाप्यन्येनोपायेन'** इति परिहृतम्। अतः सर्वेष्वाश्रमेषु स्थितस्य विदुषो यज्ञादिस्वाश्रमधर्मवत् पाण्डित्यादिक मौनं तृतीयं विद्यासहकार्यन्तरं विधीयते।

अथ स्याद्यदि सर्वेष्वाश्रमेषु स्थितानां विदुषां तत्तदाश्रमधर्मसहकारिणी मौनतृतीया सविधा विद्या ब्रह्मप्राप्तिसाधनमुच्यते ; कथं तर्हि छान्दोग्ये– **'अभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः'** इत्यारभ्य **'स खल्वेवं वर्तयन् याव दायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते'** इति यावदायुषं गार्हस्थ्यधर्मेण- स्थितिदर्शनमुपपद्यते। अत आह–

### ब्रह्मचर्याद्याश्रमिणामपि ब्रह्मविद्याधिकारस्य अविरोधितानिर्णयः, गुरुशब्दार्थनिर्वचनञ्च

## ॥ २९२ ॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥

तुशब्दः शङ्कानिरासार्थः। "कृत्स्नेष्वाश्रमधर्मेषु ब्रह्मविद्यायास्सद्भावात् गृहिणोप्य- स्तीति तेनोपसंहारः। तस्मात् सर्वाश्रमधर्मप्रदर्शनार्थो **गृहिणोपसंहार** इति भावः।"

ननु **'वेदान्तविज्ञानसुनिश्चितार्थाः** इति कैवल्ये वेदान्तार्थज्ञानवतां संन्यास- योगविधिव्यपदेशात् **'अत्याश्रमस्थः'** इति ध्यानयोगस्य अत्याश्रमधर्मत्वोपदेशात् ब्रह्म- चारिणां वेदव्रताद्यनुष्ठानाचार्यपरवशत्वात्, गृहिणां कुटुम्बपोषणभारादिव्यापारसत्त्वात्, वान- प्रस्थानां उपवास-कृच्छ्र-चान्द्रायणादिबहुक्लेशदर्शनाच्च यतीनामेव ब्रह्मविद्याधिकारित्वमिति चेन्न ; **'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्'** इत्यत्र शिष्यस्य समित्पाणित्वव्यवस्थापनेन गुरोर्गृहस्थत्वं, श्रोत्रियशब्देन स्वाश्रमसदाचारनिष्ठत्वं, **'ब्रह्मनिष्ठं'** इत्यनेन ब्रह्मवेत्तृत्वमप्यसङ्कुचितत्वेन निर्देशात् यतीनामपि गुरुत्वेन ब्रह्मविद्याधिकारित्वे सिद्धेऽपि ब्रह्मचर्यादिसर्वेषामाश्रमिणामपि न ब्रह्मविद्या विरुध्यते।

छान्दोग्ये- 'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' इत्यारभ्य 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' इति कृत्स्नाश्रमेषु ब्रह्मविद्या-कारित्वश्रवणात् गृहिणोपसंहारस्सर्वेषां प्रदर्शनार्थमिति वेदितव्यम् ।

## सर्वाश्रमिणां ब्रह्मविद्याधिकारस्य युक्तता

ननु गृहस्थानामपि ब्रह्मविद्याधिकारित्वे 'न कुर्यान्निष्फलं कर्म' इति न्यायेन यत्याश्रमस्य [1]निष्प्रयोजनत्वम् । 'यावज्जीवमग्निहोत्रं जुहोति' इति श्रौतविधिविरोधा-भावात् सर्वेषामाधारभूतत्वेन स्मृतिपुराणेषु गृहस्थाश्रमस्य सर्वाधिकत्वनिर्देशात् 'अत्या-श्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य' इत्यादिश्रुतिसिद्ध-अत्या-श्रम-संन्यास-यत्यादिशब्दानां अन्यथा समन्वयात् 'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः' इति स्मृतिदर्शनात् 'फलत्यागः संन्यासः' इति तत्त्वम् । 'यत्नशीलो यतिः' इति नियमेन मोक्षप्रयत्नस्य गृहिष्वपि सम्भवेन सर्वेषामाश्रमिणामपि तत्सम्भवति ।

---

[1] निष्प्रयोजनत्वमनपेक्ष्यम् (ग)

मौनाधिकरणम् ॥ १४ ॥

अत्याश्रमिलक्षणम्

'यस्तु लिङ्गाङ्गसंयुक्तः स एवात्याश्रमी भवेत् ।
लिङ्गं शिवो भवेत् क्षेत्रं अङ्गं संयोग आश्रयः ॥
तस्माल्लिङ्गाङ्गसंयुक्तो योऽपि सोऽत्याश्रमी भवेत् ।'

इत्यादिष्वत्याश्रमशब्दस्यापि सर्वाश्रमसाधारणत्वेन शिवोक्तवातुलागमे व्यपदेशाच्च मौनादिविधायकः यत्याश्रमः मुमुक्षूणाञ्च न युक्तः इत्याशङ्क्य तत्र अधिकरणान्तरमाह—

॥ २९३ ॥ मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥

छान्दोग्ये— 'ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरति' इति पारिव्रज्यैकान्तधर्मं प्रतिपाद्य तयैव तस्मिन्नेव 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य' इत्यादिना पारिव्रज्यधर्मस्थितिहेतुमौनतृतीयसहकारिविधानं प्रदर्श्य तद्वत् तत्रैव अभिसमावृत्य 'कुटुम्बे शुचौ देशे' इत्यादिना गृहस्थादीनामपि ब्रह्मविद्योपदेशात् संन्यास-यत्यादिशब्दानां पङ्कजादिवत्तत्रैव रूढिः । तस्माद्यतीनां ब्रह्मविद्या मुख्या । तद्भिन्नानां अग्निहोत्रादिकं कर्म मुख्यम् । 'अत्याश्रमी प्राणलिङ्गसम्बन्धी भस्मघुट्टिकां कन्थां कमण्डलुं भिक्षापात्रं दण्डश्च धारयेत्' इत्यादिना शङ्करसंहितादिषु अत्याश्रमशब्दस्य सर्वाश्रमसाधारण्येऽपि यतीनां मुख्यत्वावगमात् । 'मौनवदितरेषां' इत्यत्र मौनस्य यतेः मुख्यत्वेन ब्रह्मविद्याधिकारित्वं प्रदर्श्य 'समुद्रवत्तटाकं' इति न्यायवत् तद्दृष्टान्तेनेतरेषामपि ब्रह्मविद्याया उपदेशात् सर्वाधिकत्वं यतीनामनवद्यमिति सूत्रार्थः ।

'ब्रह्मसंस्थोऽमृतत्वमेति' इत्यत्र ब्रह्मनिष्ठपुरुषस्य मोक्षावगमात् . 'ब्रह्मविदाप्नोति परम्' इत्यत्र ब्रह्मविदामेव मुक्त्युपदेशात् 'ध्याननिर्मथनाभ्यासात् पाशं दहति पण्डितः' इत्यादौ ध्यानविधानस्य पाशविच्छेदलक्षणकथनात् ; अथर्वशिरसि— 'तृष्णां जित्वा हेतुजालस्य मूलं बुध्या संचिन्त्य स्थापयित्वाथ रुद्रे', [1]'रुद्रं शाश्वतं

[1] रुद्र एकत्वमाहुः रुद्रं (ग .

**पुराणं इष्टमूर्जं तपसा नियच्छत्।' 'व्रतमेतत्पाशुपतं तत्समाचरेत् मुमुक्षुर्न पुनर्भवाय'** इति पाशुपतव्रतस्यैव मोक्षव्यवस्थापनात्, पुराणेष्वपि तथा दर्शनाच्च केवलब्रह्मविद्यावतां अमृतत्वं उत पाशुपतव्रतनिष्ठानामेवेति सन्दिह्यते।

पाशुपतव्रतस्य सर्वाश्रमिणामावश्यकत्वेन आश्रमेष्वन्तर्भावात्, तस्य कालपरिमितिदर्शनात्, कलत्र-पुत्रादिसाधनार्थं राम-कृष्णादिभिरनुष्ठितत्वात् **'तमेवं विदित्वातिमृत्युमेति'** इत्यादौ मोक्षस्य साधनान्तरनिरपेक्षत्वावगमाच्च श्रुतिसिद्धत्वेऽपि पाशुपतव्रतस्य काम्यमात्रफलत्वमिति प्राप्ते प्रचक्ष्महे—

पाशुपतव्रतधारिणां मुक्तिरेव फलं विद्यासम्पत्तेश्च परब्रह्मणो रुद्रस्य अनुसन्धानरूपमुनिधर्मवदितरेषामपि भिक्षाचर्यशमादिमोक्षधर्माणां पाशुपतव्रते निर्देशात् तन्निष्ठानामपि रुद्र एकत्वाद्धुः। [1]अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत्। **'व्रतमेतत्पाशुपतं पशुपाशविमोक्षाय'** इति रुद्रध्यानस्य पाशविच्छेदरूपमोक्षफलत्वावगमात् [2]यावदायुषं पाशुपतव्रतधारिणां मुक्तिरेवफलम्।

### पूर्वपाशुपत-महापाशुपतस्वरूपम्

किञ्च— पाशुपतव्रताश्रमे विद्यासाधनब्रह्मचर्यादियतिधर्मसमन्वयात् अत्याश्रमसंज्ञिकोऽयमाश्रमभेदः स्वतन्त्रपरशिवप्राप्तिहेतुः।

'यावच्छरीरपातं वा द्वादशाब्दमथापि वा।
कुर्यात्पाशुपतं दिव्यं पशुपाशनिवृत्तये॥

द्विधा पाशुपतं ज्ञेयं पूर्वापरविभेदतः।
शैवदीक्षानुसारेण भस्मरुद्राक्षधारणम्॥

लब्ध्वा शिवं महादेवं लिङ्गरूपमुमापतिम्।
योऽर्चयेत्तं त्रिकालं वै पूर्वपाशुपतं हि तत्॥

निगमागमसन्धानशैवदीक्षाविधानतः।
शिवलिङ्गं करे कण्ठे धृत्वा वक्षःस्थलेऽपि वा॥

---

[1]रुद्रं शाश्वतं वै पुराणं इषमूर्जं तपसा नियच्छतव्रतमेतत्पाशुपतम्। अग्निरित्यादिभिः भस्म (ग)
[2] अतो यावदायुषं (ग)

त्रिकालं योऽर्चयेद्भक्त्या महापाशुपतो हि सः ।
श्रौताश्रौतविभेदेन तद्द्विधा परिचक्ष्यते ॥

वर्णाश्रमोचितं धर्मं वेदमार्गाविरोधतः ।
कृत्वाऽर्चयति यः शम्भुं श्रौतशैवस्स ईर्यते ॥

वर्णाश्रमोचितं धर्मं त्यक्त्वा तान्त्रिकमार्गतः ।
यः पूजयति विश्वेशं तन्त्रशैवस्स उच्यते ॥'

इति **शिवागमे** श्रूयते । तस्मात् द्वादशाब्दपरिमितपाशुपतव्रतस्य स्वाभीष्टकाम्यफलहेतुत्वं, यावज्जीवपाशुपतव्रतस्य हि पाशनिवृत्तिपूर्वकशिवत्वप्राप्तिरूपं नित्यफलकत्वमिति निश्चीयते ।

### निराभारवीरशैवलक्षणम्

'अत्याश्रमी निराभारः षट्स्थली जङ्गमश्वरः ।
शिवयोगयतिर्वीरो नान्येषु न कदाचन ॥'

इति **वीरागमे** दर्शनात् । अत्याश्रमशब्दस्य शैवदीक्षावच्छिन्नचतुर्विधाश्रमपरसाधारण्येऽपि सः **त्यक्तैषणत्रयनिराभारवीरशैवे** रूढः ।

**ब्रह्मचारिणां** यथेष्टभोजनपूर्वकस्वाध्यायाध्ययनत्वं असाधारणधर्मः । **गृहिणां** यथोचितभोजनपूर्वकनित्याग्निहोत्रादिकर्मानुष्ठानं, **वानप्रस्थानां** [1]उपवासादिप्रधानकायशोषणहेतुभूतपञ्चाग्निमध्यादिस्थानरूपतपश्चरणं, **संन्यासिनां** यथोचितभोजनपूर्वकं यमाद्यष्टाङ्गपूर्वकयोगाभ्यासानुकूलश्रवण-मनन-निदिध्यासनात्मकवेदान्तचिन्तनं मुख्यधर्म इति [2]निश्चीयते । तथापि ब्रह्मविद्याधिकारित्वं सर्वाश्रमिणां युक्तम् । ब्रह्मवित्पाशुपतयोः मुक्त्युपदेशविधायकवाक्यानां परस्परविरोधः । **'एषामीशे पशुपतिः'** [3]इत्यादिश्रुतिषु शिवस्य [4]ब्रह्मणः सर्वजीवाधिपतित्वं तद्बन्धमोक्षहेतुत्वागमात्, तदनुग्रहाभावे तत्प्राप्त्यसंभवात् ब्रह्मवेत्तृत्वविधायकवाक्यानां तद्दीक्षानुसरणे तदुपासकानां तत्साक्षात्कारः अर्थादुपदिश्यते ।

---

[1] प्रायसे उपवासादि (ग) [2] विधीयते (ग). [3] 'पशूनां द्विपदामुत चतुष्पदां' 'प्रधानक्षेत्रज्ञ....' इत्यादि (ग). [4] परब्रह्मणः (ग).

## अनाविष्काराधिकरणम् ॥ १५ ॥

### शिवयोगिनां बालादिवद्गुप्तशिवज्ञानवैभवत्वं स्वाभाविकम्

ननु सर्वेषामाश्रमिणां ब्रह्मविद्याधिकारोऽस्तु ; तथापि तद्वृत्तिः किमित्याकाङ्क्षायां तल्लक्षणमधिकरणान्तरेण दर्शयति –

## ॥ २९४ ॥ अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥

अनाविष्कुर्वन् बालकवत स्वनिष्ठभक्ति-ज्ञान-वैराग्य-शम-दमादिकं लोकानामप्रकटयन् दम्भ-दर्प-राग-द्वेषादिरहितस्सन् सदा श्रवण-मनन-निदिध्यासन-ध्यान-धारणावधान-समाधिना शिवयोगी सर्वदा सर्वं शिवैक्यज्ञाननिष्ठागरिष्ठभावानुसन्धानं [1]कुर्वंस्तिष्ठेत् । कुतः ? अन्वयात् शिवयोगिनः शरीरेन्द्रियाद्यभिमाननिराकरणपूर्वकस्वमनोवृत्तेः शिवे सदा समन्वयात् बालादिवत् ज्ञप्ति-शिवज्ञानवैभवत्वं स्वाभाविकमिति सूत्रार्थः । तस्मात् ब्राह्मणः पाण्डित्यंनिर्विद्य बाल्येन न तिष्ठासेत् इति,

'ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः ।
आत्मानमात्मना साक्षात् ब्रह्मबुध्या सुनिश्चितम् ॥

देह बाल्यादिसंबन्धात् वर्णाश्रमसमन्वितान् ।
वेदशास्त्रपुराणानि पदपांसुमिव त्यजेत् ॥

एतानि निस्पृहः तिष्ठेत् न हि तेन सहावसेत्
मुनिः कौपीनवासोस्यान्नग्नो वा ध्यानतत्परः ।
[2]अध्यात्मबुद्धिरासीनो निरपेक्षो निराशिषः ॥'

---

[1] कुर्वंस्तिष्ठेदित्यर्थः (ग). [2] अध्यात्मरतिरासीनो (ज).

'आत्मनैव सहायेन सुखार्थी विचरेदिह ।
सन्दिग्धस्सर्वभूतानां वर्णाश्रमविवर्जितः ॥

अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ।
गच्छंस्तिष्ठन्नुपविशन् शयानो वान्यथापि वा ॥

यथेच्छया वसेद्विद्वान् स्वात्मारामस्सदा मुनिः ।
बालोन्मत्तपिशाचवत् जडवृत्त्या लोकमाचरेत् ॥'

ब्राह्मणस्समाहितो भूत्वा तत्त्वंपदैक्यमेव सदा कुर्यात् । 'अशाम्बरो न नमस्कारो न स्वाहाकारो न स्वधाकारो न निन्दास्तुतिर्यादृच्छिको भवेत्' इत्यादिना शिवज्ञानवतां बालादिवदुपादेयतया श्रुतम् । अत्र बालवत् कामकर्मचारादिकं सर्वं विदुषोपादेयं उत डम्भादिरहितत्वमेवेति विशयः ।

'बालोन्मत्तपिशाचवज्जडवृत्तित्वस्य ब्रह्मविदामुपदेशात् तद्वद्युक्तायुक्तशून्यतया पुण्यापुण्य-कर्मानुष्ठानमुपादेयम् । तस्मात् 'आत्मा वाऽरे द्रष्टव्यः' इत्यादिश्रुतिविहितवेदान्तश्रवण-मननादि-कस्याप्यनुपपत्तिस्सम्भवतीति प्राप्ते तत्राभिधीयते—

"अनाविष्कुर्वन्निति बालस्य यत् स्वभावानाविष्काररूपं कर्म तदुपादानो वर्तेत विद्वान् । कुतः ? ॥ अन्वयात् ॥ सदाशिवस्यैकनिष्ठागरिष्ठचित्तसमन्वयात् युक्तम् । 'बाल्येन तिष्ठासेत्' इत्यस्मिन् विधौ तस्यैव विदुषोऽन्वयसम्भवो युक्तः । इतरेषां विद्याविरोधित्वश्रवणात् ।

'नाऽविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥'

'आहारशुद्धौ सत्वशुद्धिः सत्त्वशुध्या ध्रुवा स्मृतिः ।' इत्यादिषु ब्रह्मनिष्ठ-[1]नियमाः श्रूयन्ते । 'दृष्टान्तेन हि सर्वसम्भवः' इति न्यायेन बालादिवद्दम्भ-रहितत्वमात्रमुक्तम् । पूर्णशिवज्ञानिनां सर्वशिवात्मकत्वनिरन्तरभावानां वेदान्तश्रवणादिकं

[1] नियमानि (ग).

अप्रयोजनम् । मन्दशिवज्ञानिनां सर्वशिवात्मकत्वज्ञानदार्ढ्यार्थं श्रवण-मनन-वर्णाश्रमाचारादिकं सर्वं विधेयम् ।

समाधिमग्नः कर्माणि मा करोतु करोतु वा ।
हृदये नास्ति सन्देहः स जीवन्मुक्त उच्यते ॥

इत्यादिवेदान्तेष्वविदुषामेव विधिविहितकर्मानुष्ठातृत्वं, विदुषां स्वेच्छाधीनप्रवर्तकत्वं चोपदिष्टम् ।

---

### ऐहिकाधिकरणम् ॥ १६ ॥

**जगद्वासनायुक्तानां जडभरतादिवत् कालान्तरेण मुक्तिः, निर्वासनायुक्त शिवैकनिष्ठानां वामदेवादिवत् इहजन्मन्येव मोक्षः**

ननु श्रवणमननादिसहकृतशिवतत्त्वसाक्षात्कारवतां पुरुषाणां पूर्णाधिकारिणामिहैव जन्मनि जीवभावनिवृत्तिपूर्वकशिवत्वप्राप्तिर्वा सालोक्यादिक्रमेण क्रममुक्तिरुत जन्मान्तरेवेत्याशङ्कायां अधिकरणान्तरेणाह—

## ॥ २९५ ॥ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

**अप्रस्तुतप्रतिबन्धे—** प्रस्तुतानां भक्ति-वैराग्य-शम-दमादिसहकृतश्रवणादीनां दृढाद्यभिमानलक्षणे प्रतिबन्धके असति सति ऐहिकं ज्ञानमुत्पद्यते । अस्मिन्नेव जन्मनि परशिवब्रह्मसाक्षात्कार उत्पद्यते । दृढदेहाद्यभिमानरूपप्रतिबन्धके सति तु जन्मान्तरे पुनरपि श्रवण-मनन-निदिध्यासानुष्ठानानन्तरं तत्साक्षात्कारो लभ्यते । कुतः ? ॥ तद्दर्शनात् ॥ 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इत्यादिना स्मृतिपुराणेषु जडभरतस्य जन्मत्रयेण जन्मान्तरफलेन वामदेवस्यैकजन्मनि पाशनिवृत्तिपूर्वकशिवत्वप्राप्त्युपगमात् प्रबलदेहाद्यभिमानवतां अनेकजन्मकृतध्यान-धारण-पूजा-नमस्कार-श्रवण-मनन-निदिध्यासनानुष्ठानेन शिवसाक्षात्कारः ; विशुद्धान्तःकरणानां स्वल्पदेहाभिमानवतां ईश्वरानुग्रहवतां एकजन्मानुष्ठितशिवभक्ति-वैराग्य-श्रवणाद्यनुष्ठानादिभिरेव शिवसाक्षात्कार इति सूत्रार्थः ।

**मुण्डकोपनिषदि— 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति ? तस्मै सहोवाच— द्वे विद्ये वेदितव्ये' इति; इ स्म यद् ब्रह्मविदो वदन्ति'** इत्युपक्रम्य **'स यो ह वै परमं ब्रह्म वेद ब्रह्मैव भवति'** इत्यन्तं अभ्युदय-निःश्रेयसात्मकफलद्वयविधायकद्विविधविद्या आम्नाता । फलाभिलाषासक्तपुण्यकर्मोत्पादकफलं **अभ्युदयसंज्ञिकं,** शम-दम-वैराग्य-भक्ति-जीवकरुणा-श्रवणादिफलं मुक्तिरूपं **निःश्रेयस-**

'अन्त्यकाले प्रबुद्धो यः सुहृदा बुद्धितोऽपि वा।
शिवमेकमनुध्यायन् स याति परमां गतिम्॥
सदाशिवात्मकं रूपं ध्यायन् प्राणान्विमुञ्चति।
तदासौ शिवतां याति नान्या गतिरिति श्रुतिः॥'

इत्यादिश्रुतिस्मृत्यागमादिषु तद्वदुपदेशात् मूर्तपरशिवब्रह्मोपासनावस्थायां तच्चित्तस्य मूर्तब्रह्मधृतेः मूर्तब्रह्माकाराकारितत्वात् अमूर्तपरशिवतत्त्वोपासनायां भक्तचित्तस्यामूर्तशिवतत्त्वधृतेः मुक्तिभेदो न विरुध्यत इति सूत्रार्थः।

'न तत्र प्राणा उत्क्रामन्ते तत्रैव समवलीयन्ते,[1] इत्यत्र सद्योमुक्त्यवगमात्, 'ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति' इत्यत्र क्रममुक्त्युपदेशात् परशिवब्रह्मोपासकानां सद्योमुक्तिसंज्ञिक-अशरीरमुक्तिः क्रममुक्तिसंज्ञिक-सशरीरमुक्तिर्वेति संभवः।

'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'वाजपेयेन स्वाराज्यकामो यजेत' इत्यादिधर्मप्रकरणपठिताभ्युदयफलवत् ब्रह्मविद्याफलस्यापि सातिशयत्वमनवद्यम्। दहर-शाण्डिल्य-उपकोसलादिब्रह्मप्रकरणपठितोपासनानां कर्मत्वात् 'नास्त्यकृतः कृतेन' इति श्रुतौ कृतस्य कर्मणोऽकृतमोक्षहेतुत्वनिरासावगमात् 'आत्मा वा अरे द्रष्टव्यः' इत्यादौ श्रवणजनिततद्ज्ञानस्यैव मोक्षाङ्गत्वव्यवस्थापनाच्च उपासनेन ब्रह्मप्राप्तिर्न सम्भवतीति प्राप्ते प्रचक्ष्महे–

धर्मप्रकरणपठितज्योतिष्टोमाद्युपासकानामिव ब्रह्मप्रकरणदहरादिविद्योपासकानां अनित्यफलमश्रावणीयं तद्विधायकश्रुत्यदर्शनात्। तैत्तिरीये– 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा' इत्यत्र सालोक्यादित्रिविधविभूत्यात्मककल्याणविभूतिःवासनायुक्तदहरोपासकानां दृश्यते। 'दहरं विपापं परवेश्मभूतम्' इत्यादिना तैत्तिरीये, 'हृत्पुण्डरीकं विरजं विशुद्धं' इत्यारभ्य 'उमासहायं परमेश्वरं....ध्यात्वा मुनिर्गच्छति भूतयोनिम्' इति च कैवल्ये दहरोपासकानां निर्वासनपरशिवध्याननिष्ठानां अशरीरकैवल्यविभूतिरुपपद्यते।

[1] अत्र 'वेदान्तविज्ञान ... सर्वे' इति श्रूयते 'न तत्र प्राणा नोत्क्रामन्ति' इत्यत्र (ग).

'श्रद्धाभक्तिध्यानयोगादवेहि', 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमाया-निवृत्तिः' इत्यादिश्रुतिशतेषु ब्रह्मविद्योपासकानां नित्यनिरुपमशरीराशरीरमुक्तिद्वयप्राप्त्युपदेशात् ब्रह्मविद्यायाः सर्वाधिकत्वमनिवार्यम्। ध्यानाद्युपासनानां कर्मत्वव्यपदेशे श्रवणादीनामपि कर्मत्वं प्रसज्येत। 'आत्मा वारे द्रष्टव्यः' इत्यत्र परशिवसाक्षात्कारफलमनूद्य तत्साधनत्वेन श्रवणादिकमुपदिष्टम्। तत्र श्रवण-मननादिसहकृतनिदिध्यासनारूपोपासनस्यैव मुख्यसाक्षात्कारहेतुत्वमुपदिष्टम्; न वैयाकरणादिवत्केवलवाक्यार्थज्ञानस्य।

ननु लोके व्योमस्थितनक्षत्राणां सर्वानुभवदर्शनात् तत्पुण्यक्षये भूपतनद्योतनात् 'सशरीर मुक्तिः कैलासे सम्भवति' इत्युक्त्या उपमन्यु-दधीचि-गौतमप्रमुखशिवयोगिभिर्योगमहिम्ना कैलासे त्रिविधमुक्तिविभूत्यनुभवस्य पुरुषाणां दृष्टत्वात् तत्रापि पूज्यपूजकभावसद्भावात्, भल्लाण-चिरुतुण्ड-चारम-वेमाराध्योद्भटाराध्यानां शरीरेण राज्येन परिवारेण ग्रामेण सह शिवलोकप्राप्तिदर्शनाच्च नानुभवविषया अशरीरमुक्तिरिति चेन्न; सशरीरमुक्तिवत् अशरीरमुक्तेरपि श्रुति-युक्त्यनुभवसिद्धत्वात्; सुषुप्तिसमाधिषु स्थूल-सूक्ष्मशरीराभावतया विदुषामविदुषामपि अशरीरानुभवं अशरीरानुभवमनुभूय पुनस्तदनुभवोपदेशाच्च। न च स्वर्गप्राप्ततेजश्शरीरनक्षत्रादिवत् शिवलोकप्राप्तमहापुरुषाणामपि पुनःपुनरावृत्तिः। 'ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इति श्रुतौ तल्लोकादेव कैवल्यमुक्त्युपदेशात् ब्रह्मविद्योपासकानां नित्यनिरतिशयानन्दस्वभावाद्वितीयसशरीराशरीरमुक्तिद्वयं स्वेच्छानुसारेण लभ्यते। तस्मान्न चैकमुक्तिरिति नियमस्सम्भवतीति निश्चीयते।

इति श्रीमद्यतिव्रजवरिष्ठ-श्रीपतिपण्डितभगवत्पादाचार्यस्वामिकृत-

भेदाभेदात्मकविशेषाऽद्वैतसिद्धान्तव्यवस्थापक-वैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

## श्रीकरभाष्ये

उपासनाध्यायसंज्ञिकतृतीयाध्यायस्य पुरुषार्थाधिकरणादिसप्तदशाधिकरणावच्छिन्न

पुरुषार्थोऽतश्शब्दादितिबादरायण-इत्यादि-द्विपञ्चाशत्सूत्रात्मकः

## चतुर्थः पादः समाप्तः

---

संज्ञिकम्। तत्र शिवज्ञाननिष्ठावतां इह जन्मनि जन्मान्तरे वा मुक्तिरिति सन्दिह्यते।

'अत्र ब्रह्म समश्नुते' इति विदुषामिहैव ब्रह्मप्राप्त्युपदेशात् कालविलम्बफल-स्वीकारे विद्याया माहात्म्योच्छेदप्रसङ्गात्। तथा चेत् ज्योतिष्टोमादिवत् मुख्यसाधन-त्वायोगाच्च ब्रह्मविद्यावतामिहैव जन्मनि मुक्तिफलं उचितमिति प्राप्ते तत्र वक्ष्यामः।

'ऐहिकं अभ्युदयफलं उपासनं, अप्रस्तुते प्रबलकर्मान्तरप्रतिबन्धे असति अनन्तरं प्रतिबन्धे सति तदुत्तरकालं इत्यनियमः। कुतः? ॥ तद्दर्शनात् ॥ दृश्यते हि प्रबल-कर्मान्तरेण कर्मफलप्रतिबन्धाभ्युपगमः श्रुतौ, 'यदेव विद्यया करोति श्रद्धयोपनि-षदा तदेव वीर्यवत्तरं भवति' इत्युद्गीथविद्यायुक्तस्य कर्मणः फलाप्रतिबन्धश्रवणात्' भूतप्रतिबन्ध-वर्तमानप्रतिबन्ध-भाविप्रतिबन्ध-संज्ञिकप्रतिबन्धत्रये भूत-वर्तमानप्रतिबन्धयोः श्रुति स्मृति-पुराणेषु तारणोपायावगमात् भाविप्रतिबन्धनिवृत्त्युपायदर्शनात् भरतस्य त्रिजन्मसु जडभरतादीनामिव जन्मान्तरमुक्तिफलं न विरुध्यते। इह जन्मनि मुक्तिविधायक-वाक्यानां वामदेवादिवद्बाविप्रतिबन्धनिर्मुक्तसिद्धविषयत्वम्।

'वासनातानवं ब्रह्मन् मोक्ष इत्यभिधीयते।
न मोक्षो नभसः पृष्ठे न पाताले न भूतले॥
सर्वाशासङ्क्षये चेतःक्षयो मोक्ष इतीर्यते।
बद्धो हि वासनाबद्धो मोक्षस्याद्वासनाक्षयः॥'

इत्यादौ निर्वासनायुक्तस्य ब्रह्मविद्यापूर्णस्यैवास्मिन् जन्मनि मुक्त्युपदेशादतो न विरोधः।

---

## मुक्तिफलाधिकरणम् ॥ १७ ॥

### ब्रह्मविद्योपासकानां स्वेच्छानुसारेण सशरीराशरीरमुक्तिद्वयप्राप्तिनिरूपणम्

ननु जगद्वासनायुक्तब्रह्मविद्यावतां जडभरतादिवत् कालान्तरेण मुक्तिः; निर्वासना-मौननिष्ठानां शिवैकचेतसां वामदेवादिवदिहजन्मन्येव मोक्षफलमस्तु, तथापि दहरादि ब्रह्मविद्यावतां सशरीरमुक्ति[1]रशरीरमुक्तिर्वेत्याशङ्कायामधिकरणान्तरेणाह—

॥२९६॥ **एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः** ॥५२॥

पूर्वं जगद्वासनायुक्तानां जन्मान्तरेण निर्वासनशिवज्ञाननिष्ठानामिहैव जन्मनि शिव-प्राप्तिरूपमुक्तिफलमभिहितम् । तथाप्येवं शिवतत्त्वसाक्षात्कारवतां सर्वेषां मुक्तिफलमेकमेवेत्य-नियमः । '**सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा**' इति श्रुतौ ब्रह्मविदां ब्रह्मणा सह सर्वकामावाप्तिदर्शनात् सर्वेषां ब्रह्मविदां अशरीरमुक्तिसंज्ञिककैवल्यमुक्तिरेवेति नियमो नास्ति ।

किन्तु शिवानुग्रहवतां शम-दमादिवैराग्ययुक्तानामशरीरज्योतिर्लिङ्गानुसन्धानचेतसां पर-लोकवासनानिर्मुक्तानां इहैव दहराकाशज्योतिर्लिङ्गे सुषुप्तिसुखवदशरीरेण प्रारब्धनाशपर्यन्तं जीवन्मुक्तदशायां नित्यनिरतिशयानन्दमनुभूय तत्समाधिकाले प्रचण्डातपमध्यनिक्षिप्तनिर्वात-कर्पूरदीपवत् स्थित्वा, विदेहमुक्त्यवसरे नदीसमुद्रन्यायवदेकत्वं परमाकाशे परमशिवे सम्भवति । तद्भिन्नानां मूर्तपरशिवब्रह्मलोकभोगवासनायुक्तानां प्राणावसाने शिवलोक-निवासोचितदिव्यमङ्गलविग्रहेण सालोक्य-सामीप्य-सारूप्यात्मक-कल्याणविभूतिसंज्ञिक-सशरीर-मुक्तिर्भवति । तस्माज्जीवन्मुक्तानां अशरीरमुक्तिरसशरीरमुक्तिरित्यनियमः' कुतः? ॥ तदवस्थावधृतेः ॥ 'यदेव ज्ञानफलं तदेव कर्मफलं',

'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति तत्त्वज्ञः सदा तद्भावभावितः ॥'

---

[1] मुक्तिर्वा सम्भवतीत्याशङ्कायां (ग).

अथ श्रीपतिपण्डितभगवत्पादाचार्यविरचिते

ब्रह्ममीमांसासूत्रार्थप्रकाशके

# श्री कर भाष्ये

## चतुर्थाध्यायस्य

### प्रथमः पादः

## आवृत्त्यधिकरणम् ॥ १ ॥

### सर्वविद्याफलनिरूपणम्

### निरन्तरमनन्यभावानुगतश्रवणमननादिसाधकतदुपासनकर्तव्यतानिर्णयः

तृतीयाध्याये तत्त्वंपदवाक्यार्थसिद्धोपास्योपासकशिवजीवप्रतिपादकदहरादिविद्याचिन्ता कृता। इदानीं चतुर्थाध्यायस्य प्रथमपादे सर्वासां विद्यानां फलं, द्वितीये त्वम्पदार्थभूतजीवोत्क्रान्तिदशाविशेषफलं, तृतीये अर्चिरादिगतिफलं, चतुर्थे स्वाभाविकजीवभावनिवृत्तिपूर्वकशिवत्वप्राप्तिरूपपरमपुरुषार्थफलञ्च दर्शयति। तस्मादेतदध्यायस्य फलाभिधानम्।

पूर्वाध्याये दहरशाण्डिल्यादिविद्याविधानस्य पाशनिवृत्तिपूर्वकशिवत्वप्राप्तिसिध्यर्थं साधनैः सह निरूपणे सकृदेव प्रपन्नानां—

'सकृत्स्मरणमात्रेण सर्वसिद्धिकरं भवेत्।
सकृदौपासनं कुर्यान्मायापाशनिवृत्तये॥'

इत्यादिस्मृतिपुराणेषु सकृदुपासनामात्रेण जीवभावनिवृत्तिपूर्वकशिवत्वप्राप्तिः; असकृदुपासने मानाभावात्। 'ब्रह्मविदाप्नोति परं [1]इत्यादिब्रह्मोपासनविधायकवाक्यानां सकृत्कालपरत्वमित्याशङ्कायां तन्निराकरणार्थमधिकरणान्तरमाह—

## ॥ २९७ ॥ आवृत्तिरसकृदुपदेशात् ॥ १ ॥

'आत्मा वाऽरे द्रष्टव्यः' 'तस्याभिध्यानात् योजनात्' इत्यादिश्रुतिषु सकृदसकृन्नियमादर्शनेऽपि असकृत् अनेकवारं अविस्मरणेन आवृत्तिः परशिवध्यान-[2]स्मरण-मननाद्यभ्यासः कर्तव्यः। कुतः? उपदेशात्।

---

[1] 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' इत्यादिब्रह्मोपासन (ज). [2] श्रवणमननाद्यभ्यासः (ग).

'आसुप्तेरामृतेः कालं नयेद् वेदान्तचिन्तया ।
दद्यान्नावसरं किञ्चित् कामादीनां मनागपि ॥

सुप्तेरुत्थाय सुप्त्यन्तं ब्रह्मैक्यं प्रविचिन्त्यताम् ।
गच्छंस्तिष्ठन्नुपविशन् शयानोऽप्यन्यथापि वा ॥
यथेच्छया वसेद्विद्वान् स्वात्मारामः सदा मुनिः ।'

[1]इति स्मृत्या सर्वतः स्वरूपमेव पश्यन् सः जीवन्मुक्तिमवाप्य प्रारब्धप्रतिभासनाशपर्यन्तं स्वरूपानुसन्धानेन वसेत् । स्वरूपानुसन्धानं विना अन्यथाचारपरो न भवेत् [2]स विद्वान्

'वेदान्तश्रवणं कुर्वन् योगं समारभेत्' इत्यादिश्रुतिषु,
'तच्चिन्तनं तन्मननं [3]अन्योदन्तप्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥

तद्बुद्धयस्तदात्मानः तन्निष्ठास्तत्परायणाः ।
दिने दिने च वेदान्तश्रवणात् भक्तिसंयुतात् ॥
गुरुभक्तिं सदा लब्ध्वा भजन्ते शिवमव्ययम् ॥'

इत्यादिस्मृतिष्वपि निरन्तरं शिवस्मरण-मनन-ध्यान-धारण-अवधान-ज्ञानविधानस्योपदिष्टत्वात् सकृदुपासनेन बुद्धेस्तदात्मकत्वाभावाच्च अविस्मरणेन सदा तदुपासनमावश्यकमिति [4]सूत्रसूक्ष्मार्थः ।

**'ब्रह्मविदाप्नोति परं', 'ब्रह्म वेद ब्रह्मैव भवति' 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति'** इत्यादिश्रुतिषु ब्रह्मवेदनरूपोपासनस्य सकृदसकृदिति विनिगमकाभावात् भक्तानां सकृदुपासनमुतासकृदुपासनमेवेति सन्दिह्यते ।

**'ब्रह्म वेद ब्रह्मैव भवति'** इति वेदनमात्रस्यैव विधानात् असकृदावृत्तौ प्रमाणाभावात् । न च अवघातादिवत् वेदनस्य ब्रह्मापरोक्ष्यं प्रति दृष्टोपायत्वात् यावत्कार्यमावृत्तिरिति शक्यं वक्तुं; वेदनस्य दृष्टोपायत्वाभावात् । ज्योतिष्टोमादिकर्मवत्

---

[1] इति स्मृत्या इति 'ग' प्रतौ नास्ति । [2] 'स विद्वान्' इति 'ग' प्रतौ नास्ति । [3] अन्योन्यं तत्प्रबोधनम् (ग). [4] सूत्रसूचितसूक्ष्मार्थः (ग).

वेदान्तविहितञ्च वेदनं शिवाराधनरूपम्। आराधिताच्च परमपुरुषात् धर्मार्थकाममोक्षाख्यपुरुषार्थावाप्तिरिति हि 'फलमत उपपत्तेः' इत्यत्र प्रतिपादितम्। अतो ज्योतिष्टोमादिवत् यथाशब्दं सकृत्कृतमेव शास्त्रतात्पर्यमिति निश्चीयते।

'सकृत्कृतेः कृतशास्त्रार्थः' इति न्यायदर्शनात् प्रयाजादिवत् सकृदनुष्ठेयमेवेति प्राप्ते प्रचक्ष्महे—

॥ आवृत्तिरसकृदिति ॥ असकृदावृत्तमेव वेदनं शास्त्रार्थः। कुतः ? उपदेशात्— 'सन्देहे वाक्यशेषात्, इति नियमेन 'छागपशुन्यायवत्' श्रुत्यन्तरेष्वसन्दिग्धतया सदा परशिवब्रह्मोपासनस्य पाशनिवृत्तिपूर्वक[1]शिवत्वप्राप्तिमूलमित्युपदेशाद्व्यपदेशात्।

'यदा चर्मवदाकाशं वेष्टयिष्यति मानवः।
[2]तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥'

'[3]आदिमध्यावसानेषु दुःखं सर्वमिदं यतः।
तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवानघ ॥'

'निद्राया लोकवार्तायाश्शब्दादेरात्मविस्मृतेः।
क्वचिन्नावसरं दत्वा चिन्तयात्मानमात्मनि ॥'

इत्यादिस्मृतिषु,

ईश्वरं तमहं वन्दे यस्य लिङ्गमहर्निशम्।
यजन्ते सह भार्याभिः इन्द्रज्येष्ठा मरुद्गणाः ॥'

इति जैमिन्याचार्यमतवेदपादस्तवेऽपि च असकृदुपासनाविध्यवगमात् 'सकृदेव प्रपन्नानां सद्योमुक्तिर्विधीयते' इत्यादिस्मृतीनां तन्माहात्म्यस्मरणमात्रपरत्वमिति विवक्षितम्। 'मनो ब्रह्मेत्युपासीत' 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद यस्य वेद स मयैतदुक्तः' 'अनुभ [4]एनां भगवो देवतां शाधि यां देवता मुपास्से' इत्यादिश्रुतिषु उपक्रमोपसंहारयोः विध्युपास्त्योः व्यतिकरोपदेशेन मोक्षसाधनरूपस्य वेदनस्य उपासनरूपत्वावगमात्। उपासनशब्दस्य च स्मृतिसन्तानवाचित्वात् यदुक्तं

---

[1] शिवत्वप्राप्त्युपदेशात् (ग). [2] यथा (ग). [3] त्रियम्बकं यजामहे आदि (ग) [4] एतां (ग).

प्रयाजादिवदिति तन्न— तस्यादृष्टफलत्वात् ; युक्तं सकृदनुष्ठानम्। तथा '**ब्रह्मविदाप्नोति परं**' इत्यादिवाक्यसमानार्थेषु वाक्येषु '**आत्मा वारे द्रष्टव्यः**' '**ततस्तु तं पश्यति निष्कलं ध्यायमानः**' इत्यादिषु ध्यायतिना वेदनमभिधीयते। ध्यानञ्च चिन्तनं ; तच्च स्मृतिसन्ततिरूपं; न स्मृतिमात्रम्। उपास्तिरपि तदेकार्थः ; एकाग्रचित्तवृत्तिनैरन्तर्ये प्रयोगदर्शनात्। तयुभयैकार्थ्यात् असकृदावृत्तसन्ततस्मृतिरिह '**ब्रह्म वेद ब्रह्मैव भवति**' '**ज्ञात्वा देवं मुच्यते सर्वपाशैः**' इत्यादिषु वेदनादिशब्दैरुपासनमेवाभिधीयते।

अस्मिन्नर्थे हेत्वन्तरमाह—

## ॥ २९८ ॥ लिङ्गाच्च ॥ २ ॥

'**ऊर्ध्वाय नमः**', '**ऊर्ध्वलिङ्गाय नमः**' इत्यारभ्य लिङ्गस्य सर्वात्मकत्वं प्रसाध्य '**एतत्सोमस्य सूर्यस्य सर्वलिङ्गँ स्थापयति पाणिमन्त्रं पवित्रं**' इत्यत्र 'स्थापयतीति' वाक्येन यथा सर्वथा भू-शरीरसाधारण्येन लिङ्गस्थापनविधानदर्शनात्, तथा सर्वदा बाह्याभ्यन्तरेषु जप-पूजा-नमस्कार-श्रवण-मननादिशिवोपासनमभिहितम्। तथा च स्मृतिः—

'**गच्छंस्तिष्ठंत्सदा विद्वान् शिवलिङ्गं यथा मुदा।**
**बाह्याभ्यन्तरदेहेषु धृत्वा भक्त्या चिदात्मकम् ॥**
**लोके प्रवर्तते भक्तौ तद्वत् श्रवणकीर्तनात्।**
**श्रवणात्पूजनात् ध्यानात् साम्बं संसारभेषजम् ॥**
**चिन्तयेत्सततं धीमान् नान्यथा मोक्षमाप्नुयात् ॥**'

इति दर्शनात् निरन्तरमनन्यभावेन श्रवणमननादिसाधनत्वेन तदुपासनं कर्तव्यमिति निश्चीयते।

---

## आत्माधिकरणम् ॥ २ ॥

### सन्ततशिवभावनाजन्यशिवतत्त्वसाक्षात्कारः, तत्प्राप्तिविचारश्च

ननु असकृत शिवोपासनं मुमुक्षूणामस्तु ; तथापि केन मार्गेण तदुपासनं कर्तव्यं तत्र भेदभावेनोताभेदेन वेत्याशङ्कायामधिकरणान्तरेण दर्शयति–

॥ २९९ ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

आत्मा– जीवः, निरन्तरानुसन्धानेन परशिवब्रह्मसाक्षात्कारं तत्प्राप्तिञ्च लभत इति । मुमुक्षवो भक्ताः वेदान्तादिभिर्ज्ञात्वा दहर-शाण्डिल्याद्युपासनेन परमात्मानं ग्राहयन्ति- जानन्ति ; उपगच्छन्ति प्राप्नुवन्ति चेति सूक्ष्मार्थः । तुशब्दोऽत्र निश्चयार्थः ।

'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैति ॥'

'यथा नद्यः स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥'

इति मुण्डके ब्रह्मोपासकानां ब्रह्मसाक्षात्कारवत्त्वं ब्रह्मप्राप्तिमत्त्वञ्च दर्शितम् । 'हृत्पुण्डरीकं विरजं विशुद्धं' इत्यारभ्य उमासहायं परमेश्वरं प्रभुं........ ध्यात्वा मुनिर्गच्छति भूतयोनिं, समस्तसाक्षिं तमसः परस्तात्' इत्यन्तेन कैवल्ये दहरोपासकानां मुमुक्षूणां शिवतत्त्वप्राप्तिः श्रूयते ।

### उपासनात्रैविध्यप्रदर्शनम्

उपासनानि त्रिविधानि– अहंग्रहोपासनानि, प्रतीकोपासनानि अङ्गाव- बद्धोपासनानि चेति ।

तत्र **अहंग्रहोपासनानि– दहर-शाण्डिल्य-वैश्वानर-उपकोसल-विद्यादीनि।** तासु कासुचिद्विद्यासु **'वाचं ब्रह्मेत्युपासीत'** इतिवत् चेतनजीवात्मकत्वेन परमात्मोपासनमुपदिष्टम्। कासुचिद्विद्यासु **'अधिकन्तु भेदनिर्देशात्', 'विश्वाधिको रुद्रो महर्षिः'** इत्यादि-शास्त्रानुसरणेन ब्रह्मणो जीवादधिकत्वेपि जीवस्य स्वाभिन्नतया ब्रह्मोपासनं दर्शितम्। तदेवाहं-ग्रहोपासनम्।

**'कं ब्रह्म खं ब्रह्म'** [1]इत्यादिश्रुतिषु ताम्र-मृण्मय-शिलादिविग्रहेषु शिव-केशवादि-वत् **'नाम ब्रह्मेत्युपासीत'** इत्यादिना नामादिजडपदार्थेषु ब्रह्मदृष्ट्या ब्रह्मोपासनं **प्रतीकोपासन**मित्युच्यते।

उद्गीतादिपदार्थेषु **कर्माङ्गयज्ञादिषु ब्रह्मदृष्टिः अङ्गावबद्धोपासन**[2]मित्युच्यते।

तस्मादत्र उपासकस्य जीवस्य चेतनरूपस्य स्वात्मानमेव शिवत्वेनोपासनं उत स्वभिन्नजडपदार्थेषु ब्रह्मदृष्ट्या ब्रह्मोपासनं उत [3]दहरादिषु केवलशिवोपासनं कर्तव्यं वेति **सन्दिह्यते–**

**'अयमात्मा ब्रह्म', 'अहं ब्रह्मास्मि',** [4]इत्यादिषु जीवस्यैव ब्रह्मत्वव्यवस्थाप-नात् स्वस्य स्वात्मानमेव ब्रह्मोपासनमनिवार्यम्।

**'वाचं ब्रह्मेत्युपासीत', 'नाम ब्रह्मेत्युपासीत', 'मनो ब्रह्मेत्युपासीत', 'प्राणो ब्रह्मेत्युपासीत',** इत्यादिषु वागाद्यचेतनपदार्थेषु ब्रह्मत्वोपदेशात् तदात्मकत्वेन ब्रह्मोपासनमप्युचितम्। अतश्चेतनाचेतनपदार्थविलक्षणत्वेन दहरादिस्थलेषु मुमुक्षूणां सदा शिवोपासनमकर्तव्यमेवेति **प्राप्तेऽभिधीयते–**

**'दहरं विपापं परवेश्मभूतम्'** इत्यारभ्य **'तस्मिन् यदन्तस्तदुपासितव्यम्'** इति दहरान्तरत्वेन परमात्मोपासनमभिधाय **'सः कः'** इत्याकाङ्क्षायां

**'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः।**
**तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः॥'**

इत्यादिना शिवतत्त्वोपासनं **तैत्तिरीये** मुमुक्षूणां चेतनाचेतनविलक्षणत्वेन बहुधा प्रपञ्चितम्। **कैवल्ये– 'हृत्पुण्डरीकं विरजं विशुद्धं'** इत्यारभ्य **'उमासहायं परमेश्वरं प्रभुं'**

---

[1] प्रज्ञानं ब्रह्म इत्यादिषु (ग). [2] मिति कथ्यते (ग) [3] प्रज्ञानं ब्रह्म इत्यादिषु (ग). [4] किञ्च (ख).

'त्रिलोचनम् नीलकण्ठं प्रशान्तम्' इत्यादिना चित्प्रकृत्यात्मकलीलामङ्गलविग्रहोपासनकत्वं दहरपुण्डरीके मुमुक्षूणामुपदिष्टम्।

'आकाशशरीरं ब्रह्म' 'सत्यात्मप्राणारामं मन आनन्दम्। शान्तिसमृद्धममृतम्।' इत्यादिना तथा दर्शितम्। तस्मात् चेतनाचेतनविलक्षणत्वेन परशिवोपासनं मुमुक्षूणां कर्तव्यमिति निश्चीयते। 'सर्वं खल्विदं ब्रह्म' 'सर्वो वै रुद्रः' 'ऋतँ सत्यं' इत्यादिषु शिवस्य परब्रह्मणः सर्वात्मकत्वं, 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः' इति, 'यो रुद्रोऽग्नौ.... विवेश' 'तस्मै रुद्राय नमो अस्तु' इत्यादिषु तस्य सर्वान्तर्यामित्वनिर्देशात् चेतनाचेतनादिषु ब्रह्मोपासनं न विरुध्यते।

किञ्च— 'अधिकन्तु भेदनिर्देशात्', 'भेदव्यपदेशाच्चान्यः' 'एषामीशे पशुपतिः पशूनाम्' 'विश्वाधिको रुद्रो महर्षिः' इत्यादिप्रात्यक्षिकशास्त्रदर्शनात् शिवाख्यं परब्रह्म जीवादधिकमेव। तथापि 'तत्त्वमसि' इत्यादिभेदाभेदविधायकवाक्येषु उपास्योपासकानां चरमावस्थायामभेदव्यपदेशात् 'अहं ब्रह्मास्मि' इत्यादिमहावाक्येन शिवोऽहमित्युपासनमविरोधम्। 'आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिम्', 'ध्यान-निर्मथनाभ्यासात् पाशं दहति पण्डितः' इत्यादौ निरतिशयपरमानन्दचिदचित्प्रपञ्च-विलक्षणशिवत्वप्राप्तिरेव मोक्ष इति सर्ववेदान्तसिद्धान्तोपदेशोऽपि तदुपासनरूपध्यानाभावेन पशुत्वनिवृत्तिः पाशविच्छेदश्च न सम्भवति। तदसम्भवे शिवतत्त्वप्राप्त्ययोगात् निरन्तर-मनवच्छिन्नशिवोपासनं कर्तव्यम्।

'ध्यायीतेशानं प्रध्यायितव्यं' इत्यारभ्य 'शम्भुराकाशमध्ये शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य' इत्यन्तेन मुमुक्षूणां अन्यदेवतोपासननिषेधावगमात्, चेतनाचेत-नात्मकजीवे वा जडप्रपञ्चे सन्ततशिवभावना-शिवत्वप्राप्तिहेतुरिति निश्चीयते। 'तदनन्यत्व-मारम्भणशब्दादिभ्यः' इत्यत्र शिवोपादानप्रपञ्चस्य शिवात्मकत्वं असङ्कुचितत्वेन निर्दि-ष्टम्। अत्र केचित्— 'प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा' इत्यादिश्रुतिशतेषु परब्रह्मणः शिवस्यात्मशब्दप्रयोगदर्शनात्, आत्मा तु शिव एव मुमु-

शिव एको ध्येयः शिवङ्करः (ग).

क्षूणां दहर-शाण्डिल्यादिसर्वब्रह्मविद्यासु निरन्तरमुपास्यः इत्युपमन्यु-दधीचि-गौतमप्रमुखाः स्वहृदयपुण्डरीके शिवं परमात्मानं श्रवण-मनन कीर्तन-स्मरणाद्युपासनेन ग्राहयन्ति, जानन्ति-साक्षात्कुर्वन्ति, उपगच्छन्ति– प्राप्नुवन्ति इति वदन्ति। चकारात्समुच्चयार्थः। तुशब्देन देवतान्तरध्याननिरासो निश्चीयत इति गम्यते। तदपि युक्तमेव।

---

## प्रतीकाधिकरणम् ॥ ३ ॥

### शिवोत्पन्नचेतनेषु शिवदृष्ट्युपासनस्य शिवसाक्षात्कारहेतुत्वम्

ननु 'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः', 'पृथगात्मानं प्रेरितारं च मत्वा' इत्यादिश्रुतिषु जीवब्रह्मणोः पृथक्त्वानुसन्धानविधानावगमात् कथं ब्रह्मभावेन जीवोपासनं कर्तव्यमित्याशङ्कायामधिकरणान्तरेणाह–

## ॥ ३०० ॥ न प्रतीके न हि सः ॥ ४ ॥

प्रतीकोपासनं तैत्तिरीये श्रूयते– 'भृगुर्वै वारुणिः, वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मै एतत्प्रोवाच– अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति तद्ब्रह्मेत्युपासीत' इत्यादिना अन्नादिप्रतीकोपासने ब्रह्मभावेन अन्नादीनामुपासनं कर्तव्यमिति चेन्न। कुतः? स हि सर्वव्यापकः शिव एव अन्नादिष्वन्तर्यामित्वेन स्थितः। अतस्तदुपासनेन मुमुक्षूणां स्थूलारुन्धतीन्यायवत् परम्परामुक्तिहेतुत्वं सम्भवतीति सूत्रसूचितभावार्थः।

अन्नादीनां जगज्जन्मादिहेतुत्वेन ब्रह्मत्वोपदेशात् घटपटादिवत्परिच्छिन्नजडात्मकान्नादिषु ब्रह्मभावेनोपासनं [1]कर्तव्यं न वेति संशयः।

पिता वरुणोऽपि पुत्रं भृगुं प्रत्यन्नादीनां ब्रह्मत्वेनोपासनं यद्यप्यभिहितवान्; अथापि तन्न विधेयं जडत्वात्। लोके कृत्रिमगजाश्वादिषु गजादिभावभावितानां तत्फलादर्शनात् नश्वरान्नादिषु सत्यशिवोपासनं सर्वथा न सम्भवतीति प्राप्ते प्रचक्ष्महे–

'साधनाभावे साध्यानिष्पत्तेः' इति न्यायेन लोके सौधारोहणकामानां सोपानारोहणं दृष्टम्। तद्वद्दहराद्युपासनाऽसमर्थानां मन्दप्रज्ञानां अन्नादिष्वपि परशिवब्रह्म-

---

[1] कर्तव्यमकर्तव्यं वेति (ग).

त्वेनोपासनस्य समक्षज्वलन्न्यायेन स्थूलारुन्धतीन्यायेन च परम्परया ब्रह्मसाक्षात्कारहेतुत्वमिति निश्चीयते। लोके भृत्यादिषु प्रभुभावनया सन्मानस्य प्रभुकटाक्षहेतुत्वं, राज्ञि भृत्यभावस्य दण्डनहेतुत्वं दृष्टम्। तद्वत् शिवोत्पन्नचेतनाचेतनेषु शास्त्रानिश्चितेष्वन्नादिषु शिवदृष्ट्योपासनस्य शिवसाक्षात्कारहेतुत्वमिति निश्चीयते। तस्मात् '**योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद कृत्स्नो ह्येष आत्मेत्येवोपासीत। त्वं वा अहमस्मि भगवो देवता अहं वै त्वमसि भगवो देवता**' इति [1]व्यतिकरेणोक्त-सर्वेषामुपासनानां सामञ्जस्यमेव। [2]तद्वत् **छान्दोग्ये**— '**सर्वं खल्विदं ब्रह्म, तज्जलानीति शान्त उपासीत**' इति चेतनाऽचेतनप्रपञ्चस्य सर्वस्य ब्रह्मत्वेनोपासनमुपदिशति। तज्जत्वात्तल्लत्वात्तदनत्वात्तन्नियामकत्वात्तदन्तर्यामित्वात्सर्वं ब्रह्मेत्युपदिष्टम्।

अत्र हेत्वन्तरमाह—

## ॥ ३०१ ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

उत्कर्षात् '**एक एव रुद्रो न द्वितीयाय तस्थे**' [3]'**विश्वाधिको रुद्रो**' '**पुरुषो वै रुद्रस्सन्महः**' '**विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत्; सर्वो ह्येष रुद्रः**' इत्यादिश्रुतिशतेषु शिवस्य परब्रह्मणः चिदचिद्विश्वोत्कर्षत्वव्यपदेशात् सर्वाधिक्यं निष्प्रत्यूहम्। तथापि '**सर्वो वै रुद्रः**' इत्यादिषु तस्यैव सर्वात्मकत्वकथनात् अन्नादिषु ब्रह्मदृष्टिर्युक्ता। '**निधनपतये नमः**' इत्यारभ्य '**एतत्सोमस्य सूर्यस्य**' इत्यत्र सूर्यस्य सूर्यमण्डलान्तर्वर्तिनः सोमस्य उमासहितस्य भक्ततारणार्थं परिच्छिन्नपाण्यधिकरणकलिङ्गपूजाविधिमुक्त्वा सद्योजातादिपञ्चब्रह्ममन्त्रैः तदुत्कर्षत्वव्यपदेशात् व्यापकस्य शिवस्यान्नादिपरिच्छिन्नेषूपासनमविरुद्धम्।

ननु '**वाचं ब्रह्मेत्युपासीत**', '**मनो ब्रह्मेत्युपासीत**', '**आदित्यं ब्रह्मेत्युपासीत**' इत्यादिवागादीनां ब्रह्मत्वनिर्देशात् ब्रह्मणि वागादिदृष्ट्या ब्रह्मोपासनं कर्तव्यमिति चेन्न; तद्विधायकश्रुतियुक्त्यनुभवादर्शनात्। '**यस्मै नमस्तच्छिरो धर्मः मूर्धानं ब्रह्म उत्तरा हनुर्यज्ञोऽधरा हनुर्विष्णुर्हृदयं संवत्सरः प्रजननं**' इत्यादिना शिशुमारात्म-

---

[1] व्यतिरेकेणोक्त (ग)। [2] अतश्छान्दोग्ये (ग)। [3] असङ्ख्याताः सहस्राणि स्मर्यन्ते न च दृश्यते विश्वाधिको (ग)

निरूपणे हृदयादिरूपेभ्यः विष्ण्वादिभ्यः पार्थक्येन सर्वोत्कृष्टत्वादेव हि परब्रह्मणः शिवस्य प्रधानशिरोरूपत्वं '**यस्मै नमः तच्छिर इति**' नमस्कारविषयत्वेन लक्षणेनैवानूद्याभिहितम् ।

अवसाने च '**त्वं भूतानामधिपतिरसि त्वं भूतानां श्रेष्ठोऽसि**' इति तस्यैव सर्वभूतविषयमाधिपत्यं श्रेष्ठत्वं चोक्त्वा '**नमस्ते ; नमस्सर्वं ते नमः**' इति सर्वभूतोत्कृष्टत्वात् सिद्धं निखिलनमस्कारपर्यवसानभूमित्वमुक्तम् । सर्वत्र च '**नमस्ते रुद्रमन्यव**' इत्यादिषु सर्वोत्कृष्टतयैव पुनः पुनः तस्मै नमः प्रयुज्यते । '**ऐश्वर्यादिना हि लोकेऽधिकं नमन्ति**' ततस्सर्वनमस्कारविषयतया सर्वोत्कृष्टमुमासहितं विरूपाक्षं ईश्वरशब्दविषयीभूतं परं ब्रह्म अस्य सर्वोत्कृष्टस्य सर्वनमस्कार्यस्य व्याप्तिदृष्ट्या सर्वेषां मन आदित्यादीनां प्रतीकानामुपास्यत्वम् । अत एव '**श्वभ्यः श्वपतिभ्यश्च वो नमः**' इत्यादिषु अत्यन्तनिकृष्टेष्वपि सर्वोत्कृष्टब्रह्मव्याप्तिदृष्ट्या [1]श्रुतिः 'नमः' प्रयुङ्क्ते । तस्मादुत्कृष्टसम्बन्धात् निकृष्टेपूपचारदर्शनात् विश्वाधिकब्रह्मदृष्ट्या मनःप्रभृतीनामुपास्यत्वं सिद्धम् । प्रभु-भृत्यवद्ब्रह्मणि वागादिदृष्टिः प्रत्यवायकारी ।

---

[1] श्रुतिः प्रयुङ्क्ते (ग).

## आदित्यादिमत्यधिकरणम् ॥ ४ ॥

**छान्दोग्ये 'आदित्यं यूपमुपासीत'** समुत्कृष्टस्यापकृष्टारोपणोपासनादर्शनात् उत्कृष्टे राजनि भृत्यदृष्टिः प्रत्यवायकरी ; भृत्येषु राजदृष्टिरभ्युदयफलायेति यदुक्तं तदयुक्तं ; इत्याशङ्कायामधिकरणान्तरेणाह–

## ॥ ३०२ ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

**'आदित्यो ब्रह्मेत्युपासीत'** इत्यादिष्वङ्गावबद्धोपासनेषु आदित्यादीनां ब्रह्मत्वोपदेशेऽपि [1]**आदित्यादिमतयश्च 'आदित्यं यूपमुपासीत'** इत्यादिश्रौतविध्यनुसारेण आदित्यादिषु यूपादिबुद्धयः, सर्वे च **अङ्गाः** ब्रह्मविद्याया अङ्गा एव। कुतः ? **उपपत्तेः 'उद्गीथं ब्रह्मेत्युपासीत'** इत्यादिना उद्गीथविद्यायाः साक्षात् ब्रह्मसाक्षात्कारत्वावगमात् तदङ्गभूतयूपस्य ब्रह्मप्रकरणपठितत्वेन आदित्यादेस्समुत्कृष्टत्वेन **'आदित्यं यूपमुपासीत'** इति वाक्योपपत्तेरविरोधः ।

**'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सः'** इत्यादिषु कर्मप्रतिपादकवेदस्याविद्यात्मकत्वस्य, ब्रह्मप्रतिपादकवेदस्य विद्यात्मकत्वस्य चोपदेशात् । **'ब्रह्मविदाप्नोति परं'** इत्यादिषु ब्रह्मविद्यायाः पाशनिवृत्तिपूर्वकपरशिवप्राप्तिरूपपरमपुरुषार्थफलत्वाच्च समुत्कृष्टत्वमनिवार्यम् । तस्मात् ब्रह्मप्रकरणपठितोद्गीथविद्यान्तर्गतयूपस्य अविद्याप्रपञ्चावच्छिन्न सूर्यादेरुत्कृष्टत्वात् प्रभुभृत्यादिवत् [2]उत्कृष्टकनिष्ठत्ववादो ह्ययुक्तः इति सूक्ष्मार्थः ।

**'असावादित्यो ब्रह्म'** इत्यादौ सूर्यस्य ब्रह्मात्मकत्वश्रवणात्, **'आदित्यं यूपमुपासीत'** इत्यादौ आदित्यस्य यूपत्वव्यपदेशाच्च आदित्यादौ यूपादिबुद्धयः सम्भवन्ति नवेति सन्दिह्यते ।

---

[1] आदित्यादिमयश्च (ज). [2] उत्कृष्टे कनिष्ठ (ग).

'आदित्यो वा एष एतन्मण्डलं तपति,, 'असौ योऽवसर्पति नीलग्रीवो विलोहितः' इत्यादिषु आदित्यस्य साक्षात् शिवत्वव्यवस्थापनात् 'एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इत्यादिश्रुतिषु 'सौरमण्डलमध्यस्थं साम्बं संसारभेषजं' इत्यादिस्मृतिषु च शिवस्य परब्रह्मणः सूर्यमण्डलान्तर्वर्तित्वोपदेशाच्च तस्य यूपादिसाम्यत्वमयुक्तमिति प्राप्ते प्रचक्ष्महे—

॥ आदित्यादिमतयश्चेति ॥ चशब्दोऽवधारणे। आदित्यादिमतयः आदित्यादिषु मानसक्रत्वङ्गभूतयूपादिबुद्धयः अङ्गः साक्षात् ब्रह्मविद्याङ्ग एव। कुतः? उपपत्तेः ब्रह्मादित्यादिपदार्थेभ्यः मानसिकब्रह्मविद्याङ्गयूपादेः समुत्कृष्टत्वोपपत्तेः। तत्प्राणेष्वन्तर्मनसो लिङ्गमाहुः;

'मन एव मनुष्याणां कारणं बन्धमोक्षयोः।
देशाद्देशं गते चित्ते मध्ये यच्चेतसो वपुः॥
अजाड्यसंविन्मननं संविद्रूपं तदुच्यते।

इत्यादिश्रुतिषु प्रपञ्चादिभ्यः स्थूलेभ्यः सूक्ष्मरूपमानसस्य सर्वाधिक्यत्वव्यवस्थापनात् मानसिकब्रह्मविद्याङ्गभूतयूपादेः सूर्यादिभ्यः समुत्कृष्टत्वम्।

'असावादित्यो ब्रह्म' इत्यादिषु सूर्यस्य ब्रह्मात्मकत्वकथनात् सर्वोत्कृष्टत्वमिति [1]यत्तदयुक्तम्— 'कं ब्रह्म; खं ब्रह्म; अन्नं ब्रह्म; प्राणो ब्रह्म;' इत्यादिषु शिवोपादानत्वादुपासनार्थं सर्वं ब्रह्मेत्युक्तम्। 'एषोन्तरादित्ये हिरण्मयः पुरुषः' इत्यादौ परमात्मनः सूर्यान्तर्वर्तित्वात् सूर्यस्य सर्वातिशयत्वमिति यत् तदप्यनुपपन्नम्— 'यो रुद्रो योऽग्नौ योऽप्सु' इत्यादिषु शिवस्य सर्वान्तर्यामित्वव्यवस्थापनात्। अतो मानसिकोद्गीथविद्याक्रत्वङ्गयूपादेः समुत्कृष्टत्वमविरुद्धम्।

---

[1] यत्तदसङ्गतम् कं (ग).

## आसीनाधिकरणम् ॥ ५ ॥

आसनोपविष्टस्यैव शिवैकध्यानार्हतानिर्णयः

ननु

'गच्छंस्तिष्ठन्नुपविशंश्छयानोऽप्यन्यथाऽपि वा ।
यथेच्छया वसेद्विद्वान् आत्मारामस्सदा मुनिः ॥'

इत्यादौ ब्रह्मोपासकस्य आसनकालादिनियमादर्शनात् दहरादिविद्योपासकानां आसनाद्यपेक्षा न सम्भवतीत्याशङ्कायामधिकरणान्तरं दर्शयति—

## ॥ ३०३ ॥ आसीनः सम्भवात् ॥ ७ ॥

'त्रिरुन्नतं प्राप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निवेश्य ।
ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि ॥'

इति श्वेताश्वतरे,

'विविक्तदेशे तु सुखासनस्थः शुचिस्समग्रीवशिरश्शरीरः ।
अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ॥'

इति कैवल्ये च श्रूयते । सुखासने समासीनस्सन् दहराद्युपासनारूपशिवैकध्यानं कुर्यात् । कुतः ? ॥ **सम्भवात्** ॥ पद्मासनाद्यासनेषु समासीनस्यैव चित्तैकाग्र्यसम्भवात् इति सूत्रसूचितसूक्ष्मार्थः ।

अत्र मोक्षसाधनभूतदहराद्युपासनात्मकं ज्ञानं असकृदावर्तनं ततः स्मृतिरूपं आसनाभ्यासपूर्वकं उत तदतिरिक्तं वेति सन्देहः ।

'गच्छंस्तिष्ठन् स्वात्मारामः सदा मुनिः ।
ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत् सदा यतिः ॥'

इत्यादिषु ब्रह्मोपासने पद्मासनादिनियमादर्शनात् मनोरूपोपासनस्य शरीरकृतस्वस्तिकाद्यासनादिविधानप्रयोजनाभावात् ; '**मन एव मनुष्याणां कारणं बन्धमोक्षयोः**' इति सर्वेषां कर्मिणां मनःप्राधान्योपदेशाच्च मुमुक्षूणां उपासने न ह्यासननियम इति प्राप्ते वदामः—

श्वेताश्वतर-कैवल्याद्युपनिषत्सु ब्रह्मविद्याकामानां आसनपूर्वकत्वेन तदुपासनविध्युपदेशात् आरूढानां आसननियमाभावेऽपि आरुरुक्षूणामासनमुद्राळक्ष्याभ्यासनियमो न विरुध्यते। '**साधनं विना साधनाऽनिष्पत्तेः**' इति न्यायात् ।' स्थितिगत्योः प्रबलसापेक्षत्वात् शयाने च निद्रासम्भवात् आसीनस्यैव चित्तैकाग्रता भवति। तस्मात् '**आसीनस्सन् ब्रह्मोपासनमनुतिष्ठेत**' इति शास्त्रनियमावगमात् आसनपूर्वकत्वेन दहराद्युपासनं मुमुक्षुभिः कर्तव्यम् ।

अत्र हेत्वन्तरमाह—

## ॥ ३०४ ॥ ध्यानाच्च ॥ ८ ॥

'**तस्याभिध्यानाद्योजनात्तत्त्वभावात्**' इति श्वेताश्वतरे समासीनस्यैव ध्यानविधेरुपदेशात्। कैवल्ये तद्वत् '**विविक्तदेशे तु सुखासनस्थः शुचिः समग्रीवशिरः शरीरः**' इत्यादिना समासीनस्यैव '**हृत्पुण्डरीकं विरजं विशुद्धम्**' इत्यारभ्य '**उमासहायं परमेश्वरं प्रभुं ···· ध्यात्वा मुनिर्गच्छति भूतयोनिम्**',

'आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिं ।
ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः ॥'

इत्यादिना समासीनस्यैव ब्रह्मोपासनरूपध्यानं समञ्जसम् । सकलेतवरवस्तुपरित्यागपूर्वकशिवैकविषयचित्तवृत्तिरेव ध्यानम् ।

पुनर्हेत्वन्तरमाह—

## ॥ ३०५ ॥ अचलत्वं चापेक्ष्य ॥ ९ ॥

'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ।'
'यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥'

इत्यादिना अचलत्वं निश्चलत्वं चापेक्ष्य उद्दिश्य आसीन एव परमेश्वरध्यानं कुर्यादित्यर्थः ।

पुनर्हेत्वन्तरमाह—

## ॥ ३०६ ॥ स्मरन्ति च ॥ १० ॥

'न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरं ।
लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवञ्च ॥'

इत्यादिना श्वेताश्वतरे समासीनस्य शिवध्यानयोगनिष्ठस्य महिमानं बहुधा स्मरन्ति । चकारोऽत्र निश्चयार्थः ।

'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् ॥

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्यात् योगमात्मविशुद्धये ॥'

इत्यादिना स्मृतावपि तद्वदुपदिश्यते ।

पुनर्हेत्वन्तरमाह—

## ॥ ३०७ ॥ यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

'देवागारे तरुमूले गुहायां वसेदसङ्गो लक्षितशीलवृत्तः ।
निरिन्धनज्योतिरिवोपशान्तः न चोद्विजेद्ब्रह्मविदत्र लोके ॥

[1]दुष्टाश्वयुक्तमिव वाह[2]मिदं विद्वान्मनो धारयति प्रमत्तः ।
समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः ॥
मनोऽनुकूले न च नेत्रपीडने गुहानिवाताश्रयणे प्रयोजयेत् ॥'

---

[1] दुष्टाश्व (ज) [2] मेनं (ज)

इत्यादिना एकाग्रतानुकूलदेशकालविशेषाश्रयणात् **एकाग्रतानुकूलो यो देशः कालश्च स एवोपासनस्य देशः कालश्चेति** शास्त्रे निर्णीयते। तस्मात् नदीतीर-देवालय-पुण्यक्षेत्रस्य ग्राम-मध्ये **यत्र**– यस्मिन् प्रदेशे, **मनसः एकाग्रता** चित्तप्रसन्नत्वं, **तत्र** ध्यानं निरन्तर-शिवोपासनात्मकं कर्तव्यम्। कुतः? ॥ **अविशेषात्** ॥ शुद्धान्तःकरणस्य सर्वत्रापि मनः प्रसादस्य तुल्यत्वादिति निश्चीयते।

आसनमुद्रालक्ष्याभ्यासेन शिवध्यानं कति संवत्सराणि मुमुक्षुभिः कर्तव्यं इत्या-काङ्क्षायामाह–

## ॥ ३०८ ॥ आप्रयाणात्तत्रापि हि दृष्टम् ॥ १२ ॥

'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' इति श्रुतिदर्श-नात्, **आप्रयाणात्**– आमरणादनुवर्तनीयं शिवध्यानम्। कुतः? ॥ **तत्रापि हि दृष्टम्** ॥

**'ज्ञात्वा देवं विश्वपाशापनीतः क्षीणैः क्लेशैः जन्ममृत्युप्रहाणिः।'**
**'तस्याभिध्यानात्तृतीयदेहभेदे विश्वैश्वर्यं केवलं आप्तकामः॥'**

इत्यादिना तृतीयदेहसंज्ञिकतमोऽज्ञाननिवृत्तिपूर्वकशिवसाक्षात्कारपर्यन्तं शिवोपासनं दृष्टम्।

'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम्।
तं तमेवैति तत्त्वज्ञस्सदा तद्भावभावितः॥'

इति स्मृतौ कळेबरपतने शिवतादात्म्यं शिवोपासकानामुपदिष्टम्। स्थूलकळेबरस्य बहुवार-पतनादर्शनात् **'त्यजेदन्ते कळेबरम्'** इत्यनेन कारणदेहपतनमेवावगम्यते। अतः कारणदेहसंज्ञिकपाशविच्छेदनार्थं श्रवण-कीर्तन पूजादिनियमेन शिवयोगाभ्यासः मुमुक्षूणामावश्यक इति निर्दिश्यते।

---

## तदधिगमाधिकरणम् ॥ ६ ॥

### जगद्वासनायुक्तानां विदुषां आगामिसञ्चितकर्मक्षयात् अनुभवेन प्रारब्धनाशः निर्जगद्वासनायुक्तानां तु चतुर्विधकर्मक्षयविचारश्च

शयानस्य निद्रादिपीडितत्वेन, गमनस्य कण्टकादिबाधकत्वेन, तिष्ठतः पादवेदनाजनकत्वेन, समासीनस्यै सदाशिवोपासनमावश्यकमित्युक्तं ; तथापि '**अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम्**', '**नाऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि**' इति स्मृतिदर्शनात् उपासकस्य किं कर्मफलमित्याकाङ्क्षायामधिकरणान्तरेण निराकरोति—

॥३०९॥ **तदधिगम उत्तरपूर्वाघयोः रश्लेषविनाशौ तद्व्यपदेशात्** ॥१३॥

**तदधिगमे**— तस्य परमशिवस्य अधिगमे— ध्यानोपासनया साक्षात्कारे सति **उत्तरपूर्वाघयोः** आगामि-सञ्चितपापयोः **अश्लेष-विनाशौ** भवतः । आगामिपापस्य असंस्पर्शः, सञ्चितपापस्य विनाशश्च भवति । कुतः ? ॥ **तद्व्यपदेशात्** ॥

**'तद्यथा पुष्करपलाश आपो न संश्लिष्यन्ते ।**
**तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत ॥'**

**'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ॥**
**ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ॥'**

इत्यादिस्मृतिष्वागामिसञ्चितकर्मणोः अश्लेषविनाशव्यपदेशादित्यर्थः ।

सञ्चित-प्रारब्धातीतागामिभेदेन कर्माणि चतुर्विधानि ।

तत्र पूर्वजन्मकृतानि भविष्यद्देहजननयोग्यानि स्वर्गादिफलोद्देशेन कृतानि कर्माणि सञ्चितानि ।

महता प्रयासेन श्रवण-कीर्तन-मनन-पूजादिमोक्षसाधकवर्तमानशरीरारम्भकाणि पूर्वजन्म-सुकृतानि कर्माणि **प्रारब्धानि**।

'ब्रह्मसाक्षात्कारोपपत्तेः पूर्वस्मिन् जन्मनि जन्मान्तरे वा ब्रह्मसाक्षात्कारोद्देशेन कृतानि कर्माणि **अतीतानि**।

ब्रह्मसाक्षात्कारानन्तरं अस्मिन् जन्मनि कृतानि कर्माणि **आगामीनि**।

तत्र चतुर्विधकर्मसु सञ्चितानां भविष्यद्देहपरम्परारूपं फलमनुत्पाद्यैव नाशः। आगामिनाञ्च कर्मणां देहाभिमानगळितत्वेन कृतत्वात् फलजननसामर्थ्यं न सम्भवति। तथा च **स्मृतिः** –

प्रारब्धं भोगतो नश्येत् तत्त्वज्ञानेन सञ्चितम्।
आगामिद्वितयं कर्म तद्वेषिप्रियवादिनोः॥

'यथा रविस्सर्वरसान् प्रभुङ्क्ते हुताशनश्चापि च सर्वभक्षकः।
**तथा च योगी विषयान् प्रभुङ्क्ते न लिप्यते पुण्यपापैश्च शुद्धः॥**

इत्यादिषु ब्रह्मोपासकानां सर्वकर्मक्षयफलावगमात् **'अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम्'** इत्यादिस्मृतीनां अज्ञानिविषयत्वमिति सूत्रसूक्ष्मार्थः।

पूर्वाधिकरणे विद्यास्वरूपं विशोध्य विद्याफलविचारणार्थमिदमधिकरणमारभते।

ब्रह्मविद्याप्राप्तौ पुरुषस्योत्तर-पूर्वाघयोरश्लेष-विनाशौ श्रूयते। **'यथा पुष्करपलाश आपो न श्लिष्यन्ते। एवमेवं विदि पापं कर्म न श्लिष्यते। तस्यैवात्मा परावरं विदित्वा न कर्मणा लिप्यते पापकेन'** इत्युत्तराघाश्लेषः। **'तद्यथेषिका तूलमग्नौ प्रोतं प्रदूयेतैव ह्यस्य सर्वे पाप्मानः प्रदूयन्ते। चीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।'** इति पूर्वाघविनाशः। एतावदश्लेषविनाशौ विद्याफलभूतौ उपपद्येते न वेति **संशयः**।

किं युक्तम्? नोपपद्येते इति। कुतः? **'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि'** इत्यादिशास्त्रविरोधात्। अश्लेषविनाशव्यपदेशस्तु मोक्षसाधनभूतविद्याविधायक-वाक्यशेषगतः कथञ्चिद्विद्यास्तुतिप्रतिपादनादप्युपपद्यते। न च विद्यापूर्वोत्तराघयोः प्रायश्चित्त-

प्रायश्चित्ततया विधीयते। येन प्रायश्चित्तेन अघविनाश उच्येत। विद्या हि **'ब्रह्म विदाप्नोति परं' 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति', 'ब्रह्म वेद ब्रह्मैव भवति'** इति ब्रह्मप्राप्त्युपायतया विधीयते। अतो विद्यार्थवादोऽयमघविनाशाश्लेषव्यपदेश इत्येवं प्राप्तेऽभिधीयते—

॥ **तदधिगम** इति ॥ विद्याप्राप्तौ पुरुषस्य विद्यामाहात्म्यादुत्तरपूर्वाघयोरश्लेष-विनाशौ उपपद्येते। कुतः? एवं विधं हि विद्यामाहात्म्यमवगम्यते। **'एवं विदि पापं कर्म न श्लिष्यते। एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते।' 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैति'** इत्यादिबहुश्रुतिदर्शनात्।

न च **'नाभुक्तं क्षीयते कर्म'** इत्यनेन शास्त्रेणास्य विरोधः; भिन्नविषयत्वात्। तद्धि कर्मणां फलजननसामर्थ्यं द्रढिमविषयम्। एतत्तूत्पन्नायाः विद्यायाः प्राक्तनानां पापानां फलजननशक्तिविनाशसामर्थ्यं, उत्पत्स्यमानानाञ्च फलजननशक्त्युत्पत्तिप्रतिबन्धकरण-सामर्थ्यञ्च प्रतिपादयतीति द्वयोर्विषययोर्भिद्यते। यथाग्निजलयोरौष्ण्यं तन्निवारणसामर्थ्यञ्च विषययोर्द्वयोः प्रमाणयोरपि विषयभेदात् प्रामाण्यम्। एवमत्रापि न कश्चिद्विरोधः। अघस्याश्लेषकरणं वैदिककर्मयोग्यतावासना प्रत्यवायहेतुशक्त्युत्पत्तिप्रतिबन्धकरणम्। अघानि हि कृतानि पुरुषस्य वैदिकर्मयोग्यतां सजातीयकर्मान्तरारम्भरुचिं प्रत्यवायञ्च कुर्वन्ति। अघस्य विनाशकरणं उत्पन्नायास्तच्छक्तेर्विनाशकरणम्। शक्तिरपि परमपुरुषाप्रीतिरेव। तदेवं विद्यावेदितुर्वेद्यार्थप्रियत्वेन स्वयमपि निरतिशयप्रियानतिवेद्यभूतपरमपुरुषशिवाराधनरूपा पूर्व-कृताघसञ्चयजनितपरमपुरुषाऽप्रीतिं विनाशयति। सैव विद्या स्वोत्पत्त्युत्तरकालभाव्यघनिमित्त-परमपुरुषाप्रीत्युत्पत्तिञ्च प्रतिबध्नाति। तदिदमश्लेषवचनं प्रामादिकविषयं मन्तव्यम्।

**'नाविरतो दुश्चरितात्'** इत्यादिना आप्रयाणात् अहरहरुत्पद्यमानाया उत्तरोत्तराति-शययोगिन्याः विद्यायाः दुश्चरितविरतिनिष्पाद्यत्वाद्यवगमात् विदुषां जगद्वासनायुक्तानां आगामिसञ्चितकर्मक्षये सति प्रारब्धमात्रं अनुभवेन जहाति। निर्जगद्वासनानां **'अयस्कान्त-सूचीन्यायेन** सन्ततशिवाकाराकारितचित्तानां चतुर्विधकर्मनाशो भवतीति निश्चीयते। तथा **स्कान्दे—**

**'ब्रह्मवित्सर्वकर्माणि श्रौतस्मार्तानि भक्तितः।**
**कृत्वा काम्यानि संत्यज्य संसारीव प्रवर्तते॥**

ब्रह्मविद्वरयोगी तु श्रौतस्मार्तानि सर्वदा ।
संन्यज्य पूर्णवैराग्यसिध्या वेदान्तचिन्तनम् ॥

ध्यानंनिष्ठां परां लब्ध्वा भैक्ष्यान्नं प्राशयेन्मितम् ।
वरीयाख्यो ब्रह्मविच्च सर्वव्यापारमुत्सृजन् ॥

निरन्तरशिवध्याननिष्ठानुष्ठानबोधतः ।
विश्वविस्मरणं प्राप्य सुखबद्धासनाश्रयः ॥
परदत्तान्नपानादीन् प्राशयित्वा निराशया ।
वसेदेकत्र निरतो नित्यानन्दस्वभावतः ॥

वरिष्ठाख्यो ब्रह्मविच्च शिवतत्त्वे निरन्तरम् ।
चित्तं विलाप्य ध्यानेन जीवत्यक्तशरीरवत् ॥
स्वबुध्या परबुध्या च पुनरुत्थानमार्गकम् ।
सन्त्यज्य शिवतादात्म्यसिध्या योगी वसेत्सदा ॥

चतुर्णां मुक्तिरेकापि तारतम्यं प्रदृश्यते ।
प्रथमस्य द्वितीयस्य प्रारब्धं विद्यते सदा ॥

तृतीयस्य तु प्रारब्धवार्तानुभव एव हि ।
चतुर्थस्य तु प्रारब्धं न स्पृशेन्न च लिप्यते ॥ इति ।

---

## इतराधिकरणम् ॥ ७ ॥

शक्तिपातमहिमाफलभूतशिवज्ञानोत्तरकालिकपुण्याऽपुण्यकर्मासंस्पृष्टता जीवस्य

ननु ब्रह्मविद्वरिष्ठस्य मनश्शून्यत्वेन ज्ञानानन्तरगामिकर्माभावतया कर्मनिर्लिप्तत्वं युक्तम् ; ब्रह्मविदादीनां अज्ञानकृतसर्वकर्मणां ज्ञानेन विनष्टत्वेऽपि शिवज्ञानानन्तरकृतागामिकर्मणां का गतिरित्याशङ्कायामधिकरणान्तरं दर्शयति—

## ॥ ३१० ॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

**पाते** गुरुकटाक्षलब्धशक्तिपाते तु शिवज्ञानोत्तरकालिकपुण्यापुण्यकर्मणः **असंश्लेषः** असंस्पर्शो भवति। शक्तिपातदीक्षाभावेऽपि गुरूपदेशपूर्वकदृढशिवयोगमहिम्ना 'विच्छिन्नपाशाऽविद्याऽज्ञानमायादिसंज्ञिकतमोरूपकारणदेहानां'[1] पुरुषाणामप्येवमुपलक्षणं द्रष्टव्यमिति सूत्रसूचितसूक्ष्मार्थः। 'गलितपाशानां शिवज्ञानवतां [2]पुरुषाणां' तज्ज्ञानोत्तरकृतपुण्यापुण्यरूपागामिकर्मणां निवृत्तिस्सम्भवति नवेति सन्दिह्यते।

ज्ञानपूर्वकालकृतकर्मणां पुण्यापुण्यरूपाणां श्रुतिस्मृतिप्रामाण्यदर्शनान्निवृत्तिरस्तु। ज्ञानोत्तरकालजनितकर्मणां नष्टत्वं न सम्भवति। नष्टत्वं हि पुण्यकर्मणां? उत पापकर्मणां वा? नाद्यः— पुण्यकर्मणां ज्ञानाविरोधित्वात् परमेश्वराज्ञारूपत्वाच्च ; नान्त्यः— ज्ञानपूर्वकपापानां शास्त्रे प्रायश्चित्तादर्शनात् पापकर्माचरणे ज्ञानभङ्गप्रसङ्गाच्च ; सर्वथा ज्ञानोत्तरकालकृतकर्मक्षयो विदुषां न घटत इति प्राप्ते प्रचक्ष्महे—

'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥

---

[1] पाशाविद्याज्ञानमायादि संज्ञिका तमोरूपकारणदेहविच्छेदपुरुषाणां (ज्ञ) [2] मायापाशपतन शिवज्ञानवतां पुरुषाणां (ज्ञ).

ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ।
प्रारब्धं भोगतो नश्येत् तत्त्वज्ञानेन सञ्चितम् ॥
आगामिद्वितयं कर्म प्रद्वेषिप्रियवादिनोः ॥

इत्यादिश्रुतिस्मृतिषु सर्वकर्मक्षयत्वस्य विदुषामवगमात्, विनिगमकादर्शनात् शिवज्ञानस्य महामहिमातिशयस्य प्राचीनबहुजन्मकृतपुण्यापुण्यकर्मनाशकशक्तिसत्वेन ज्ञानोत्तरकालकृतकर्मनाशकत्वं किं न स्यात् ? श्रुतिस्मृतिसङ्कोचे मानाभावात्; पुण्यस्यापि पापवत् शिवज्ञानप्रतिबन्धकत्वात् सर्वशिवात्मकभावकृतपुण्यकर्मणां तस्य कर्तृत्वाभावेन निर्लेपत्वं युक्तम् । मूढविदुषः स्वाहंकारेण पापाचरणाभावेऽपि प्रारब्धवशात् प्रमादजनितपापानां असंस्पृष्टमविरुद्धम् । तदुक्तं सिद्धान्तागमे-

'शिवभावनया सर्वं नित्यनैमित्तिकादिकम् ।
कुर्वन्नपि महायोगी गुणदोषैर्न लिप्यते ॥'

इति दर्शनात् शिववत् शिवयोगिनामपि सर्वकर्मासंस्पृष्टत्वं सिद्धम् ।

---

## अनारब्धकार्याधिकरणम् ॥ ८ ॥

### शास्त्राध्ययनजन्यशिवज्ञानप्राप्यकालान्तरभाविमुक्तिफल-निर्वासनाजन्यशिवज्ञानप्राप्य-सशरीरपरशिवस्वरूपफलावाप्त्योः विस्तारः

विदुषां आगामिजनितकर्मभिरसंस्पृष्टत्वमिति यदुक्तं तदसङ्गतम् । जडभरतादीनां सुकृतदुष्कृते अनारब्धकार्ये अप्रवृत्तफलेऽपि च विद्यया न नश्यते; कुतः? जन्मत्रय-दर्शनात्; इत्याशङ्कायामधिकरणान्तरमाह—

## ॥ ३११ ॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

**पूर्वे** शिवज्ञानोत्पत्तेः पूर्वं शुद्धजीवानां आरुरुक्षूणां सुकृतदुष्कृते अनारब्धकार्ये अप्रवृत्तफले एव विद्यया नश्यतः; कुतः? **तदवधेः 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये'** इत्यत्र शिवज्ञानसम्पूर्णसिद्धिपर्यन्तं बद्धजीववत् शुद्धजीवानां मोक्षविलम्बावगमात् जडभरतादीनां निर्वासनापूर्वकशिवज्ञानसिध्यभावेन विलम्बमुक्तिः । निर्वासनशिवज्ञाननिष्ठानां वामदेवादीनां अविलम्बमुक्तिरित्यविरोध इति सूत्रसूचितसूक्ष्मार्थः ।

शिवज्ञानवतां सर्वेषामागामिफलभोगनिवृत्तिपूर्वकसद्योमुक्तिः उत अधिकारितारतम्येन विलम्बमुक्तिः सम्भवति वेति सन्दिह्यते ।

**'यावदुत्पद्यते ज्ञानं तावदनुष्ठेयानि कर्माणि'** इति श्रुतौ ज्ञानोत्पत्तिमात्रेण सर्वेषां सर्वकर्मत्यागावगमात् ज्ञानमात्रेणैव सद्योमुक्तिः सम्भवति । तदनङ्गीकारे **'ज्ञानादेव तु कैवल्यं नान्यः पन्था विमुक्तये'** इति बहुश्रुतिभङ्गप्रसङ्गः; इति प्राप्ते प्रचक्ष्महे—

शिवज्ञानसिद्धिं विना वैद्यशास्त्रादिज्ञानवत् परोक्षज्ञानेन पाशविच्छेदपूर्वकशिवत्व-प्राप्तिर्न घटते ।

**'अनुभूतिं विना मूढो वृथा ब्रह्मणि मोदते ।**
**प्रतिबिम्बितशाखाग्रफलास्वादनमोदवत् ॥'**

इत्यादिश्रुतिषु शास्त्रजन्यापरोक्षज्ञाननिन्दाश्रवणात् केवलज्ञानशब्देनेच्छापर्यायत्वेन तदिच्छायाः पुरुषार्थत्वायोगात् 'यावदुत्पद्यते ज्ञानं' इत्यादिश्रुतिषु ज्ञानशब्देन शिवयोगोपासनासिद्धिरवगम्यते। 'श्रद्धाभक्तिध्यानयोगादवेहि' 'आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिम्।' इत्यादिषु उपासनाज्ञानसिद्धानामेव पाशनिवृत्तिपूर्वकशिवत्वप्राप्तेरुपदेशात् ज्ञानसिद्धिरूपापरोक्षज्ञानस्यैव मोक्षहेतुत्वम्। 'अस्ति ब्रह्म' इत्यादिशास्त्रजन्यपरोक्षज्ञानस्य कालान्तरमोक्षफलजनकत्वमिति निश्चीयते। 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्य इति श्रुतौ तद्वद्दर्शनात् श्रुत्यर्थस्तु तस्य वासनायुक्तशिवज्ञानस्य परोक्षानुभवस्य तावदेव चिरं, तावदेव कैवल्यस्य कालविलम्बः। यावन्नविमोक्ष्ये यावत् प्रारब्धकर्म न विमुच्यते अथ सम्पत्स्यते।

अथ प्रारब्धकर्मनाशानन्तरं संपत्स्यते विदेहकैवल्यं प्राप्नोतीत्युपदिशति। एतेन शास्त्रजन्यशिवज्ञानाभ्यासवतामुपासकानां कालान्तरमुक्तिफलत्वं, निर्वासनापूर्वकशिवज्ञानसिद्धानां एतच्छरीरेणैव पाशनिवृत्तिपूर्वकपरशिवतत्त्वात्मकत्वं निश्चीयते।

---

## अग्निहोत्राधिकरणम् ॥ ९ ॥

**निर्वासनावासितान्तःकरणपरिपूरित-निराभार-परमविरक्तधर्माश्रमिणां कर्मत्यागौचित्यस्य तद्भिन्नानां शिवोपासकानामपि तत्त्यागानौचित्यस्य विनिर्णयः**

ननु 'रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्या' इति श्रुतौ अग्नेशिवशरीरत्वनिर्देशात्, 'यावज्जीवं अग्निहोत्रं जुहोति', 'य एवं विद्वानग्निहोत्रं जुहुयात्' इत्यादौ विद्वदविद्वदावश्यकत्वेन चोदनावगमात्,

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तः चिकीर्षुर्लोकसंग्रहम् ॥

इति स्मृतौ तद्द्वयवस्थापनात् कथमग्निहोत्रादिकर्मणामावश्यकत्वं नास्ति ? इत्याशङ्कायामधिकरणान्तरेणाह—

## ॥ ३१२ ॥ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

शिवज्ञानोद्देशेन कृतमग्निहोत्रादिकं तत्कार्याय ज्ञानरूपकार्यायैव भवति । कुतः ? तद्दर्शनात् । **'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति', 'यज्ञेन दानेन तपसाऽनाशकेन'** इत्यादिश्रुतिषु अग्निहोत्रादीनां शिवज्ञानसाधनत्वेन शिवज्ञानं प्रत्युपजीव्यत्वात् ब्रह्मज्ञाननाश्यत्वं नास्तीत्युपदिश्यते । तदुक्तं शिवगीतासूपनिषत्सु—

'कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते ।
इष्टापूर्तादिकर्माणि येनाचरति मानवः ॥
शिवार्पणधिया कामान् परित्यज्य यथाविधि ॥'

इत्यादिना बहुधा प्रपञ्चितम् । यद्यपि कर्मणां फलनाश्यत्वात् फलभूतेन ब्रह्मज्ञानेन नाशोऽस्त्येव । तथापि फलत्वेन रूपेणैव शिवज्ञानस्य कर्मनाशकत्वं न तु ज्ञानत्वेन रूपेणेति सूत्रसूचितसूक्ष्मार्थः ।

पूर्वाधिकरणे शिवज्ञानपूर्णनिष्ठानां सद्योमुक्तिः, शास्त्रीयपरोक्षशिवज्ञानवतां शम-दम-वैराग्योपरति-जीवकारुण्यादिधर्मरहितानां उपासकानां परम्परयामोक्षफलमुपदिष्टं ; तथैव यावज्जीवं शिवोपासनमप्युपपादितम् ; इह तु **'विद्वानग्निहोत्रं जुहुयात्'** **'न कर्मणा न प्रजया धनेन'** इत्यादिषु सावकाशाग्निहोत्रचोदनावगमात् यावच्छरीरपातपर्यन्तं अग्निहोत्रादि-कर्मानुष्ठानं विधेयं उत ज्ञानोत्पत्तिपर्यन्तं ? इति सन्दिह्यते ।

**'यावज्जीवमग्निहोत्रं जुहुयात्'**, 'अहरहस्सन्ध्यामुपासीत' इत्यादिबहुश्रुतिषु याव-ज्जीवविध्युपदेशात् । विदुषामविदुषामभ्युदयफलहेतुकर्मानुष्ठानमावश्यकमिति प्राप्तेऽभिधीयते—

यावच्छरीरेषणत्रयवासना दृश्यते तावत्कालं सर्ववासनानिर्मुक्तशिवज्ञानसिध्यर्थं फला-भिसन्धिरहितपरमेश्वरार्पितकर्मानुष्ठानमारुरुक्षूणां शिवज्ञानवतां आवश्यकम् । एवं शिवज्ञान-दृढफलकत्वात् **'तमेतं वेदानुवचनेन ब्राह्मणाविविषन्ति'** **'यज्ञेन दानेन तपसाऽ-नाशकेन'** इत्यादिना अग्निहोत्रादीनां विद्यासाधनत्वं विधायाश्च आप्रयाणादभ्यासा-धेयातिशयायाः अहरहरुत्पाद्यत्वात् तदुत्पत्यर्थं आश्रमकर्म शिवार्पणबुध्या अनुष्ठेयमेव । अन्यथा अश्रमकर्मलोपे दूषितान्तःकरणस्य विद्योत्पत्तिरेव न स्यात् । **'तमेतं वेदानु-वचनेन'** इत्यत्र वेदानुवचनं वेदाभ्यासः । परमशिवप्राप्तिफलसाधनज्ञानमध्यात्मवादिनां वेदमन्त्राणां जपावृत्तिः ।

## शतरुद्रीयजपमाहात्म्यम्

तथा जाबालोपनिषदि **'अथैनं ब्रह्मचारिण ऊचुः'** **'किं जप्येनामृतत्वं ब्रूहि'** इति । 'सहोवाच याज्ञवल्क्यः—'शतरुद्रीयेणेत्यदि' 'एतानि ह वा अमृतस्य नामधेयान्येतैर्हवाऽमृतो भवति' इति । कैवल्ये— **'यः शतरुद्रीयं ब्राह्मणो नित्य-मधीतसौऽग्निपूतो भवति स वायुपूतो भवति, सुरापानात्पूतो भवति, स्वर्णस्तेयात् पूतो भवति, ब्रह्महत्यायाः पूतो भवति, तस्मादविमुक्तमाश्रितो भवति, अत्याश्रमी सर्वदा सकृद्वा जपेत् ; अनेन ज्ञानमाप्नोति संसारार्णवतारकम् । तस्मादेवं विदित्वैनं कैवल्यं पदमश्नुते'** इति । इह **शतरुद्रीयसंज्ञिकानां** ब्रह्मबोधकमन्त्राणां संस्मरणात् संसारतारणज्ञानोत्पत्तिविध्यवगमात् **'वेदश्शिवश्शिवो वेदः वेदाध्यायी सदाशिवः'** इत्यादि **स्मृतिषु** **'ईशानस्सर्वविद्यानां'** इत्यादिश्रुतिषु च वेदस्य शिवात्मकत्वस्य शिवाधीनत्वस्य च द्यो.तेऽपि साक्षाच्छिवतत्त्वप्रतिपादकशतरुद्रीयपञ्चब्रह्मादिमन्त्राणां समुत्कृष्टत्वम् विरुद्धम् ।

**मद्यं पीत्वा गुरुदारांश्च गत्वा स्वर्णस्तेयं ब्रह्महत्याञ्च कृत्वा।**
**भस्माच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥**

इत्यादिना सामशाखायामपि शतरुद्रीयाधिक्य कथनात्। जाबाले– **'एतानि ह वा अमृतस्य नामधेयानि'** इति अमृतस्य अनादिमुक्तस्य शिवस्य नामधेयत्वाद्धेतोः **शतरुद्रीय**जपात्सर्वाघनाशः स्मर्यते।

अपि च– **'यश्चण्डालः शिव इति वाचं वदेत् तेन सह संवसेत् तेन सह भुञ्जीत'** अत्र हि शिवशब्दस्य ब्रह्मबोधकस्य समुच्चारणमात्रेण अत्यन्ताविशुद्धस्य पातकिनः परमशुद्धिर्विधीयते अन्यत्र **'योऽथर्वशिरसा ब्राह्मणो नित्यमधीयते'** इत्यारभ्य तदभ्यसनेन सर्वदुरितक्षयफलमुपदिश्य **'सकृज्जप्त्वा विशुद्धः पूतः कर्मण्यो भवति। द्वितीयं जप्त्वा गाणापत्यमवाप्नोति। तृतीयं जप्त्वा देवमेवानुप्रविशति;'** इति मोक्षफलमवगम्यते। **'आत्मानमरणिं कृत्वा'** इत्यादिषु शिवात्मकप्राणाभ्यासस्य पाशविच्छेदकस्य लक्षणमुच्यते। एवमन्यत्रापि वेदितव्यम्।

अतः शिवपराणां वेदमन्त्राणां पापक्षयद्वारा शिवज्ञानहेतुतया मोक्षसाधनत्वावगमात् **'तदभ्यासः कर्तव्यः'** **विद्यावतां** पूर्णवैराग्यनिष्ठारहितानां यावज्जीवमग्निहोत्रादियज्ञानां परशिवार्पित फलानां तदाज्ञासिद्धत्वात् तदाराधनरूपत्वाच्च वेदवदभ्यासः कर्तव्यः। एवं दानादीनामपि।

तस्मान्निर्वासनानां निराभारधर्माश्रयिणां कर्मत्यागस्योचितत्वेऽपि लौकिकैषणत्रयबद्धानां गृहिणां शिवोपासकानां कर्मत्यागः असमञ्जसः।

यदि अग्निहोत्रादिसाधुकृत्याः विद्योत्पत्त्यर्थाः, विद्योत्पत्तेः प्राचीनं च सुकृतं **'यावत्सम्पातमुषित्वा'**, **'प्राप्यान्तं कर्मणः'** इत्यनुभवेन विनष्टम् तर्हि **'सुहृदस्साधुकृत्यां'** इत्यस्य कोविषयस्तत्राह–

## ॥ ३१३ ॥ [1]अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

---

[1] अतोऽन्यदपीत्येकेषामुभयोः (झ)·

"अतः अग्निहोत्रादिसाधुकृत्यायाः विद्योत्पत्त्यर्थायाः अन्यापि विद्याधिगमात्पूर्वोत्तरयोरुभयोरपि पुण्यकर्मणोः प्रबलकर्मप्रतिबद्धफला साधुकृत्याऽनन्ता सम्भवत्येव। तद्विषयमिदमेकेषां शाखिनां वचनम्। **'तस्य पुत्रा दायमुप यन्ति; सुहृदस्साधुकृत्याम्'** इति विद्यया अश्लेषविनाशश्रुतिश्च तद्विषया"।

तस्माच्छिवार्पिताग्निहोत्रादिवैदिकद्वैतकर्मिणां **भ्रमरकीटन्यायवत्** जीवभावनिवृत्तिपूर्वकशिवत्वप्राप्तिरूपसिध्यङ्गत्वेन सर्ववेदान्तार्थविज्ञाननिधानभूत-**जैमिनि-बादरायणादिपूर्वाचार्यै**र्व्यवस्थापनात्। **द्वैताद्वैतमत**मेव वैदिकानां मुमुक्षूणां आवश्यकमिति निश्चीयते। एतेन श्रुत्याभासप्रधानाध्यारोपापवादविधायकजगन्मिथ्याद्वैतं सर्वथा मुमुक्षुभिर्नाश्रयणीयमिति वेदितव्यम्।

ननु **'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति'** इत्यादिश्रुतिभिस्सर्वेषां पुण्यकर्मणां ज्ञानसाधनत्वेन चोदनावगमात् ज्ञानसाधनभूतत्वं कर्मणां सम्भवतीति यदुक्तं तदयुक्तम्; **'निष्कलं निष्क्रियं शान्तं'** इत्यादिश्रुतिषु, **'तथा च तदधिगम'** इति सूत्रे च ब्रह्मणो निर्विशेषत्व-निर्विषयत्वादिधर्मप्रदर्शनात्; इत्याशङ्कायामाह—

## ॥ ३१४ ॥ यदेव विद्ययेति हि[1] ॥ १८ ॥

**'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति'** इति श्रुतौ यत्कर्म विद्यया **दहर-शाण्डिल्याद्युपासनया** सहकृतं तदेव कर्म अस्मिन् जन्मनि ब्रह्मज्ञानसाधनं, **'यदेव विद्यया करोति'** इत्यत्र दहराद्युपासनारहितपरमेश्वरार्पितज्योतिष्टोमादिकर्मणः कालविलम्बेन ब्रह्मज्ञानसाधनत्वं भवतीत्युपदिश्यते। हिकारो निश्चयार्थः।

**'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'** इत्यत्र ब्रह्मशक्तेः स्वाभाविकत्वव्यपदेशात् न निर्विशेषत्वाद्युपपत्तिः; तथापि **'निष्कलं निष्क्रियं'** इत्यादिश्रुतीनां शक्तिसङ्कोचकालविषयत्वं **'प्रधानक्षेत्रज्ञ पतिर्गुणेशः'** इत्यादिश्रुतीनां शक्तिविकासावस्थाविषयत्वमिति **'लोकवत्तु लीलाकैवल्यम्'** इत्यादिसूत्रानुसारेण पूर्वमेवोक्तम्। **'तदधिगम'** इति सूत्रं न निर्विशेषविषयमिति निर्धार्यते।

---

[1] विद्याज्ञानाधिकरणम्

## भोगाधिकरणम् ॥ १० ॥

### मुक्तेः पुण्य-पापफलानुभोगसमनन्तरप्राप्यतानिर्णयः

ननु तथापि दहराद्युपासकानां विदुषां पुण्यापुण्यरूपप्रारब्धकर्मक्षयः कथं सम्भवतीत्याशङ्कायामधिकरणान्तरेणाह—

## ॥ ३१५ ॥ भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ॥ १९ ॥

विद्वान् भक्तः **भोगेन** सुखदुःखात्मकप्रारब्धभोगेन भाविशरीरजनकागामिरूपपुण्यपापे विद्यामहिम्ना **क्षपयित्वा** नाशयित्वा, स्वेच्छानुसारेण चतुर्विधमुक्तिं [1]**सम्पद्यते** प्राप्नोतीति सूत्रसूचित सूक्ष्मार्थः ।

पूर्णाधिकारिणां साक्षादिह शरीरे मुक्तिः : मन्दप्रज्ञानां जन्मत्रयेण ; केवल परमेश्वरार्पितवैदिककर्मणां बहुजन्मपरम्परया ज्ञानहेतुत्वमात्रं पूर्वाधिकरणे अभिहितम् । पूर्वत्र विद्यायाः पुण्यापुण्यनाशहेतुत्वव्यपदेशात्, [2]विद्यावतां पुंसामिह शरीरेण शरीरान्तरेण वा विद्या फलिष्यतीति । अत्र सन्दिह्यते ।

'**तस्य तावदेव चिरं यावन्नविमोक्ष्ये**' इति श्रुतौ शरीरमोक्षावसानत्वश्रवणत् सर्वेषां ज्ञानवतां एतच्छरीरावसाने मुक्तिः सम्भवति । प्रारब्धभोगक्षयार्थं बहुशरीरस्वीकारे विद्यायाः अपुरुषार्थत्वं सम्भवति । पूर्वविद्यायामिव तदुत्तरविद्यायामपि पुरुषेण यत्कर्म क्रियते तदपि फलभोगाय भवत्येव । तस्माज्जन्मपरम्पराविच्छेदायोगात्सर्वथा मुक्तिर्न सम्भवतीति प्राप्ते वदामः—

'**भोगेनत्विति**' तुशब्दः पक्षव्यावृत्त्यर्थः । इतरे आरब्धकार्ये पुण्य-पापे प्रारब्धफलभोगेन क्षपयित्वा तद्भोगसमाप्त्यनन्तरं ब्रह्म सम्पद्यते च । पुण्यपापे एकशरीरभोग्य-

---

[1] प्राप्नुत (ग). [2] अत्र पिद्यवतां (ग).

फले चेत् तदवसाने ब्रह्म सम्पद्यते ; भोगेनैव क्षपयितव्यत्वात् आरब्धफलयोः कर्मणोः 'तस्य तावदेव[1]चिरं' इति च भोगेन तयोः कर्मणोः मोक्ष उच्यते । देहावधि-नियमाश्रवणात् तदेवं ब्रह्मविद्यायाः प्रागनुष्ठितमभुक्तफलमनारब्धफलं पुण्यपापरूपं कर्म अनादिकालसञ्चितं अनन्तं विद्यामाहात्म्याद्विनश्यति ; विद्यारम्भोत्तरकालमनुष्ठितञ्च न श्लिष्यते । तत्र पुण्यरूपं सर्वं विदुषः सुहृदो गृण्हन्ति ; पापञ्च द्विषन्तः इति पूर्वमेवोक्तम् ।

इति श्रीमद्यतिव्रजपरिवृढ-श्रीपतिपण्डितभगवत्पादाचार्यस्वामिकृत-भेदाऽभेदात्मक विशेषाद्वैत-सिद्धान्तव्यवस्थापकवैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

श्रीकरभाष्ये

फलाध्यायसञ्ज्ञिकचतुर्थाध्यायस्य आवृत्त्यधिकरणादि दशाधिकरणावच्छिन्न आवृत्तिरसकृदुपदेशादित्याद्येकोनविंशतिसूत्रात्मक-

प्रथमः पादः समाप्तः

---

[1] चिरं यावत् न विमोक्ष्ये इति (ग).

## अथ श्रीकरभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः

### वागधिकरणम् ॥ १ ॥

### स्वं पादार्थभूतजीवोत्क्रान्तिदशाविशेषफलप्रदर्शनम्

पूर्वत्रोपासकानामेव मुक्तिरभिहिता। उपासकानामवस्था द्विविधा; मरण-उत्क्रान्ति-संज्ञिकाऽवस्थाभेदेन। तत्र मरणानन्तरं मूर्तब्रह्मोपासकानां अर्चिरादिमार्गेण निरतिशयानन्द-विभवशीलकल्याणविभूत्यात्मकशिवलोकप्राप्तिः। सुकृतिनान्तु धूमादिमार्गेण स्वर्गलोकप्राप्तिः। पापिनां तृतीयमार्गेण नरकलोकप्राप्तिः। **दहरभूमादिविद्यावशात्** निरवयवपरञ्ज्योतिर्मय-शिवतत्त्वसाक्षात्कारवतां अत्रैव परशिवज्योतिर्लिङ्गे लय इति वक्तुं प्रथमं सर्वसाधारण-मरणावस्थां दर्शयति—

## ॥ ३१६ ॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

### सर्वसाधारणमरणावस्थानिरूपणम्

वाक् इन्द्रियं, **मनसि** सम्पद्यते; कुतः? **तद्दर्शनात्**— लोके मुमुक्षूणां वाग्व्यापारना-शानन्तरमपि मनोव्यापारस्य द्योतनात्; **शब्दाच्च**। 'अस्य प्रयतो जीवस्य वाङ्मनसि सम्पद्यते; मनः प्राणे; प्राणोऽध्यक्षे; अध्यक्षस्तेजसि; तेजः परस्यां देवतायां;' इति श्रुतौ वागिन्द्रियस्य मनसि सम्बन्धव्यपदेशात् सुप्तिवन्मरणावस्थायामपि वागिन्द्रियं मनसि लीयत इति सूत्रसूचितसूक्ष्मार्थः।

उपासकस्य विदुषः गतिप्रकारमिदानीं चिन्तयितुमारभते। प्रथमं तावदुत्क्रान्ति-श्चिन्त्यते। तत्रेदमाम्नायते— '**अस्य सौम्य पुरुषस्य प्रयतो वाङ्मनसि**[1] **सम्पद्यते**' इत्यादि। अत्र वाङ्मनसि सम्पद्यत इति वाचो मनसि सम्पत्तिश्रुतिः किं वग्वृत्तिमात्र-

---

[1] सम्पद्यते। मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामिति अत्र (ग).

विषया उत वाग्विषयेति संशये[1] वृत्तिमात्रविषयेति युक्तम्; कुतः ? मनसो वाक्प्रकृतित्वाभावात्। अत्र वाक्स्वरूपसम्पत्यसम्भवात् वागादीनां मनोधीनत्वेन वृत्तिसम्पत्तिश्रुतिः कथञ्चिदुपपद्यते। लोके मृद्धटादिवत् कार्यस्य उपादाने लयावगमात् वागादीनां अब्लोपादानकत्वात् तस्मिन्नेव स्वातन्त्र्येण [2]'एवद्वृत्तिलय एव युक्त' इति प्राप्ते प्रचक्ष्महे—

"वाङ्मनसीति। वाक्स्वरूपमेव मनसि सम्पद्यते। कुतः ? **तथा दर्शनात्**। दृश्यते हि वागिन्द्रिये उपरतेऽपि मनःप्रवृत्तिः। तन्मात्रसम्पत्यापि तदुपपद्यत इति चेत् तत्राह— '**शब्दाच्चेति**'। '**वाङ्मनसि सम्पद्यते**' इति वाक्स्वरूपसम्पत्तावेव हि शब्दः न वृत्तिमात्रसम्पत्तौ। न हि तदानीं वृत्युपरमे वागिन्द्रियं प्रमाणान्तरेणोपलभ्यते; येन वृत्तिमात्रं सम्पद्यत इत्युच्यते। यदुक्तं मनसो वाक्प्रवृत्तित्वाभावात् वाचो मनसि सम्पत्तिर्नोपपद्यत इति तत् '**वाङ्मनसि सम्पद्यते**' इति वचनात्— मनसा वाक् संयुज्यते; न तु तत्र लीयत इति परितव्यम्।"

किञ्च— '**अस्य सौम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते इन्द्रियाणि मनसि सम्पद्यन्ते**' इति वचनात् उत्क्रान्तौ मनसः प्रागेव वागादीनामुपरमदर्शनाच्च वाङ्मनसि प्रथमं सम्पद्यते ततस्सर्वेन्द्रियाणि मनसि सम्पद्यन्त 'कार्यस्योपादाने लयः' इति यदुक्तं तन्नसम्भवति; स्वरूपलयस्यैवोपादानापेक्षत्वात्। अतो वागादीनां मनसि न सर्वरूपलय उच्यते; किन्तु वृत्तिलयः। यथाम्बुमध्यनिक्षिप्ताग्निकणस्य प्रकाशादिवृत्तिलयः तद्वदनुपादाने मनसि वागादीनां वृत्तिलयोऽपि निर्दिष्टः वृत्तिवृत्तिमतोर्भेदे सति अभेदसिद्धिदर्शनात्।

अत्र हेत्वन्तरमाह—

## ॥ ३१७ ॥ अत एव (च) सर्वाण्यानु ॥ २ ॥

"यतो वाचो मनसा संयोगमात्रं सम्पत्तिः न तु लयः, अत एव वाचमनु सर्वेषामिन्द्रियाणां मनसि सम्पत्तिश्रुतिरुपपद्यते '**तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः**' इति।"

---

[1] विशये (ज). [2] एतेषां लयो युक्तः (ग).

किञ्च सृष्टिमार्गेऽपि मनसः प्राधान्यं श्रूयते ; 'यद्धि मनसा ध्यायते तद्वाचा वदति ; तत् कर्मणा करोति ;' इति । शिवयोगसमाधिप्रकरणे—

'यच्छेद्वाङ्मनसि प्राज्ञः तद्यच्छेच्छान्त आत्मनि ।
ज्ञानमात्मनि महति तद्यच्छेच्छान्त आत्मनि ॥'

इत्यादिना वागादेर्मानसस्योत्कृष्टत्वमवगम्यते । तस्मान्मरणकालेऽपि वागिन्द्रियस्य मनसि लयत्वं न विरुध्यते ।

---

## मनोऽधिकरणम् ॥ २ ॥

### मनसः प्राणे लयविचारः

ननु वागादीन्द्रियेभ्यो मानसस्य समुत्कृष्टत्वेन मनसि वाग्वृत्तिलयः अस्तु, '**इन्द्रियाणां मनो नाथः**' इत्यादिशास्त्रयुक्त्यनुभवात्। तथापि मानसस्य कस्मिन् लयोपपत्तिः स्यादित्याशङ्कायामधिकरणान्तरमाह—

## ॥ ३१८ ॥ तन्मनः प्राण उत्तरात् ॥ ३ ॥

'मनः प्राणे सम्पद्यते' इति श्रुतौ,

**इन्द्रियाणां मनो नाथः मनो नाथस्तु मारुतः।**
**मारुते मध्यसञ्चारे मनःस्थैर्यं प्रजायते ॥**

इति वाक्ये मनसः प्राणाधीनत्वावगमात् मनः प्राणे लीयते। कुतः? तदुत्तरात्। तदुत्तरवाक्यात्। '**मनः प्राणे**' इत्यादिना वागादिसर्वेन्द्रियाणां मनसि लयः। तन्मानसस्य प्राणे लयावस्थावगमात् तदुपादानमनसि वागादीनां, प्राणे मानसस्य च स्वरूपलयो वृत्तिलयो वेति संशयः।

'**अन्नमयं हि सौम्य मनः, अपोमयः प्राणः, तेजोमयी वाक्**' इति श्रुतौ मानसस्यान्नप्रकृतित्वमवगम्यते। अन्नस्य च— '**ता अन्नमसृजन्त**' इत्यादौ अन्नोपादानकारणत्वं जलस्यापि प्रतीयते। तस्मात् '**मनः प्राणे सम्पद्यते**' इत्यत्र प्राणशब्देन प्राणप्रकृतिरूपापो निर्दिश्य तासु मनस्सम्पत्तिप्रतिपादने परम्परया '**स्वकारणे लयः**' इति सम्पत्तिवचनं उपपन्नं भवतीति प्राप्ते ब्रूमः।

पूर्ववदत्रापि मानसस्य प्राणे वृत्तिलयमात्रमेव न स्वरूपलयः। **'मनः प्राणे सम्पद्यते'** इत्युत्तरवाक्यदर्शनात्, मानसस्य प्राणोपादानत्वायोगाच्च। **'अन्नमयं हि सौम्य मनः, आपोमयः प्राणः'** इति मनःप्राणयोरन्नेनाद्भिश्चाप्यायनमुच्यते ; न तत्प्रकृतित्वं ; अहङ्कारिकत्वान्मनसः आकाशविकारित्वाच्च प्राणस्य प्राणशब्देनापां लक्षणा च स्यादिति निश्चीयते।

---

## अध्यक्षाधिकरणम् ॥ ३ ॥

### प्राणस्य जीवे लयसम्पत्तिविचारः

प्राणस्य मनोऽधिष्ठानत्वसम्भवेन मानसस्य प्राणे लयोऽस्तु ; तथापि प्राणस्य कस्मिन्नाप्यायनमुचितमित्याकाङ्क्षायामधिकरणान्तरमाह—

## ॥ ३१९ ॥ सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

स प्राण अध्यक्षे जीवे सम्पद्यते। कुतः ? तदुपगमादिभ्यः हेतुभ्यः। 'तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ति' इति श्रुतौ प्राणादीनां क्षेत्रज्ञेन सह परलोकगमनश्रवणात् प्राणाध्यक्षत्वं सर्वथा जीवस्य न विरुध्यत इति सूत्रसूचितार्थः।

'न तत्र प्राणा उत्क्रामन्ते तत्रैव समवलीयन्ते' इति श्रुतौ प्राणानां परमात्मनि लयावगमात् 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति श्रुतौ जीवानुगामित्वश्रवणात् परमात्मन्याप्यायनं वा जीवानुगमनं वेति संशयः।

'एतस्माज्जायते प्राणः' इति श्रुतौ तस्य परमात्मजन्यस्य 'प्राणानां ग्रन्थिरसि रुद्रोमाविशान्तकः' इत्यत्र तदाधारत्वस्य 'न तत्र प्राणा उत्क्रामन्ते तत्रैव समवलीयन्ते' इत्यत्र तस्मिन्नेतेषां लयत्वस्य च द्योतनात् परमात्माधीनत्वमेव प्राणस्य निर्दिश्यते।

किञ्च— 'वाङ्मनसि सम्पद्यते मनः प्राणे' इति वचनानुरोधेन यथा मनःप्राणयोरेव वाङ्मानसयोस्सम्पत्तिः तथा 'प्राणस्तेजसि' इति वचनात् तेजस्येव प्राणस्सम्पद्यते इति प्राप्ते प्रचक्ष्महे—

"सोध्यक्षे इति सः प्राणः, अध्यक्षे करणाधिपे जीवे सम्पद्यते। कुतः ? तदुपगमादिभ्यः। प्राणस्य जीवोपगमस्तावच्छ्रूयते। 'एवमेव ममात्मानमन्तकाले सर्वे

प्राणा अभिसमायान्ति' इति तथा जीवेन सह प्राणस्योत्क्रान्तिः श्रूयते। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति प्रतिष्ठा च जीवेन सह स्मर्यते। 'कस्मिन्नुत्क्रान्ते उत्क्रान्तो भविष्यामि; कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति। एवं जीवेन संयुज्य तेन सह तेजस्सम्पत्तिरिह प्राणस्तेजसीत्युच्यते; यथा यमुनायाः गङ्गया संयुज्य सागरगमनेऽपि यमुना सागरं गच्छतीति वचो न विरुध्यते तद्वत्।"

'न तत्र प्राणा उत्क्रामन्ते' इति वाक्यानामविरोधः। 'एतस्माज्जायते प्राणः' इत्यादिवाक्यानां सर्वकारणत्वं परमात्मनि व्यवस्थापितं न क्रमसृष्टिपरत्वम्। सर्वान्तर्यामित्वेन शिवस्यैव सर्वजगज्जन्मादिहेतुत्वात् सर्वं तत्र प्रतिष्ठितमिति न विरुध्यते; तथापि प्राणानां जीवातिरिक्तस्थित्यनुपपन्नत्वेन जीवानुगामित्वं विहितम्। ॥ तस्मादुभयशास्त्रं समञ्जसम्।

---

## भूताधिकरणम् ॥ ४ ॥

### जीवस्य सर्वभूतात्मके शिवे लयसम्पत्तिः

ननु 'प्राणस्तेजसि' इति श्रुतौ प्राणस्य वह्निलयावगमात् कथं जीवेन सह परमात्मानुप्रविष्टत्वमुचितमित्याशङ्क्य तन्निराकरणार्थमधिकरणान्तरमाह–

## ॥ ३२० ॥ भूतेषु तच्छ्रुतेः ॥ ५ ॥

स चाध्यक्षः भूतेषु पञ्चमहाभूतेषु सम्पद्यते । कुतः ? ॥ **तच्छ्रुतेः** ॥ '**अक्षरस्तेजसि**' इति श्रुतेः । सर्वाध्यक्षत्वं सर्वान्तर्यामिणः शिवस्य समुचितत्वात् तेजश्शब्दवाच्यत्वं शिवे न विरुध्यते । '**तं देवो ज्योतिषां ज्योतिः**', '**न तत्र सूर्यो भाति न चन्द्रतारकं**' इत्यादौ परमतेजोमयत्वस्य शिव एव दर्शनात् । '**सर्वो वै रुद्रः**" इत्यादौ तस्य सर्वात्मकत्वस्य व्यपदेशात्; '**यो रुद्रो अग्नौ**' इत्यादिषु तस्य सर्वान्तर्यामित्वकथनात् सर्वभूताधिवासस्य सर्वात्मकस्य सर्वशब्दवाच्यत्वं युक्तमिति सूत्रसूचित सूक्ष्मार्थः ।

'**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी**' इति श्रुतौ लोके च तेजश्शब्दस्य वह्नौ प्रयोगदर्शनात्, '**हिरण्मये परे कोशे विरजं ब्रह्मनिष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिः**' इत्यादौ शिवस्य तेजोमयत्वव्यपदेशात् '**प्राणस्तेजसि**' इति जीवसंयुक्तस्य प्राणस्य तेजसि सम्पत्त्यवगमात् प्राणजीव[1]मयाधिष्ठानतेजश्शब्दस्य वह्निपरत्वं उत परमेश्वरपरत्वं वेति संशयः ।

तेजश्शब्दस्य भूताग्नावेव रूढत्वात्, मुख्यार्थत्यागे मानाभावात् 'अग्निरग्रे प्रथमो देवतानां', 'य एवं विद्वानग्निहोत्रं जुहुयात्' 'यावज्जीवमग्निहोत्रं जुहोति'

---

[1] त्रिलयाधिष्ठान (ञ, ग)

इत्यादौ सर्वदेवताप्राधान्येन यावज्जीवमग्निहोत्रोपासनविधेर्विद्वदविद्वत्साधारण्येन कथनादुपास्य वस्तुनि सर्वेषामुपासकानां एकत्वस्य 'तत्त्वमसि' इत्यादिवेदान्तेषु व्यवस्थापनात् वह्न्यपरपर्यायतेजसि जीवानामाप्यायनमविरुद्धमिति प्राप्ते प्रचक्ष्महे–

'प्रज्ञानं ब्रह्म', 'अहं ब्रह्मास्मि', 'तत्त्वमसि' इत्यादिना सर्ववेदान्तेषु मुमुक्षूणां ब्रह्मोपासकानां परशिवब्रह्मात्मकत्वोपदेशात् ।

'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥'

इत्यादौ निरतिशयशिरस्कतेजस्त्वस्य ब्रह्मण्यवगमात् जडरूपवह्नौ चेतनजीवस्य लयासम्भवात् श्रुत्युक्ततेजश्शब्दस्य परशिवब्रह्मण्येव सामञ्जस्यम् ।

ननु तेजःप्रभृतिष्वेकस्मिन् क्रमेण सम्पत्तावपि पृथिवीमय इत्यादिका श्रुतिः कथमुपपद्यते अत आह–

## ॥ ३२१ ॥ नैकस्मिन् दर्शयतो हि ॥ ६ ॥

"**नैकस्मिन्** एकैकस्य कार्याक्षमत्वात् दर्शयततो ह्यक्षमत्वं श्रुतिस्मृती– '**अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि । तासां त्रिवृतं त्रिवृतमेकैकां करवाणि**' इति नामरूपव्याकरणयोग्यत्वाय त्रिवृत्करणमुपदिश्यते ।

नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥

समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥

इति । अतः '**प्राणस्तेजसि**' इति तेजःशब्देन सर्वभूतान्तरसंसृष्टं" परशिवात्मकतेज एवाभिधीयते ।

---

## आमृत्युपक्रमाधिकरणम् ॥ ५ ॥

**मूर्तब्रह्मोपासकलिङ्गशरीरोत्क्रान्तमुक्तजीवलभ्यनिरतिशयसालोक्यादित्रिपाद्विभूतिविचारः**

ननु तेजश्शब्दस्य परशिवब्रह्मपरत्वमस्तु ; तथाप्युत्क्रान्तिसमये मूर्तामूर्तशिवतत्वोपासकानां पुण्याऽपुण्यकर्मिणाञ्च को भेदः इत्याशङ्कायामधिकरणान्तरमाह—

**॥ ३२२ ॥ समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥**

इयं मरणावस्था **आसृत्युपक्रमात्—** सृत्युपक्रमं वर्जयित्वा, समाना निरवयव-परस्थल परिशिवब्रह्मसाक्षात्कारवतां सावयवशिवतत्त्वोपासकानां कर्मिणाञ्च तुल्या । **सृत्युपक्रमो नाम—** हृत्पुण्डरीकस्थस्य पञ्चमहाभूतप्राणेन्द्रियमनः प्रभृतिचतुरङ्गबलपरिवृतस्य जीवाख्यस्य राज्ञः स्वर्ग-नरक-शिवलोकादिराष्ट्रदर्शनार्थं नाडीद्वारा देहाख्यान्तःपुरात् बहि-र्निर्गमनरूपा उत्क्रान्तिः ।

एवमुत्क्रान्तिं विना जीवस्येन्द्रियादिसकलपरिवारमेळनरूपमरणावस्था लिङ्गशरीरमिव शिवज्ञानिनामपि तुल्येत्युच्यते । हृत्पुण्डरीके मिळितं शिवज्ञानिनां लिङ्गशरीरमनुपोष्य लोकान्तरमगत्वा हृत्पुण्डरीकावच्छिन्ने परशिवब्रह्मण्येव **अमृतत्वं** मोक्षः कारणपरशिवतत्त्वे लयः न मिथ्यात्वं प्राप्नोति ।

**'लीनं गमयतीति लिङ्गम्'** इति व्युत्पत्या परमात्मनि शिवे लीनं तदन्त-र्लीनत्वं गमयति प्रापयतीति **लिङ्गम्** । शीर्यत इति **शरीरम्** । लिङ्गञ्च तत् शरीरञ्च **लिङ्गशरीरम्** । एतल्लिङ्गशरीरस्य ब्रह्मणि विलये सति तदवच्छिन्नाणुस्वरूपो जीवस्तु शिवतत्त्वमयो भवतीति भावः । तथा च **'तेजः परस्यां देवतायां'** इति श्रुतिः शिवज्ञानिमात्रविषया । ततः पूर्वोक्तलिङ्गशरीरविलयपूर्वकजीवोत्क्रान्तिविधायक श्रुतिस्सर्व साधारणेति सूक्ष्मार्थः ।

"इयमुत्क्रान्तिः किं विद्वदविदुषोस्समाना उत अविदुष एवेति संशयः ।

अविदुष एवेत प्राप्तम् । कुतः ? विदुषोऽत्रैवामृतत्ववचनादुत्क्रान्त्यभावात् विदुषो ऽत्रैवाऽमृतत्वं श्राव्यते ।

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतोभवत्यत्र ब्रह्मसमश्नुते ॥'

इत्येवं प्राप्तेऽभिधीयते—

"॥ समानाचासृत्युपक्रमात् इति ॥ विदुषोऽविदुषश्च उपसृत्युपक्रमात् उत्क्रान्तिः समाना । आसृत्युपक्रमात्- आगत्युपक्रमात्— नाडीप्रवेशात् प्रागित्यर्थः । विदुषोऽपि हि नाडीविशेषेणोत्क्रम्य गतिः श्रूयते ।

शतञ्चैका च हृदयस्य नाड्यः तासां मूर्द्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्न्या उत्क्रमणे भवन्ति ॥'

इति । एवं नाडीविशेषेण गतिश्रवणात् विदुषोऽप्युत्क्रान्तिरवर्जनीया । सा च नाडीप्रवेशात् प्राक् विसेषाश्रवणात् समाना । तत्प्रवेशदशायां च विशेषः श्रूयते । 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषोवा मूर्ध्नो वा अन्येभ्योः वा शरीर देशेभ्यः' इति । 'शतञ्चैका च हृदयस्य नाड्यः' इत्यनया श्रुत्या ऐकार्थ्यान मूर्ध्नो निष्क्रमणं विद्वद्विषयम् ।

यदुक्तं विदुषोऽत्रैवामृतत्वं श्राव्यते इति तत्रोच्यते अमृतत्वञ्चानुपोष्येति । चशब्दोऽवधारणे । अनुपोष्य— शरीरेन्द्रियादिसम्बन्धमदग्ध्वैव यदमृतत्वं— उत्तरपूर्वाघयोरश्लेष-विनाशरूपं प्राप्यते ; तदुच्यते । 'यदा सर्वे प्रमुच्यन्ते' इत्यादिकया श्रुत्येत्यर्थः । 'अत्र ब्रह्मसमश्नुते' इति " च निरवयवपरशिवब्रह्मोपासकविद्वदुत्क्रान्तिविषयम् ; तदुपासनवेलायां ये ब्रह्मानुभवस्तद्विषयमप्युपदिशति । पुण्याऽपुण्यकर्मिणां सुखदुःखभोगाश्रयस्वर्गनरकलोकप्राप्तिः ; मूर्तब्रह्मोपासकानां लौकिनामिव लिङ्गशरीरेण सहोत्क्रान्तिमत्त्वेऽपि निरतिशयनित्यमङ्गलालयसालोक्यादित्रिपाद्विभूतिः लभ्यते ।

ननु 'तेजः परस्यां देवतायां' इति श्रुतिरपि पूर्वश्रुतिवत्सर्वसाधारणी विशेषबोधकाभावादित्याशङ्कायामाह—

॥ ३२३ ॥ तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

तत्— लिङ्गशरीरं **आपीतेः**— मोक्षात्, स्वाभाविकजीवभावनिवृत्तिपूर्वकशिवतत्त्व-प्राप्तिपर्यन्तं तिष्ठति। कुतः? **संसारव्यपदेशात्**। मूर्तब्रह्मोपासकानां कर्मिणां च शिवलोक-स्वर्ग-नरकादि-संचारोपदेशादित्यर्थः। तथा च '**तेजः परस्यां देवतायां**' इति श्रुतेः निरवयवपरशिवज्ञानिपरत्वमिति निश्चीयते।

"किञ्च— '**तस्य तावदेव चिरं यावन्न विमोक्ष्ये**' इति।

'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य।
धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि॥"

इति च निरवयव-सावयवपरशिवतत्त्वोपासकानां सायुज्य-सालोक्यादिमुक्तिफलमवगम्यते।

यदि लिङ्गशरीरं मरणकाले शरीराद्बहिर्निर्गच्छति तर्हि मृतशरीरसमीपवर्तिनां कथं न दृश्यत इत्याशङ्क्याह—

## ॥ ३२४ ॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

लिङ्गशरीरं **सूक्ष्मं**— इन्द्रियाऽग्राह्यं **प्रमाणतः**— परिमाणतोऽपि सूक्ष्मम्। कुतः? **तथोपलब्धेः**— श्रुतिषु लिङ्गशरीरस्यातीन्द्रियत्वप्रतिपादनात्। तच्छरीरस्य स्थूलशरीरात् बहिर्निर्गमनेऽपि सर्वेषामगोचरत्वमविरुद्धम्।

किञ्च— क्षेत्रज्ञः स्थूलशरीरादुत्क्रान्तोऽपि सूक्ष्मशरीरमनुवर्तते; अन्यथा गत्यनुपपत्त्या चन्द्रसंवादाद्यनुपपत्तिप्रसङ्गः। श्रूयते हि पर्यङ्कविद्यायां देवयाने पथि विदुषश्चन्द्रमसा संवादः '**ये वै चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति।**' इत्युपक्रम्य '**एतद्वै स्वर्गस्य लोकस्य द्वारं यच्चन्द्रमाः; तं यः प्रत्याहतमतिसृजते; अथ य एनं न प्रत्याहतमिह वृष्टिर्भूत्वा वर्षति। स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परश्वा वा पुरुषो वा अन्यो वै तेषु प्रेत्य जायते; यथा कर्म यथाविद्यं तमागतं पृच्छसि कोऽसि इति; तं प्रतिब्रूयात्**' इत्यादिना शरीरादुत्क्रान्तस्य विदुषोऽर्चिरादिगतिः श्रूयते।

निरवयवशिवोपासकातिरिक्तानां विदुषां स्थूलशरीरात्लिङ्गशरीरात् बहिर्निर्गमने को हेतुरित्याशङ्कायामाह—

## ॥ ३२५ ॥ नोपमर्देनातः ॥ १० ॥

अतो लिङ्गशरीरस्य मरणानन्तरं स्थूलशरीराद्बहिर्निर्गमनादेव **उपमर्देन** पीडासाधनेन दहनादिना स्थूलशरीरस्य दुःखवेदना **नास्ति**। तदुत्क्रमणे स्वकृतकर्मैव हेतुः। सर्वकामनिर्मुक्तानां तल्लिङ्गशरीरं परमात्मन्येवाऽत्र शरीरे विलीनं भवति। तथा श्रूयते— **'अत्र ब्रह्म समश्नुते'** इति।

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह—

## ॥ ३२६ ॥ अस्यैव चोपपत्तेरूष्म ॥ ११ ॥

"**अस्य**— सूक्ष्मशरीरस्य कचिद्ध्रियमाणत्वोपपत्तेर्विदुषः प्रक्रान्तमरणस्य मरणात् प्राक् **ऊष्मा** स्थूलशरीरे क्वाचित्क उपलभ्यते। न च स्थूलस्यैव शरीरस्यायमूष्मा; अन्यत्रानुपलब्धेः। ततश्चोष्मणः कदाचिदुपलब्धिभिर्विदुषः सूक्ष्मशरीरस्योत्क्रान्तिनिबन्धनेति गम्यते। तस्माद्विदुषोऽप्यासृत्युपक्रमात् समाना उत्क्रान्तिरिति सुष्ठूक्तम्।"

यदा स्थूलशरीरे सूक्ष्मदेहसम्बन्धो युज्यते तावत्पर्यन्तं स्थूलस्य ऊष्म उष्ण-स्पर्शादिकं सर्वत्र दृश्यते। सूक्ष्मशरीरवियोगानन्तरं स्थूलस्य शैत्यादिधर्मान्तरोपपत्त्यवगमात् सूक्ष्मशरीरगमनमनुमीयते।

"पुनरपि विदुषां उत्क्रान्तिर्न सम्भवतीत्याशङ्क्य परिह्रियते—"

## ॥ ३२७ ॥ प्रतिषेधादिति चेन्न शरीरात् स्पष्टो ह्येकेषाम् ॥ १२ ॥

"यदुक्तं विदुषोऽप्युत्क्रान्तिः समानेति तन्नोपपद्यते; विदुष उत्क्रान्तिप्रतिषेधात्। तथा हि— **'स एतास्तेजोमात्राः समभ्याददानो 'हृदयमेवान्ववक्रामति'** इत्युपक्रम्य **'तेन प्रद्योतेनैष आत्मा निष्क्रामति। तमुत्क्रामन्तं प्राणोऽनू(प)त्क्रामति'** इत्यविदुष उत्क्रान्तिप्रकारमभिधाय, **'अन्यन्नवतरं कल्याणतरं रूपं कुरुते'** इति देहान्तरपरिग्रहं चाभिधाय-

प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्।
तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे ॥'

[1] हृदयमेवान्वप (ङ).

इति तु 'कामयमानः' इत्यविद्वद्विषयं परिसमाप्य, **'अथ कामयमानः योऽकामो निष्काम आप्तकाम आत्मकामः, न तस्य प्राणा उत्क्रामन्ति। ब्रह्मैव सन् ब्रह्माप्येति'** इति विदुष उत्क्रान्तिः प्रतिषिध्यते; [1]तथा पूर्वत्र आर्तभागप्रश्नेऽपि विदुष उत्क्रान्तिप्रतिषेधो दृश्यते; 'अप पुनर्मृत्युं विद्वांसं प्रस्तुत्य, **'याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते; उदस्मात् प्राणा क्रामन्त्याहो'** इति पृष्टः **'नेति होवाच याज्ञवल्क्यः अत्रैव समवलीयन्ते स उच्छ्वयत्याध्मायति आध्मातो मृतः शेते'** इति। अतो विद्वानिहैवामृतत्वं प्राप्नोतीति चेत्—

तन्न— शारीरात्प्रत्यगात्मनः प्राणानामुत्क्रान्तिर्ह्यत्र प्रतिषिध्यते, न शरीरात्। **'न तस्य प्राणा उत्क्रमन्ति'** इत्यत्र तच्छब्देन **'अथाकामयमानः'** इति प्रकृतः शरीर एव परामृश्यते; नाश्रुतं शरीरम्। तस्येति षष्ठ्या प्राणानां सम्बन्धित्वेन शरीरो निर्दिष्टः; न तूत्क्रान्त्यपादानत्वेन। उत्क्रान्त्यपादानं तु शरीरमेवेति चेन्न; अपादानापेक्षायामश्रुताच्छरीरात् सम्बन्धितया श्रुतस्याऽऽत्मन एव सन्निहितत्वेनापादानतयाऽपि ग्राह्यत्वात्।

किञ्च— प्राणानां जीवसम्बन्धितयैव प्रज्ञातानां तत्सम्बन्धकथने प्रयोजनाभावात् सम्बन्धमात्रवाचिन्या षष्ठ्या अपादानमेव विशेष इति निश्चीयते; यथा नटस्य शृणोतीति। नात्र विवदितव्यम्। स्पष्टो ह्येकेषाम्— माध्यन्दिनानामाम्नाये शारीरो जीव एवापादान-मिति— **'योऽकामो निष्काम आप्तकाम आत्मकामः, न तस्मात् प्राणा उत्क्रामन्तीति'** शरीरात्प्राणानामुत्क्रान्तिप्रसङ्गाभावात् तत्प्रतिषेधो नोपपद्यते इति चेन्न; **'तस्य तावदेव चिरम्'** इति विदुषः शरीरवियोगकाले ब्रह्मसम्पत्तिवचनेन प्राणानामपि तस्मिन् काले शारीरादविदुषो वियोगः प्रसज्यते। ततश्च देवयानेन पथा ब्रह्मसम्पत्तिर्नोपपद्यत इति, न तस्य प्राणा उत्क्रामन्ति— देवयानेन पथा ब्रह्मप्राप्तेः प्राक् जीवाद्विदुषोऽपि प्राणा न विश्लिष्यन्तीत्युच्यते।

आर्तभागप्रश्नोऽपि यदा विद्वद्विषयः, तदायमेव परिहारः स ववद्विद्विषयः। तत्र प्रश्नप्रतिवचनयोः ब्रह्मविद्याप्रसङ्गादर्शनात्। तत्र हि ग्रहातिग्रहरूपेणेन्द्रियार्थस्वभावः

---

[1] यथा (ज्ञ)

अपामग्न्यनन्तत्वम्, म्रियमाणस्य जीवस्य प्राणपरित्यागः, मृतस्य नामवाचकीर्त्यनुवृत्तिः, तस्य च पुण्यपापानुगुणगतिप्राप्तिरित्येतेऽर्थाः प्रश्नपूर्वकं प्रत्युक्ताः। तत्र च अप पुनर्मृत्युं जयतीत्यपामग्न्यनन्तत्वज्ञानादग्निजय एव मृत्युजय उच्यते। अतो नात्र विदुषः प्रसङ्गः। अविपस्तु प्राणानुत्क्रान्तिवचनं स्थूलदेहवत् प्राणा न मुञ्चन्ति; अपि तु भूतसूक्ष्मवज्जीवं परिष्वज्य गच्छन्तीति प्रतिपादयतीति निरवद्यम्।"

मूर्तपरशिवब्रह्मोपासकानां शुद्धजीवानां शिवलोकं प्राप्य तत्र निरतिशयानन्दमनुभूय तदनन्तरं शिवसायुज्यात्मककैवल्यविभूतिर्लभ्यत इत्यत्र किं मानं इत्याशङ्कायामाह–

## ॥ ३२८ ॥ स्मर्यते च ॥ १३ ॥

'ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इत्यादिश्रुतिषु–

ऊर्ध्वमेकस्तितस्तेषां यो भित्वा सूर्यमण्डलम्।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्॥

इत्यादिस्मृतिषु च स्मर्यते। तस्मात् सर्वकामनिर्मुक्तनिरवयवोपासकानां विदुषां मूर्तब्रह्मोपासकानाञ्च सद्योमुक्तिः क्रममुक्तिश्च न विरुध्यते।

---

## सर्वसम्पत्त्यधिकरणम्[1] ॥ ६ ॥

### जीव ब्रह्मणोः स्वरूपैक्यस्यानवद्यता

केचित् शरीरवत् घट-पटवज्जीवब्रह्मणोः संयुक्ताऽसंयुक्तभेदवादिनः स्वशरीरे दहराकाशे परमशिवे लिङ्गशरीरेण सह जीवस्य तत्स्वरूपैक्यं न सम्भवतीति साधयन्ति। केचित् जगन्मिथ्यात्वसाधकाऽहंब्रह्मवादिनः विदुषामुत्क्रान्तौ लिङ्गशरीरोत्क्रान्तिं दूषयन्ति। तस्मात् बौद्धादिवत् श्रुत्यैकदेशप्रामाण्यपक्षैकदेशमतनिराकरणार्थं क्रममुक्तिं सद्योमुक्तिं चोपदिश्य तथा केचित् जलशर्करान्यायवत् जीवब्रह्मैक्यं न सम्भवतीति वदन्ति। तन्मत-निराकरणार्थमधिकरणान्तरमाह—

## ॥ ३२९ ॥ तानि परे तथाह्याह ॥ १४ ॥

**तानि** ज्ञानिनां भूतेन्द्रियप्राणान्तःकरणानि **परे** जीवातिरिक्ते परमशिवे लीयन्ते। कुतः? तथा ह्याह। '**इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति**'।

'**गताः कलाः पञ्चदश प्रतिष्ठाः देवाश्च सर्वे प्रतिदेवतासु।**
**कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥**

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥'

'भिद्यते हृदयग्रन्थिः' इत्यादिश्रुतयः शिवज्ञानिसम्बन्धिनां दशेन्द्रियाणां पञ्चप्राणानां मनसश्च परमात्मनि विलयं प्रतिपादयन्तीत्यर्थः।

---

[1] इदं चाधिकरणं शङ्करभाष्ये वागादिलयाधिकरणमिति (श), तथा श्रीभाष्ये परसम्पत्यधिकरणं इति दृश्यते।

यद्यपि '**समानाचासृत्युपक्रमात्**' इति सूत्रे ज्ञानिनां लिङ्गशरीरस्य ब्रह्मणि लय उक्तः। तथापि 'तानिपरे' इति सूत्रे वक्ष्यमाण एवार्थः सुखबोधार्थं श्रुत्यैकदेशमतनिराकरणार्थं चाकृष्य पुनरुक्त इति न पौनरुक्त्य इति सूत्रार्थः।

'**यथा नद्यः स्यन्दमानाः**' इत्यादिश्रुतिषु जीवब्रह्मणोः प्राप्यप्रापकत्वेन मोक्षदशायां एकत्वोपदेशात् मुक्तजीवमनःप्राणादीनां ब्रह्मणि स्वरूपैक्यं उत सुषुप्तिप्रळयादिवत् तूष्णीं स्थितिर्वेति सन्दिह्यते।

जीवब्रह्मणोः सर्वथा न स्वरूपैक्यं; जीवव्यतिरिक्तपरमात्माभावात्, जडात्मकस्य लिङ्गशरीरस्य चिद्रूपे ब्रह्मण्येकत्वायोगात्।

**कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः।**
**कार्यकारणतां त्यक्त्वा पूर्णबोधोऽवशिष्यते॥**

इत्यादिपूर्वाचार्यसिद्धान्तानुसारेण 'अहं ब्रह्मास्मि' 'तत्त्वमसि' इत्यादिजीवब्रह्मैक्यविधायकवेदान्तानां जहदजहल्लक्षणव्यपदेशकेन '**सोऽयं देवदत्त**' इति **न्यायेन** बिम्बप्रतिबिम्बवद्घटाकाश-महाकाशवत् उपाधिपरित्यागपूर्वकचैतन्यैकत्वं वक्तुं युक्तम्। जीवेश्वरोपाधिभूताविद्या-मायाऽसम्भवे अश्व-गवादिवत्तयोरेकत्वायोगात्, तयोर्भेदस्य सत्यत्वे निवृत्त्यसम्भवाच्च; उत सत्यस्य अन्यथा योगात् लिङ्गशरीरस्य परमेश्वरवन्नित्यत्वम्। तदयोगे मुक्तानां पृथक् स्थित्यसम्भवेन शेषत्व पारतन्त्र्य-कैङ्कर्यादिविधायकसर्वशास्त्रविरोधात् संसारदशायां जीवब्रह्मणोः स्वाभविकभेदः मुक्तदशायां तद्वदभेदश्च असमञ्जस इति प्राप्तेऽभिधीयते—

'तानि पर' इति तानि परस्मिन्नात्मनि जीवाः लिङ्गशरीरेण सह सम्पद्यन्ते। कुतः? तथा ह्याह— '**गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु**' इत्यादिश्रुतिशतेषु जीवानां तद्वदाह। चिज्जडानां एकत्वायोगेन लक्षणा स्वीकार्या; इति यदुक्तं तदयुक्तम्; मुख्यार्थबाधाभावात्। '**यथा नद्यः**' इत्यादिबहुश्रुतिषु असन्दिग्धतया जीव-ब्रह्मणोः स्वरूपैक्यव्यपदेशात् लोके मणिमन्त्राद्यौषधसिद्धानां मनुष्यादीनां व्याघ्रादिनानाविधस्वरूपकल्पनं दृष्टम्।

अघटितघटनासमर्थस्य सत्यसङ्कल्पादिधर्माश्रयस्य सर्वविद्यानिधानस्य शिवस्य परब्रह्मणः स्वोपासकभक्तानां जीवभावनिवृत्तिपूर्वकस्वतादात्म्यसिद्धिप्रदायकत्वे किं चित्रम्। भ्रमरकीट-

लोहरसादिबहुदृष्टान्तानुसारेण स्वाभाविकस्थितिनिवृत्तिः पूर्वमेवोक्ता। जीवानां बद्धावस्थावत् मुक्तावस्थायामपि सूक्ष्मशरीरस्वीकारे संसारित्वप्रसङ्गात्, मुक्तावस्थायां दास्य-दासकत्वप्राधान्यराज-भृत्यन्यायवत् दासस्य भयहेतुत्वेन पूर्णानन्दानुभवायोगात्, 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' 'अभयं वै जनक प्राप्तोऽसि' इति मुक्तानां अभयत्वव्यवस्थापकश्रुतिशतविरोधात्, 'यथा नद्यः' इत्यादिश्रुतीनां सङ्कोचे मानाभावाच्च सर्वश्रुतिसिद्धजीवब्रह्मणोः स्वरूपैक्यमनवद्यम्।

---

## अविभागाधिकरणम् ॥ ७ ॥

### अमूर्तशिवज्ञाननिष्ठजीव-परशिवयोः जलेजलवदपृथक्तानिर्णयः

ननु लिङ्गशरीरविलयपूर्वकत्वेन जीवानां शिवतत्त्वप्राप्तिः सुषुप्त्युत्क्रान्तिप्रलयादिकालेष्विव स्थूलावस्थाप्रतिषेधमात्रत्वमित्याशङ्कायामधिकरणान्तरेण निराकरोति–

## ॥ ३३० ॥ अविभागो वचनात् ॥ १५ ॥

**अविभागः** शिवज्ञानिनां सूक्ष्मशरीरस्य आत्यन्तिकनाशो विधीयते। कुतः ? **वचनात्**। '**अविद्यायाः परं पारं तारयसि,** [1]"**न स पुनरावर्तते**' इत्यादिश्रुतिषु शिवतत्त्वनिष्ठानां अविद्यात्मकपाशनिवृत्तेः पुनरावृत्तिरहितत्वस्य च स्पष्टमुपदिष्टत्वात् पाशरूपाविद्याजन्यस्य लिङ्गशरीरस्य आत्यन्तिकनाश एवाङ्गीकर्तव्यः इति सूक्ष्मार्थः।

'**क्षरात्मनावीशते देव एकः**', '**तस्याभिध्यानात् योजनात्तत्त्वभावाद्भूयश्चान्ते तत्त्वमायानिवृत्तिः**' 'भिद्यते हृदयग्रन्थिः ....तस्मिन् दृष्टे परावरे' इत्यादिश्रुतिषु शिवज्ञानिनां अविद्यापाशरूपहृदयग्रन्थिविच्छेदलक्षणोपदेशात्; लिङ्गशरीरोपादानभूतपाशरूपाविद्यानिवृत्तिपूर्वकत्वेन स्वरूपैक्यं सुषुप्तिप्रळयादिवत् पाशविकृतिरूपलिङ्गशरीरेण सह जले जलवत् विलयपूर्वकत्वेन वा सम्भवतीति सन्दिह्यते।

जीवानां मुक्तदशायामपि मधुपिष्टे स्वर्णरेणुवत् कुसूलधान्यवत् लिङ्गशरीरेण सह ब्रह्मप्राप्तिः युक्ता। '**अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः**' '**ज्ञाज्ञौ**' इत्यादौ जीवानां अजन्यत्वव्यवस्थापनात् चिदात्मकस्य जीवस्य लयायोगात् लिङ्गशरीराभावे परमात्मानन्दानुभवसिध्यभावाच्च सर्वथा मुक्तानामपि जले जलवत् स्वरूपैक्यं अयुक्तमिति प्राप्ते वदामः–

---

[1] "आत्मानमरणिं कृत्वा...." "न स पुनरावर्तते" (ग).

मधुपिष्टे स्वर्णरेखावत् जीव-ब्रह्मणोः पृथक् स्वरूपैक्यं न सम्भवति। किन्तु वह्नौ वह्निवज्जले जलवदपृथग्भावो युक्तः। कुतः? ॥ वचनात् ॥ 'यथा नद्यः स्यन्दमानाः ....पुरुषमुपैति दिव्यम्' इत्यादिश्रुतिवचनात् स्वरूपैक्यं अविभागो निर्दिश्यते। बद्धावस्थावत् मुक्तावस्थायां लिङ्गशरीरसद्भावे 'कारणाभावे कार्याभावः' इति न्यायेन तल्लिङ्गशरीरोपादानकारणपाशरूपात्रिविधास्थितिरर्थात्सूचिता। तदङ्गीकारे ब्रह्मोपासनज्ञानस्य वैफल्यं प्रसज्येत। मुक्तानां अप्राकृतलिङ्गमस्तीति चेत्तदसङ्गतं; सर्ववेदान्तविरुद्धप्रसङ्गात्, अप्राकृतस्य लिङ्गशरीरोपादानकारणत्वायोगात्, लिङ्गशरीरस्य भूतपञ्चकरजस्सत्वजन्यसप्तदशतत्त्वात्मकस्य सर्वशास्त्रेषु प्रसिद्धत्वाच्च। पूर्वोक्तमेव विदुषां विधेयम्।

---

## तदोकोऽग्रज्वलनाधिकरणम् ॥ ८ ॥

### शिवस्य सर्वजीवहृदयपुण्डरीके स्थितित्व-मुमुक्षुजनध्येयत्वनिश्चयः

एवं अमूर्तशिवज्ञाननिष्ठानां इहैव शरीरे शिवज्ञानसामर्थ्येन पाशरूपाविद्यापटलं भित्वा नदीसमुद्रवदविभागेन शिवसायुज्यमुक्तिर्लभ्यत इति व्यवस्थापने मूर्तब्रह्मोपासकानां विदुषां चरमकाले केन मार्गेण गत्वा सालोक्यादित्रिविधकल्याणात्मकविभूत्यनुभवः सम्पद्यत इत्याशङ्कायां अधिकरणान्तरेण तन्माहात्म्यं प्रपञ्चयति—

## ॥ ३३१ ॥ तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेष-गत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १६ ॥

**तदोकोग्रज्वलनं**— तस्य जीवस्य प्राणेन्द्रियादि परिवृतस्य ओकः स्थानं, हृत्पुण्डरीकं, तस्य अग्रज्वलनं तदोकोऽग्रज्वलनम्— अग्रस्य ऊर्ध्वभागस्य विकासो भवति । **तत्प्रकाशितद्वारः** तेन विकासिना प्रदर्शितदेवयानमार्गः सन् मूर्तब्रह्मोपासको भक्तः सुषुम्नानाडीद्वारा देहाद्बहिर्गच्छति । हृत्पुण्डरीकस्य ऊर्ध्वप्रवेशविकासे हेतुद्वयमाह— **विद्यासामर्थ्यात्**— मूर्तब्रह्मोपासनासामर्थ्यात् ; **तच्छेषगत्यनुस्मृतियोगाच्च**— तस्याः— मूर्तब्रह्मोपासनायाः शेषभूतया - **गत्यनुस्मृत्या**— देवयानमार्गचिन्तया योगात्— शिवयोग सम्बन्धाच्च तदोकोऽग्रज्वलनं भवति ; तत्प्रकाशितद्वारस्सन् उपासकः **हार्दानुगृहीतः** हृत्पुण्डरीकस्थेन उमासहितमूर्तपरशिवब्रह्मणा अनुगृहीतः प्रेरितस्सन् शताधिकया शतसंख्या-काभ्यः प्रधाननाडीभ्यः अधिकया अतिरिक्तया एकशततम्या सुषुम्नानाड्या देहाद्बहिर्गच्छ-तीति भावः ।

> ' शतं चैका च हृदयस्य नाड्यः तासां मूर्धानमभिनिस्सृतैका ।
> तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ '

इति श्रुतिबलादिति सूत्रसूचितसूक्ष्मार्थः ।

पूर्वं निर्वासनज्ञाननिष्ठानां निरवयवपरशिवोपासकानां उत्क्रान्तिलक्षणमभिहितम् । अत्र मूर्तब्रह्मोपासकानां महात्मनां [1]कर्मिणां च उत्क्रान्तौ विशेषोऽस्ति वा न वा इति सन्दिह्यात्रेदमाम्नायते ।

**'शतं चैका च हृदयस्य नाड्यः तासां मूर्धानमभिनिस्सृतैका ।**
**तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥'**

इति । अस्याः श्रुतेरयमर्थः- हृत्पुण्डरीकसम्बन्धिन्यो नाड्यः एकोत्तरशतं भवन्ति । तासां मध्ये एका सुषुम्नाख्या नाडी मूर्धानमभिनिस्सृता ब्रह्मरन्ध्रपर्यन्तं व्याप्ता । तया द्वारा- दूर्ध्वमायन्– देहाद्बहिर्निर्गच्छन् उपासकः अमृतत्वं परशिवलोकं प्राप्नोति । हृत्पुण्डरीकस्य चतसृषु दिक्षु विद्यमाना अन्याः नाड्यः कर्मिणामुत्क्रमणे द्वाराणि भवन्तीत्यर्थः । सुकृतिनां दुष्कृतिनाञ्च धूमादिमार्गेण तृतीयमार्गेण च स्वर्ग-नरकादिप्राप्तिः रंहतिपाद एवोक्तेति नात्रोच्यते । अनया नाडीनां शताधिकया मूर्धन्यनाड्यैव विदुषो गमनं अन्याभिरेव चाविदुषो गमनं इत्ययं नियम उपपद्यते वा नवेति संशयः ।

किं युक्तं– नियमो नोपपद्यत इति । कुतः ? नाडीनां भूयस्त्वादिति ; सूक्ष्म- त्वाच्च दुर्विवेचनतया पुरुषेणोपादातुमशक्यत्वात् । **'तयोर्ध्वमायन्नमृतत्वमेति'** इति श्रुतिः यादृच्छिकीमुत्क्रान्तिमनुवदति ।

किञ्च– **'तेजः परस्यां देवतायां'** इति श्रुतौ भूतैः सह परमकारणे परमा- काशरूपे परब्रह्मणि स्वप्रकाशे विद्वानविद्वांश्च विलीय अविभागेन क्षणं विश्राम्यतीति श्रुतिश्रवणात् सर्वेषामुत्क्रान्तिस्समानैव । **'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते ; तेन प्रद्योतेनैष आत्मा निष्क्रामति ; चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरेभ्यो गच्छति'** इति दर्शनात् विदुषामतिशयत्वं सर्वथा न घटत इति प्राप्ते ब्रूमः–

**"शताधिकया'** इति । विद्वान् शताधिकया मूर्धन्ययैव नाड्या उत्क्रमति । न चास्याः विदुषो दुर्वचत्वम् । विद्वान् हि परमपुरुषशिवाराधनभूतात्यर्थप्रियविद्या- सामर्थ्यात् विद्याशेषभूततयाऽऽत्मनोत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्देन परब्रह्मणानुगृहीतो

[1] मूर्खाणां ङ) (ग).

भवति । ततश्च तदोकः— . तस्य जीवस्य स्थानं हृदयं अग्रज्वलनं भवति । अग्रेज्वलनं प्रकाशनं यस्य तदिदमग्रज्वलनम् । परमपुरुषशिवप्रसादात् प्रकाशितद्वारो विद्वान् तां नाडीं विजानातीति तया विदुषो गतिरुपपद्यते ।"

तस्मादविदुषां हृदये सुषुम्नानाड्या लिङ्गशरीरेण सह जीवोत्क्रमणं न सम्भवति । इदमेव वैशेष्यं श्रुत्यन्तरेऽपि एतदुक्तम्— 'रुद्रो जानानां हृदये सन्निविष्टः ।'

'हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ।
अचिन्त्यमव्यक्तमनन्तबोधं शिवं प्रशांतममृतं ब्रह्मयोनिम् ॥'

इत्यादि श्रुतिशतेषु,

'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
तमेव शरणं गच्छ सर्वभावेन भारत ॥

शुचौ देशे समासीनो यथावत्कल्पितासनः ।
जितेन्द्रियो जितक्रोधः चिन्तयेच्छिवमव्ययम् ॥

हृत्पुण्डरीकान्तरसन्निविष्टं स्वतेजसा व्याप्तनभोऽवकाशम् ॥
अतीन्द्रियं सूक्ष्ममनन्तमाद्यं ध्यायेत्परानन्दमयं महेशम् ॥
ध्यानावधूताखिलकर्मबन्धः चिरं चिदानन्दनिमग्नचेताः

इत्यादिस्मृतिषु च सर्वजीवहृदयपुण्डरीकस्थितित्वं मुमुक्षुजनध्येयत्वं च शिवस्यैव निश्चीयते । लिङ्गे सुषुप्तिः', 'सता सौम्य तदा सम्पन्नो भवति' इत्यादिश्रुतिषु सर्वेन्द्रियवृत्तिभिस्स शरीरस्सुषुप्तौ स्वावृतपापेन सह सदाशिवमवगमयति ।

'विश्वाधिको रुद्रो महर्षिः' 'सर्वो वै रुद्रः' 'रुद्र एकत्वमाहुः', 'रुद्रो वै शाश्वतं वै पुराणं', 'अजात इत्येव कश्चिद्भीरुः प्रपद्यते' 'रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्' 'शिव एको ध्येयः शिवङ्करस्सर्वमन्यत्परित्यज्य' 'ईशं ज्ञात्वा अमृता भवन्ति' इत्यादिश्रुतिषु सर्वोपादानत्वं सर्वमुक्तिफलप्रदायकत्वं च शिवस्यैवावगम्यते ।

तस्मान्मुमुक्षूणां शिवेतरज्ञेयवस्तु नास्तीति वेदितव्यम्। अस्य हि जन्तोः प्राणोत्क्रमणेषु रुद्रस्तारकं ब्रह्म प्रणवमाचष्ट इति विदुषामुत्क्रान्तौ स्वतत्त्वप्रकाशक प्रणवात्मकतारकब्रह्मोपदेशकथनेन मोक्षप्रदायकत्वं नेतरस्य सिद्धम्।

'अध्यवोच दधिवक्ता प्रथमो दैव्यो भिषक्।
'मा त्वा रुद्र चक्रुधामा मानमोभिर्मादुष्टुती वृषभमासहूती।
उन्नो वीरां अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि।'

इत्यदिना संसारव्याधिनिर्मुक्तभिषक्त्वं शिवस्यैव दृश्यते। **'मायां तु प्रकृतिं विन्द्यात् मायिनं तु महेश्वरम्'** इत्यादौ निखिल ब्रह्माण्डनिर्माणलक्षणमायाशक्त्यवच्छिन्नत्वेन जगदेककारणत्वं श्रूयते। तस्मात् सकलहृदयपुण्डरीकावासः परमपुरुषश्शिवएवोमापतिः स्वाज्ञारूपश्रुतिचोदितेषु श्रौतस्मार्तादिषु स्वाराधनरूपेषु कर्मसु स्वाहङ्कारपरित्यागपूर्वकस्वार्पित-स्वजात्याश्रमकर्मानुषङ्गिणं स्वभक्तं स्वानुग्रहविशेषेण पाशरूपाविद्यामलध्वंसं कृत्वा प्रकाशितात्म-ज्योतिः तं मूर्धन्यनाड्योद्धृत्य अर्चिरादिमार्गेण स्वकीयं परमपदमप्राकृतं निरति शयानन्द-स्वभावं प्रापयित्वा स्वीयाकारेण नित्यनिरतिशयनिर्मलनिजानन्दं गमयति। तस्मादविदुषो विदुषश्च गतिवैषम्यमेवं निर्णीयते।

---

## रश्म्यनुसाराधिकरणम् ॥ ९ ॥

### अखण्डज्योतिर्मयरश्म्यनुसारिणः शिवोपासकस्य शिवप्रकाशद्वारा

### शिवलोकावाप्तिविवरणम्

शिवोपासको विद्वान् प्रारब्धावसाने मूर्धन्यया सुषुम्नानाड्या निर्गत्य केनाधारेण अप्राकृतनिरतिशयानन्दस्वभावं परशिवलोकं गच्छतीत्याशङ्कायां अधिकरणान्तरेणाह ।

## ॥ ३३२ ॥ रश्म्यनुसारी ॥ १७ ॥

यदा परशिवानुग्रहेण मूर्धन्यया सुषुम्नानाड्या देहाद्बहिर्निर्गतः तत्काले स्वनेत्रादि-महाकैलासपर्यन्तं स्वप्रकाशो दृश्यते ; तदा शिवोपासकः अखण्डज्योतिर्मयरश्म्यनुसारी रश्म्यधिष्ठितस्सन् तच्छिवप्रकाशद्वारेण नित्यमङ्गलानिलयनिरतिशयविभवं शिवलोकं [1]गच्छति ।

पूर्वत्र साधकस्य शिवयोगिनः स्वहृदयप्रकाशकपरशिवानुगृहीतस्य शताधिकया मूर्धन्यनाड्या महातेजोमयशिवप्रकाशमहिम्ना सूर्यमण्डलद्वारा महाकैलासप्राप्तिरुपदिष्टा ।

"अथ यत्रैतस्मात् शरीरादुत्क्रामति, अथैतैरेव रश्मिभिरूर्ध्वमाक्रामते" इति श्रुतौ रश्मिभिर्विदुषां परलोकगमनमाम्नायते ।

अत्र रश्म्यनुसारेणैव गतिः उत अन्यथा सम्भवतीति चिन्त्यते । 'ब्रह्मवित् ब्रह्मैव भवति' 'ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्' 'यदा पश्यः पश्यते रुक्मवर्णं' इत्यादिषु तदुपासकानां अन्यथा द्योतनात् रश्म्यनुसारेणैवेत्ययं गतिनियमो न सम्भवति ।"

---

[1] गच्छतीति सूत्रसूचितसूक्ष्मार्थः पूर्वत्र (ग).

"किञ्च— निशि मृतस्य विदुषो रश्म्यनुसरणासम्भवात् अनियमः प्रवर्तत इति प्राप्ते प्रचक्ष्महे—

रश्म्यनुसार्येव विद्वानूर्ध्वं गच्छति ; कुतः ? 'अथैतैरेव रश्मिभिः ; इत्यवधारणात्। पाक्षिकत्वे ह्येवकारोऽनर्थकः स्यात् । यदुक्तं— निशि मृतस्य रश्म्यसम्भवात् रश्मीननुसृत्य गमनं नोपपद्यत इति चेन्न । निशायामपि सूर्यरश्म्यनुसरणं सम्भवति । लक्ष्यते हि निशायामपि निदाघसमये ऊष्मोपलब्ध्या रश्मिसद्भावः ; हेमन्तादौ तु हिमाभिभवात् दुर्दिन इवोष्मानुपलम्भः । श्रूयते च नाडीरश्मीनां सर्वदाऽन्योन्यान्वयः ,

'तद्यथा महापथ आततः उभौ ग्रामौ गच्छति ; इमञ्चामुञ्च' एवमेवैते आदित्यस्य रश्मयः उभौ लोकौ गच्छन्ति इमञ्चामुञ्च । अमुष्मादादित्यात्प्रतायन्ते । ता आसु नाडीषु सृप्ताः । आभ्यो नडीभ्यः प्रतायन्ते । तेऽमुष्मिन्नादित्ये सृप्ताः' इति ।

तस्मात् निश्यपि राश्मिसद्भावात् निशि मृतानामपि विदुषां रश्म्यनुसारेणैव परशिवब्रह्मप्राप्तिरस्तीति निर्धार्य 'ब्रह्मवित् ब्रह्मैव भवति' इत्यादिश्रुतीनां उत्क्रमणविधायकत्वादर्शनात् फलमात्रद्योतकत्वं आचक्ष्यते ।"

---

## निशाधिकरणम् ॥ १० ॥

### अहोरात्र-रश्मिनाड्योरपृथग्भावताप्रतिपादनम्

ननु–

'दिवा च शुक्लपक्षश्च उत्तरायणमेव च ।
[1]मुमूर्षतां प्रशस्तानि विपरीतन्तु गर्हितम् ॥'

इति निशामरणनिन्दा श्रूयते । तस्मान्निशि मृतानां उपासकानां परशिवलोकप्राप्तिः कथमुपपद्यत इत्याशङ्कायां अधिकरणान्तरं दर्शयति–

## ॥ ३३३ ॥ निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वात् दर्शयति च ॥ १८ ॥

इयमिदानीं चिन्त्यते । विदुषो निशि मृतस्य परशिवब्रह्मलोकस्य प्राप्तिरस्ति वा न वा इति । "यद्यपि निशायां सूर्यरश्मिसम्भवात् रश्म्यनुसारेण गतिर्निशायामपि सम्भवति । तथापि निशामरणस्य शास्त्रनिषिद्धत्वात् परमपुरुषार्थलक्षणपरशिवब्रह्मप्राप्तिः निशामृतस्य न सम्भवति । शास्त्रेषु दिवामरणं प्रशस्तम् । विपरीतन्तु निशामरणम् । **'दिवा च शुक्लपक्षश्च'** इत्यादिना दिवामरण-निशामरणयोः प्रशस्तत्व-विपरीतत्वे च उत्तमाधमगतिहेतुत्वेन स्याताम् । अतो निशामरणस्य अधोगतिहेतुत्वमिति प्राप्ते वदामः–"

॥ निशिनेतिचेन्न.... ॥ निशि मरणस्य अधोलोकहेतुत्वावगमात् विदुषां निशि मरणे परशिवब्रह्मलोकप्राप्तिर्नेति चेन्न । सम्बधस्य रुद्रदेवताकसुषुम्नानाडीसम्बधस्य ज्योतिषः यावद्देहभावित्वात् दिवारात्रौच रश्मिनाडीसम्बन्धस्य विद्यमानत्वात् **दर्शयति च**– **'आसु नाडीषु रश्मयः सृप्ताः'** इति श्रुतिः सर्वकालेष्वपि रश्मिनाडीसम्बधं प्रतिपादयति । किञ्च– विदुषः कर्मसम्बन्धस्य यावद्देहभावित्वात् ।

---

[1] मुमुक्षूणां (ज).

एतदुक्तं भवति अनारब्धकार्याणां अधोगति हेतुभूतानां कर्मणां विद्यासम्बन्धो नैव विनाशः, तदुत्तरेषां चाश्लेषात् 'प्रारब्धकार्यस्य च चरमदेहावधित्वात् बन्धहेत्वभावात् विदुषो निशामृतस्यापि ब्रह्मप्राप्तिस्सिद्धैव। **'तस्य तावदेव चिरं यावन्नविमोक्ष्येऽथ सम्पत्स्य'** इति श्रुतिदर्शनात् **'दिवा च शुक्लपक्षश्च'** इत्यादिश्रुतीनां अविद्वद्विषय-कत्वमिति निश्चीयते।

---

दक्षिणायनाधिकरणम्  ॥ ११ ॥

निशि मृतस्येव दक्षिणायनमृतस्यापि परशिवब्रह्मलोकावाप्तिविचारः

ननु– 'अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥'

इति भगवद्गीतादिस्मृतिषु उत्तरायणदक्षिणायनयोः मृतानामेव उपासकानां कर्मिणाञ्च परशिवब्रह्मलोकप्राप्तिः स्वर्गलोकप्राप्तिश्चावगम्यते । तस्मात् कथं कृष्णपक्ष-दक्षिणायन-रात्र्यादिकालेषु मृतानामुपासकानां ब्रह्मलोकप्राप्तिरित्याशङ्कायामधिकरणान्तरेण तन्निरा-करोति–

## ॥ ३३४ ॥ अतश्चायनेऽपि हि दक्षिणे ॥ १९ ॥

'**ब्रह्मविदाप्नोति परम्**'.... इत्यादौ, ब्रह्मविदां ब्रह्मप्राप्तेः ब्रह्मणा सह सर्वकामा-वाप्तेश्च श्रवणादत्र दक्षिणायनमृतानामुपासकानां परशिवब्रह्मलोके तेन सह सर्वकामावाप्तिः समानरूपत्वञ्च सम्भवति वा नवेति सन्दिह्यते ।

'**अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति**' इति । दक्षिणायने मृतस्य चन्द्रप्राप्तिश्रवणात् चन्द्रप्राप्तानाञ्च तेषां '**यावत्सम्पात-मुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते**' इति पुनरावृत्तिव्यपदेशात् ब्रह्मविद्यानिष्ठानां भीष्मादीनामुत्तरायणप्रतीक्षादर्शनाच्च दक्षिणायनमृतानां विदुषां सर्वथा ब्रह्मप्राप्तिर्न सम्भवतीति प्राप्ते तत्रोच्यते–"

सूत्रे हिकारो निश्चयार्थः। निशि मृतस्य विदुषो यतः परशिवब्रह्मलोकप्राप्ति-हेतुरुक्तः तत एव हेतोः दक्षिणायने मृतस्य परशिवब्रह्मलोकप्राप्तिस्सिद्धा। 'ब्रह्मविदाप्नोति परं' इत्यादिश्रुतिषु ब्रह्मविदां कालनियमादर्शनात्।

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥

इत्यादौ विदुषां यदा लौकिकसर्ववासनात्यागः तदा तत्रैव ब्रह्मप्राप्तेः प्रपञ्चितत्वाच्च अविदुषामेव पितृयानेन पथा चन्द्रप्राप्तिद्वारा पुनरावृत्तिः; विदुषां तु चन्द्रप्राप्तानामपि तस्माद्ब्रह्मणो सहिज्ञानमाप्नोति' इति वाक्यशेषात् तेषां दक्षिणायनमृतानां चन्द्रप्राप्तिः ब्रह्मलोकगमनेच्छावतां पुरुषाणां विश्रमहेतुमात्रमिति गम्यते।

वाक्यशेषाभावेऽपि- पूर्वोक्तादेव बन्धहेत्वभावात् विदुषां चन्द्रप्राप्तिप्रसक्तावपि परशिवब्रह्मलोकप्राप्तिरनिवार्या।

'वेदान्तविज्ञानसुनिश्चितार्थास्संन्यासयोगाद्यतयश्शुद्धसत्वाः।
ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे॥

इति वेदान्तिनां सर्वेषां ब्रह्मलोकप्राप्तिद्वारा क्रममुक्त्युपदेशात् 'ब्रह्मभवनकामो ब्रह्मवेदनं कुर्यात्' 'न स पुनरावर्तते' इत्यादिषु ब्रह्मविदामेव पुनरावृत्तिरहितशिवसायुज्योपदेशात् दक्षिणायनमृतानामपि शिवज्ञानिनां शिवलोकप्राप्तिरेवेति घण्टाघोषः। "भीष्मादीनां योगप्रभावात् स्वच्छन्दमरणानां धर्मप्रवर्तनाय उत्तरायणप्राशस्त्यप्रदर्शनार्थः तथाविधाचारः इति निश्चीयते।

ननु च विदुषो मुमूर्षून् प्रति पुनरावृत्त्यपुनरावृत्तिहेतुत्वेन कालविशेषविधिः दृश्यते।

"यत्र कालेत्वनावृत्तिं आवृत्तिं चैव योगिनः।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ॥

अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥

शुक्लकृष्णे गती ह्येते जगतश्शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ "

इति दर्शनात् अयनद्वयमृतानां सर्वेषां कथं ब्रह्मप्राप्तिरित्याशङ्कायां तत्राह–

## ॥ ३३५ ॥ योगिनः प्रति (च) स्मर्येते स्मार्ते चैते ॥ २० ॥

" नात्र मुमुर्षून् प्रति मरणकालविशेषोपादानं स्मर्यते ; अपि तु योगिनः योगनिष्ठान् प्रति स्मार्ते स्मृतिविषयभूते स्मर्तव्ये देवयान-पितृयाणाख्ये गती स्मर्येते, योगाङ्गतया अनुदिनं स्मर्तुम् । तथाह्युपसंहारः ।

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥

इति 'अग्निर्ज्योति' 'धूमो रात्रिः' इति च देवयान-पितृयाणे प्रत्यभिज्ञायेते । उपक्रमे च 'यत्र काले तु' इति कालशब्दः कालाभिमानिदेवतातिवाहिकपरः अग्न्यादेः कालत्वासम्भवात् । अतः 'तेऽर्चिषमभिसम्भवन्ति' इति विहित देवयानानुस्मृतिरत्र विद्यानिष्ठान् प्रति विधीयते 'न मुमूर्षून् प्रति मरणकालविशेषः ।" 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्ये' इति श्रुत्यवगमात् ।

अतस्सर्वदा विदुषां परशिवब्रह्मप्राप्तौ निशा-दक्षिणायन-कृष्णपक्षनिषेधो नास्त्येव । यदा देहपातस्तदानीमेव तच्छिवत्वप्राप्तिरिति वेदितव्यम् । भगवद्गीतादिस्मृतिषु विद्यमानाहश्शब्द रात्रिशब्द-शुक्ल-कृष्ण-दक्षिणोत्तरायणशब्दानां श्रुतिसूत्रस्थाऽहरादिशब्दानामिव आति-

वाहिकदेवतापरत्वेन कालपरत्वायोगात् । अस्याः श्रुतेः मूर्तपरशिवब्रह्मोपासकमात्रपरत्वेऽपि न कोऽपि विरोधः ।

इति श्रीमद्यतिव्रजपरिवृढ-श्रीपतिपण्डितभगवत्पादाचार्यस्वामिकृत-भेदाऽभेदात्मक विशेषाद्वैत-सिद्धान्तव्यवस्थापकवैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

## श्रीकरभाष्ये

फलाध्यायसंज्ञिकचतुर्थाध्यायस्य वागाधिकरणाद्येकादशाधिकरणात्मक-वाङ्मनसि दर्शनाच्छब्दाच्चेत्यादिविंशतिसूत्रात्मक-

## द्वितीयः पादः समाप्तः

---

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. ........ 002

## अथ श्रीकरभाष्ये चतुर्थाध्यायस्य तृतीयः पादः

### अर्चिराद्यधिकरणम् ॥ १ ॥

### आर्चिरादिगतिफलम्

पूर्वत्र पुण्यकर्मवान् स्वकालविधिपरिपाकेन स्थूलशरीरं विहाय मुखनेत्राद्युत्तमद्वारेणोत्क्रम्य **पितृयानमार्गेण** चन्द्रमसं प्राप्य तदनन्तरं तल्लोकात् स्वर्गादिलोकमनुभूय तत्पुण्यशेषेण श्रोत्रियब्राह्मणाद्युत्तमयोनिजननं प्राप्नोति ।

**दुरितकर्मवान्** स्थूलदेहावसाने तत्तत्कर्मानुसारेण गुदादिकनिष्ठाङ्गमार्गेण निर्गत्य **धूमगत्या** शमनलोके कुम्भीपाकादि घोरनरकमनुभूय तत्पापनाशेन मर्त्यलोके गर्दभसूकरादिदुष्टयोनिसम्भवं लभते ।

तथैवात्र निरवयवपरमाकाशशिवतत्त्वोपासनाविशेषेण विद्वानिहैव षोडशकलात्मकलिङ्गशरीरेण सह शिवतत्त्वं गच्छति ।

उमामहेश्वरात्मकमूर्तब्रह्मोपासको **भक्तः** स्थूलदेहत्यागे तदुपासनामहिम्ना सुषुम्नानाडीप्रज्वलनतेजोमार्गेणोत्क्रम्य अर्चिरादिपथाऽनुगुण्येन उत्तरायणे प्रभाकरमण्डलानुसरणेन दक्षिणायने चन्द्रमण्डलद्वारा निरुपमनित्यकल्याणनिरतिशयशिवलोकादिकल्याणविभूत्यनुभववान् भवतीत्युपदेशेन **'य एवमेतद्विदुर्ये चेमेऽरण्ये श्रद्धां सत्यमुपासते; तेऽर्चिषमभिसम्भवन्ति'** इत्युपक्रम्य **'षण्मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतम्'** इत्यादिना पुण्यकर्मिणां **वायुलोकवरुणलोकेन्द्रलोकादि**प्राप्तेः बृहदारण्यके व्यवस्थापनात्, **'तेऽर्चिषमभिसम्भवन्ति'** इति छान्दोग्यश्रुत्या मूर्तब्रह्मोपासकानां अर्चिरादिमार्गेण तल्लोकादिप्राप्तिविधायकशास्त्रं कथमुपपद्यत इत्याशङ्क्य तृतीयपादमारभते—

विदुषामर्चिरादिमार्गेणैव परशिवब्रह्मलोकावाप्तिनिर्णयः

॥ ३३६ ॥ **अर्चिरादिना तत्प्रथितेः** ॥ १ ॥

पूर्वत्र हृदयपुण्डरीकगतपरशिवानुग्रहेण प्रकाशितद्वारस्य तदुपासकस्य "उत्क्रान्तस्य मूर्धन्यनाडीविशेषेण हार्दानुग्रहात् गत्युपक्रम उक्तः। तस्य गच्छतो मार्ग इदानीं निर्णीयते।

तत्र श्रुतिषु मार्गान्तराणि बहुधा आम्नायन्ते। छान्दोग्ये तावत् 'यथा पुष्करपलाशे आपो न श्लिष्यन्ते॥' इत्युपक्रम्य ब्रह्मविद्यामुपदिश्याम्नायते। 'अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदु च न, अर्चिषमेवाभिसम्भवन्ति' 'अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षड्डुदङ्ङेति मासांस्तान्, मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्। तत्पुरुषोऽमानवः। स एनान् ब्रह्म गमयति। एष देवपथो ब्रह्मपथः। एतेन प्रतिपद्यमाना इमं मानवमावर्तं' नावर्तन्ते इति। तथात्रैवाष्टमे 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति।

कौषीतकिनश्च देवयानमार्गमन्यथाऽधीयते, 'स एतं देवयानं पन्थानमापद्य अग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं'; इति।

तथा बृहदारण्यके– 'य एवमेतद्विदुः ये चेमे अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ति...' इति। तत्रैव पुनरन्यथा "यथा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमभिगच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खम्। तेन स ऊर्ध्वमाक्रमते। स आदित्यमागच्छति। तस्मै स तत्र विजिहीते' यथा आडम्बरस्य खम्। तेन स ऊर्ध्वमाक्रमते। स चन्द्रमसमागच्छति। तस्मै स तत्र विजिहीते; यथा दुन्दुभेः खम्। 'इत्यादि'

तत्र संशयः– किमर्चिरादिरेक एव मार्ग आभिः श्रुतिभिः प्रतिपाद्यत इति तेनैव ब्रह्म गच्छति विद्वान्, उत तत्स्मात् अन्ये अन्यत्र मार्गा" इति स्मर्यते।

'विदुषामर्चिरादिमार्गेणैव परशिवलोकप्राप्तिः इति नियमो नास्ति। तैत्तिरीये– 'य एषोन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके। य एष स्तन इवावलम्बते। सेन्द्रयोनिः। यत्राऽसौ केशान्तो

विवर्तते। व्यपोह्य शीर्षकपाले। भूरित्यग्नौ प्रतितिष्ठति। भुव इति वायौ। सुवरित्यादित्ये। मह इति ब्रह्मणि। आप्नोति स्वाराज्यम्' इति। एवं बृहदारण्यक-वाजसनेयशाखादावप्यर्चिरादिगतिनिरपेक्षतया परशिवब्रह्मलोकप्राप्तिदर्शनात्। अतः तल्लोकावाप्तिरन्यथैवेति प्राप्ते प्रचक्ष्महे--

विदुषामर्चिरादिमार्गेणैव परशिवलोकप्राप्तिः कुतः? तत्प्रथितेः पञ्चाग्निविद्यादिषु 'तेऽर्चिषमभिसम्भवन्ति' इत्यादिना अर्चिरादेः ब्रह्मप्रापकत्वेन प्रसिद्धत्वात्। 'भूरित्यग्नौ प्रतितिष्ठति' इत्यादिना विद्यादिषु न परशिवब्रह्मलोकप्राप्तिमार्ग उच्यते। किन्तु तद्विभूतिप्राप्तिरेव। तस्मात्तल्लोकप्राप्तिर्नान्यथा गम्यते। प्रत्यभिज्ञानात्स एव मार्गः सर्वत्र न्यूनाधिकभावेन प्रतिपाद्यत इति विद्यागुणोपसंहारवत् अन्यत्र प्रोक्तानां अन्यत्रोपसंहारः क्रियते।

"छान्दोग्ये तावत् उपकोसलविद्यायां पञ्चाग्निविद्यायां चैकरूप्येणैवाम्नायते। वाजसनेयके च पञ्चाग्निविद्यायां तथैवार्चिरादिरल्पान्तर आम्नायते। अतस्तथापि स एवेति प्रतीयते। अन्यत्रापि सर्वत्र अग्न्यादित्यादयः प्रत्यभिज्ञायन्ते।"

## वाय्वधिकरणम् ॥ २ ॥

### संवत्सरादूर्ध्वं आत्मनः वायुलोकप्रवेशविचारः

ननु बृहदारण्यकश्रुतौ 'स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं' इति वायुलोक-वरुणलोकादयश्चत्वार उक्ताः। तेषां कुत्र प्रवेशः ? इत्याशङ्कायामधिकरणान्तरेणाह–

## ॥ ३३७ ॥ वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

**अब्दात्** संवत्सरादुपरि **वायुलोकं** प्रविशति। कुतः ? ॥ **अविशेषविशेषाभ्याम्** ॥ 'स वायुलोकं इत्यविशेषवचनात्। सामान्यवचनात् वायुलोकस्य कुत्रचित्प्रवेशः कर्तव्यः। तत्र वाय्यादित्ययोः परस्पररूपसम्बन्धविशेषात् संवत्सरादित्ययोर्मध्ये वायोर्निवेश इति निश्चीयते। 'स वायु लोकं' इति श्रुतेः लोकमात्रप्रतिपादकत्वेन क्रमप्रतिपादकत्वाभावात् अविशेषवचनत्वं द्रष्टव्य इति सूत्रसूचितसूक्ष्मार्थः।

"अर्चिरादिनैव गच्छन्ति विद्वांसः' इत्युक्तम्। तत्र अर्चिरादिके मार्गे छान्दोगाः मासादित्ययोरन्तराले संवत्सरमधीयते; ....मासेभ्यः संवत्सरं संवत्सरादादित्यं....' इति" अर्चिरादिक्रमः।

बृहदारण्यके[1] "यदा वै पुरुषोऽस्माल्लोकात्प्रैति' स वायुमागच्छति तस्मै स तत्र विजिहीते; यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इति श्रूयते।

वाजसनेयिनस्तु– "तयोरेवान्तराले देवलोकम्, 'मासेभ्यो देवलोकं देवलोकादादित्यम्' इति दर्शनात्;' संवत्सरादित्ययोर्मध्ये वायुः श्रुतः। स तत्र निवेश्यो न वेति संशये 'न निवेश्यः।" 'श्रवणाद्गुणोपसंहारन्यायेन संवत्सरादूर्ध्वं अदित्यात्पूर्वं

[1] (श्रीभाष्ये) (न).

वायुर्निवेश्यः। "छान्दोग्य-वाजसनेययोरुभयत्रापि मार्गैकत्वात् उभावुभयत्र उपसंहार्यौ; तत्र मासादूर्ध्वमभिहितयोः संवत्सर-देवलोकयोः पञ्चम्या अभिहितस्य श्रौतक्रमस्य तुल्यत्वेऽपि '**अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात्यान् षड्दङ्ङेति**' मासांस्तान् इत्यधिककालान न्यूनकालेभ्यः उत्तरोत्तरत्वेन निवेशदर्शनात् संवत्सरस्यैव मासानन्तरं बुद्धौ विपरिवृत्तेः संवत्सर एव मासादूर्ध्वं निवेशयितव्य इति तत ऊर्ध्वं देवलोक इति निश्चीयते।

अन्यत्र वाजसनेयिनः– '**यदा वै पुरुषोऽस्माल्लोकात् प्रैति; वायुमागच्छति; तस्मै स तत्र विजिहीते। यथा रथचक्रस्य खम् तेन स। ऊर्ध्वमाक्रमते स आदित्यमागच्छति।**' इत्यादित्यात् पूर्वं वायुमधीयते।

**कौषीतकिनस्तु**– '**स एतं देवयानं पन्थानमापद्य अग्निलोकमागच्छति' स वायुलोकं**' इत्यग्निलोकशब्दनिर्दिष्टादर्चिषः परं वायुमभिधीयते। तत्र कौषीतकिनां पाठक्रमेणार्चिषः परत्वेन प्राप्तस्य वायोः, वाजसनेयिनां '**तेन स ऊर्ध्वमाक्रामते स आदित्यमागच्छति**' इत्यूर्ध्वशब्दनिर्दिष्टश्रौतक्रमेण पाठक्रमाद्बलीयसा आदित्यात् पूर्वं प्रवेशो निश्चीयते। अत आदित्यात्पूर्वं' देवलोकस्य वायुलोकस्य च व्यपदेशाद्भिन्न; इति गम्यते। भिन्नार्थत्वे च ऊर्ध्वशब्देन पञ्चम्या चोभयोः संवत्सरादित्यान्तराले श्रुतिक्रमेण प्राप्तत्वात् विशेषाभावाच्च यथेष्टमिति प्राप्ते तत्रोच्यते– वायुमब्दादिति।

" वायुं संवत्सरादूर्ध्वमधिगच्छेत्। कुतः? अविशेषविशेषाभ्यां वायुरेव निर्दिष्टवान्। देवलोकशब्दो ह्यविशेषेण- सामान्येन '**देवानां लोक**' इत्यनेन रूपेण वायुमभिधत्ते। '**स वायुमभिगच्छति तस्मै स तत्र**' इति वायुशब्दो विशेषेण वायुमभिधत्ते। अतो देवलोक-वायुशब्दाभ्यां अविशेषविशेषाभ्यां वायुरेवाभिधीयत इति संवत्सरादूर्ध्वं वायुमेवाभिगच्छेत्। **कौषीतकिनां** वायुलोकशब्दश्चाग्निलोकशब्दवत् '**वायुश्चासौ लोकश्च**' इति व्युत्पत्या वायुमेवाभिधत्ते। वायुश्च देवानामावासभूत इत्यन्यत्र श्रूयते। '**योऽयं पवते एष देवानां गृहाः**", इति दर्शनादविरोधः।

---

## वरुणाधिकरणम् ॥ ३ ॥

### वायुलोकाज्जीवस्य तटिल्लोकप्रवेशविचारः

नन्वर्चिरादिगत्यनुसरणानां विदुषां वायुलोकादूर्ध्वं कस्माल्लोकात् शिवलोकः सम्भवतीत्याशङ्कायामधिकरणान्तरेण दर्शयति—

## ॥ ३३८ ॥ तटितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥

वायुलोकानन्तरं जीवस्तटिल्लोकं प्रविशति। तटिल्लोकादुपरि **अधिवरुणो** वरुणलोकं गच्छति। कुतः? **सम्बन्धात्**। विद्युद्वरुणयोः परस्परसम्बन्धात्; इन्द्रप्रजापतिलोकयोऽस्तु **'अविशिष्टानामन्ते निवेशः'** इति न्यायेन वरुणलोकादनन्तरमिन्द्रलोकः, तदनन्तरं प्रजापतिलोकद्वारा परशिवलोकं प्राप्नोतीति सूत्रार्थः।

**"कौषीतकीनां 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं.... स आदित्यलोकं'** इत्यत्राग्निलोकशब्दस्यार्चिष्पर्यायत्वेन प्राथम्यमविगीतम्। वायोश्च संवत्सरादूर्ध्वं प्रवेशः उक्तः। आदित्यस्याप्यत्र प्राप्तपाठक्रमबाधेन **'देवलोकादादित्यमादित्याद्विद्युतम्'** इति। वाजसनेकोक्तश्रुतिक्रमात् देवलोकशब्दाभिहितात् वायोरुपरि निवेशः सिद्धः। इदानीं वरुणेन्द्रादिषु चिन्ता। किमेते वरुणादयो यथापाठं वायोरूर्ध्वं निवेशयितव्याः, आहोस्वित् विद्युतोऽधीति विशये—

अर्चिःप्रभृतिषु सर्वेषु 'अर्चिषोऽहः' इत्यादिश्रुतिक्रमोपरोधात् विद्युतः परस्ताच्च 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति विद्युत्पुरुषस्य ब्रह्मगमयितृत्वश्रवणाच्च सर्वत्रावकाशाभावेन अप्राप्तौ चोपदेशवैयर्थ्यायावश्यं कस्यचित् बाध्यत्वे, पाठक्रमानुरोधेन वायोरनन्तरं वरुणो निवेशयितव्यः; वाय्वादित्ययोः क्रमस्य बाधितत्वेन **इन्द्र-प्रजापती** अपि तत्रैव निवेशयितव्यौ इति प्राप्ते उच्यते। **तटितोऽधि** इति।

वरुणस्तावत् विद्युत उपरिष्टान्निवेशयितव्यः। कुतः? सम्बन्धात्; मेघोदवर्तित्वाद्विद्युतो वरुणेन सम्बन्धो लोकवेदयोः प्रसिद्धः।

एतदुक्तं भवति— वरुणादीनामुपदेशावैयर्थ्याय क्वचिन्निवेशयितव्यत्वे सति पाठक्रमादर्थक्रमस्य बलीयस्त्वात् विद्युतोऽधि वरुणो निवेशयितव्यः। ततश्चामानवस्य गमयितृत्वं व्यवधानसहमित्यवगम्यते। तस्य च व्यवधानसहत्वादिन्द्रादेश्चोपदिष्टस्यावश्य-निवेशयितव्यस्य वरुणादुपर्युपदिष्टत्वात् आगन्तूनामन्ते निवेशयितव्यत्वाच्च वरुणादुपरि इन्द्रादिर्निवेशयितव्यः" इति वेदितव्यम्।

---

आतिवाहिकाधिकरणम्   ॥ ४ ॥

**परशिवप्रेरितातिवाहिकदेवैः दहरादिसर्वविद्योपासकपुरुषस्य महाकैलासानयनक्रमविचारः**

नन्वार्चिरादिगत्या वायुतटिद्वरुणादिलोकगमने मुक्तजीवः केन सहायेन शिवलोकपर्यन्तं गच्छतीत्याशङ्कायां अधिकरणान्तरेण समाधानमुपदिशति—

## ॥ ३३९ ॥  आतिवाहिकास्तल्लिङ्गात्   ॥ ४ ॥

तेष्वर्चिरादिलोकेषु पूर्वपूर्वलोकस्थाः देवाः ह्युत्तरोत्तरलोकप्राप्तिपर्यन्तमुपासकानां आतिवाहिकाः सहायभूताः, नेतारः । कुतः ? **तल्लिङ्गात्** ; '**स एनान् ब्रह्म गमयति**' इति श्रुतौ विद्युल्लोकप्राप्त्यनन्तरममानुषपुरुषस्य नेतृत्वप्रतिपादनरूपाल्लिङ्गात् दृष्टान्तेन पूर्वलोकेष्वपि नेतारा अङ्गीकर्तव्या इति सूक्ष्मार्थः ।

"इदमिदानीं चिन्त्यते— किमर्चिरादयो मार्गाः चिह्नभूताः ? उत भोगभूमयः ? अथवा विदुषां ब्रह्मप्रेप्सतामतिवोढारः ? इति । किं तावत् युक्तम् ? मार्गचिह्नभूता इति । कुतः ? उपदेशस्य तथाविधत्वात् । दृश्यते हि लोके ग्रामादीन् प्रति गन्तॄणां एवं विधो देशिकैरुपदेशः । '**इतो निष्क्रम्यामुकं वृक्षं अमुकां नदीं अमुकञ्च पर्वतपार्श्वं गत्वामुकं ग्रामं गच्छ**' इति ।

अथवा भोगभूमयः एताः स्युः । कालविशेषतया प्रसिद्धानां अहरादीनां मार्गचिह्नत्वानुपपत्तेरन्यस्य च मार्गचिह्नभूतस्यैतेषामनभिधायकत्वात् भोगभूमित्वम् । '**एत एव लोका यदहोरात्राण्यब्दमासा ऋतवस्संवत्सराः**' इत्यहरादीनां लोकपरत्ववचनमुपपद्यन्ते । अत एव च **कौषीतकिनः**— '**अग्निलोकमागच्छति**' इत्यादिना लोकशब्दानुविधानेन अर्चिरादीन् पठन्तीत्येवं प्राप्ते [1]वक्ष्यामः— **आतिवाहिका इति** ।

---

[1] वक्ष्यामि (ग).

विदुषामतिवाहे शिवेन परमपुरुषेण नियुक्ता आतिवाहिकाः देवताविशेषाः ; एतेऽर्चिरादयः। कुतः ? **तल्लिङ्गात्**– अतिवहनकलिङ्गात्। अतिवहनं हि गन्तॄणां गमयितृत्वम्। तच्च– '**तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति।**' इत्युपसंहारे श्रूयमाणं पूर्वेषामप्यविशेषश्रुतानां स एव सम्बन्ध इति गमयति। वदन्ति– चार्चिरादयश्शब्दाः अर्चिराद्यात्मभूतान् अभिमानिदेवताविशेषान्, '**तं पृथिव्यब्रवीत्**' इतिवत्।"

किञ्चास्मिन् **सूत्रे अगस्त्यमुनिसार्वभौमेन कृतलघुसूत्रवृत्तौ, 'लिङ्गे सुषुप्तिः'** इत्यदि बहुश्रुतिषु घट-कुम्भशब्दादिवत् ब्रह्म-लिङ्गशब्दयोः पर्यायत्वावगमात् **तल्लिङ्गात्** पूर्वोक्तदहरादिसर्वविद्योपास्यपरशिवात् प्रेरिताः सन्तः आतिवाहिकाः मर्त्यलोक-शिवलोकान्तरालनिवासिदेवाः दहरादिसर्वब्रह्मविद्योपासकं **पुरुषं सौधसोपान-आरोहण न्यायेन** क्रमक्रमेण निरुपमानन्दनित्यवैभवं महाकैलासमानयन्तीति व्याख्यातं तदप्यविरुद्धम्।

यद्येवं '**तत्पुरुषोऽमानवस्स एतान् ब्रह्म गमयति**' इति **वैद्युतस्यैव पुरुषस्य** ब्रह्मगमयितृत्वश्रुतेः विद्युतः परेषां **वरुणादीनां कथमातिवाहिकत्वेनान्वय** इत्यत आह–

## ॥ ३४० ॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥

"**ततः** विद्युत उपरि **वैद्युतेन**– अमानवेनैवातिवाहिकेन विदुषां आब्रह्मप्राप्तेर्गमनम्। कुतः ; **तच्छ्रुतेः**। '**स एनान् ब्रह्म गमयति**' इति तस्यैव गमयितृत्वश्रुतेर्वरुणादयस्तदनुग्राहकाः इति तेषामप्यातिवाहिकत्वेनान्वयो विद्यत एव।"

केषाञ्चिदिहैव, केषाञ्चिल्लोकान्तरे मुक्तिरित्युपदेशे ब्रह्मविद्योपासकानां सर्वेषां फलैक्यविधायकश्रुतिबाधप्रसङ्गादुभयोरेकपक्ष एवाङ्गीकरणीय इत्याशङ्कायामाह–

## ॥ ३४१ ॥ उभयव्यामोहात्तत्सिद्धेः ॥ ६ ॥

लोकान्तरप्राप्तिमात्रसाधकद्वैतमार्गिणां स्वकण्ठाभरण-दशमीविवेकसन्धानादिवत् स्वाभिन्न-ब्रह्मज्ञानेन इहैव मुक्तिविधायकाद्वैतवादिनां चोभयेषां व्यामोहात् सर्वश्रुतिसिद्धमुख्यार्थपरि-ज्ञानाभावात् **श्रुत्यैकदेशप्रामाण्यपक्षैकदेशमतद्वयं** मुमुक्षुभिर्नाङ्गीकर्तव्यम् । कुतः ? तत्सिद्धेः । **'न तत्र प्राणा उत्क्रामन्ते अत्रैव समवलीयन्ते ;' 'ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे'** इति च । इहलोक-परलोक-मुक्त्यसन्दिग्ध-विधायकश्रौतविधिदर्शनात् आधिकारिभेदेन तदुभयं समञ्जसम् ।

---

## कार्याधिकरणम् ॥ ५ ॥

**परब्रह्मोपासनालब्धमुक्तिमार्गगामिनो जीवस्य बादरेरप्यनुमतः शिवलोक-गमनकार्यविचारः**

ननु '**प्रज्ञानं ब्रह्म**' इत्यादिश्रुतिषु जीवस्यैव साक्षात् ब्रह्मत्वव्यवस्थापनात् जीव-ब्रह्मणोः प्राप्य-प्रापकत्व विधायकशास्त्रं औपचारिकम् ? उत '**आकाशवत्सर्वगतश्च नित्यः**'

'**पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥**'

इत्यादिषु ब्रह्मणः सर्वव्यापकत्वावगमाच्च परब्रह्मप्राप्त्यर्थमर्चिरादिमार्गेण गमनं व्यर्थं स्यात् ।

किञ्च– जीवस्य ब्रह्मात्मकत्वेन ब्रह्मजन्यत्वायोगात् ब्रह्मप्राप्तिरयुक्ता । तस्मात् ब्रह्मप्राप्तिविधायकानां श्रुतीनां हिरण्यगर्भपरत्वमेवेत्याशङ्कायामधिकरणान्तरेणाह–

## ॥ ३४२ ॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

**कार्यं**– '**यतो वा इमानि भूतानि जायन्ते**' इत्यादि श्रुतिषु जीवाना-मजन्यत्वेऽपि परब्रह्माविर्भूतत्वेन व्यपदेशात् ; **बादरिरस्य** जीवस्य ब्रह्मकार्यत्वं निर्दिशति। कुतः ? ॥ **गत्युपपत्तेः** ॥ '**यत्प्रयन्त्यभिसंविशन्ति**' इत्यत्र जीवानां ब्रह्मलयत्वाव-गमात् । अतः अर्चिरादिमार्गेण परशिवब्रह्मलोकगमनं युक्तमिति सूक्ष्मार्थः । अर्चिरादि-नैव विद्वान् गच्छति । अर्चिरादिरमानवान्तश्च गण आतिवाहिको विद्वांस ब्रह्म गम-यतीत्युक्तम् । इदानीमत्र चिन्त्यते–

किमयमर्चिरादिको गणः **कार्यं** हिरण्यगर्भोपासकान्नयति ? उत परब्रह्मण उपास-कानेव ?

अथ परब्रह्मोपासकेषु प्रत्यगात्मानं ब्रह्मात्मकतयोपासमानाश्च इति विषये,[1] कार्यब्रह्मोपासकानेव गमयतीति निश्चीयते। कुतः? '**हिरण्यगर्भस्समवर्ततताग्रे भूतस्य जातः पतिरेक आसीत्**', '**ब्रह्म वा इदमग्र आसीत्**' इत्यादिषु चतुर्मुखस्य हिरण्यगर्भस्य सर्वाधिक्यकथनात् तदुपासकानेव आतिवाहिकास्तल्लोकं गमयन्ति। "न हि परिपूर्णं सर्वज्ञं सर्वगतं-सर्वात्मभूतं-परशिवब्रह्म उपासकस्य तत्प्राप्तये देशान्तरगतिरुपपद्यते। प्राप्तत्वादेव। नित्यप्राप्तपरब्रह्मविषयाऽविद्यानिवृत्तिमात्रमेव हि परविद्याकार्यम्। कार्यन्तु हिरण्यगर्भरूपं ब्रह्म उपासीनस्य परिच्छिन्नदेशवर्तिप्राप्य-प्राप्त्यर्थं गमनमुपपद्यते; तस्मादर्चिरादिरातिवाहिकगणः तमेव नयतीति" प्राप्ते प्रचक्ष्महे—

अस्य परब्रह्मोपासकस्य **कार्यं**— परशिवलोकगमनकार्यं **बादरिर्मन्यते**। कुतः? '**ब्रह्मविदाप्नोति परं**', .... '**सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता**', '**ब्रह्मवित् ब्रह्मैव भवति**' इत्यत्र परब्रह्मोपासकानामेव तेन सह सर्वकामावाप्तिदर्शनात्, लोके शिव-केशवपूजा-नमस्कारालयस्मरण-मन्त्र-तन्त्र-दीक्षाविधीनामेव द्योतनाच्च मुमुक्षूणां हिरण्यगर्भोपासनं नाङ्गीकर्तव्यम्।

'**किन्नरा इन्द्रभक्ताश्च ब्रह्मभक्तास्तु राक्षसाः।**
**विष्णुभक्तास्तु गन्धर्वाः सिद्धाश्शाङ्करभाक्तिकाः॥**
**तथापि बलि-प्रह्लाद-विभीषण-सुरान्तकाः।**
**विष्णुभक्ता इति प्रोक्ता बाणासुर-दशाननौ॥**
**शिवभक्ताविति प्रोक्तावन्ये द्रुहिणभाक्तिकाः।**'

इति हिरण्यगर्भस्य राक्षसदेवतात्वान्मुमुक्षूणां तदुपासनेनार्चिरादिगतिर्न सम्भवति।

किञ्च— '**तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नात्पुरुष**' इत्यादिना हिरण्यगर्भात्प्रागेव जीवसृष्टिः श्रूयते। '**यथा सुदीप्तात्पावकात् विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः तथाक्षराद्विविधास्सौम्य**

[1] संशये (न)

भावाः प्रजायन्ते । तत्र चैवापि यन्ति ॥' इत्यादिभिः परब्रह्मणो जीवानामाविर्भूतत्वस्य तस्मिन्नेव मुक्तिदशायां तेषामेकत्वस्य च व्यवस्थापनात् नान्यार्थो युक्तः । 'द्वावेव ब्रह्मणो रूपे मूर्तश्चाऽमूर्तमेव च', 'नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः' इत्यादिना शिवस्यैव मूर्ताऽमूर्तत्वनिरूपणावगमात् सर्वगतस्य तस्य पवनादिवन्मूर्ताऽमूर्तत्वमविरोधम् ।

अस्मिन्नर्थे हेत्वन्तरमाह—

## ॥ ३४३ ॥ विशेषितत्वाच्च ॥ ८ ॥

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं हि देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥'

इति श्रुतौ शिवात्परब्रह्मणश्चतुर्मुखोत्पत्तेस्तस्य वेदशास्त्रपुराणादिप्रदायकत्वस्य च दर्शनात् हिरण्यगर्भस्य सर्वातिशयित्वममृतप्रदायकत्वञ्च सर्वथा न सम्भवति ।

ननु 'पुरुषोऽमानव एतान् 'ब्रह्म गमयति' इत्यादौ मुमुक्षूणां हिरण्यगर्भलोकप्राप्तेर्हिरण्यगर्भप्राप्तेश्चावगमात् सर्वाधिकत्वं तस्यैवेत्याशङ्कायामाह—

## ॥ ३४४ ॥ सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

तुशब्दोऽत्र शङ्कानिरासार्थः । 'यो देवानां प्रभवश्चोद्भवश्च ! विश्वाधिको रुद्रो महर्षिः' 'हिरण्यगर्भं पश्यत जायमानं स नो बुध्या शुभया संयुतक्तु' इत्यादिषु परब्रह्मणश्शिवात् हिरण्यगर्भोत्पत्तेः उपासकबुद्धिप्रेरकत्वस्य च निर्देशात् । उत तत्रैव तमीशानं .... 'यो देवानां' इति स्वसमीपहिरण्यगर्भेक्षितृत्वस्य शुभस्मृतिहेतुत्वस्य च व्यवस्थापनाच्च मुमुक्षोरुपास्यत्वं शिवान्नेतरस्योपपन्नम् । 'यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ॥' इत्यत्रापि परशिवब्रह्मोपासकस्य तेन सह सर्वकामावाप्तेः अवगमात् तदेव सिद्धम् । 'तत्पुरुषोऽमानवः

---

[1] ब्रह्मलोकान् गमयति (ग).

स एवान् ब्रह्म गमयति' इत्यादिश्रुतिभिः शिव एवावगम्यते। 'शिव एको ध्येयश्शिवङ्करः सर्वमन्यत्परित्यज्य' इत्यादिषु मुमुक्षूणां शिवेतरध्येयनिषेधदर्शनात्।

अस्मिन्नर्थे हेत्वन्तरमाह-

॥३४५॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥१०॥

'गताः कलाः पञ्चदश प्रतिष्ठाः देवाश्च सर्वे प्रतिदेवतासु।
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति॥'

इति श्रवणात् कार्यात्यये चरमशरीरिणां मुमुक्षूणां विदेह- मुक्त्यवसरे कार्यात्मकप्राणेन्द्रियादिकस्य सर्वस्य नाशे सति, अतः- तदधिष्ठानब्रह्मादिदेवताभिस्सह **परमभिधानात्** परमात्मन्येकीभावत्वव्यपदेशात् हिरण्यगर्भोपासनं मुमुक्षूणामविचारितमणीयम्।

तस्मात् 'एष देवपथो ब्रह्मपथश्च एतेन प्रतिपद्यमाना इमं मानवमावर्तन्ते', 'तयोर्ध्वमायन्नमृतत्वमेति' इत्यमृतत्वप्राप्त्युपदेशकादिश्रुतीनां हिरण्यगर्भपरत्वं नोपपद्यते। अपुनरावृत्तिव्यपदेशेन चित्कैलास एवाभिहितम्। 'आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन।' इत्यादिस्मृतिषु ब्रह्मादिलोकानां अनित्यत्वश्रवणात्;

'यदा तमस्तन्नदिवा न रात्रिर्न सन्न चासच्छिव एव केवलः।
तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी॥'

इति जगतः प्रागवस्थायां प्रळयानन्तरमपि शिवे स्थितिमात्रस्यैवोपदेशात् 'ऋतं सत्यं परं ब्रह्म' इत्यादौ तस्यैव त्रैकालिकाबाध्यत्वेन ऋतत्व-सत्यत्वाद्यनन्यसाधारणधर्मोपवेशाच्च मुमुक्षूपास्यत्वं नेतरस्य सम्भवति।

पुनर्हेत्वन्तरमाह-

॥ ३४६ ॥ स्मृतेश्च ॥ ११ ॥

शिवांशभूतजीवानां शिवोपासनमुच्यते।
शिवस्यानुग्रहादेव क्रिमिकीटकवत्सदा॥
शिवात्मकत्वं संप्राप्य पुनर्जन्म न विद्यते॥'

इति स्मृतिष्वपि शिवोपासकानामेव पुनरावृत्तिरहितशिवतत्त्वात्मकत्वव्यपदेशात् मुमुक्षूणां नान्योपासकत्वं विधीयते ।

अस्मिन्नर्थे ह्याचार्यान्तरमप्याह—

## ॥३४७॥ परं जैमिनिर्मुख्यत्वात् ॥१२॥

'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्', 'ब्रह्माधिपतिर्ब्रह्मणोऽधिपति-र्ब्रह्मा शिवो मे अस्तु सदाशिवोम्' इत्यादिश्रुतिषु शिवस्य परब्रह्मणः प्रणवात्मकत्वस्य सर्वाधिकत्वस्य च निर्देशात् शिवाख्यपरब्रह्मोपासकान् अर्चिरादिमार्गेण आतिवाहिकाः स्वर्लोकं गमयन्तीति जैमिन्याचार्यो मन्यते। कुतः ? ॥ मुख्यत्वात् ॥ 'ब्रह्मविदाप्नोति परं' इत्यादिषु ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात्– चतुर्मुखहिरण्यगर्भपक्षे उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गविरोधाच्च तस्मात् 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इत्यादिषु ब्रह्मशब्दस्य शिवपरत्वमेवेति निश्चीयते ।

पुनर्हेत्वन्तरमाह—

## ॥ ३४८ ॥ दर्शनाच्च ॥ १३ ॥

'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'

'यथा नद्यः स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥'

इत्यादिश्रुतिषु जीव-ब्रह्मणोः प्राप्य-प्रापकत्वेन असन्दिग्धतया भेदाभेददर्शनाच्च जीवस्यैव ब्रह्मत्वं सदा जीवभिन्नत्वञ्च नाङ्गीकर्तव्यम् ।

पुनर्हेत्वन्तरमाह—

## ३४९ न च कार्ये प्रत्यभिसंन्धिः ॥१४॥

'विश्वाधिको रुद्रो महर्षिः', 'हिरण्यगर्भं जनयामास पूर्वं' इत्यादिश्रुतिदर्शनात् कार्ये हिरण्यगर्भे जीवानां प्रत्यभिसन्धिः जीवभावनिवृत्तिपूर्वकशिवत्वप्राप्तिरूपमोक्षो न विधीयते। 'नान्यः पन्था विद्यतेऽयनाय' इत्यादिश्रुतिषु शिवैकज्ञानादेव तादात्म्यरूपसायुज्यमुक्तिव्यपदेशात् चतुर्मुखोपासकानां श्रुति-स्मृति पुराणागमेषु पुनरावृत्तिरहित मोक्षोपलब्ध्यदर्शनाच्च 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि' इत्यादिश्रुतिनिर्दिष्टब्रह्मलोकस्य शिवलोकपरत्वं वेदितव्यम्।

एवं 'बहवोऽप्येकयत्नतः' इति न्यायेन स्वसिद्धान्तानुगुण्येनाचार्यान्तरमतं दर्शयित्वा तथा स्वमतं प्रकाशयति—

॥ ३५० ॥ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च ॥ १५ ॥

"अप्रतीकालम्बनान्' प्रतीकालम्बनव्यतिरिक्तान् नयत्यर्चिरादिरातिवाहिको गण इति भगवान् बादरायणो मन्यते।

एतदुक्तं भवति— कार्यप्रपञ्चोपासकान् नयतीति नायं पक्षः सम्भवति" इति चेन्न। 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत', 'तत्त्वमेव त्वमेव तत्' इत्यादिश्रुतिषु ब्रह्मकार्यरूपचेतनाऽचेतनप्रपञ्चस्य ब्रह्मात्मकत्वध्यानेन ब्रह्मतत्त्वप्राप्त्यवगमात्, ॥ उभयथा च दोषात् ॥ 'द्वासुपर्णा' इत्यादिद्वैतश्रुत्यानुगुण्येन जीव-ब्रह्मणोर्भेदमात्रत्वोपादाने तत्त्वमस्याद्यद्वैतविधायकबहुश्रुतिसंङ्कोचदोषात्, तथा अद्वैतप्राधान्ये द्वैतश्रुतिशतसङ्कोचदोषाच्च भ्रमरकीटादिबहुदृष्टान्तानुसारेण जीवब्रह्मणोर्भेदाऽभेदोऽङ्गीकर्तव्यः; 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यादि श्रुतिषु पक्षैकदेशनिराकरणावगमात्। तत्क्रतुश्चेति यथोपासकस्तथैव प्राप्नोतीत्यर्थः। 'यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्यभवति', 'तं यथा यथोपासते' इति श्रुतिशासनात् उपासकानां उपास्यवस्तुप्राप्तिस्सर्वत्रोपलभ्यते। तस्मात् सर्वेषु वेदान्तेषु भेदाभेदसिद्धिर्दुर्वारैव।

ननु 'नारायणं परं ब्रह्म' इत्यादिश्रुतिषु विष्ण्वादिनानादेवतोपासनावगमात् मुमुक्षूणां पुनरावृत्तिनिराकरणार्थं दहरादिसर्वविद्यासु मायापाशविच्छेदलक्षणं वस्तु किमुपास्यमित्याशङ्कायामाह--

## ॥५१॥ विशेषञ्च दर्शयति ॥१६॥

चकारोऽत्र निश्चयार्थः । पशुरूपब्रह्मविष्ण्वादिजीवानां मध्ये पशुपतेश्शिवस्य परब्रह्मणः विशेषञ्च ऋगादिवेदेषु वेदान्तेषु दर्शयति- द्योतयति । 'अन्तरिच्छन्ति तं जने' 'रुद्रं परो मनीषया गृभ्णन्ति जिह्वयासस'

'अयं मे हस्तो भगवानयं मे भगवत्तरः ।
अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ॥

इत्यादिना ऋग्वेदे,

'या ते रुद्र शिवा तनूरघोरापापकाशिनी ।
तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि ॥'

इत्यादिना यजुराम्नाये, तथान्यत्रापि द्रष्टव्यम् ।

### परशिवस्यैवोपास्यतानिर्णयः

किञ्च- तैत्तिरीये- 'दहरं विपापं' इत्यादिना मुमुक्षूणां दहरपुण्डरीके परमात्मोपासनं विधाय, स क इत्याकांक्षायां 'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः' इति महेश्वरस्यैव तत्रोपास्यत्वं निश्चित्य 'न कर्मणा' इति दारेषणादिपरित्यागपूर्वकविरक्तानां तत्प्राप्तिं उपदिश्य सर्वेषां देवानां मध्ये तच्छिवोपासनाधिकारः कस्यास्तीत्याकाङ्क्षायां 'सहस्रशीर्षं देवं' इत्यादिना नारायणं प्रस्तुत्य, 'पद्मकोशप्रतीकाशं' इत्यारभ्य 'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः' इत्यन्तेन तस्य सर्वगतत्वेन सर्वात्मकत्वं परिच्छिन्नत्वञ्च मूर्तामूर्तलिङ्गात्मकत्वेन जगदभिव्यक्तत्वं चोपदिश्य, सद्योजातादिपञ्चब्रह्ममन्त्रैः मूर्ताऽमूर्तशिवस्तुतिमभिधाय, 'नमो हिरण्यबाहवे' इत्यनेन तस्य ज्योतिर्मयविग्रहत्वं, उमाशक्तिविशिष्टत्वेन सर्वोपास्यत्वञ्च प्रकीर्त्य

'ऋतं सत्यं परं ब्रह्म' इत्यादिना तस्य कृष्णपिङ्गलत्वं विरूपाक्षत्वं विश्वरूपत्वञ्च प्रचक्षते। कैवल्ये– 'हृत्पुण्डरीकं विरजं विशुद्धं' इत्यारभ्य दहरपुण्डरीके शिवो-पासनमुक्त्वा, स क इत्याकांक्षाया–

'तदादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम्।
उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्॥'

इत्यादिना मूर्तांऽमूर्तत्वं तस्य समुपदिश्य,

'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
सम्पश्य ब्रह्म परमं याति नान्येन हेतुना॥'

इत्यादिना शिवोपासकस्यैव मुक्तिरुपदिष्टा।

शिवसङ्कल्पोपनिषदि बोधायनसूत्रे च–

'परात्परतरो ब्रह्म तत्परात्परतो हरिः।
यत्परात्परतोऽधीशस्तन्मे मनश्शिवसङ्कल्पमस्तु॥'

इति महेश्वरस्य सर्वाधिकत्वनिर्देशात्, 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इत्यत्र विष्णोः परं कैलासाख्यं शिवपदं सूरयः विद्वांसः ज्ञानदृष्ट्या सदापश्यन्तीत्यु-पदिश्यते। स्कान्दे–

'तद्विष्णोः परमं दिव्यं पदं कैलाससंज्ञिकम्।
शिवकारुण्यलेशेन सदा पश्यन्ति सूरयः॥" इति,

माण्डूक्ये– 'प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' इत्यादिना, श्वेताश्वतरे– 'एक एव रुद्रो न द्वितीयाय तस्थे', 'यो देवानां प्रथमश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः', 'हिरण्यगर्भं जनयामास पूर्वं' 'मायान्तु प्रकृतिं विन्द्यात् मायिनन्तु महेश्वरं' 'तस्यावयवभूतोस्थं व्याप्तं सर्व-मिदं जगत्' 'क्षरं प्रधानममृताक्षरं हरः', 'क्षरात्मना विशते देव एकः',

'तस्याभिध्यानात् योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः।
तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ॥

पतिं पतीनां परमं पुरस्तात् विदाम देवं भुवनेशमीऽड्यम्।
न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाऽभ्यधिकश्च दृश्यते ॥

पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।
न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्।

इत्यादिना, अथर्वशिरसि– 'देवा ह वै स्वर्गं लोकमगमन् ते देवा रुद्रमपृच्छन्, को भवानिति; सोऽब्रवीत्– अहमेकः प्रथममासं वर्तामि च भविष्यामि च; नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इति, अथर्वणशिखायां– 'ध्यायीतेशानं प्रध्यायितव्यम् सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते' इत्यारभ्य 'शिव एको ध्येयश्शिवङ्करः सर्वमन्यत्परित्यज्य' इत्यादिश्रुतिशतेषु साक्षाच्छिवोपासकानामेव मोक्षोपदेशात् 'वाचं ब्रह्मेत्युपासीत' मनो ब्रह्मेत्युपासीत' 'नारायणं परं ब्रह्म' इत्यादिश्रुतिसिद्ध-वाक्-प्राण-मनः-नारायणाद्युपासकानां वैदिकानां चित्तशुद्धिद्वारा परम्परया मुक्तिरिति निर्णीयते।

तस्मात् मूर्तपरशिवब्रह्मोपासकानां शरीरावसाने सुषुम्नानाड्या निरुपमानस्वप्रकाशाखण्डतेजोरूपार्चिरादिमार्गेणातिवाहिकाभिधानशिवकिङ्करानुगुण्येन इन्द्रादिलोकानुगुण्येन चित्कैलासंपरमानन्दकन्दपरमपदं सम्भवतीति राद्धान्तः।

इति श्रीमद्यतिव्रजपरिबृढ-श्रीपतिपण्डितभगवत्पादाचार्यस्वामिकृत-भेदाऽभेदात्मकविशेषाद्वैत-सिद्धान्तव्यवस्थापक-वैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

## श्रीकरभाष्ये

फलाध्यायसंज्ञिकचतुर्थाध्यायस्य अर्चिराद्यधिकरणादिपञ्चाधिकरणावच्छिन्नार्चिरादिनातत्प्रथितेत्यादिषोडशसूत्रात्मक-

## तृतीयः पादः समाप्तः

---

## अथ श्रीकरभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः

### सम्पद्याविर्भूताधिकरणम् ॥ १ ॥

### स्वाभाविकजीवभावनिवृत्तिपूर्वक शिवत्वप्राप्तिरूपपरमपुरुषार्थफलनिर्णयः

पूर्वत्र इन्द्रादिनानाविधदेवतोपासकानामधिकारतारतम्येन, निष्कामानाञ्च कालविलम्बेन शिवोपासनद्वारा पुनरावृत्तिरहितपाशनिवृत्तिपूर्वकशिवतत्त्वप्राप्तिं प्रदर्श्य इदानीं मुमुक्षूणां मुक्तिस्वरूपप्रकारश्चिन्त्यते ।

### शिवतत्त्वोपासकानामिहैव दहरपुण्डरीके ब्रह्मदर्शनविचारः

ननु अनात्मरूपदेहेन्द्रियादिषु आत्मभ्रान्तियुक्तानां स्वाऽभिन्नशिवोपासकानां अर्चिरादि-मार्गेणेन्द्रलोकसोपानद्वारा शिवलोकप्राप्तिरस्तु ; दशमीविवेकसन्धानेन भूतपञ्चक-कोशपञ्चक-तनुत्रय-विलक्षणस्वस्वरूपज्ञाननिष्ठानां तज्ज्ञानमेव तेषां जनन-मरणप्रवाहोत्तरणरूपमोक्षफलमिति निर्दिष्टम् । अथवा महाकैलास-वैकुण्ठादिदिव्यस्थानेषु स्थितशिव-केशवाद्युपासकानां मुक्तदशायां तदुपासन-महिम्ना तादृशस्वरूपप्राप्तिर्वा, उत तद्गतदिव्यसूरिभिस्सह शेषत्वकैङ्कर्यपारतन्त्र्यादिभावेन तत्सामीप्यवर्तित्वं वा, मुक्तिरित्याकाङ्क्षायां भगवान् बादरायणः स्वाभिप्रायं मुख्यवैदिक-सिद्धान्तं मुमुक्षूणां दर्शयति—

## ॥ ३५२ ॥ सम्पद्याविर्भावः स्वेन शब्दात् ॥ १॥

'द्वेवाव ब्रह्मणो रूपे मूर्तञ्चामूर्तमेव च' इति श्रुतिदर्शनात् मूर्तशिवो-पासकानाञ्च क्रममुक्ति-सद्योमुक्तिभेदेन चरममोक्षदशायां ज्योतिर्मयशिवतत्त्वं सम्पद्य– प्राप्य, **स्वेन** सर्वज्ञ-सर्वशक्त-सत्यज्ञानानन्दलक्षणलक्षित नित्यशुद्ध-बुद्ध-शिवतत्त्वस्वरूपेण **आविर्भावः** अभिव्यक्तस्वरूपवान् भवति। यथा ताम्रादिकं रसवेधया हिरण्यं भवति तथा दहरादि-ब्रह्मविद्योपासनमहिम्ना शारीरो जीवस्साक्षात् सदाशिवरूपो भवति। कुतः ? **शब्दात्** 'एष सम्प्रसादोऽस्मात् शरीरात्समुत्थाय' इत्यादिश्रुतिदर्शनात् इति सूत्रसूचितसूक्ष्मार्थः ।

एवमेव **'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यते'** इत्याम्नायते। किमस्मात् शरीरात् समुत्थाय परञ्ज्योतिरुपसंपन्नस्य देवादिरूपवत्साध्येन रूपेण सम्बन्धोऽनेन वाक्येन प्रतिपाद्यते; उत— स्वाभाविकस्य स्वरूपस्याविर्भाव एव इति संशये दर्शनीविवेकसन्धनादिवत् स्वाभाविकस्वरूपस्याविर्भावो मोक्ष इति निश्चीयते। आगन्तुकपरिग्रहत्वे स्वेन रूपेणेति विशेषणमनर्थकं स्यात्। तस्मादविशेषेऽपि तस्य स्वकीयस्वरूपत्वसिद्धिः। जलोष्णादिवज्जीवबहुत्वस्यागन्तुकत्वेन तद्वदनित्यत्वप्रसंगो दुर्निवारः।

अथवा **'द्वासुपर्णा'** इत्यादिबहुश्रुतिषु जीव-ब्रह्मणोः परस्परविलक्षणत्वेन भेद-व्यवस्थापनात् स्वाभाविकभेदस्य निवृत्त्ययोगाच्च परलोके तदुपास्यपरमेश्वरेण सह शेषत्व-कैङ्कर्य-पारतन्त्र्यविधानेन स्थितिः; उत तत्समानरूपेण स्वातन्त्र्यभावेन स्थितिर्वा स्यात्। अतो जीवब्रह्मणोः संसारदशायां पारमार्थिकभिन्नत्वं; मुक्तदशायां तद्वत्पारमार्थिकभेदवत्वञ्च सम्भवतीति वादस्तु **द्वैत-विशिष्ट-सांख्य-योग-न्याय-वैशेषिकाद्वैतादि**-सर्वमतविरुद्धत्वप्रसङ्गात् **असमञ्जसः इति प्राप्ते प्रचक्ष्महे—**

**॥ सम्पद्याविर्भाव इति ॥** अयं प्रत्यगात्मा प्रारब्धस्यावसाने परञ्ज्योतिरुपसम्पद्य **इमं दशाविशेषमापद्यते। 'भ्रमरकीटन्यायवत्'** जीवभावनिवृत्तिपूर्वकशिवतत्त्वप्राप्ति-दशाविशेषः न पूर्वप्रकाररूपः। कुतः? **॥ स्वेन शब्दात् ॥ 'स्वेन रूपेण'** इति विशेषणेन नदीसमुद्रवत् स्वरूप-स्वरूपयोरैक्यमुपदिश्यते।

एतेन रज्जुसर्पवत् जीवालीकवादः, घट-पटवत्, अङ्गाङ्गिवत् सदा जीव-ब्रह्मणोः भेदमात्रस्वीकारात् असंयुक्त-संयुक्तभेदवादश्च निराकृतः। ब्रह्मविद्यामहिम्ना जीवस्य स्वाभाविकाविद्यानिवृत्तिपूर्वकशिवत्वप्राप्तिवादो युक्तः। अन्यथा अपुरुषार्थावबोधित्वं मोक्ष-शास्त्रस्य स्यात्; स्वरूपस्य स्वतः पुरुषार्थत्वादर्शनात्। न हि सुषुप्तौ देहेन्द्रिय-व्यापारेपूपरतेषु केवलस्यात्मस्वरूपस्य पुरुषार्थसम्बन्धो दृश्यते। न च दुःखनिवृत्तिमात्रं परंज्योतिरुपसम्पन्नस्य पुरुषार्थः; येन स्वरूपाविर्भाव एव मोक्ष इत्युच्येत। **'स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य' 'रसँ ह्येवायं लब्ध्वाऽनन्दी भवति'** इत्यादिभ्यो जीवन्मुक्तस्य सुखानन्यत्वश्रवणात्। न च अपरिच्छिन्नानन्दरूपचैतन्यमेवास्य स्वरूपम्; तस्य संसारदशायां अविद्यातिरोहितं परञ्ज्योतिरुपसम्पन्नस्याविर्भवतीति वक्तुं

शक्यं ; ज्ञानस्वरूपस्य तिरोधानासम्भवात । प्रकाशपर्यायस्य ज्ञानस्य तिरोधानं तद्विनाश एवेति हि पूर्वमेवोक्तम् ।

न च प्रकाशमात्रस्यानन्दता सम्भवति । सुखस्वरूपत्वं हि आनन्दस्वरूपता । सुखस्वरूपत्वं चात्मनोऽनुकूलत्वेन वेदनीयत्वम् । प्रकाशमात्रत्ववादिनः [1]कस्य प्रकाशोऽनुकूलवेदनीयो भवेदिति दुरुपपाद्या । स्वरूपापत्तिमात्रे च साध्ये स्वरूपस्य नित्यनिष्पन्नत्वादुपपन्नस्य **'स्वेन रूपेणाऽभिनिष्पद्यते'** इति वचनमनर्थकं स्यात् । अतः **पूर्वेणो**पासनासाध्येन रूपेण सम्बध्यते । एवञ्च **'अभिनिष्पद्यते'** इति वचनं मुख्यार्थमेव भवति । **'स्वेन रूपेण'** इत्यप्यानन्दैकात्मकेन स्वासाधारणेन **'अभिनिष्पद्यते'** इत्यनेन सङ्गच्छते ।

ननु **'एवमेवैष सम्प्रसादः'** इति वाक्ये निरवयवपरशिवोपासकानां ज्ञानिनामपि लिङ्गशरीरस्य शरीराद्बहिर्निर्गमात् कथं लिङ्गशरीरविलयपूर्वकत्वेन हृत्पुण्डरीकावच्छिन्नपरशिव-ब्रह्मप्राप्तिरित्याशङ्क्य तत्राह–

## ॥ ३५३ ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥

**'अस्माच्छरीरात्समुत्थाय'** इत्यत्र शरीरे वर्तमानोऽपि शरीराभिमाननिर्मुक्तशुद्धजीव उच्यते । कुतः ? ॥ **प्रतिज्ञानात्** ॥ **'स्वेन रूपेणाभिनिष्पद्यते'** इति उत्तरवाक्ये जीवस्य शिवतत्वप्राप्त्युपदेशेन **'जले जलमिव वह्नौ वह्निरिव'** शिवस्वरूपेण स्वरूपैक्य-कथनात् निरवयवपरमाकाशपरञ्ज्योतिस्वरूपशिवतत्त्वोपासकानामिहैव दहरपुण्डरीके लिङ्ग-शरीरविलयपूर्वकत्वेन तत्प्राप्तिरुपदिश्यते ।

केचित्प्रपत्तेः वैकुण्ठपरमपदाख्यविष्णुलोकप्राप्ति[2]हेतुत्वं, तत्प्रपत्तेश्च पञ्चसंस्काराङ्गत्वं **"तापः पुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चमः'** इति ; **पञ्चसंस्कारः–**

[3]'सुदर्शनमहाज्वाल कोटिसूर्यसमप्रभ ।
अज्ञानान्धस्य मे देव विष्णोर्मार्गं प्रदर्शय ॥

---

[1] कथञ्चिदप्यानन्दस्वरूपता दुरुपपादा । स्वरूपापत्तिमात्रे (ग). [2] रूपमोक्षहेतुत्वं (ङ).
[3] अयं श्लोकः 'ग' ग्रन्थादितरेरासु प्रतिषु न दृश्यते ।

पाञ्चजन्य निजध्यानध्वस्तपातकसञ्चय ।
पाहि मां पापिनं घोरं संसारार्णव[1]पातिनम् ॥

इति मन्त्रं समुच्चार्य दहेत्सव्यं भुजं तथा ।
एतेनैव विधानेन शङ्खं चक्रं च धारयेत् ॥'

इत्यादि च तान्त्रिकमन्त्रप्राधान्येन वदन्ति । तदनादरणीयम्— वेदबाह्यत्वात् । पञ्च-संस्काराणामपि पञ्चप्रयाजवत् आग्नेयादिषड्भागवद्वा स्वप्रकरणे पाठाभावात्; वेदाङ्गेषु कल्पसूत्रेषु वा सूत्रकारैरप्रतिपादनाच्च ।

किञ्च— वैष्णवधर्मप्रतिपादकेषु रामायण-भागवत-भारत-विष्णुपुराणादिषु पञ्च-संस्काराणां अप्रतिपादनात् तन्मतबोधकयोः पद्मपुराणहारीतस्मृत्योः सर्वजनाङ्गीकाराभावेन विश्वासानर्हत्वात् पञ्चसंस्कारविधिरनादरणीयः । '[2]श्रुतिपथगलितानां तन्त्रमार्गे प्रवेशः' इति वैयासिकसिद्धान्तागमात् ।

उत वैष्णवमतेऽपि पञ्चसंस्काराणामेव पुरुषसंस्कारहेतुत्वे संस्कृतस्य पुरुषस्य परमपद-प्राप्तिरूपमोक्षाख्ये साध्ये विनियोजकप्रमाणाभावात्, रावणेन सभामध्ये निष्कासितस्य विभीषणस्य सद्यो रामचन्द्रं प्रपद्मानस्य पञ्चसंस्काराणां कल्पनाभावात् नामान्तरकरणस्यान्य-स्यापि प्रमाणविरोधेन कल्पयितुमशक्यत्वाच्च, द्रौपद्याश्शत्रुभिराक्रान्तायाः सद्यः कृष्णं प्रपद्मानायाः पञ्चसंस्काराणामभावाच्च 'तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी' इति गीतावाक्यात् कृष्णस्यापि अन्यविषयप्रवृत्तिदर्शनात्; तत्र च तेषां पञ्चसंस्काराणामहेतुत्वाच्च; प्रवृत्तिं विनापि गोपिकाप्रभृतीनां ध्यानमात्रादेव विष्णुप्राप्ते-र्भागवतप्रतिपादनात्;

कामात् गोप्यो भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद्विजयो राजन् यूयं भक्त्या वयं प्रभोः ॥ इति;

अन्यत्र च—

ये ये हताश्चक्रधरेण राजन् त्रैलोक्यनाथेन जनार्दनेन ।
ते ते गतास्तं निलयं नरेन्द्राः क्रोधोऽपि कृष्णस्य परेण तुल्यः ॥

* इति संस्कारं विनापि मोक्षप्रतिपादनात् ।*

---

[1] पातितम् (ग) [2] श्रुत्यर्थगलितानां (ग). * चिह्निनभागः 'ग' प्रतौ नास्ति ।

ननु तेषां पूर्वजन्मनि प्रवृत्तिरस्ति सकृत्प्रपन्नस्याप्यभयप्राप्त्यवगमवचनात् न विरोधः। [1]तदुक्तम्—

'सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम॥'

इति चेन्न। प्रपन्नानामपि दैत्यादिजन्मप्राप्तौ प्रपत्तिवैयर्थ्यात्। तदुक्तम्—

'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥'

इति पूर्वजन्मनि प्रपत्तिसन्देहेन प्रवृत्तौ प्रवृत्तिः कस्यापि न स्यात्।

किञ्च— जय-विजयादीनां वैकुण्ठप्राप्तेः प्रपत्तिं विना दुर्लभत्वात् तादृशानामपि पुनर्दैत्यजन्मप्राप्तौ सत्यामन्येषामपि प्रपन्नानां पुनस्संसारो न भविष्यतीत्यत्र का प्रत्याशा? 'श्रद्धाभक्तिज्ञानयोगादवेति' 'अर्चत प्रार्चत' 'त्रियम्बकं यजामहे' सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रम्' इत्यादिना शिवभक्ति-पूजा-ध्यान-धारण-विधायकत्वश्रुतिवत् विष्णुभक्ति-पूजाविधायकश्रुत्यदर्शनात् तन्मतस्य तान्त्रिकत्वं दुर्वारम्।

ननु 'परञ्ज्योतिरुपसम्पद्य' इति वाक्ये ज्योतिश्शब्देन आदित्यमण्डलमुच्यते। तस्मान्निरवयवपरशिवज्ञाननिष्ठानां मूर्तशिवोपासकानामिव प्रभाकरमण्डलद्वारा शिवलोकप्राप्तिरेव, न त्वत्रैव लिङ्गशरीरविलयपूर्वकव्यापकामूर्तपरशिवब्रह्मप्राप्तिर्न घटत इत्याशङ्कायामाह—

## ॥ ३५४ ॥ आत्मा प्रकरणात् ॥ ३ ॥

ज्योतिश्शब्देनात्र परमात्मैवोच्यते; न त्वादित्यमण्डलम्। कुतः? **॥ प्रकरणात् ॥** 'य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकाम-स्सत्यसंङ्कल्पः' इति हि प्रजापतिवाक्यप्रक्रमः। इदञ्च प्रकरणं परमात्मविषयमिति 'उत्तराच्चेदाविर्भूतस्वरूपस्ति्व'त्यत्र प्रतिपादितम्। नो चेत् अनादिपाशबद्धस्य जीवस्य अपहतपाप्मत्वादिकं कथमुपपद्यते? 'ज्ञाज्ञौ द्वावजावीशानीशौ' इत्यत्र जीवेश्वरयोर-

---

[1] यदुक्तम् (ग).

नादिसिद्धसर्वज्ञत्व-किञ्चिज्ज्ञत्व-परस्परविरुद्धस्वभावधर्मवैलक्षण्येऽपि ब्रह्मविद्यामहिम्ना विगळित-मलत्रयपाशबद्धस्सन् मुक्तदशायां शुद्धजीवः नदीसमुद्रवत्परञ्ज्योतिरुपसम्पद्य आविर्भूतपरञ्ज्यो-तिर्मयपरशिवो भवति ; 'यथा नद्यः 'ब्रह्मविदाप्नोति परं' इत्यादि श्रुतिशतेषु जीव-ब्रह्मणोर्भेदाभेदः स्पष्टमुपदिष्टः ।

---

## अविभागाधिकरणम् ॥ २ ॥

### अमूर्तपरशिवोपासकानां ब्रह्माऽभिन्नत्वस्थितिविचारः

ननु– 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्यत्र मुक्तजीवस्य ब्रह्मणा सह सर्वकामावाप्तिदर्शनात् 'परंज्योतिरुपसम्पद्य' इति वाक्ये शिवज्ञानिनां शिवसम्बन्ध एव विधीयते; न तु शिवैक्यं इत्याकाङ्क्षायामधिकरणान्तरं दर्शयति–

## ॥ ३५५ ॥ अविभागेन दृष्टत्वात् ॥ ४ ॥

नदीसमुद्रवन्मुक्तजीवः परशिवब्रह्मभिन्नाभिन्नत्वेन तिष्ठति, न तु ब्रह्मसम्बन्धितया; **'यदा ह्येवैष एतस्मिन् अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते; अथ सोऽभयं गतो भवति'** इत्यादिषु मुक्तदशायां जीवब्रह्मणोरभेदस्य **दृष्टत्वात्**– दर्शनादिति सूक्ष्मार्थः ।

'परं ज्योतिरुप[1]सम्पद्य', 'तत्त्वमसि' इत्यादिश्रुत्यर्थज्ञाननिष्ठानां शिवतत्त्वप्राप्तजीवानां कुसूलधान्य-पशुपिष्ट-स्वर्णरेणु-तिल[2]तण्डुलादिवत्तदवस्थायां पृथग्भूतस्थितिः, उत नदीसमुद्रवदपृथक्स्थितिर्वेति संशयः ।

> 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
> तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥'

इत्यादिश्रुतिषु–

> 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
> सर्गेऽपि नोपजायन्ते प्रळये न व्यथन्ति च ॥

---

[1] सम्पद्य स्वेन रूपेणाभिनिष्पद्यते (ग). [2] तण्डुलादिवत्तेषां तदव स्थायां (ग).

अनेकजन्मशुद्धानां श्रौतस्मार्तानुवर्तिनाम् ।
विरक्तानां प्रबुद्धानां प्रसीदति महेश्वरः ॥
प्रसन्ने सति मुक्तोऽभून्मुक्तः शिवसमो भवेत् ॥'

इत्यादिस्मृतिषु च मुक्तानां जीवानां ब्रह्मप्राप्त्यनन्तरमपि तिलतण्डुलवत्, कुसूलधान्यवत् पृथग्भावेन स्थितेः ब्रह्मवत्सर्वकामावाप्तेश्च श्रवणात् मुक्तजीवानां ब्रह्मसादृश्यभावेन स्थितिर्निश्चीयते ; इति प्राप्ते तत्रोच्यते- ॥ अविभागेनेति ॥

शिवत्वप्राप्तानां जीवानां ब्रह्माभिन्नत्वेन स्थितिरुपदिश्यते । कुतः ? दृष्टत्वात् । 'हिरण्मयोऽहं शिवरूपमस्मि', 'तत्वमसि' 'सर्वो वै रुद्रः', 'सर्वं खल्विदं ब्रह्म' इत्यादिश्रुतिषु मुक्तजीवस्य ब्रह्माभिन्नत्वेन दृष्टत्वात् बद्धावस्थावन्मुक्तावस्थायां जीवब्रह्मणोर्भेदो नाङ्गीकरणीयः । 'निरञ्जनः परमं साम्यमुपैति' 'सोऽश्नुते सर्वान् कामान्' इत्यादिश्रुतीनां जीवन्मुक्तदशायां दहराद्युपासनमहिम्ना स्वहृदयकर्णिकान्तरभासमानपरंज्योतिर्लिङ्गानुभवदशाविशेषबोधकत्वं इति वेदितव्यम् । तत्पूर्वं 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यो वेद निहितं गुहायां परमे व्योमन्' इति दहराकाशे परमात्मवेदनोपदेशात् ।

'प्रशान्तवृत्तिकं चित्रं परमानन्ददीपकम् ।
असंप्रज्ञातनामायं समाधिर्योगिनां प्रियः ॥
तत्समाधौ महायोगी शिवं सत्यादिलक्षणम् ।
हृदाकाशे परं लब्ध्वा तद्रूपेणानुमोदते ॥'

इत्यादिना स्मृत्यागमेष्वपि शिवानुभवो बहुधा प्रपञ्चितः । तस्मात् समाधिकाले प्रारब्धावसानविदेहकैवल्यमुक्तौ च ब्रह्माविभागेन स्थितिमस्त्वमविरुद्धम् ।

ननु 'नमो हिरण्यबाहवे हिरण्यवर्णाय' इत्यादिषु ब्रह्मणः सावयत्वं 'अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः' इत्यादिषु निर्देहत्वनिर्विशेषत्वादिकस्य 'साक्षी चेतो केवलो निर्गुणश्च' 'निष्कलं निष्क्रियं शान्तं' इत्यादिषु निर्गुणत्वस्य, 'आनन्दमयो ह्यानन्दभुक्' सत्यकामस्सत्यसङ्कल्पः' इत्यादिषु सगुणत्वस्य च

दृष्टत्वात् सर्वेषां वेदान्तानां परस्परविरोधवत्वमनिवार्यम् । सर्वश्रुतिसमन्वयस्थापनार्थं ब्रह्म-द्वयस्वीकारे– **'एकमेवाद्वितीयं ब्रह्म' 'एक एव रुद्रो न द्वितीयाय तस्थे'** इत्यादिश्रुतिविरोधः ।

किञ्च– **'तत्त्वमसि'** इत्यादिश्रुतीनां जहदजहल्लक्षणया चिदचिदोपाधिभेदकल्पकमाया-विद्योपाधित्यागेन बिम्बप्रतिबिम्बवदैकत्वं ; घटपटोपाधित्यागेनाकाशैकत्ववत् शिवजीवैक्यमिति केचित्– ब्रह्मणः शरीरेन्द्रियाद्यभावे जगज्जन्मादिकारणत्वायोगात् निष्प्रयोजकेन प्रयोजनाभावात् निर्विशेषवस्तुसत्वे मानाभावाच्च मुक्तदशायां तदुपासकः तद्वद्दिव्यमङ्गळविग्रहस्सन् शेषत्वकैङ्कर्यपार-तन्त्र्यादिभावेन स्थित इत्यादिनानारूपेण तत्पूर्वाचार्यमतानुसारिणो वदन्ति ।

तस्माद्वेदान्तपूर्वाचार्यमतेष्वव्यवस्था कथं वार्यत इत्याशङ्कया श्रुत्यैकदेशप्रामाण्य-विशिष्टाचार्यान्तरमतं सर्वश्रुतिप्रामाण्यस्वमतञ्च भगवान् बादरायणो दर्शयति–

## ।। ३५६ ।। ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ।। ५ ।।

**'ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः ।**
**ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत ।।'**

इत्यादौ शिवस्य परब्रह्मणः मुखाद्यवयवेषु ब्राह्मणाद्युत्पत्त्यवगमात् निर्देहस्य निरिन्द्रियस्य जगत्कल्पनायोगाच्च– **'अप्राणोह्यमनाश्शुभ्रः'** इत्यादिश्रुतिभिः अप्राकृतासदृशशरीरेन्द्रियमनः-प्राणसद्भावो विधीयत इति **जैमिन्याचार्यो** मन्यते । कुतः ? **।। उपन्यासादिभ्यः ।।** **'य आत्माऽपहतपाप्मा'** इत्यादिना प्रजापतिवाक्ये मुक्तानां परब्रह्मवत्सत्यसङ्कल्पादि-धर्मप्रतिपादनेन शरीरवत्वं गम्यते । **'जक्षन् क्रीडन् रममाणः'** इत्यादिश्रुतिषु मुक्तानां ब्रह्मभावमापन्नानां व्यवहारा दृश्यन्ते । अत एभ्यः उपन्यासादिभ्यः ब्रह्म-शरीरवत्ववादः एव युक्तः इति **जैमिन्याचार्यमतम्** ।

एवं सावयवमात्रब्रह्मवादिमतमुपन्यस्य निरवयवनिष्क्रियनिर्विशेषब्रह्मवादिमतमाह–

## ।। ३५७ ।। चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ।। ६ ।।

'सदेव सौम्येदमग्र आसीत्' 'एकमेवाद्वितीयं ब्रह्म' 'आत्मा वा इदमग्र आसीत्' 'ब्रह्म वा इदमग्र आसीत्', 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु ब्रह्मातिरिक्तवस्तुनिषेधस्य ब्रह्मणश्चैतन्यमात्रत्वस्य चोपदेशात्, चैतन्यरूपस्य जडप्रपञ्चकारणत्वायोगात् चिति तन्मात्रेण चैतन्यमात्रस्वरूपत्वेन कालत्रयेषु ब्रह्मैकमेव तिष्ठतीति औडुलोम्याचार्यो मन्यते। कुतः? ॥ तदात्मकत्वात् ॥

'अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्म्यप्रत्ययसारं' 'प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' इति, 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्' 'नित्यं विभुं सर्वगतं सुसूक्ष्मं' इत्यादिश्रुतिषु शिवस्य परब्रह्मणः शरीरेन्द्रियादिनिराकरणपूर्वकचैतन्यमात्रात्मकत्वोपदेशात परमात्मस्वरूपस्य नित्यनिरवयात्मकत्वमेव युक्तम्। जीवेश्वरादिप्रपञ्चः रज्जुसर्पवत्तत्र भ्रान्त्या प्रसक्त एवेति औडुलोम्यभिमतम्।

एवं श्रुत्यैकदेशप्रामाण्यसावयववादिमतं निरवयवादिमतञ्च निरूप्य सर्ववेदान्तसारभूतं स्वमतमप्याह—

## ॥ ३५८ ॥ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

'द्वे वाव ब्रह्मणो रूपे मूर्तश्चामूर्तमेव च।'

एवमुपन्यासात्—'तदादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम्।
उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्॥'

इत्यादिश्रुतिशतेषु शिवस्य परब्रह्मणः [1]पवनादिवन्मूर्तोऽमूर्तोपन्यासात्— प्रतिपादनात् एकस्य ब्रह्मणः मूर्तोऽमूर्तात्मकत्वमविरुद्धमिति सर्ववेदान्तसिद्धान्तनिपुणो बादरायणाचार्यो मन्यते; कुतः? ॥ पूर्वभावात् ॥

पूर्वेषां— 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'य आत्मा अपहतपाप्मा' इत्यादिषु सर्वशक्तत्व-अपहतपाप्मत्व सत्यकामत्वादीनामपि

---

[1] प्रपञ्चपवनादिवन (ग).

भावात्— विद्यमानत्वात् 'उभयविधिबलादुभयसिद्धिः' [1]मूर्तामूर्तोभयविधायकश्रुतिबलात् उभयमङ्गीकर्तव्यम् । 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिमूर्तब्रह्मश्रुतिमात्रप्रमाणत्वे च 'आकाशवत्सर्वगतश्च नित्यः',

'अन्तः पूर्णो बहिः पूर्णः पूर्णकुम्भ इवार्णवे ।
अन्तःश्शून्यो बहिश्शून्यः शून्यकुम्भ इवाम्बरे ॥'

'खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ।'
'यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ॥'

इत्यादिना व्यापकत्वविधायक-बहुश्रुतिविरोधात् [2]सावयवस्य च घटादिवत्परिच्छिन्नत्वात् 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इत्यादिश्रुतिनिर्दिष्टव्यापकामूर्ताकाशादिकारणत्वं कथमुपपद्यते ?

उत— सर्वान्तर्यामित्वमप्यसङ्गतम् ; जगदधिष्ठानत्वञ्च नोपपन्नम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'स यथा सैन्धवघनोऽनन्तरो बाह्यकृत्स्नो रसघन एव । एवं वारेऽयमात्मानन्तरो बाह्यकृत्स्नः प्रज्ञानघन एव' 'अप्राणो ह्यमनाश्शुभ्रः' 'अशरीरं वा वसन्तं न स्पृशत् प्रियाप्रिये' इत्यादिश्रुत्यनुसारेण शिवस्य परब्रह्मणः निरवयव-निर्विशेष-चिन्मात्रत्वाङ्गीकारे 'सोऽकामयत' 'बहुस्यां प्रजायेय' 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति' इत्यादिबहुश्रुतिविरोधश्च दुर्निवारः । तस्मात्तस्य मूर्तामूर्तोभयत्वं युक्तम् । नो चेत् मूर्तपरशिवोपासनफलविधायकानां 'जक्षन् क्रीडन् रममाणः' इत्यादिवाक्यानाममूर्तपरशिवोपासनफलप्रदर्शकानां—

'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसञ्चरेत् ॥'

---

[1] इति न्यायात् मूर्ता (ग). [2] किञ्च- सावयवस्य (ग).

'यत्र त्वस्य सर्वमात्म्यैवाभूत्केन कं पश्येत् केन किं वदेत्', इत्यादिवाक्यानाञ्च परस्परविरोधः प्रसज्येत। मूर्तब्रह्मणः स्वरूपस्यानित्यत्वव्यपदेशे 'स्थिरेभिरङ्गैः पुरुरूप उग्र' इत्यादिमूर्तब्रह्मशरीरस्थिरत्वव्यवस्थापकश्रुतिविरोधः प्रसज्यते। 'अपाणिपादोऽयमचिन्त्यशक्तिः। पश्याम्यचक्षुस्स शृणोम्यकर्णः' इत्यादौ शरीरेन्द्रियनिपेक्षतया तस्य सर्वकर्तृत्वावगमात् स्वतन्त्रस्य तस्य सर्वमुपपन्नमिति सिद्धम्।

---

सङ्कल्पाधिकरणम् ॥ ३ ॥

मूर्तपरशिवब्रह्मोपासकानां निरतिशयानन्दवैभवप्रकाशः

एवममूर्तपरशिवब्रह्मोपासकानां तदभेदफलं प्रसाध्य मूर्तपरशिवब्रह्मोपासकानां फलं किमित्याकाङ्क्षायामधिकरणान्तरेण तत्फलं दर्शयति--

॥ ३५९ ॥ संकल्पादेव तच्छ्रुतेः ॥ ८ ॥

पूर्वत्र व्यापकामूर्तपरशिवब्रह्मध्यानज्ञाननिष्ठानां सर्वकामनिर्मुक्ततया तदात्मकत्वं तस्य मूर्तामूर्तत्वञ्च प्रसाध्य इदानीं मूर्तपरशिवब्रह्मोपासकानां निरतिशयानन्द[1]वैभवं प्रपञ्चयति। उपासकानां सङ्कल्पादेव स्रक्चन्दनवनितादिसर्वविषयप्राप्तिर्भवति। कुतः? ॥ तच्छ्रुतेः ॥ 'सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति' इति श्रुतौ मूर्तपरशिवोपासकानां देवपितृ[2]गन्धर्वादयो भृत्यवत्परिचारका भवन्तीति सूक्ष्मार्थः।

'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा युवैर्वा ज्ञातिभिर्वा' इति श्रुतौ मूर्तब्रह्मोपासकस्य सत्यसङ्कल्पत्वप्रयुक्तव्यवहाराः श्रूयन्ते। अत्र मुक्तजीवस्य देहेन्द्रियाणि सन्ति न सन्ति वा? उत सङ्कल्पादीनि सन्ति वा? तस्य सङ्कल्प-परिग्रहः स्वातन्त्र्येण सम्भवति उत परमेश्वरसङ्कल्पादेव सम्भवति? इति सन्दिह्यते।

'आत्मानञ्चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसञ्चरेत् ॥'

'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति।
अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः ॥'

---

[1] वैभवत्वं (ग) [2] गन्धर्वविद्याधराश्च भृत्यवत्परिचारका (ग).

इति शरीरसम्बन्धे दुःखस्य अवर्जनीयत्वमभिधाय '**अस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य**' इति मुक्तस्याशरीरत्वं ह्याह श्रुतिः। तस्मात् सङ्कल्पवत्वं न सम्भवति।

"किञ्च– संकल्पसत्वे लोके राजादीनां सत्यसंकल्पादेव व्यवह्रियमाणानां कार्यनिष्पादने प्रयत्नान्तरसापेक्षत्वदर्शनादस्यापि तत्सापेक्षा इति प्राप्ते उच्यते–

'**संङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति**' इति हि सङ्कल्पादेव पित्रादीनां समुत्थानं श्रूयते। न च प्रयत्नान्तरस्य व्यपेक्षत्वाभिधायि श्रुत्यन्तरं श्रूयते; येनास्य स्वसङ्कल्पादेवेत्यवधारणस्य विज्ञानघन एवेतिवद्व्यवस्थापनं क्रियते।"

'**स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा**' इत्यादिश्रुतौ आत्मन एकस्याच्छेद्यस्यानेकधा भावव्यपदेशात् त्रिधा भावादयः शरीरसम्बन्धिनः इत्यवगम्यन्ते। शरीराभाववचनस्य निरवयवब्रह्मोपासकविषयत्वम्। किञ्च– अशरीरत्ववचनं तु कर्मनिमित्तशरीराभावपरम्। तदेव हि शरीरं प्रियाप्रियहेतुः। कैलासपदप्राप्तभक्तशरीरं अप्राकृतज्योतिर्मयत्वेन परमेश्वरशरीरवत् न दुःखहेतुरिति सिद्धम्।

ननु महाकैलासपदप्राप्तानां भक्तानां परमेश्वरशेषत्वपारतन्त्र्यकैङ्कर्यादिविधीनां सत्त्वेन **राजभृत्यन्यायवत्** भयहेतुत्वमस्ति। तस्मात् '**आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्च न**' इत्यादिश्रुतिविरोधप्रसङ्गः स्यादित्याशङ्क्याह–

## ॥ ३६० ॥ अत एव चानन्याधिपतिः ॥ ९ ॥

यतो मुक्तः सत्यसङ्कल्पः **अत एवानन्याधिपतिश्च** भवति। अन्याधिपतित्वं हि विधिनिषेधयोग्यत्वम्। विधिनिषेधयोग्यत्वे हि प्रतिहतसत्यसङ्कल्पत्वं भवेत्। अतः सत्यसङ्कल्पत्वश्रुत्यैव अनन्याधिपतित्वञ्च सिद्धम्। अत एव स स्वराट् भवतीत्युक्तम्। अत एव सर्वशक्तिविशिष्टशिवोपासनादेव तदुपासकः सत्यसङ्कल्पाधीनसर्वकामावाप्तिसत्त्वादन्याधिपतिः। '**शिव एको ध्येयः**' इति श्रुतिश्रवणात् शिवेतरो न विद्यतेऽन्यः अधिपतिः यस्य सोऽनन्याधिपतिः। अन्यः नियाम्यो भवति। तस्मात् शिववत् स्वतन्त्र एव। तदुक्तं स्कान्दे–

'शिवैकनिष्ठाप्रथितक्षमाणां शिवेतरध्याननिषेधकानाम् ।
तृणीकृतब्रह्मपुरन्दराणां किं दुष्कृतं शङ्करकिङ्कराणाम् ॥' इति ।

अनन्याधिपतित्वव्यपदेशेन मुक्तस्य स्वातन्त्र्यमुपदिष्टम् । तेन न कदाचिदपि कर्माधीनत्वं सूचितम् । कर्मणां विनष्टस्वभावात् नान्यः परमेश्वरो नियामकः जन्ममरणप्रवाहलब्धशिवाज्ञारूपविधिनिषेधशास्त्रपथातीतत्वात् । कुतः ? पशुत्वव्यावृत्तेः । अनाद्यज्ञानवासनाबद्धेषणात्रयदोषविशिष्टानां शिवाज्ञारूपकर्माधीनत्वं युक्तम् । नित्यनिरतिशयमङ्गलाकरशिवसारूप्य[1]धारिषु शिववत्सर्वज्ञत्वादीनां सत्त्वेन जरामरणशोकभयविलक्षणत्वेन निरतिशयानन्दानुभवैकस्वात्मारामत्वेन च [2]स्वातन्त्र्यमविरोधम् ।

ननु' 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥'

'बद्धो हि वासनाबद्धः मोक्षः स्याद्वासनाक्षयः ।
वासनातानवं ब्रह्मन् मोक्ष इत्यभिधीयते ॥'

'न मोक्षो नभसः पृष्ठे न पाताले न भूतये ।
सर्वाशासङ्क्षये चेतःक्षयो मोक्ष इतीर्यते ॥'

इत्यादिश्रुतिषु मुक्तस्य सर्वकामनिवृत्त्यवगमात् । मुक्त्यनुभवश्रुतौ—

'किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
यन्मया पूरितं विश्वं महत्कल्पाम्बुना यथा ॥'

इति देशान्तरनिषेधादिकं तस्य निर्दिश्यते । तस्मात् 'स तत्र पर्येति जक्षन् क्रीडन् रममाणस्त्रीभिर्वा ज्ञातिभिर्वेति' इत्यादिश्रुतिनिर्दिष्टमुक्तस्य व्यवहारवत्त्वं कथमुपपद्यते ।

### बादरेः केवलाद्वैतमतोपन्यासः

किञ्च— 'नान्यत्किञ्चन मिषत्', 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' 'अतोऽन्यदार्तं न तु द्वितीयमस्ति' इत्यादिषु ब्रह्मेतरवस्तुनिरासो दृश्यते ।

---

[1] धारिणां शिव- (ग). [2] स्वतन्त्रत्वमविरोधम् (ग).

तथान्यत्र 'य आत्मनि तिष्ठन्नात्मनोऽन्तरोऽयमात्मा न वेद ; यस्यात्मा शरीरं ; य आत्मानमन्तरो यमयति ; स त आत्माऽन्तर्याम्यमृतः', 'अन्तः प्रविष्टश्शास्ता जनानां', 'द्वासुपर्णा' 'ज्ञाऽज्ञौ द्वावजौ' इत्यादिभिः श्रुतिभिर्जीवब्रह्मणोर्भेदोऽवगम्यते ; तत्त्वमस्यादिवाक्येषु अभेदावगमेन वेदान्तानां निश्चयार्थकत्वायोगात् अव्यवस्थाप्रसङ्गेन ब्रह्मजिज्ञासाशास्त्रमेवायुक्तमित्याशङ्कायां मतत्रयं दर्शयति—

## ॥ ३६१ ॥ अभावं बादरिराह ह्येवम् ॥ १० ॥

'एकमेवाद्वितीयं ब्रह्म' 'यत्र नान्यत्पश्यति नान्यत् शृणोति नान्यद्विजानाति स भूमा' 'नेह नानास्ति किञ्चन' इत्यादावेवं कालत्रयेषु भेदनिषेधावगमात् मध्ये रज्जुसर्पवत् जगदवभासमानत्वेऽपि जगज्जीवेश्वरादिकस्य सर्वस्य अपारमार्थिकत्वेन शशशृङ्गादिवदभावं मिथ्यात्वमेव बादरिराचार्यो मन्यते ।

तस्मात् शिष्यबोधार्थं 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति न्यायानुसरणेन श्रुतियुक्त्यनुभवमार्गेण जगत्कल्पनादिकस्य उपदेशोऽपि बन्ध्यापुत्रराज्यविभववर्णनवत् मिथ्यात्वमेव निश्चीयत इति बादरेर्मतम् ।

### जैमिनेः जगत्सत्यत्व-जीवेश्वरपरस्परभेदवत्त्वयोः उपन्यासः

एवं श्रुत्याभासप्राधान्य-श्रुत्येकदेशप्रामाण्य-जगन्मिथ्यात्मक-केवलाद्वैत-बादरिमतमुपन्यस्य तन्मतनिराकरणार्थमाचार्यान्तरं दर्शयति—

## ॥ ३६२ ॥ भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'भूतिकामो वायव्यं श्वेतमालभेत' 'पापेनान्धो मूको बधिरो श्वानो भवति ; पुण्येन कुलवान् धनवान् भोगवान् भवति' इत्यादिश्रुतिषु भगवदाज्ञारूपपुण्यकर्मनिराकरणपूर्वक-ब्रह्महत्या सुरापानादिदुरितकर्मानुष्ठानेन नरकादिकस्य भगवदाज्ञारूपपुण्यकर्मानुष्ठानेन स्वर्गादिलोकसुखानुभवस्य च श्रुतावसन्दिग्धत्वेन दर्शनात् 'यज्ञेन दानेन तपसा नाऽशकेन' इत्यादिश्रुतिषु निष्कामानुष्ठानेन परमेश्वरार्पितज्योतिष्टोमादीनां जीवान्तःकरणसिद्धपापपङ्कनिवृत्तिद्वारा ब्रह्मज्ञानसाधकत्वावगमाच्च

जीवेश्वरनिगमागमादिप्रपञ्चस्य **भावं** सत्यत्वं **जैमिनिराचार्यो** मन्यते । कुतः ? ॥ **विकल्पामननात्** ॥

विविधः कल्पो **विकल्पः** ; आसमन्तान्मननं विचारः **आमननं** ; विकल्पस्यामननं ; तस्मात् **विकल्पामननात्**– जगतो मिथ्यात्वे बौद्धादिवत् ज्योतिष्टोमादिना स्वर्गादिफलभोगवत्त्वं ब्रह्महत्यादिना निरवयवत्वञ्च न स्यात् । अतः कृतनाशाकृताभ्यागमदोषः सम्भवेत् । तथा चेत् '**स एकधा भवति ; त्रिधा भवति ; पञ्चधा ; सप्तधा**'; इत्यादिश्रुतिविरुद्धप्रसङ्गात् सर्वदा जीवेश्वरादिप्रपञ्चस्य नित्यत्वं जीवेश्वरयोः परस्परभेदवत्त्वञ्च विदुषामङ्गीकर्तव्यमिति **भेदवादिनो जैमिनेर्मतम्** ।

**बादरायणानुमत-श्रुतिसिद्धज्ञानकर्मोभयात्मकमुभयविधद्वैताऽद्वैतमतोपन्यासः**

एवं श्रुत्येकदेशप्रामाण्यमतद्वये परस्पराप्रामाण्यस्य प्रसक्तत्वेन तदुभयमतनिराकरणार्थं सर्ववेदवेदान्तागमसिद्ध**द्वैताद्वैतात्मक**स्वमतमसङ्कोचेनाह–

## ॥ ३६३ ॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

यतः कारणात् श्रुत्येकदेशभूतज्ञानमात्रप्राधान्य**केवलाद्वैतमतस्य** कर्मभक्तियोगमात्रसाधक**द्वैतमतस्य** च परस्परविरोधः [1]**अतो** हेतोः सर्ववेदवेदान्तमुख्याभिप्रेतं [2]'**यथा नद्यः**' इत्यादिश्रुतिसिद्धं ज्ञानकर्मोभयात्मकं **उभयविधं** द्वैताद्वैतमतं **बादरायणो मन्यते** ।

**उभयविधं नाम** संसारदशायां जीवब्रह्मणोरुपास्योपासकयोः पारमार्थिकसत्यत्वं, मोक्षदशायां **नदीसमुद्रवत् भ्रमरकीटन्यायवत्** स्वाभाविकजीवभावनिवृत्तिपूर्वकव्यापकाखण्डपरमाकाशरूपसच्चिदानन्दलक्षणसर्वज्ञत्वाद्यसाधारणगुणाकरपरशिवब्रह्मशङ्कररुद्रेश्वरेशानमहादेवादि-शब्दवाच्यपरतत्त्वप्राप्तिमत्त्वञ्च जीवस्येति निर्णीयते ।

**द्वादशाहवत्**– '**यथा ऋद्धिकामा उपेयुः**' '**द्वादशाहेन प्रजाकामं याजयेत्**' इत्युपैति– यजति– चोदनाभ्यां सङ्कल्पभेदेन सत्रत्वमहीनत्वञ्च प्रयोगभेदेन प्रमाणद्वयबलादङ्गी-

---

[1] प्रसज्यतेऽतो हेतोः (ग्र). [2] 'यथा नद्यः .... । ... तथा विद्वान् नामरूपाद्विमुक्तः' 'ब्रह्मविदाप्नोति परं' ब्रह्म वेद ब्रह्मैव भवति इत्यादि (ग).

क्रियते ; तथा '**द्वासुपर्णा**' इत्यादिमन्त्रेषु जीवब्रह्मणोः परस्परवैलक्षण्यस्य तत्त्वमस्यादिवाक्येषु तयोरेकत्वस्य च व्यवस्थापनात् जीवब्रह्मणोः पारमार्थिकभेदाऽभेदो ह्यङ्गीकर्तव्यः ।

'**श्रुतिस्सत्यार्थवादिनी**' इति बहुश्रुतिपुराणपूर्वाचार्यवाक्येषु दर्शनात् श्रुतिसङ्कोचे मानाभावात् वैदिकेतरत्वप्रसङ्गाच्च पूर्वत्र '**अधिकन्तु भेदनिर्देशात्**' इत्यादौ जीव-ब्रह्मणोः परस्परभेदव्यवस्थापनेन **द्वैतस्य** सत्यत्वम् । '**तदनन्यत्वं** इत्यत्र तथा **अद्वैतस्य** सत्यत्वञ्च सूचितम् । '**लोकवत्तु लीलाकैवल्यम्**' इत्यत्र परमेश्वरस्य लीलाव्यपदेशेन भेदत्वं द्वैतश्रुतीनां सर्वासां तत्कालपरत्वं चाभिहितम् । कैवल्यपदेन तस्य केवला-वस्थाव्यपदेशात् '**नेह नानास्ति किञ्चन**' इत्याद्यभेदश्रुतीनां तत्परिशेषावस्था-परत्वमिति स्पष्टमुपदिष्टम् ।

व्यापकस्य सर्वज्ञस्य शिवस्य परब्रह्मणः मूर्तत्वेन किं कार्यमिति चेत् भक्त-तरणलीलैव प्रयोजनम् । तस्मात् शिव एव घृतकाठिण्यवल्लीलानङ्गळविग्रहस्सन् स्वतत्त्वाव-भासकवेदराशिमुत्पाद्य तदनन्तरं हिरण्यगर्भद्वारा सर्वलोकेषु वेदवेदार्थप्रचारं कृतवान् । अतो मुमुक्षुः वेदमार्गेण मूर्तामूर्तपरशिवतत्त्वमुपास्य सालोक्यादिदेहविदेहकल्याणकैवल्यमुक्तिं प्राप्नोति ; नो चेत् शिवतत्त्वज्ञानं केन लभ्यते ? अतो न सन्देहकळङ्कः ।

'**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः**' इति द्वैताद्वैतमतमेव स्वमतमिति **कृष्णेनापि** दर्शितम् । तस्मात् पक्षैकदेशमतमसमञ्जसम् ।

---

## सन्ध्याधिकरणम् ॥ ४ ॥

### भेदाभेददृष्टान्तेन शिवस्य जगत्कारणत्वप्रतिपादनम्

ननु भेदाभेदमतस्य सर्वश्रुतिसमन्वयवत्वेऽपि तमःप्रकाशवत् भेदाभेदयोः परस्पर-विरुद्धत्वेन युक्तिबाधः सम्भवतीत्याशङ्कायां भेदाभेददृष्टान्तेन जगत्कारणत्वं अधिकरणान्तरेण दर्शयति—

**॥ ३६४ ॥ तस्य भावे सन्ध्यावदुपपत्तेः ॥ १३ ॥**

यथा समन्वयाधिकरणे सर्वेषां वेदान्तानां ब्रह्मप्रतिपादकत्वं ब्रह्मज्ञानविधायकत्व-ञ्चोपदिष्टं ; तद्वत् द्वादशाहयज्ञदृष्टान्तेन '**उभयविधिबलादुभयसिद्धिः**' इति न्यायवत् सर्वेषां वेदान्तानां '**श्रुतिस्सत्यार्थवादिनी**' इति न्यायमनुसृत्य जीवब्रह्मणोर्भेदाभेदवत्व-मेव स्वमतमिति साधितम् ।

एतेन सावयवब्रह्मोपासनस्य विदुषां सर्वकामावाप्तिद्वारा निरवयवब्रह्मप्रापकत्वं सूचितम् । '**प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः**', '**शिवोऽद्वैतः**', '**एक एव रुद्रो**', '**एकमेवाद्वितीयं**' इत्यादिश्रुति-ष्वद्वितीयस्य परब्रह्मणः सत्यसङ्कल्पत्वादिसत्त्वेऽपि '**एतत्तदो भवति**', '**तस्माद्वा एत-स्मादात्मन आकाशस्सम्भूतः**' इत्यादिश्रुतिषु तस्य भावे [1]गुणत्रयात्मकाऽचिच्छक्त्यभि-धानप्रधानभावकाले लीलाया भूतभौतिकजगज्जालस्रष्टृत्वं, तच्छक्तिसंङ्कोचकाले स्वयं सत्यसङ्कल्पेनापि जगज्जालं न सृजति ।

तस्मात् अद्वितीय-सद्वितीय-ब्रह्मप्रधान-समावेशेन जगत्सृष्टिरविरुद्धा । कुतः ? **सन्ध्या-वदुपपत्तेः** । प्रबोधसुप्तिसाम्यावस्थारूपस्वप्नावस्थायामिव **उपपत्तेः**— [2]जगत्कारणत्वोपपत्तेः ।

---

[1] गुणत्रयात्मकभिन्नशक्त्यभिधानप्रधानभावकाले (ग). [2] जगत्कारणत्वोपपत्तेरित्यर्थः । यथा ग.)

यथा स्वप्नो 'अथ रथान् रथयोगान् पथः सृजते' इत्यारभ्य 'अथ वेशान्त.न् पुष्करिण्यः सम्प्रसृजते स हि कर्ता' इति,

'एषु सुप्तेषु जागर्ति कामं कामं निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिन् लोकाः श्रितास्सर्वे तदु नात्येति कश्चन ॥'

इति श्रुतौ च जीवादृष्टसहायेन स्वप्नेऽपि परमेश्वरस्य रथादिसृष्टिरुपदिश्यते । अतः कालभेदेन यथा न विरुद्धः तद्वदेककालेऽपि भेदाभेदयोरविरुद्धत्वमुपदिष्टम् । एतदुपदेशेन मुक्तस्यापि प्रारब्धवासनावासितप्रकृतिरेवास्ति । यथा शिवलोके निरतिशयानन्दानुभवत्वं यदा सर्ववासनानिर्मुक्तिस्तदा केवलशिवैक्यकैवल्यानुभवो भवतीति [1]दर्शितम् ।

अत्र अद्वितीयस्य शिवस्य परब्रह्मणः सच्चिदानन्दात्मकस्य, जडस्य सद्वितीयस्य प्रधानस्य च जगत्सृष्टौ समावेशस्सम्भवति न वेति सन्दिह्यते ।

प्रधानशिवयोश्चेतनाचेतनयोस्तमःप्रकाशवत् परस्परविरुद्धस्वभावत्वेनाऽद्वितीयस्य शिवस्य सद्वितीयप्रधानसापेक्षा नास्त्येव । मुक्तस्याप्येवमुपलक्षणम् । एवं सापेक्षत्वे 'सत्यकामस्सत्यसङ्कल्पः' इत्यादिश्रुतिसिद्धसत्यकामत्वादिप्राप्तस्वातन्त्र्यभङ्गप्रसङ्गः । 'अपाणिपादो जवनो ग्रहीता' इत्यादिश्रुतिषु स्वतन्त्रस्य तस्य साधनान्तरनिरपेक्षतया स्वमहिमातिशयेन सर्वकर्तृत्वं दर्शितम् । अतश्शिवस्य तदुपासकस्य मुक्तस्य च कदाचित् प्रकृतिसापेक्षता सन्निहितैव इति प्राप्ते तत्रोच्यते—

अद्वितीय-सद्वितीययोः शिवप्रधानयोः न तमःप्रकाशयोरिव परस्परविरोधः ; 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इत्यत्र तस्मात्— प्रधानात्, एतस्मात्— परमात्मनः, आकाशादिभूतभौतिकसृष्ट्युपन्यासात् ; अत्र वाशब्दस्य समुच्चयार्थकत्वम् ।

'मायान्तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥

[1] दर्शितः । अत्र (ग).

**पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च** ' इत्यादिश्रुतिषु मायायाः [1]शिवाधीनत्वस्य, तस्या एव जगत्कारणत्वस्य, तस्याः शक्तेः स्वाभाविकत्वस्योपदेशात् तस्य **भावे** शिवाधीनप्रधानविकाससद्भावे **सन्ध्यावदि**त्यत्र सन्ध्याशब्देन तनुत्रयमध्यावगतलिङ्ग-शरीरं स्वप्नावस्था च व्यवह्रियते। यथा मूढमुमुक्षुदशा हि सर्ववेदान्तविचारो वासना-हेतुः; संशयस्तु पूर्वपक्षसिद्धान्तयोर्बीजं; तथा लिङ्गशरीरमेव स्थूलशरीरव्यापारस्य कारण-शरीराविद्याविच्छेदकशिवज्ञानस्य च हेतुः। तस्मात् तद्दृष्टान्तेन शिवस्य परब्रह्मणो जगत्सृष्टिरभिहिता।

किञ्च– जीवन्मुक्तदशाविशेषसमाधिकाले बाह्येन्द्रियादिनिरपेक्षया केवलबुद्ध्या शिवा-नन्दः [2]शिवयोगिभिरनुभूयते। **'आत्मक्रीड आत्मरतिरात्मानन्दं स्वराड्भवति।' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति'** एतेन कारणकैलासप्राप्ति-सारूप्यधारणमप्युपलक्षणम्।

**'एतद्वै भवति। आकाशशरीरं ब्रह्म। सत्यात्मप्राणारामं मन आनन्दम्।'** महाकैलासवाससदाशिवस्यापि बाह्येन्द्रियनिरपेक्षतया परमानन्दानुभवः, **'मन आनन्दं'** इत्यत्र मनसि आनन्दो यस्य सः मन आनन्दः, प्राणेषु आसमन्तात् रमत इति व्युत्पत्या निश्चीयते। **'शान्तिसमृद्धममृतम्'** इत्यादिना तच्छरीरस्य सत्यत्वं शान्तिकरत्वं अमृतत्वं चोपदिष्टम्। अत्रापि तदुपासकस्याप्येवं लक्षणमुपदिष्टम्।

अस्मिन्नर्थे हेत्वन्तरमाह–

## ॥ ३६५ ॥ भावे जाग्रद्वत् ॥ १४ ॥

**भावे** यथा स्थूलशरीरस्य सूक्ष्मशरीरवद्भावकाले पुण्यापुण्यहेतुकजाग्रदवस्था जायते; तद्वच्छिवस्य परब्रह्मणः स्वशक्तिप्रकृतिविकाससद्भावे जगत्सृष्टि-स्थिति-लय-तिरोधान-अनुग्रह-पञ्चकृत्यहेतुत्वं दर्शितम्।

एतेन पाशमुक्तस्यापि इहलोकपरलोकेषु लिङ्गशरीरसद्भावे तत्तल्लोकोचितफलानुभूति-स्तदभावे सर्वकर्मावाप्तिर्न सम्भवति इति फलार्थः सूचितः। फलार्थं परमपुरुषो

[1] शिवाधीनत्वं तेनैव जगत्कारणत्वं तस्य शक्तेः स्वाभाविकत्वं चोपदेशात् (ग). [2] शिवयोगिनां भवति। आत्मक्रीड (ङ).

महादेवोऽपि व्याघ्रासुर-गजासुर-त्रिपुरासुरादिसंहारं विषापहरण-मार्कण्डेयादिभक्तरक्षणादिकञ्च कृतवान्। 'भिद्यते हृदयग्रन्थिः .... परावरे', 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।' 'अत्र ब्रह्म समश्नुते' इत्यादिवाक्यानां निरवयवव्यापकशिवतत्त्वनिष्ठागरिष्ठदृढवैराग्ययुक्तविद्वद्विषयकत्वमिति वेदितव्यम्।

### परमेश्वरवत् मुक्तस्यापि नानालोकनिर्मातृत्व-युगपदनेकशरीरप्रवेशशालित्वादिसम्भावनानिर्णयः

ननु 'मुक्तश्शिवसमो भवेत्' इति। 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्यादौ मूर्तशिवोपासकस्य [1]शिवसाम्यस्य समानभोगस्योपदेशेऽपि महेश्वरवदेककाले युगपदनेकशरीरेषु देशेषु च गमनं न सम्भवति; आगन्तुकशिवशरीरसद्भावात् इत्याशङ्कायामाह—

## ॥ ३६६ ॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

यथा प्रदीपस्यैकस्मिन् देशे वर्तमानस्य स्वप्रभया देशान्तरावेशस्तथा आत्मनोप्येकदेशस्थितस्यैव स्वभावरूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः; यथा चैकस्मिन्नपि देहे हृदयाद्येकदेशवर्तिनोऽपि चैतन्यव्याप्त्या सर्वस्मिन् देहे आत्माभिमानः, तद्वत्।

इयानत्र विशेषः— अमुक्तस्य कर्मणा सङ्कुचितज्ञानस्य देहान्तरेष्वात्मानुगुणा— व्याप्तिर्न सम्भवति; मुक्तस्य त्वसङ्कुचितज्ञानस्य यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिः इदमिति ग्रहणानुगुणा च [2]अनुपपत्तिः। तथा हि दर्शयति—

'वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवस्स विज्ञेयः स चानन्त्याय कल्पते॥'

इति। अमुक्तस्य कर्म नियामकम्; मुक्तस्य तु परमेश्वरवत् स्वेच्छया ब्रह्मलोकशरीरादिनिर्माणकर्तृत्वं अनेकशरीरेषु युगपदेव प्रवेशश्च सम्भवति। 'स एकधा भवति

[1] शिवसाम्यस्वं समान- (ग). [2] अनुपपन्नः (ग).

**त्रिधा भवति सहस्रधा भवति'** इत्यादिश्रुतिषु परमेश्वरोपासकानां तदुपासनमहिम्ना सङ्कल्पमात्रेणैवानेकशरीरनिर्माणत्वदर्शनात् जीवाणुत्वादिविधायकशास्त्रं बद्धजीवविषयमिति निर्धार्यते ।

ननु मुक्तस्य संसारिवत् शरीरेन्द्रियादिसिद्धेः प्रपञ्चदर्शनस्य च व्यपदेशे बद्धमुक्तयोर्न वैषम्यमिति चेन्न ; मुक्तस्यात्मपुरुषार्थरूपेण प्रपञ्चदर्शनाभावात् मुक्तस्य [1]ब्रह्मकार्यरूपस्य प्रपञ्चस्य ब्रह्मत्वेन भासमानत्वाच्च । **'यत्र नान्यत्पश्यति ; नान्यत् शृणोति नान्यद्विजानाति ; स भूमा'** इत्यादिश्रुतौ मुक्तानुभव उपदिष्टः ।

किञ्च– **'एतत्तदो भवति', 'आकाशशरीरं ब्रह्म' 'शान्तिसमृद्धममृतम्'** इति, पूर्वत्र **'आप्नोति स्वाराज्यं ; आप्नोति मनसस्पतिं'** इति स्वाराज्यसुखैकरसं शिवस्य परब्रह्मणः पदं मनसस्पतिं ज्ञान[2]शक्त्याऽधिष्ठातृभूतमाप्नोति योगीन्युक्तम् । तदा स किं विशिष्ट [3]इत्याकाङ्क्षायां **'वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिः'** इति वागादीनां स्वेच्छाधीनत्वे तदाधिपत्यमुक्तम् ।

एवंविधस्य महाकैलासाभिधानशिवपदारूढस्य स्वेच्छाधीनविशुद्धवागादिकरणस्य ततः तत्पदप्राप्त्यनन्तरमेतद्विश्वजालं भवति । किं भवति ? आकाशशरीरं ब्रह्मैव । परप्रकृतिरूपपरमसत्ताप्रकाशानन्दसमरसा परमशक्तिर्हि परब्रह्मशरीरतया परमाकाश उच्यते । या मुक्तानां शिवस्य च साक्षादर्थक्रियाहेतुः सा परम्परया तद्विज्ञानम् । तथा हि– **'को ह्येवान्यात् कः प्राण्यात्', 'यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्द याति', 'रसो वै सः ; रसं ह्येवायं लब्ध्वाऽनन्दी भवति'** इति सर्वानुभवविषयत्वमस्याः श्रूयते । तदा च **'स एको मानुष आनन्दः'** इत्यारभ्य **'स एको ब्रह्मण आनन्दः'** इति ब्रह्मपर्यन्तं उपाधितिरोधानात् आनन्दाविर्भावतारतम्येन श्रूयते । निरुपाधिकतया ब्रह्मणि मुक्ते च परिपूर्णो वर्तते **'स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य'** इति मन्त्रवर्णात् ब्रह्मार्पणबुध्या निष्कामानुष्ठिताग्निहोत्रादिकर्मा परविद्यावानकामहतः श्रोत्रियः, तस्य जीवत एव मुक्तस्य ब्रह्मणश्च तुल्य

---

[1] ब्रह्मकार्यस्य (ग) [2] शक्त्यधिष्ठानभूतमाप्नोति (ङ) [3] तथासति किं परिशिष्यत इत्याकाङ्क्षायां (ङ).

एवानन्दः। तस्य योगातिशयेन तत्तद्भूम्यारूढस्य पूर्वत्र भूम्याभ्यासः स्वल्पः। एतदनुसारेण तत्तद्भूमौ तदीयानन्दाविर्भावस्य मानुष्यानन्दासाम्यश्रुतिरिति न विरोधः।

अतोऽयमेव परमानन्दः परा प्रकृतिः पराभेदानन्दो **'ब्रह्मेति व्यजानात्'** इति ब्रह्मत्वेन जगत्कारणत्वेन च श्रूयते। तस्याभिव्यक्तिः **'सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता'** इति। अतो मुक्तानां परमानन्दरूपपरमाकाशरूपशरीरं ब्रह्म जगद्भवति; इति परमानन्दानुपविष्टानामेषां ब्रह्मण इति दुःखानुषङ्गाभावो दर्शितः।

ननु परशिवब्रह्मसारूप्यप्राप्त्यनन्तरं बाह्यज्ञानलोपं दर्शयति श्रुतिः– **'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं'** इति। तत्कथं मुक्तस्य सार्वज्ञत्वमुच्यते ? तत्रोत्तरं–

## ॥ ३६७ ॥ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

नेदं वचनं मुक्तविषयम्; अपि तु **स्वाप्ययसम्पत्त्योरन्यतरापेक्षम्।** स्वाप्ययः सुषुप्तिः; सम्पत्तिश्च मरणं; **'वाङ्मनसि सम्पद्यते'** इत्यारभ्य **'तेजः परस्यां देवतायां'** इति वचनात्। तयोश्चावस्थयोः प्राज्ञाप्राप्तिनिस्सम्बोधत्वं च विद्यते। अतस्तयोरन्यतरापेक्षमिदं वचनम्। सुषुप्तिमरणयोर्निःसम्बोधत्वं मुक्तस्य च सर्वज्ञत्वमाविष्कृतं हि श्रुत्या– **'नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति; नाहमत्र भोग्यं पश्यामि'** इति सुषुप्तिवेलायां निस्सम्बोधत्वमुक्त्वा तस्मिन्नेव वाक्ये मुक्तमधिकृत्य **'स वा एष दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके'** इति सर्वज्ञत्वमुच्यते। तथा **'सर्वं ह पश्यः पश्यति सर्वमाप्नोति'** इति च स्पष्टमेव सर्वज्ञत्वमुच्यते। तथा मरणे च निस्सम्बोधत्वम्। **'एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति'** इत्युक्तम्। **विनश्यति–** न पश्यतीत्यर्थः। अतः **'प्राज्ञेनात्मना'** इति वचनं स्वाप्ययसम्पत्त्योरन्यतरापेक्षम्।"

ननु– **'सर्वेषु लोकेषु कामचारो भवति' 'इमान् लोकान् कामान्नीकामरूप्यनुसञ्चरन्'** इत्यादिश्रुतिषु मूर्तपरशिवब्रह्मोपासकस्य परिच्छिन्नत्वेन सर्वलोकसञ्चारव-

गमात् न व्यापकत्वम्। तस्मात् नानाशरीरसमावेशसङ्क्रमेणैव परमेश्वरवन्न युगपदिति चेन्न–

> 'स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा।
> यत्र देवा अमृतमानशुस्तृतीये धामान्यभ्यैरयन्त॥
>
> परिद्यावा पृथिवी यन्ति सद्यः परिलोकान् परिदिशः परिसुवः।
> ऋतस्य तन्तुं विततं विधृत्य तदपश्यत्तदभवत्प्रजासु॥'

इति श्रुतौ अविद्यापाशमोचने तदुपासकस्य तद्वद्विश्वव्याप्तिरावेशो भवतीति दर्शितम्।

तत्प्रकरणं– **'एष हि देव'** इति जगत्कर्तुर्विश्वरूपस्य महादेवस्य। **स–** महादेवः, **नः–** अस्माकं, **बन्धुः जनिता–** पिता, **स विधाता–** सकलश्रेयसां कर्ता, **धामानि–** तेजोरूपाण्यप्राकृतानि, **भुवनानि–** विश्वान्यपि जानाति; तत्र बन्धुत्वादियोगस्य धामवेत्तृत्वस्य च प्रयोजनमुच्यते– **यत्र–** यस्मिन्निह देवे, **अमृतं** कैवल्यलक्ष्मीमानसाशाः प्राप्यानुभवन्तः. **देवाः–** तद्भावात्– देवनशीलाः, **तृतीये–** द्युसंज्ञिके तत्पदे मायातीते, **धामानि–** तेजः प्रधानानि स्वाभिमतानि स्थानानि, **अभ्यैरयन्त–** स्वीकृतवन्तः।

एतदुक्तं भवति– बन्धुवज्जनकवत् सकलहितकारिणा महादेवेन प्रसन्नेन दळितपाशबन्धाः अमृतभावं गताः मुक्ताः तृतीये परमव्योमलक्षणे स्वपदे कल्पितानि धामानि पदानि प्राप्तवन्त इति तस्मात्परमेषां व्याप्तिरुच्यते–

**'परिद्यावापृथिवी यन्ति–'** मुक्तात्मानः स्वशक्तिमरीचिभिः द्यावापृथिवी **परियन्ति–** प्राप्नुवन्ति; **परिलोकान्–** हिरण्यगर्भादिलोकानपि, प्राप्नुवन्ति; **दिशश्च** व्याप्नुवन्ति। एवं सकलजगद्व्यापिनो वर्तन्ते। तथा हि–

ते सर्वज्ञाः **ऋतस्य–** कर्मणो विस्तीर्णं भोगतन्तुं **विधृत्य–** भित्वा, पुण्यपापविनिर्मुक्ताः सन्तः सर्वप्राणेषु तदेव महादेवाख्यं वस्तु **अपश्यन्**। सर्वात्मकतया **तदभवत्–** तत्स्वभावाश्चाभवन्। तस्मान्मुक्तानां शिवैकरसानां व्यापकत्वमस्त्येव।

एते महादेवसधर्माणो मुक्तजीवाः देवशब्दवाच्याः द्युप्रभृतिव्यापिनो देवव्रताख्ये सामानि श्रूयन्ते– '**ये देवाः दिविषदः**' इत्यादिना । पुराणे च–

**'ते हि साक्षाद्दिविषदस्त्वन्तरिक्षसदस्तथा ।**
**पृथिवीषद इत्येते देवा देवव्रते स्तुताः ॥'**

इति । पृथिवीति ब्रह्माण्डरूपं; अन्तरिक्षमिति द्वितीयं मायापदं; तृतीयं परमाकाश-पर्यायं शुद्धशक्तिरूपं शिवपदमुच्यते । अतो मुक्तानां विभुत्वमविरुद्धम् ।

किञ्च– **प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं**' इति श्रुतौ मुक्तानां शिवेतरजगद्ज्ञानादिशक्तिसङ्कोच इति यदुक्तं तन्न । इदन्तु बद्धजीव-सुषुप्त्यादिविषयम् । अथवा शिवेतरजगद्ज्ञानादिनिषेधपरं वा स्यात् ।

---

जगद्व्यापाराधिकरणम् ॥ ५ ॥

मुक्तप्राप्यजगत्सृष्ट्यादिपञ्चकृत्यवर्जनिर्व्याजब्रह्मानुभवैश्वर्यविवरणम्

ननु परशिवब्रह्मोपासकानां तद्वत्सत्यसङ्कल्पत्वव्यापकत्व-सर्वज्ञत्वादिधर्माङ्गीकारे तद्वद्देवमनुष्यादिजगज्जन्मादिकारणत्वं स्यादित्याशङ्कायां मुक्तजीवपरमेश्वरयोर्वैलक्षण्यमधिकरणान्तरेणाह—

## ॥ ३६८ ॥ जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥

पूर्वत्र निरवयवस्य परब्रह्मणः शिवस्यैवाकाशादिवत्पूर्णत्वं व्यापकत्वं तदुपासकानां तत्प्राप्तिकत्वं मूर्तब्रह्मणः दीपादिवद्व्यापकत्वं तदुपासकानां तद्वत्स्वतन्त्रत्वं सर्वलोकसञ्चारकत्वं सर्वकामावाप्तिमत्वादिकञ्चोपदिश्य इदानीं उपास्योपासकयोः वैलक्षण्यं दर्शयति— ॥ जगद्व्यापारवर्जं इति ॥

देवगन्धर्वमनुष्यादिभूतभौतिकसृष्टिव्यापारं वर्जयित्वा स्वभोगसाधनीभूतकायव्यूहादिनिर्धारणसामर्थ्यमात्रमेव उपासकानाम्। देवगन्धर्वादिसृष्टिव्यापरस्तु शिवस्यैव। कुतः? ॥ **प्रकरणात्** ॥ '**तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नात्पुरुषः।**' '**यतो वा इमानि भूतानि जायन्ते**', '**ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते**' इत्यादिना चेतनाचेतनदेवादिशरीरस्रष्टृत्वप्रतिपादनात् तदुपासकानां स्वशरीरातिरिक्तदेवादिसर्वशरीरस्रष्टृत्वस्य श्रुतिस्मृतिपुराणेष्वदर्शनाच्च।

किञ्च— असन्निहितत्वाच्च— '**विश्वाधिको रुद्रो महर्षिः**', '**यो ब्रह्माणं विदधाति पूर्वम्; यो वै वेदांश्च प्रहिणोति तस्मै**' इत्यादौ देवगन्धर्वादिसकलजीवप्रागवस्थायां हिरण्यगर्भस्य साक्षात्परशिवब्रह्मजन्यत्वप्रतिपादनेन परशिवं प्रति सन्निहितत्वात् अन्तरङ्गत्वात् तत्काले तद्व्यतिरिक्तजीवस्य सृष्ट्यभावेन मुक्तजीवानां असन्निहितत्वाच्च तेषां परमेश्वरवज्जगज्जन्मादिकारणत्वं न सम्भवतीति सूत्रसूचितसूक्ष्मार्थः।

'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिनिर्दिष्टजगज्जन्मादिहेतुत्वं उपास्योपासकयोश्शिवजीवयोस्सम्भवति ? उत शिवस्यैव सम्भवति ? इति संशयः।

'यदा पश्यः पश्यते रुक्मवर्णं .... परमं साम्यमुपैति' इत्यादौ परमपुरुषेण शिवेन मुक्तानां साम्यापत्तिश्रवणात्, 'य आत्मा अपहतपाप्मा' इत्यादिना मुक्तस्य परमेश्वरवत्सत्यसङ्कल्पत्वादिधर्मोपदेशात्, 'स यदि पितृलोककामो भवति' इत्यादिषु सङ्कल्पमात्रात् पितृलोकादिसृष्टिसामर्थ्यश्रवणात् 'इमान् लोकान् कामान्नीकामरूप्यनुसञ्चरन्' इति सर्वत्र व्यापारद्योतनात्. परमेश्वरसाम्ये सङ्कोचायोगाच्च मुक्तस्यापि परमेश्वरवत् जगज्जन्मादिकारणत्वं सम्भवतीति प्राप्ते प्रचक्ष्महे– ॥ जगद्व्यापारवर्जमिति ॥

'जगद्व्यापारः– निखिलचेतनस्वरूपस्थितिप्रवृत्तिभेदनियमनम्। तद्वर्जं– निरस्त-निखिलतिरोधानस्य निर्व्याजब्रह्मानुभवरूपं मुख्यैश्वर्यम्।" कुतः ? ॥ प्रकरणात् ॥ निखिल-जगन्नियमनं हि परशिवब्रह्मप्रकृतिरित्याम्नायते। 'यतो वा इमानि भूतानि जायन्ते' 'द्यावापृथिवी जनयन् देव एकः' 'सोमः पवते जनिता मतीनां' इत्यादि-श्रुतिनिर्दिष्टजगज्जन्मादिकारणत्वस्य मुक्तानां साधारण्ये ब्रह्मलक्षणं न सङ्गच्छते। आसा-धारणधर्मस्यैव हि लक्षणत्वम्। तथा 'सदेव सौम्येदमग्र आसीत्' 'एकमेवाद्वितीयं' 'तदैक्षत, बहुस्यां प्रजायेय', 'तदक्षरं तत्सवितुर्वरेण्यं', 'यदा तमस्तन्न दिवा न रात्रिः', 'तदेकं सन्नप्यभवत्', 'तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवनक्ष-त्राणि इन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः', 'नान्यत्किञ्चन मिषत्' इत्यादिषु शिवस्य परब्रह्मणः निखिलजगन्नियामकत्वं श्रूयते। निखिलजगन्नियम-नादिप्रसङ्गेषु मुक्तस्य न सन्निधानमस्ति ; येन जगद्व्यापारः तस्यापि स्यात्।

ननु 'हिरण्यगर्भस्समवर्तताग्रे' 'धाता यथापूर्वमकल्पयत्', 'एक एव नारायण आसीत्', 'नारायणाद्ब्रह्मा जायते।' 'नारायणाद्रुद्रो जायते।' 'एको ह वै नारायण आसीत्' इत्यादिषु हिरण्यगर्भनारायणादीनां प्रात्यक्षिक-श्रुतिषु जगत्कारणत्वावगमात् कथमेकस्यैव शिवस्य परब्रह्मणः जगज्जन्मादिकारणत्वं सम्भवति ? तस्मान्मुक्तानामपि जगज्जन्मादिकारणत्वमविरोधमित्याशङ्कायामाह–

## ॥३६९॥ प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥१८॥

'हिरण्यगर्भः समवर्तताग्रे' इत्यादिषु प्रात्यक्षिकश्रुतिषु हिरण्यगर्भादीनां जगत्कारणत्वोपदेशात् परब्रह्मणश्शिवस्यैव जगत्कारणत्वं न सम्भवतीति चेत्– 'ध्यायीतेशानं प्रध्यायितव्यम्', 'सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते' इत्यादिबहुश्रुतिषु शिवहिरण्यगर्भनारायणादीनां कारणकारणत्वायोगात् तेषां तत्तुल्यत्वं न सम्भवति। कुतः ? ॥ आधिकारिकमण्डलस्थोक्तेः ॥ आधिकारिकमण्डलेषु– शिवानुग्रहदत्तेषु परिच्छिन्नेषु सत्यवैकुण्ठादिलोकेषु इन्द्रहिरण्यगर्भादीनां चोक्तेः स्थित्युपदेशात् 'तेन देवा अयजन्त साध्या ऋषयश्च ये' इत्यादिश्रुतिषु परशिवस्यैव देवादिसकलस्रष्टृत्वस्य साक्षादुपदिष्टत्वात् अवान्तरसृष्टौ हिरण्यगर्भादीनां जगत्कारणत्वावगमेऽपि तदन्तर्यामितया तत्कारणत्वं परमेश्वरस्यैव सिद्धम्।

"ननु– 'सः स्वराड्भवति', 'तस्य सर्वेषु लोकेषु कामचारो भवति', इत्यादिश्रुतिषु परमेश्वरवन्मुक्तस्यापि जगद्व्यापार उपदिश्यते; इति चेन्न। अकर्मप्रतिहतज्ञानो मुक्तो विकृतलोकान् ब्रह्मणः शिवस्य विभूतिभूताननुभूय यथाकामं तृप्य भोगान् तल्लोकांश्च यथाकामं प्राप्नुवन्तीत्युपदिश्यते। तस्मान्न जगद्व्यापारः।"

यदि संसारिवन्मुक्तोऽपि विकारान्तर्वर्तिनो भोगान् भुङ्क्ते तर्हि बद्धस्येव मुक्तस्यापि अन्तवदेव भोग्यजातं अल्पञ्च स्यादित्याशङ्क्य तत्राह–

## ॥ ३६९ ॥ विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥

"विकारे जन्मादिके न वर्तत इति विकारावर्ति; निर्धूतनिखिलविकारं निखिलहेयप्रत्यनीककल्याणैकतानं निरतिशयानन्दं परशिवब्रह्म सविभूतिकं सकलकल्याणगुणमनुभवति मुक्तः। तद्वद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकानामपि मुक्तभोग्यत्वम्। तथा हि– परस्मिन् ब्रह्मणि निर्विकारे अनवधिकातिशयानन्दे मुक्तस्यानुभवितृत्वेन स्थितिमाह श्रुतिः– 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते; अथ सोऽभयं गतो भवति॥' 'रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इत्यादिका। तद्विभूतिभूतं च जगत् तत्रैव वर्तते। 'तस्मिँल्लोकाः श्रिता-

**स्सर्वे तद्‌ नान्येति कश्चन।'** इति श्रुतेः। अतः सविभूतिकं ब्रह्मानुभवन् विकारान्तर्वर्तिन आधिकारिकमण्डलस्थानपि भोगान् भुङ्क्ते ; इति **'सर्वेषु लोकेषु कामचारः'** इत्यादिनोच्यते।"

## शिवसामरस्यसमर्थनम्

किञ्च— [1]कैलासवासिनां नित्यमुक्तानां सूरिणां स्वेच्छया संचरतां **'कामान्नी-कामरूप्यनुसञ्चरन्** इत्यादौ कामान्निकामरूपमनुष्यादिशरीराभिमानरहितेच्छाशक्ति-क्रियाशक्ति-ज्ञानशक्तिव्यापाराणां नित्यवैभवपरमानन्दकन्दस्वप्रकाशविभूतिमय**शिवसामरस्य**-सारूप्य-रसैक-प्रपञ्चावगाहिनां परिपूर्णसर्वशिवात्मक-भावप्रकटनं श्रुतिर्दर्शयति— **'अहमन्नमहमन्नमहमन्नं'** **'अहमन्नादोऽहमन्नादोऽहमन्नादः'** इत्यादिना। तथा श्रुत्यन्तरेऽपि मुक्तानुभवः स्पष्ट-मुपदिष्टः—

**'त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत्।**
**तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः॥**

**मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम्।**
**मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्॥**

**अणोरणीयनहमेव तद्वत् महानहं विश्वमिदं विचित्रम्।**
**पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि॥'**

इत्यादिना। इयं श्रुतिः आकाशवत्सर्वव्यापकशिवत्वानन्दानुभवशिवयोगसमाधिनिष्ठानां जीव-न्मुक्तानां शिवज्ञानिनां वामदेवादिवदुपलक्षणम्। शिवसारूप्यधारिणां जीवन्मुक्तानामपि दृढशिवैकज्ञाननिष्ठासत्त्वेऽपि शिववत्तेषां न जगज्जन्मादिहेतुत्वम्।

अत्र मुक्तस्याहङ्कारो न सांसारिकः ; देवमनुष्यादिवर्णाश्रमावच्छिन्नपरिच्छिन्नसां-सारिकाहङ्काराद्विलक्षणत्वात् सकलचिदचित्प्रपञ्चावगाहित्वेन परिपूर्णत्वाच्च। अत्र अहम्पदेन शिव एवाभिधीयते।

---

[1] परमशिवकैलास· ·ग)·

अस्मिन्नर्थे हेत्वन्तरमाह–

## ॥ ३७१ ॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

"अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य, नियन्तृभूतपरमपुरुषासाधारणं जगद्व्यापाररूपं नियमनं न सम्भवतीत्युक्तम्। निखिलजगन्नियमनरूपो व्यापारः परमपुरुषरशिवासाधारण इति दर्शयतः श्रुतिस्मृती–

'भीषास्माद्वातः पवते भीषोदेति सूर्यः।'
भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः॥'

इति। 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादि च। तथा 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय' इति च श्रुतिः।" –मनुस्मृतौ–

'अप एव ससर्जादौ तासु वीर्यमवासृजत्।'
शिवेनोत्पादितं सर्वं शिवेन परिरक्ष्यते।
पुनश्शिवे महादेवे लीयते सचराचरम्॥'

इति। शातातपे च– शिवस्यैकस्यैव जगज्जन्मादिहेतुत्वोपदेशात्, 'निरञ्जनः परमं साम्यमुपैति' 'मुक्तः शिवसमो भवेत्' इत्यादिषु मुक्तानां शिवसाम्यमात्रोपदेशोऽपि जगत्कारणत्वादर्शनात् शिववर्जेषां जगद्व्यापारवर्जनं युक्तमेव।

'एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः।' इति श्रवणात् 'पादोऽस्य विश्वा भूतानि' इत्यत्र विश्वाभूतानीति विश्वपदेन अनन्तकोटिब्रह्माण्डानि, भूतशब्देन नारायणहिरण्यगर्भेन्द्रादिभूतानि, भूतपतेश्शिवस्यैकपादरूपाणि, 'त्रिपादस्यामृतं दिवीति' सच्चिदानन्दलक्षणलक्षित-त्रिपादात्मकशिवपदस्यामृतत्वनिर्देशात् मूर्तित्रयातीतं परमशिवाभिधमिति निश्चीयते।

तस्मात्– 'शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' इति माण्डूक्ये,

'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः ॥'

इति **तैत्तिरीये** जीवन्मुक्तानां अकारोकार-मकारात्मकब्रह्म-विष्णु-कालरुद्रेभ्यः परत्वस्य महेश्वरे उपदेशात् मुक्तानां सत्यसङ्कल्पत्वादिपरमपुरुषमहेश्वरसाम्यसत्वेऽपि जगद्व्यापारवर्जनमविरुद्धम् ।

ननु मुक्तानां परमेश्वरवज्जगज्जन्मादिकारणत्वायोगे '**निरञ्जनः परमं साम्यमुपैति**', '**मुक्तश्शिवसमो भवेत्**' इत्यादिश्रुतिनिर्दिष्टपरमसाम्यविरोधो दुर्निवार इत्याशङ्क्य तत्राह—

## ॥ ३७२ ॥ भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

भोगमात्रे मुक्तस्य ब्रह्मसाम्यप्रतिपादनात् , **लिङ्गाच्च**, सर्वजगत्कारण-परमेश्वरादन्यस्य जगद्व्यापाररहित्यलिङ्गदर्शनाच्च मुक्तानां जगद्व्यापाररहितत्वमविरोधम् । **सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता**' इत्यादौ मुक्तस्य परशिवभोगसाम्यं दर्शितम् ।

अत्र केचित्— लिङ्गात् जगज्जन्मादिकारणभूतपरिपूर्णनिरवयवशिवतत्त्वात् मूर्तपरशिवस्य तदुपासकमुक्तस्य च भोगमात्रसाम्यं यत उपदिष्टं अतः नित्यमुक्तमूर्तपरमशिववदवान्तरमुक्तजीवानां जगत्कारणत्वं देवमनुष्यादिनानाशरीरकल्पनञ्च न सम्भवति । **एष ह्येवानन्दयाति**' इत्यादौ उपास्योपासकयोः प्राप्यत्व-प्रापकत्वादितारतम्यदर्शनाच्चेति वदन्ति । तदप्यविरुद्धम् । तथा **स्कान्दे** श्रूयते—

'यद्यपि भोगापगमे साम्ब तवाहं न मामकीनस्त्वम् ।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥
'यदा सर्वे प्रमुच्यन्ते···· अत्र ब्रह्म समश्नुते'
'न तस्य प्राणा उत्क्रामन्ते तत्रैव समवलीयन्ते ॥'

इत्यादौ निरवयवशिवतत्त्वोपासकज्ञाननिष्ठानां,

सर्वकामनिर्मुक्ततया लिङ्गशरीरविलयपूर्वकशिवतत्त्वप्राप्तेरुपदेशात् । **'न स पुनरावर्तते न स पुनरावर्तते'** इत्यादिश्रुतिनिर्दिष्ट मुक्तपुनरावृत्तिनिषेधस्य तत्परत्वमेवेति निर्दिश्यते ।

व्यापकस्य ब्रह्मणो मूर्तत्वस्य उपासनार्थं रज्जुसर्पवत्कल्पितत्वेन मिथ्यात्वात्, मिथ्याभूतस्य वस्तुन उपासनेन मुक्त्ययोगात्, श्रुतिप्रमाणसिद्धयै मूर्तब्रह्मोपासकानां पुनरावृत्तिद्वारा निर्गुणनिर्विशेषपरशिवब्रह्मज्ञानेनैव इहैव मुक्तिः ।

---

## अनावृत्तिश्शब्दाधिकरणम् ॥ ६ ॥

### मूर्तब्रह्मोपासकानां, अमूर्तब्रह्मोपासकानां च अपुनरावृत्तिनिश्चयः

किञ्च– '**सोऽश्नुते**' इत्यादौ बद्धजीववत् सालोक्यादिपदप्राप्तानां उपासकानां कामावाप्तिदर्शनात् तेषां पुनरावृत्तिरहितत्वमसङ्गतमित्याशङ्कायां सर्ववेदान्तसिद्धान्तं स्वाभिप्रेतं असङ्कुचितत्वेन शास्त्रान्ते दर्शयति–

## ॥ ३७२ ॥ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥ २२ ॥

पूर्वत्र निखिलकल्याणगुणाकर-नित्यतृप्त-निरतिशयानन्दस्वभाव-निस्समानसर्वज्ञ-सत्यसङ्कल्प-सकलचेतनाचेतनप्रपञ्चाधिक-भक्तपराधीन-परमकारुणिकस्य **उमापतेः** परब्रह्मणस्साम्य-सर्वकामावाप्ति-सालोक्यादिपदप्राप्तभक्तानां व्यवस्थापनेऽपि तेषां जगत्कारणत्वाद्यनन्यसाधारणधर्मसङ्कुचितत्वमुपदिष्टम् ।

इह तु– '**ब्रह्मवित् ब्रह्मैव भवति**', '**ब्रह्मविदाप्नोति परं**', '**तरति शोकमात्मवित्**' '**ज्ञात्वा शिवं शान्तिमत्यन्तमेति**' '**तत्त्वमसि**' इत्यादिशब्दात् श्रुतौ निरवयवब्रह्मोपासकानां ब्रह्मात्मकत्वव्यपदेशात् '**लोहरसादिन्यायवत्**' तदुपासनमहिम्ना स्वाभाविकजीवभावनिवृत्तिपूर्वक-शिवतत्वप्राप्तिसम्भवात् पाशबद्धजीववन्न पुनरावृत्तिः । '**उमासहायं**', '**ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्**' इति श्रुतौ मूर्तपरशिवब्रह्मोपासकानां विदुषां तमश्शब्दवाच्यगुणत्रयसाम्यावस्थारूपप्रकृतिविलक्षण-शिवप्रापकत्वव्यपदेशात् '**वेदान्तविज्ञान……मुच्यन्ति सर्वे**', '**स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते ; न च पुनरावर्तते न च पुनरावर्तते**' इत्यादि-श्रुतिषु मूर्तमहेश्वरोपासकानां तल्लोके तेन सह सर्वकामान् अवाप्यलब्धा तदनन्तरं तल्लोकादेव '**भ्रमरकीटन्यायवत्**' शिवज्ञानपूर्णभावेन सर्वपरिपूर्णशिवसायुज्यसिद्धिदर्शनाच्च मूर्तपरशिवोपासकानामपि बद्धजीववत्पुनरावृत्तिर्न सम्भवति इति सूत्रसूचितसूक्ष्मार्थः ।

'उमासहायं परमेश्वरं प्रभुं' इत्यादौ मूर्तब्रह्मोपासकानां शिवतत्त्वप्राप्त्युपदेशात् 'तरति शोकमात्मवित्' इत्यादावमूर्तब्रह्मोपासकानां जनन-मरण-प्रवाहात्मक-संसारदुःखनिवृत्त्यवगमाच्च मूर्तोपासकानाममूर्तोपासकानां वा पुनरावृत्तिरहितत्वमिति सन्दिह्यते।

'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्यादौ मूर्तोपासकानां बद्धजीववत्कामावाप्तिश्रवणात्।

*यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसञ्चरेत्॥

इत्यादौ ब्रह्मविदां सर्वकामनिवृत्तिनिर्देशाच्च मूर्तब्रह्मोपासकानांपुनरावृत्तिर्न सम्भवति।

किञ्च– 'कामान्नीकामरूप्यनुसञ्चरन्' इत्यादौ मूर्तब्रह्मोपासकानां स्वेच्छाकल्पितनानाशरीरप्रवेशावगमात् सर्वभोगदर्शनाच्च पुण्यापुण्यकर्तृत्वमर्थात्सिद्ध्यति। 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति', 'पुण्यचितो लोकः क्षीयते कर्मचितो लोकः क्षीयते' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिश्रुतिषु पुण्यफलप्राप्तस्वर्गादिपदनिष्ठानां पुनरावृत्तिव्यपदेशवत् शिवपदमहाकैलासपदारूढभक्तानामपि पुनरावृत्ति[1]र्दुर्वारा; कर्मसाध्यत्वात् स्वकर्तृहेतुत्वाच्च। "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन' इत्यत्र कृतकर्मणां मुमुक्षूणां अकृतमोक्षनिरासदर्शनात्।

उत– 'ते ब्रह्मलोके तु परान्तकाले' इत्यादो ब्रह्मशब्दस्य चतुर्मुखे रूढत्वात् तदुपासकस्य तल्लोकप्राप्तिरभिहिता। 'नारायणं परं ब्रह्म' इत्यादौ नारायणस्य परब्रह्मत्वव्यवस्थापनात् भगवच्छब्दस्य तत्रैव रूढत्वात् ब्रह्म-नारायणयोः कार्य-कारणत्वेनानन्यत्वस्य समुचितत्वेन ब्रह्मशब्दवाच्यत्वं तस्यैव युक्तम्। तच्छ्रुतिमार्गनिर्वाहार्थं मूर्तचतुर्मुखनारायणाद्युपासकानां बहुजन्मसिद्धानां सर्वपापपङ्कनिवृत्तिपूर्वकचित्तशुद्धिद्वारा

---

* एतच्चिह्नान्तर्गतोऽयं भागः 'ग' कोशमात्रे एव दृश्यते।

[1] रनिवार्या (ख, ग).

नित्य निरवयव-निष्प्रपञ्च-स्वस्वरूपज्ञानेन अपुनरावृत्तिस्सिद्धा । रज्जु-सर्पवत्कल्पितानां मूर्तानाम-नित्यत्वेन तदुपासकानां सर्वथा नित्यमुक्तिर्न सम्भवतीति प्राप्ते प्रचक्ष्महे—

**॥ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥**

**'द्वे वाव ब्रह्मणो रूपे मूर्तश्चामूर्तमेव च ।'**

**'तदादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ।**

**उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥'**

इत्यादिश्रुतिषु शिवस्य परब्रह्मणः निरवयवत्वं सावयवत्वं च यथोपपन्नं तथा **'विरूपेभ्यो विश्व-रूपेभ्यश्च वो नमो नमः'** इत्यादिना **शतरुद्रीये** भक्तानामुभयविधत्वदर्शनात् मूर्तब्रह्मोपासकानाम मूर्तब्रह्मोपासकानाञ्च **अनावृत्तिः शब्दात्** वेदात्, **'ध्यात्वा मुनिर्गच्छति भूतयोनिं'** इत्यादिना मूर्तब्रह्मोपासकानां **'यथा नद्यः'**, **'एष संप्रसादोऽस्मात् शरीरात्स मुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'** इत्यादिशब्दात् अमूर्तोपासकानाञ्च **अनावृत्तिः**— अपुनरावृत्तिर्निश्चीयते ।

**'सोऽश्नुते'** इत्यत्र ब्रह्मणा सह सर्वकामावाप्तिश्रवणात् बद्धजीववैलक्षण्यं दर्शितम् । **'आप्तकामो पूर्णकामो निष्कामो जीर्णकामो भवति'** इत्यादिषु मुक्तात्मनां ब्रह्मवत्स्वाधीनसकलकामत्वं ब्रह्मलक्षणमुपदिष्टम् । विदुषां कामनामात्रेण बद्धत्वाङ्गीकारे **'सोऽकामयत बहु स्यां प्रजायेयेति'** इत्यादिषु ब्रह्मणोऽपि कामवत्व-श्रवणादतिव्याप्तिः । **'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः'** इत्यादि निष्कामश्रुतीनां विदुषां प्रारब्धस्यावसाने निरस्तलिङ्गशरीरपूर्वकपरशिवप्राप्तिकालपरत्वात्, नो चेत् **वामदेव-शुक-अगस्त्य-दधीचिप्रमुखानां जीवन्मुक्तानां इन्द्रोपेन्द्र-हीरण्यगर्भादीनाञ्च** कामा-वाप्तिर्न स्यात् । **'कामान्नीकामरूप्यनुसंचरन्'** इत्यादिवाक्यानां लिङ्गशरीरगतशिव-सालोक्यादिनित्यनिरतिशयवैभवकल्याणमुक्तिपरत्वेन स्वीकृतत्वात् **'श्रद्धाभक्तिध्यान'** **'आत्मान-मरणिं कृत्वा'**, **'क्षरंप्रधानममृताक्षरं हरः'**, **'तस्याभिध्यानात्'**, **'अमृतस्य देवधारणो'**, **'त्रियम्बकं यजामहे'**, **'आत्मा वा अरे'**, इत्यादिब्रह्मप्रकरणपठित-परशिवभक्ति-ध्यान-धारण-पूजा-नमस्कार-श्रवणादीनां साक्षात्परशिवप्राप्त्युपायत्वोपदेशात्, धर्म-प्रकरणपठिताज्योतिष्टोमादिकर्मणामेव पुनरावृत्तिरभिहिता । **'यावदायुषं ब्रह्मलोकमभिसम्पद्यते**

**न च पुनरावर्तते'** इत्यादौ ब्रह्मलोकशब्दः न चतुर्मुखपरः; लोके श्रुतिपुराणादिषु चतुर्मुखोपासनवचनाचारादर्शनान् तदुपासनं विना तल्लोकसिध्यभावाच्च **'ब्राह्मणानां शिवो देवः क्षत्रियाणान्तु माधवः'** इत्यादिस्मृतिषु **विष्णोः क्षत्रियदेवतात्वव्यपदेशात्** कारणकारणत्व-मूर्तित्रयातीतत्वादिपरब्रह्मधर्माणां अदर्शनाच्च नारायणस्य परब्रह्मत्वं न युक्तम्। **'नारायणपरं ब्रह्म'** इत्यादौ नारायणस्य यः परः शिवः स एव ब्रह्मेति निश्चीयते।

तदुत्तरत्र **'ब्रह्मा शिवो मे अस्तु सदा शिवोम्', 'ऋतं सत्यं परं ब्रह्म',** इत्यादिषु शिव-ब्रह्मशब्दयोः घट-कलशादिवत् पर्यायत्वं स्पष्टमुपदिष्टम्।

**'प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते, स आत्मा स विज्ञेयः'** इति माण्डूक्ये, **'उमासहायं'**, इत्यारभ्य **'स ब्रह्मा स शिवस्स हिरस्सेन्द्रस्सोक्षरः परमस्स्वराट्'** इति कैवल्ये, शिवस्यैव मूर्तित्रयातीतत्वोपदेशात्, तथैव **अथर्वशिरसि— 'ध्यायीतेशानं'** इत्यारभ्य **'शिव एको ध्येयः'** इत्यन्तेन मुमुक्षूणां शिवेतरदेवतोपासननिषेधावगमात् **'शिवङ्कर'** इत्यत्र **भ्रमरकीटन्यायेन** शिवं करोतीति **शिवंकरः** इति व्युत्पत्या भक्तानां स्वस्वरूपप्रदायकत्वं दर्शितम्।

भगवच्छब्दस्य इन्द्रादिषु लौकिकप्रयोगदर्शनेऽपि पितृमेधे—

**'ईशानः पितृरूपेण महादेवो महेश्वरः।**
**प्रीयतां भगवानीशः परमात्मा सदाशिवः॥'**

इति, **ब्रह्मकाण्डे श्वेताश्वतरे— 'सर्वाननशिरोग्रीवः .... सर्वव्यापी च भगवान् तस्मात्सर्वगतश्शिवः'** इति, **अथर्वशिरसि— 'यो वै रुद्रः स भगवान् यश्च ब्रह्मा यश्च विष्णुः'** इत्यादिना भूयो भूयः भगवच्छब्दः शिवे बहुधा प्रपञ्चितः। शतरुद्रीये— **'नमस्ते अस्तु भगवन् विश्वेश्वराय महादेवाय'** इति तद्वदुपदिष्टम्। लौकिकप्रयोगात् श्रौतविधेर्बलीयस्त्वात् भगवच्छब्दो नेतरस्य[1]मुख्यः।

**'अथातो ब्रह्मजिज्ञासा** इति शास्त्रारम्भे ब्रह्मणः मुमुक्षुजिज्ञास्यत्वोपदेशात् निर्विशेषब्रह्मवादस्तत्रैव निरस्तः। **'लक्षणप्रमाणाधीना हि वस्तुसिद्धिः'** इति

---
[1] तुल्यः (झ).

**न्यायेन** ब्रह्मात्मकवस्तुसिद्धौ **'जन्माद्यस्य यतः', 'शास्त्रयोनित्वात्'** इति लक्षण-प्रमाणविधायकसूत्रेषु तदर्थप्रकाशकेषु **'यतो वा इमानि' 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' 'यस्य निःश्वसितं वेदाः', 'तन्त्वौपनिषदं पुरुषं पृच्छामि'** इत्यादिषु ब्रह्म-प्रपञ्चयोः कार्य-कारणत्वादिधर्मव्यवस्थापनेन निर्विशेषवादो जगसत्त्ववादश्च निरस्तः । असत्पदार्थस्य शशशृङ्गादेः उत्पत्त्यसम्भवात् सत्पदार्थस्यैवोत्पत्तिः निर्दिष्टा ।

**'असदिति चेत् न प्रतिषेधमात्रत्वात्', 'पटवच्च'** इत्यादिषु प्रपञ्चस्य प्रळयेऽपि **बीजाङ्कुरन्यायेन** पटसंकोचवत् सूक्ष्मरूपेणावस्थानं सृष्टिकाले [1]पठविस्तारवत् प्रपञ्चविजृम्भितत्वं प्रपञ्चितम् । तस्मात् सत्पदार्थस्य प्रपञ्चस्य प्रळये कारणरूपेणावस्थानं जीवानां चेतनत्वेन स्वरूपतो नित्यत्वं च परमात्मवदुपदिष्टं **'नित्योनित्यानां'** इति श्रुतौ । तथा **स्मृत्यन्तरे–**

**'प्रवाहवत्प्रपञ्चस्य सत्यत्वमुपदिश्यते ।**
**स्वरूपतो हि सत्यत्वं चेतनानां विधीयते ॥**
**अतिरोधानसत्यत्वं स्वतः सिद्धं शिवस्य हि ॥'**

इति दर्शनात् निर्विशेषचिन्मात्रब्रह्मवादो न विद्वद्रमणीयः[2] । रज्जुसर्पवत् भगवच्छरीरस्य मिथ्यात्मकत्वव्यपदेशो **'भीषास्माद्वातः पवते' 'मृत्युर्धावति पञ्चमः'** इति श्रुति-निर्दिष्टसूर्यादीनां विदुषां भयाविष्टत्वं कथमुपपद्यते ? **'इन्द्रो मायाभिः पुरुरूप उग्रः'** इति पारमैश्वर्यविशिष्टशिवस्याऽपि मायाशक्तिभिर्नीलकण्ठत्वादिलक्षणबहुशरीरग्रहणवस्तुदर्शनेऽपि **'स्थिरेभिरङ्गैः पुरुरूप उग्रः'** इति परमेश्वरपरिगृहीतदिव्यमङ्गलविग्रहणामप्राकृतानां शुद्ध-विद्या-मायानां मन्त्रभागेषु स्थिरत्वव्यवस्थापकवाक्यानां दत्ताञ्जलिप्रसङ्गस्स्यात् ।

**किञ्च– 'यदा तमस्तन्न दिवा न रात्रिः न सन्न चासच्छिव एव केवलः'** इत्यादौ शिवस्य महाप्रलयसाक्षित्वं, **'अजात इत्येवं कश्चिद्भीरुः प्रपद्यते । रुद्र दक्षिणं मुखं तेन मां पाहि नित्यम् ।'** इत्यादौ परमेश्वरस्य अजातत्वं, **'विश्वाधिको रुद्रो महीर्षिः' 'पराऽस्य शक्तिर्विविधैव श्रूयते' 'मायान्तु प्रकृतिं**

---

[1] विस्तृतपटवत् (ग). [2] अविद्वद्रमणीयः (ग).

विन्द्यात्' इत्यादिना विश्वाधिकत्व-सर्वशक्तत्व-सर्वकारणत्वादिकं ; 'एक एव रुद्रो न द्वितीयाय तस्थुः' 'न तस्य कार्यं करणश्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादौ तस्याद्वितीयत्वं ' 'पुरुषो वै रुद्रस्स न्महोनमो नमः', विश्वं भूतं भुवनं चित्रं....सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु', 'विश्वरूपाय वै नमो नमः' इत्यादिषु विश्वात्मकत्वं, 'नमो हिरण्यबाहवे', इत्यादिषु तस्य ज्योतिर्मयत्वं च उपदिश्यते। कथं हिरण्यशब्दस्य ज्योतिर्वाच्यत्वमिति चेत्– शास्त्रेऽपि हिरण्यस्य वह्न्यात्मकत्वं सर्वत्र प्रसिद्धम्। हिरण्यशब्देन हेमत्वाङ्गीकारे सूर्यमण्डलान्तर्वर्तिनो हिरणमयशिवशरीरस्य वह्निमध्यस्थसुवर्णवत् द्रवत्वप्रसक्त्या [1]असत्यत्वप्रसङ्गः दुर्निवारः। अथर्वशिरसि भगवद्वचनं–

'पुष्करमहं पवित्रमहं अग्र्यश्च मध्यश्च बहिश्च पुरस्तात्।
ज्योतिरहमेकस्सर्वे चाहमेव मां यो वेद स सर्वान् वेद ॥' इति।

तथा शैवपुराणे–

'दिनकृत्कोटिसङ्काशं स्थानमाद्यमुमापतेः।
सर्वकामसमायुक्तं विशुद्धं नित्यमव्ययम् ॥
सम्प्राप्यतत्पदं दिव्यं अतः क्लेशविवर्जिताः।
सर्वज्ञास्सर्वदा शुद्धाः परिपूर्णा भवन्ति च ॥
विशुद्धकार्यकरणाः परमैश्वर्यसंयुताः।
स्वदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः ॥
ये सम्प्राप्ताः परस्थानं ज्ञानयोगरता नराः।
न तेषां पुनरावृत्तिर्घोरे संसारमण्डले ॥

इत्यादिना परमशिवस्थानस्य महाकैलासस्य दिनकृत्कोटिसंकाशत्वव्यवस्थापनात् तस्य ज्योतिर्मयत्वे न सन्देहकलङ्कः। 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्यत्र विष्णुपदस्यापि परमपदत्वमवगम्यत इति चेत्–

'परात्परतरं ब्रह्म तत्परात्परतो हरिः।
यत्परात्परतोऽधीशस्तन्मे मनश्शिवसङ्कल्पमस्तु ॥'

इति बोधायनसूत्रे [2]शिवसङ्कल्पे च विष्ण्वाद्यधिकत्वस्य महेश्वरे मननात्, अत्र विष्णोः परमं नारायणादधिकं शिवस्थानं तद्विधस्याध्वनः परं तदतीतमुच्यते।

[1] अनित्यत्वप्रसङ्गः (ज) [2] शिवसङ्कल्पोपनिषदि च (ग).

तस्मात् 'ब्रह्मलोकमभिसम्पद्यते'। न च पुनरावर्तत' इत्यत्र अनावृत्तिलक्षणं '[1]ब्रह्मलोकशब्देन शिवपदमेवाभिधीयते। 'विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः' इत्यादौ शिवभक्तानां [2]निरवयवेश्वरप्राप्तानां विगतरूपत्वं, मूर्तपरशिवस्वरूपोपासकानां विश्वरूपशब्देन बहुरूपत्वं च दर्शितम्। 'नीलग्रीवाः शितिकण्ठाश्शर्वा अधः क्षमाचराः' इत्यादिषु भक्तानां शरीरपरिग्रहे यादृशनीलकण्ठत्वादिलक्षणेश्वरशरीराणि तादृशानि तत्सदृशभक्तानामुपपद्यन्ते।

अनावृत्तिश्शब्दात् इत्यत्र अध्यायपरिसमाप्तिद्योतनार्थं द्विरावृत्तिरिति केचिदाहुः। तदसमञ्जसम्— 'उभयव्यपदेशादहिकुण्डलवत्' 'उभयथा च दोषात्' 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि', 'अधिकन्तु भेदनिर्देशात्' 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यादिसूत्रेषु सर्ववेदान्तसङ्कोचं यथा तथा द्वैताद्वैतमतस्य स्वाभिप्रेतत्वेन सूचितत्वेऽपि 'एवमुपन्यासात्पूर्वभावादविरोधं बादरायणः' 'द्वादशाहवदुभयविधं बादरायणोऽतः' इति वेदमार्गनिष्ठानां स्वाभिप्रेतमुभयविधं जीवब्रह्मणोस्संसारदशायां स्वाभाविकभिन्नत्वं मोक्षदशायां तद्वदभिन्नत्वं च ब्रह्मणो मूर्ताऽमूर्तत्वं, तदुपासकानां भक्तानां तद्वदुभयविधत्वस्य च कण्ठोक्त्या पूर्वोक्तसूत्रेषु उपन्यासात् अनावृत्तिः शब्दादनावृत्तिश्शब्दात्' इत्यत्र मूर्ताऽमूर्तोभयविधोपासक [3]भक्तपरैवेति निश्चीयते। अतस्सूत्रकारमतं द्वैताद्वैतमेवेति घण्टाघोषः॥

---

इति श्रीमद्यतिव्रजपरिबृढ-श्रीपतिपण्डितभगवत्पादाचार्यस्वामिकृत-भेदाऽभेदात्मकविशेषाद्वैत-सिद्धान्तव्यवस्थापक-वैयासिकब्रह्ममीमांसासूत्रार्थप्रकाशके

## श्रीकरभाष्ये

फलाध्यायसंज्ञिकचतुर्थाध्यायस्य सम्पद्याविर्भूताधिकरणादिषडधिकरणावच्छिन्न-सम्पद्याविर्भावस्स्वेनशब्दादित्यादिद्वाविंशत्सूत्रात्मक-

## चतुर्थः पादः समाप्तः

## 'समाप्तश्चाध्यायः शास्त्रं च परिसमाप्तम्'

---

[1] न च पुनरावर्तते अनावृत्तिलक्षणं ब्रह्म (ग). [2] ईश्वरनिरवयवप्राप्तानां (ग). [3] भक्तपरत्वमिति (ग)

## श्रीकरभाष्ये द्वितीयसम्पुटगताधिकरणानां सूत्राणां च संख्यासूची

| अध्यायः | पादाः | अधिकरणानि | सूत्राणि |
| --- | --- | --- | --- |
| द्वितीयाध्यायः | द्वितीयः | ९ | ४५ |
| ,, | तृतीयः | १५ | ५० |
| ,, | चतुर्थः | ७ | १८ |
| तृतीयाध्यायः | प्रथमः | ६ | २७ |
| ,, | द्वितीयः | १० | ४० |
| ,, | तृतीयः | २८ | ६४ |
| ,, | चतुर्थः | १७ | ५२ |
| चतुर्थाध्यायः | प्रथमः | १० | १९ |
| ,, | द्वितीयः | ११ | २० |
| ,, | तृतीयः | ५ | १६ |
| ,, | चतुर्थः | ६ | २२ |
| | ११ | १२४ | ३७३ |
| प्रथमसम्पुटे | ५ | ५० | १७१ |
| आहत्य | १६ | १७४ | ५४४ |

# अनुबन्धः १

## अथ द्वितीयसम्पुटगतब्रह्मसूत्राणां वर्णानुक्रमणिका

अ

# अनुबन्धः २

## अथ श्रीकरभाष्यस्य द्वितीयसम्पुटगत वेदोपनिषद्वाक्यानां वर्णानुक्रमणी

## अनुबन्धः ३

### अथ श्रीकरभाष्यस्य द्वितीयसम्पुटगत स्मृत्यागमपुराणोक्तीनां वर्णानुक्रमणी

## द

R6634,5x1,1 15L7·2

# अनुबन्धः ४

## श्रीकरभाष्यस्य द्वितीयसम्पुटे उदाहृतानां न्यायानामनुक्रमणी



JANGAMWADI MATH, VARANASI
Acc. No. 2428 002

---

# अनुबन्धः ५

## अथ श्रीकरभाष्यस्य द्वितीयसम्पुटे उदाहृतानां व्यक्तीनां ग्रन्थानां च अनुक्रमणी

## श्रीकरभाष्य प्रथमसम्पुट-भूमिकागताशुद्धशोधनपत्रिका

| पृ: | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १० | " ....विजिज्ञास " | " विजिज्ञास " इति |
| ३ | १८ | अथर्वणाद्याफल | अथर्वेण विद्याफल |
| | २० | वेदपर्याया: | वेदपर्याय: |
| ४ | १ | तदनुयायिनो: | तदनुयायिन्यो: |
| | ३ | शिवविमर्शाशक्ति: | शिवविमर्शशक्ति: |
| | १४ | भावोन्मादेना | भावोन्मादेन |
| | १६ | याऽच्चैनव | याच्चैनव |
| ५ | ६ | महिर्षिणां | महर्षीणां |
| | ७ | असीमादुद्धूय | आसीमाया उद्धूय |
| | ८ | वैदिकी ।" | वैदिकी वाङ्मरी " इति |
| | १५ | आत्यन्तिकविजय: | आत्यन्तिको विजय: |
| ६ | ७ | वेदोत्पत्तिमाधिकृत्य | वेदोत्पत्तिमधिकृत्य |
| | १६ | अत्रा | अत्र |
| ७ | १२ | आत्प | आपु |
| | १४ | पूंवषा | पूर्वेषां |
| ८ | १४ | पराविद्या | परविद्या |
| १० | २ | उपास्त्वैत | उपास्यैत |
| ११ | ४ | तस्मै | तस्यै |
| | १९ | तत्स्थु: | तस्थु: |
| १२ | १ | शास्त्राविधान | शास्त्रविधान |
| १५ | ८ | अत्याधुनिक | अत्याधुनिक |
| | | शास्त्रवेत्ता | शास्त्रवेत्तु: |

| | | | |
|---|---|---|---|
| १७ | ३ | अनुष्ठानौः | अनुष्ठानैः |
| | ६ | व्या....वन् | व्याप्नुवन् |
| | २७ | चरणरपि | चरणैरपि |
| १८ | ३ | द्रावणात् | द्रवणात् |
| | ५ | रे शूद्र | रे त्वा शूद्र |
| २० | २ | उच्चते | उच्यते |
| | १५ | हृद्यपेक्षाया | हृद्यपेक्षया |
| | १६ | मात्राधिकार | मात्रस्याधिकार |
| २१ | १६ | यथा | यदा |
| २२ | ८ | संत्कारात् | संस्कारात् |
| २५ | १७ | नारिणां | नारीणां |
| २८ | ८ | शाम्भुः | शम्भुः |
| ३० | १३ | निविधनां | विविधानां |
| | १८ | प्रदुरासीत् | प्रादुरासीत् |
| ३३ | ७ | तमुष्णु | तमुष्टु |
| ३९ | २ | द्विरावृतः | द्विरावृत्तः |
| ४१ | १८ | ब्रह्मतावमेव | ब्रह्मतत्त्वमेव |
| ४२ | १७ १८ | एष्वित्यादिरर्थः | एष्वित्यर्थः |
| ४३ | ९ | गयत्रीमिच | गयत्रीमीं " |
| ४४ | ९ | विशुद्ध | विशुद्धि |
| | २० | ददातु | दधातु |
| ४६ | ११ | अयति | अयते |
| | १६ | व्यात्पं | व्याप्तं |
| ४९ | २१ | वाय्वंम्बु | वाय्वम्बु |
| ५० | ५ | सञ्जातः | सम्भूतः |
| ५४ | ८ | अङ्कुरिता | अङ्कुरित |
| ५८ | २ | चक्र | चन्द्र |
| ६३ | ७ | क्रयं | क्रमं |

| | | | |
|---|---|---|---|
| ६७ | ८ | तदेदं | तदिदं |
| | | अभिधयते | अभिधीयते |
| ७१ | ३ | उभयपाश्र | उभयपाश |
| | १७ | प्रमात्युपाधि | प्रमात्रुपाधि |
| ७७ | २१ | आच्छन्दन् | आच्छिन्दन् |
| ८० | ५ | शास्त्रो | शास्त्रे |
| ८१ | ५ | रूपेनान्तरीक | रूपेणान्तरिक |
| | १२ | रुपोक्रमः | रुपः क्रमः |
| | १४ | अस्तमय्या | अस्तमयः |
| ८३ | ३ | भासनः | भासमान |
| | ६ | वैवायाव्करण | वैयाकरण |
| | ७ | स्थायिन | स्थायीनां |
| ८९ | २ | पातकरस | पानकरस |
| | २४ | पत्यामव | पत्यावव |
| ९१ | १७ | साञ्ज्ञान | साञ्जनः |
| ९२ | १ | स्वरूपः | स्वरूपम् |
| ९३ | १० | काव्य | काव्यू |
| ९४ | ३ | स्वगुणाम् | स्वगुणान् |
| ९६ | २१ | चतुर्थ्थवस्थायां | चतुर्थावस्थस्य |
| | २२ | पञ्चम्यवस्थस्य | पञ्चमावस्थस्य |
| | २३ | यात्मिकानां | यात्मकानां |
| ९७ | ८ | दर्शनतदितर | दर्शनस्य तदितर |
| १०० | २ | रित्यभिधार्यतां | रित्यवधार्यतां |
| १०१ | १ | भरावतोऽभिन्नाः | भगवतो भिन्नाः |
| १०२ | ४ | पन्थेपु | पथेषु |
| | ९ | तपस्विताम् | तपस्विनाम् |
| | १९ | तत्प्राकाशन | तत्पाकाशन |
| १०३ | १७ | स्वयभु | स्वयम्भु |

| | | | |
|---|---|---|---|
| १०६ | ११ | लीनमभूत् | लीनोऽभूत् |
| १०७ | १२ | पत्रिंशत | षट्त्रिंशत् |
| १०९ | १३ | पत्युरनन्यो | पत्युरन्यो |
| १११ | २ | निद्धान्त | सिद्धान्त |
| | ११ | ह्वस्ति | ह्वसति |
| ११५ | १३ | वृतिरियं | वृत्तिरियं |
| १२० | ५ | पक्षापातित्वं | पक्षपातित्वं |
| | ८ | श्राखायां | शाखायां |
| १२७ | १२ | फलकमिति | फलकत्वमिति |
| | १६ | धिकारस्वं | धिकारित्वं |
| १२८ | २ | समानमेवेति | समानैवेति |
| १३४ | ६ | सर्वभूतत्वादि | सर्वभूतहितत्वादि |
| १५१ | १९ | ज्ञत्वारूपा | ज्ञत्वरूपा |
| १५२ | ९ | मतनमिति | मतमिति |
| | १९ | वांशवरूपः | वांशरूपः |
| | २० | उच्यतेः | उच्यते |
| १५५ | १ | रुद्रभावः | रुद्रभागः |
| | | स्वस्राम्बिकया | स्वसाम्बिकया |
| | १५ | रुपमाधत्ते | रूपमाधत्ते |
| १५९ | १४ | किन्ति | किन्तु |
| १६० | १५ | शिवाद्वैत | विशिष्टाद्वैत |
| १६६ | १७ | सिद्धयाकालिम्नया | अनादिसिद्धेनाकालिम्ना |
| | २१ | कर्तृकत्वादयो | कर्तृत्वादयो |
| १६८ | १८ | एकोत्तरस्थल | एकोत्तरशतस्थल |
| १७० | १८ | विभज्यतेति | विभज्यत इति |
| १७२ | १ | निर्दग्ध्वा | दग्ध्वा |
| | १५ | शिवानुभावी | शिवानुभवी |
| | १९ | सति-पति | सतीपति |

| | | | |
|---|---|---|---|
| १७४ | २० | तच्चात्र | स चात्र |
| १७५ | ८ | पराशक्ति | परशक्ति |
| १७७ | १२ | ऐक्यत्वेन | एक्येन |
| १७८ | १८ | निदन | निधन |
| १७९ | ९ | समुच्चयत्वं | समुच्चयं |
| | ११ | कर्पापि | कर्मापि |
| | १३ | व्यधि | व्याधि |
| | १७ | लेपन | लेपना |
| | १८ | जीवभ्यां | जीवाभ्यां |
| | १९ | विरकस्तु | विरक्तस्तु |
| | २२ | निन्दियाः | निन्दायाः |
| १८० | १४ | ध्यानादिकं | ध्ययनादिकं |
| १८१ | ४ | इक्तञ्चु | उक्तञ्च |
| १८२ | ५ | ....गृही | आश्रमाणां हि सर्वेषां गृही |
| १८३ | २ | अनुगृहीतुं | अनुग्रहीतुं |
| १८६ | ४ | लाञ्चना | लाञ्छना |
| | १७ | वेश्य | वेश्म |
| १८८ | ९ | मन्त्रं | मन्त्रस्य |
| १९० | २४ | कङ्कयकरणं | कैङ्कर्यकरणं |
| १९१ | १४ | मतः | मतम् |
| | १९ | समर्थितम् | समर्थितः |
| १९७ | ४ | निक्षिप्तम् | निक्षिप्तः |
| | २२ | लब्धिभ्रमरपि | लब्धिरपि |
| २०२ | १२ | रेत्यवगन्तव्यं | र इत्यवगन्तव्यं |
| २०४ | ५ | समत्पासुसंक्रियासु | समासासु सत्क्रियासु |
| २०६ | ४ | पातिपरूरः | प्राप्तिरूपः |

## श्रीकरभाष्य-प्रथमसंपुट-पञ्चपादिकागताशुद्धशोधनपत्रिका

| पृः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | १२ | जीवान | जीवानां |
| ७ | २ | इत्युत्तरवाक्याविरोधो | इत्युत्तरवाक्यविरोधो |
| १० | २१ | मानान्तरनिपेध | मानान्तरनिषेध |
| १३ | ६ | इत्यादिनान्तलिङ्ग | इत्यादिनान्तर्लिङ्ग |
| १४ | १७ | विधायक्त्व | विधायकत्व |
| २० | २ | सन्या | सन्ध्या |
| २२ | ७ | सूवितम् | सूचितम् |
| २६ | ३ | दश्रितत्वा | दाश्रितत्वा |
| | १६ | स्वायाया | स्वाध्याया |
| | १७ | धारणयोरव | धारणयोराव |
| २७ | १६ | तत्सहस्रण | तत्सहस्रेण |
| २९ | २१ | पुरूरुप | पुरुरूप |
| ३० | ५ | चत्वारिंशत्स | चत्वारिंशत्सं |
| ३२ | २० | बहुाति | बहुश्रुति |
| ३३ | ८ | सम्भादिचा | सम्भवादिपूर्वाचा |
| ३४ | ८ | ब्राह्मणाना | ब्राह्मणानां |
| | २० | पदायाहारो | पदाध्याहारो |
| ३६ | २ | तस्माच्छवण | तस्माच्छ्रवण |
| | ११ | इत्यादिपूय | इत्यादिषूभय |
| ३७ | १५ | पराऽत्य | पराऽस्य |
| ४० | १४ | स्वनिष्टबाय | स्वनिष्टबाध्य |
| ४१ | २ | प्राष्यते | प्राप्यते |

| | | | |
|---|---|---|---|
| ४१ | १३ | तर्कण | तर्केण |
| | १८ | वयोशेष | वयोविशेष |
| | २० | गृण्हीयत् | गृण्हीयात् |
| | २१ | निपेधेषु | निषेधेषु |
| ४२ | ७ | प्राम्नयादिति | प्राप्नुयादिति |
| ४३ | १६ | किञ्चिद्बाधकम् | किञ्चिद्बाधकम् |
| | २० | पुनस्वीकारात् | पुनस्स्वीकारात् |
| ४४ | १३ | गच्छन्ति | गच्छन्ति |
| ४५ | ६ | गच्छन्ति | गच्छन्ति |
| | ७ | वृतिद्वय | वृत्तिद्वय |
| | ९ | एकवृत्यु | एकवृत्त्यु |
| | २१ | साध्यत्वन | साध्यत्वेन |
| ४६ | ११ | व्यापारयर | व्यापारयोर |
| | १४ | दूर्वासीमे | दूर्वासीये |
| | १७ | न द्दे ति | न दृष्टेति |
| | १९ | वातिकेन | वार्तिकेन |
| ४७ | १७ | धा ोपपत्तेः | धानोपपत्तेः |
| ४८ | २२ | जगज्ज्ञन्मादि | जगज्जन्मादि |
| ५५ | ९ | विकल्पस्ससमुच्च | विकल्पस्समुच्च |
| ५६ | १९ | जीवस्याव्यज | जीवस्याप्यज |
| ५७ | ४ | श्रुती ां | श्रुतीनां |
| | १८ | बैद्धादि | बौद्धादि |
| | २४ | पूर्वत्पूर्वा | पूर्वपूर्वा |
| ५९ | ३ | क्षुत्सिपासा | क्षुत्पिपासा |
| ६१ | १५ | आत्महन्न | आत्महनन |
| ६२ | २४ | प्रतिपाद्द्यं | प्रतिपाद्यं |
| ६९ | २ | करणम् | करणम् |
| ७५ | १५ | घोराऽन्था | घोराऽन्या |

| | | | |
|---|---|---|---|
| ८३ | ४ | युद्धकण्डे | युद्धकाण्डे |
| ८६ | ५ | इत्युत्तरकण्डे | इत्युत्तरकाण्डे |
| ८६ | १८-१९ | सर्वासिधिष्ठान | सर्वाधिष्ठान |
| ९२ | १६ | ब्रह्मण्यतियाप्ते | ब्रह्मण्यतिव्याप्ते |
| ९४ | २ | युक्तिाधित | युक्तिबाधित |
| ९८ | २३ | भूतयानि | भूतयोनिं |
| ९९ | २ | कीटवप्तर | कीटवत्पर |
| | २२ | शिष्यवोध | शिष्यबोध |
| १०१ | ९ | व्यवह्नियते | व्यवह्रियते |
| | २० | अनन्दं | आनन्दं |
| | २६ | परमेश्वरयोनिया | परमेश्वरयोर्निया |
| १०३ | १८ | मेवो॰दिश्यते | मेवोपदिश्यते |
| १०५ | २ | सम्पस्य | सम्पत्स्ये |
| १०६ | २ | ततस्मात्त्वमर्सि | तस्मात्त्वमसि |
| १०७ | ९ | सर्व | सर्वं |
| ११० | १७ | ऋतुँ | ऋतँ |
| १११ | ८ | बद्धह्म | बद्धब्रह्म |
| १२५ | ४ | मुत्तरोतर | मुत्तरोत्तर |
| १२८ | २२ | घट्ठकुटी | घट्टकुटी |
| १२९ | ९ | प्रतीतिि िया | प्रतीतिनिया |
| १३० | १७ | तर्हीदममि | तर्हीदमपि |
| १३७ | १४ | सिद्धान्ता | सिद्धान्तः |
| १३८ | ९ | दर्षन | दर्शन |
| १४५ | २५ | हिरण्मयत्वोमावे | हिरण्मयत्वोमा |
| १४६ | ८ | कदन्नमप्यनन्नस्य | कदन्नमप्यश्नस्य |
| १४८ | १६ | शरीरान्यावय | शरीरान्याबयव |
| १५० | ४ | जामितार्थ | ज्यामितार्थ |
| १५३ | १२ | यद्देश | यदेष |

| | | | |
|---|---|---|---|
| १५५ | १० | दर्जनात् | दर्शनात् |
| १५६ | ३ | दर्जनात् | दर्शनात् |
| १५७ | १५ | सर्वकारणस्व | सर्वकारणस्य |
| १५९ | १८ | प्रपान्तं | प्रशान्तं |
| | २४ | सर्वात्माकत्म | सर्वात्मकत्व |
| | २५ | दर्जनात् | दर्शनात् |
| १६० | ८ | चन्दसो | छन्दसो |
| | ९ | तथाचेतेर्पण | तथा चेतोर्पण |
| १६४ | ६ | मुक्ताविदुम | मुक्ताविद्रुम |
| १६५ | ५ | नाङ्गान | नाङ्गानां |
| १७६ | ११ | शास्त्राद्दष्ट्या | शास्त्रदृष्ट्या |
| | १२ | विजानीहीत्यप | विजानीहीत्युप |
| १९५ | २ | हरिलिङ्गं | हरिर्लिङ्गं |
| १९८ | १५ | तल्लिङ्ग | तल्लिङ्ग |
| २०१ | ९ | ब्राह्मलक्षण | ब्राह्मणलक्षण |
| २०६ | १२ | उत्पत्तिशिष्ट | उत्पत्तिविशिष्ट |
| २१५ | ७ | श्रोतत्व | श्रौतत्व |
| २२१ | ४ | अकरणे प्रत्यवायानुदेशाच्च | अकरणे प्रत्यवायाभावाच्च |
| २२२ | ६ | त्रिपुरवाधायो | त्रिपुरवधायो |
| २२६ | १४ | पापण्डोप | पापण्डोप |
| २२८ | ५ | भूतमाखिलं | भूतमखिलं |
| | २० | स्वयंभवे | स्वयंभुवे |
| २३० | १५ | ऋतसत्य | ऋतं सत्य |
| २३१ | ३ | घोरमूर्ति | घोरामूर्ति |
| २३४ | १४ | उदिनुदित | उदितानुदित |
| | १६ | तत्सुर्ति | तत्स्तुर्ति |
| | १७ | शिवादिभिः | शैवादिभिः |
| २३५ | ११ | परमशिवस्या | परमशिवस्य |

| | | | |
|---|---|---|---|
| २३७ | ८ | प्रपचौदन | प्रपंचौदन |
| | १२ | ऊपासीत | उपासीत |
| | १९ | जगत्सहारकत्व | जगत्संहारकत्व |
| २४३ | ४ | मन आनदं | मन आनन्दं |
| | १२ | इत्वादौ | इत्यादौ |
| २४५ | १५ | रश्मिभिरेऽषो | रश्मिभिरेषो |
| २४६ | ३ | शिवस्येवो | शिवस्यैवोप |
| | ९ | सिञ्चन्ति | सिञ्चति |
| २४७ | ६ | एकस्यव | एकस्यैव |
| २४९ | ६ | यदुच | यदि च |
| | ९ | अक्षिपुरुपस्य | अक्षिपुरुषस्य |
| | १८ | चक्षुरासीदति | चक्षुरासीदिति |
| | २१ | तस्यात् | तस्मात् |
| २५० | १२ | दङ्गुष्ठ | दङ्गुष्ठ |
| २५२ | २ | रोपस्यत्व | रोपास्यत्व |
| २५२ | ४ | इति प्राप्त | इति प्राप्ते |
| २५३ | १५ | तेषमभिलापात् | तेषामभिलापात् |
| २५७ | १९ | प्रधनं | प्रधानं |
| २५८ | २१ | निदिशति | निर्दिशति |
| २६१ | २ | महेश्वरस्य | महेश्वरस्य |
| २६३ | १८ | जाठराग्न्ययव | जाठराग्न्यव |
| २६४ | ४ | सम्भन्ध | सम्बन्ध |
| २६५ | ११ | दर्जयति | दर्शयति |
| १६६ | ६ | तारणार्यं | तारणार्थं |
| २६८ | ३ | षद्विध | षड्विध |
| | २० | द्युभ्याधा | द्युभ्वाद्या |
| २७१ | १२ | पन्मात्मनः | परमात्मनः |
| २७२ | १२ | सिमृद्ध | सिद्धम् |

| | | | |
|---|---|---|---|
| | १८ | घुस्वाद्या | द्युम्वाद्या |
| २७२ | १० | प्राणभृङ्जीवो | प्राणभृज्जीवो |
| २७४ | १५ | इत्यादिन | इत्यादिना |
| २७६ | १७ | निदिष्टम् | निर्दिष्टम् |
| | १८ | चित्वेनैकत्वे | चित्त्वेनैकत्वे |
| | २० | तोरद्वैतं | तयोरद्वैतं |
| २८३ | ६ | गागि | गार्गि |
| २८७ | १५ | यो वेदादों | यो वेदादौ |
| २९४ | १० | शक्ति शक्तिमतो | शक्तिशक्तिमतो |
| २९५ | २४ | ऊविर्भूत | आविर्भूत |
| ३०१ | ८ | विष्णूासनस्य | विष्णूपासनस्य |
| ३०५ | १३ | नियतपमाण | नियतपरिमाण |
| ३०७ | १६ | स्वतस्तिद्ध | स्वतस्सिद्ध |
| ३१० | २४ | विश्वमित्रादि | विश्वामित्रादि |
| ३११ | ४ | पुनविश्वा | पुनर्विश्वा |
| ३१४ | १४ | मेधातिथेमेंधेति | मेधातिथिर्मेधेति |
| ३१६ | १५ | तद्वत्रैवर्णिका | तद्वत्त्रैवर्णिका |
| | १५ | इय | इव |
| | १५ | शूद्रस्या | शूद्रस्या |
| | १५ | प्रासम् | प्राप्तम् |
| | १६ | नानि | नाग्नि |
| | २० | सुख्यार्थ | मुख्यार्थ |
| | २१ | ब्रह्मवि धिका | ब्रह्मविद्याधिका |
| | २१ | न गेवाना | देवाना |
| ३१७ | ३ | यज्ञेऽनवक्लृप्तः | यज्ञेऽनवक्लृप्त |
| | १२ | रक | रैक्व |
| | १९ | जघन्येन | जघन्येन |
| | २४ | बहुपाक्य | बहुवाक्य |

| | | | |
|---|---|---|---|
| ३१८ | २ | त्तृप्रेरण | क्षत्तृप्रेरण |
| | १८ | प्रह्मविद्या | ब्रह्मविद्या |
| | २० | ब्रह्मान्वेशमाणा | ब्रह्मान्वेषमाणा |
| | २२ | मुपसन्ना | मुपपन्ना |
| ३१९ | ७ | भक्ष्याऽभक्ष | भक्ष्याऽभक्ष्य |
| | १८ | नाब्रह्मण | नाब्राह्मण |
| ३२० | ५ | वेदमुपशृण्वतः | वेदमुपशृण्वतः |
| ३२४ | ११-१२ | सर्वनप्रभूतात्मक | सर्वभूतात्मक |
| ३३० | १० | तदुपलब्यर्थं | तदुपलब्ध्यर्थं |
| ३३१ | १२ | वैयर्थ्य | वैय्यर्थ्य |
| ३३२ | ४ | रंहत | रंहति |
| ३३३ | १९ | अतो ह्मत्र | अतो ह्यत्र |
| ३३७ | ११ | प्रजाजाक | प्रजाजनक |
| ३३८ | ११ | तोजोऽवन्ना | तेजोऽबन्ना |
| | १३ | सन्देन्देहा | सन्देहा |
| ३४४ | ६ | स्याक्षेप | स्याक्षेप |
| | ६ | प्रतिपादयिषितः | प्रतिपिपादयिषितः |
| ३५१ | १९ | प्रतिज्ञायास्तिद्धेः | प्रतिज्ञायास्सिद्धे |
| ३५४ | १५ | मृतिकादि | मृत्तिकादि |
| ३५५ | १० | च स्मृनिः | च स्मृतिः |
| ३५७ | १० | विरोधोतेः | विरोधोक्तेः |
| ३५९ | २४ | णोभयान्मानात् | णोभयाम्नानात् |
| ३६० | २२ | इन्द | इन्द्र |
| ३६१ | ४ | प्रत्युद्धालक | प्रत्युद्दालक |
| ३६२ | ५ | राद्धात्तः | राद्धान्तः |
| ३६५ | २ | सांख्यसति | सांख्यस्मृति |
| ३६६ | ६ | स्मृत्यनपेक्षतयाया | स्मृत्यनपेक्षतया |
| ३६८ | ४ | पापौघैरपि | पापौघैरपि |

